।। श्रीगणेशाय नमः ।।



गुरुमण्डलग्रन्थमालायाश्चतुर्विंशं पुष्पम्

# मनुस्मृतिः



## मेधातिथिभाष्यसमलङ्कृता सप्तमादिद्वादशाध्यायपर्यन्ता

तस्याः

—ः उत्तरार्द्धम् ः—

"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः"

मनसुखराय मोर

५, क्लाइव रो, कलकत्ता-१

विक्रम सम्वत् २०२८ प्रथमावृत्तिः सन् १९७१

१०००

॥ श्रीगणेशाय नमः ॥

गुरुमण्डलग्रन्थमालायाश्चतुर्विंशं पुष्पम्

# ॥ मनुस्मृतिः ॥

## ( मेधातिथिभाष्य-समलङ्कृता )
## ( सप्तमादिद्वादशाध्यायसमाप्तिपर्यन्ता )

# उत्तरार्धम्

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं बटुकत्रयम्पदयुगं दूतीक्रमं मण्डलम् ( शाम्भवम् ) ॥
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,
कलकत्ता—१

| वैक्रमाब्दः | प्रथमं संस्करणम् | ख्रैस्ताब्दः |
|---|---|---|
| २०२८ | १००० | १९७१ |

॥ श्रीमन्महागणाधिपतये नमः ॥

भगवती जगदम्बा रासेश्वरी की कृपा से मेधातिथिभाष्य के सहित मनुस्मृति का सप्तम अध्याय से समाप्ति पर्यन्त उत्तरार्ध भाग विद्वत्समुदाय को भेंट करते हुए अत्यन्त प्रसन्नता हो रही है।

इसका पूर्व भाग आज से २ वर्ष पूर्व छपा था। उस समय यह आशा नहीं थी कि इतने दीर्घकाल के अनन्तर यह उत्तरार्ध निकलेगा। जगद्धात्री की ऐसी कृपा हुई कि दीर्घ-दीर्घतर विघ्नबाहुल्य के बाद भी अपने सर्वाङ्गपूर्ण रूप में यह निकल सका है।

इसके पूर्व भाग में महर्षिप्रवर मेधातिथि के द्वारा नानाविषयविभूषित इस टीका के प्रशंसापरक कुछ शब्द निवेदन किये थे अब स्थान के सङ्कोच से इतना ही वक्तव्य बहुत होगा कि कुल्लूकभट्ट और मेधातिथि इन दो भाष्यकारों ने परवर्ती टीकाकारों के लिये धर्मशास्त्रीय दृष्टि से कुछ भी प्रतिपादन किये बिना न छोड़ा। जहाँ तक हमारे सम्पादक मण्डल द्वारा इस प्रकाशन कार्य का सम्बन्ध है हमें प्रसन्नता है कि उन्होंने एकतानता से इस कार्य में जुटकर इसे समाप्ति तक पहुँचा आप महानुभावों तक भेंट करने के उपयुक्त सम्पादन किया है।

उदयाचल प्रेस के स्वामी स्वनामधन्य पण्डित श्री भगवानदत्तजी शास्त्री "राकेश" महोदय को मैं इसे इस रूप में प्रकाशित करने के लिये सधन्यवाद आभार प्रदर्शन करता हूँ।

इस महान् कार्य में मानव सुलभ स्वभाववशात् कई त्रुटियां रह गयी हैं कृपालु सहृदय विद्वान् महोदय इन्हें संशोधित कर हमें सूचित करें।

इस प्रयास में आरम्भ से श्रीब्रह्मदत्तजी त्रिवेदी व्याकरणाचार्य एम० ए० तथा पण्डित श्री रामनाथजी शास्त्री पञ्चतीर्थ महोदय ने सहयोग दिया है। उन्हें इसी प्रकार शास्त्रप्रकाशनेच्छा की प्रेरणा वह अन्तर्यामिणी देती रहे और उनकी विद्या सफल हो यही एकमात्र कामना है।

विलम्ब से प्रकाशित होने में मेरी ओर से ही न्यूनता रही तदर्थ कृपालु पाठक-पाठिका-वृन्द से करबद्ध क्षमा याचना है।

"कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्"

रामनवमी
रविवार
२०२८ विक्रमाब्द

विनयावनत :—
मनसुखराय मोर

श्रीगणेशाय नमः

मनुप्रोक्ते धर्मशास्त्रे

# समेधातिथिभाष्ये

# समागत-विषयानुक्रमवर्णनम्



( सप्तमादिद्वादशाध्यायान्तम् )

श्रीगणेशाय नमः

# विषयसूची

## मेधातिथिकृतमनुभाष्यसहिता मनुस्मृतिः

## सप्तमादिद्वादशाध्यायपर्यन्ता

पराक्रमशीलः स्याद् वृकवदवलुम्पनं विदध्यात् शशवच्च यथाकालं विधानं कुर्यात् सामाद्युपायैः सर्वं जयेत ।

१५ सामादीनां प्रयोगेऽसाफल्यं प्राप्ते सति दण्डेनैव राजा सर्वाञ्जयेत् । १०८-११६

सर्वथा करभारः प्रजानां पालनायैव नतु शोषणाय राष्ट्रस्य कर्षणाद्राज्ञः शक्तिक्षयः सञ्जायते ।

रक्षितारोऽधिकारिणो ग्रामसमूहे योजनीयाः; तेषामेतादृक् प्रबन्धः स्याद्यदि- निम्नस्तरस्थितो ग्रामाधिकारी कमपि दोषं स्वाधिकृतप्रदेशे पश्येत्तद्दूरीकरणाय ग्रामदेशेशाय कथयेदेनं स्वकीयोपरिसमधिकारिभ्यः स्वा विप्रतिपत्तयः कथनीया एवं क्रमेण शासनपरिचालनं प्रशस्यतमम्भवति ।

राज्ञा दत्तावधानेनोत्कोचशीलानां कुत्सितराज्याधिकारिणां निग्रहः कर्त्तव्यः ।

१६ प्रतिनगरं शासनव्यवस्था । १२०-१२६

प्रतिनगरं सर्वेषां नागरजनानां कुशलक्षेमकरणाय सर्वोच्चाधिकारी नियोज- नीयस्तदधिकारे ये राजभृत्या उत्कोचग्रहणकर्तारस्तेऽभियोगपुरःसरं दण्डनीयाः । यत्र केचन पापचेतसः स्वकृत्येषु शैथिल्यं भजमानाः स्युस्ते राष्ट्रात्प्रवासयितव्याः;

ये राजकर्मसु नियुक्ताः स्त्रियः पुरुषाश्च तेषां वृत्तिर्विधातव्या । तेभ्यो मासिकं वर्त्तनं भोजनाच्छादनादिकं सर्वं देयमेव ।

१७ करग्रहणविधिः । १२७-१३१

अन्ताराज्यीय क्रयविक्रयवस्तूनां कृते करारोपणं कुर्याद्राजा । यथा भ्रमराः पुष्पेभ्यो मधुसञ्चयं कुर्वन्तो न मूलमुच्छेदयन्त्येवमेव राजा सति सम्भवे न्यूना- तिन्यूनं कराधानं विदध्यात् । नानाक्रयविक्रयवस्तुषु लाभमुद्दिश्य तदनुसारि करविधानं वरम् । भूमिपशुहिरण्मयादिधातूनां वृक्षमांसमधुसर्पिःषु चान्येषु वस्तुषु नानाविधानि कराणि योजनीयानि ।

१८ करनिषेधवर्णनम् । १३२-१३०

यस्य राज्ञो देशे श्रोत्रियो निवसति तस्मात्कराधानं न करणीयमपि श्रुतंवृत्ताय तस्मै ज्ञानिने वृत्तिप्रकल्पनं कर्तव्यम् । एवंकरणेन राज्ञश्च धर्मस्य यशस आयुषआभि- वृद्धिः राष्ट्रस्याभ्युदयोऽपि सञ्जायते ।

इत्थं सुयोग्येन विधानेन करारोपणं कुर्वन्राजन् सर्वत्र प्रशंसामावहति।

१९ करशुल्कादाने सज्जीभूतेन राज्ञा वर्त्तितव्यम् १३९-१४२

कस्मैचिदपि बहुकरभाराय रोधनं न कुर्यादपि च स्वमूलोच्छेदनमपि करा-ग्रहणेन न युज्येतातः सर्वदेव मध्यममार्गेण वर्तितव्यम्।

राज्ञा कार्यमिदं सम्पादयितुं कश्चन श्रेष्ठाधिकारी नियोजनीयो य उदासीन-भावेनाप्रमत्तः स्वन्यस्तकार्याय राज्यकोपवृद्धयेऽहन्यहनि जागरूकतया कर्तुं समुत्सहेत। इत्थं सर्वथैव प्रजासंरक्षणं राज्ञ इष्टसिद्धिकारकम्।

२० राज्ञः कृते प्रजाया असंरक्षणे दोषः। १४३-१४६

- यस्य राज्ञो देशे प्रजा दस्युभिः पीड्यन्ते यत्र च राज्यरक्षाकर्तारो भृत्या मूकपर्यवेक्षकास्तेन तद् दुर्योगेन राजा नरकगतिं प्राप्नोति। प्रजापालने रत एव राजा ऐहिकामुष्मिकश्रेयःप्राप्त्यै समर्थो नान्यथा।

२१ यस्य मन्त्रविषये न मन्त्रमहिमां कोऽपि ज्ञातुं शक्तः स राजा कोश१४७-१५० हीनोऽपि विजयते। मन्त्रभेदने जडमूकान्धबधिराणां शुकशारिकादिऽनुकरणपरा अपि पक्षिविशेषा वर्ज्या एवैतद् राज्ञो दैनन्दिनं कर्म।

२२ राजनीतिज्ञदूतप्रेषणे सततं जागरूकेण राज्ञा भाव्यम् पञ्चवर्ग १५१-१८० प्रकल्पनं सम्यग्विधाय मध्यमशत्रोविजिगीषोः प्रकृतीनां नानाभेदोप भेद वर्णनपुरः सरं तैः साकंवर्तनम्। संधिविग्रहयानासनद्वैधीभावसंश्रयषड्गुणाः सर्वथैव राज्ञा प्रकल्पनीयां येन सर्वत्र विजयःस्तेषां नानाभेदाश्च।

२३ विजययात्रार्थं प्रकृष्टकालवर्णनम्। १८१-२११

यदा शत्रुपक्षस्य सेना सम्मुखीना तत्र नाना व्यूहरचनादिभिः स्वविषयरक्ष-णार्थमुपायकरणम्। नानाभूमिषु विभिन्नयानसाधनैः सैन्यसज्जीकरणम्। सर्वकार्येषु शुभमुहूर्त्तकः समयोऽपेक्ष्यते तदर्थं नानानीतिभिर्वर्तनं गुणाधायकम्।

जयप्राप्त्यनन्तरं सर्वभ्योऽभयदानं विद्याजीविनां च यथाशक्ति सम्मान-करणम् यैः सेनापत्याद्यधिकारिभिर्विजयः कृतस्तेभ्यः पुरस्कारप्रदानादीनि करणी-यानि येन सर्वेऽप्युत्साहयुक्ता भवेयुः।

२४ नानाराज्यवृद्ध्युपायानां समुपवर्णनम्। २१२-३२६

दैवीं शक्तिं पृथिवीपतिः सर्वथाऽभिवर्धयेत् येनात्मनः संसारयात्रा निष्कण्टकं सफला भवेत्।

माध्यन्दिनक्रियाकरणे सुष्ठुप्रकारेण भोजनादिषु विहारे च यत्नवान् भवेत्। सर्वथा स्वात्मरक्षणशीलो राजा भवेत्। अन्तःपुरेऽपि सुपरीक्षितास्त्रिय एव नियोक्तव्याः। अनुदिनं राज्याङ्गवृद्धिकरणे सततं यत्नमातिष्ठेत्तथाकरणेन राज्ञः समेधमानं यशः प्रकृतिरञ्जनेन साकं सर्वासु दिक्षु प्रसरिष्यत्येव।



निरलसो नृपतिः सर्वदा राज्यकर्मणि कुशलानां विदुषां साहाय्येन सर्वथाऽप्रमत्तः शासनकार्याणि सञ्चालयेत्। व्यवहारो राज्यशासकविधिकर्माधिकारिणां कृते सति नियमं प्रचालयितव्यः। न्यायप्रापणार्थं येऽष्टादशविवादास्पदाविषयास्तेषां कृते वादिप्रतिवादिसाक्षिलेखादीनां यथायथं नियमानुकारि सञ्चलनशीलं व्यवहारकार्यं प्रयोजयेत्। धर्मसङ्गतं निर्णयं स्वदण्डाधिकरणे स्थितानां राज्याधिकारिणां कृते सम्पादयेत्।



यदि स्वयं विवादास्पदं व्यवहारं निर्वर्तयितुं स्वयमसमर्थो राजा तदा तत्कर्मणि कञ्चन विधिवेत्तारं निर्णयार्थदर्शकं विद्वांसं सकलशास्त्रपारङ्गतं नियुञ्जीत। सभायाः परिभाषा; यत्र वेदविदस्त्रयो विद्वांसोऽथच राज्ञो विश्वास्योऽधिकारी यत्र सा प्राड्विवाकपदालंकृता न्यायानुशीलनार्थं पर्षद् तत्र सयुक्तिकं सर्वथा प्रतिपादनीयम् यत्र कुत्रापि धर्महानिस्तत्र सभासदामेवापहननम्।



इह लोके परत्र चाऽपि धर्मस्योपकारकत्वमिति न्यायप्रतिपादनपरैर्व्यवहाराधिकारिभिर्न कदापि धर्मलोपः करणीयः स एष भगवान्धर्मःसर्वत्रागतिकगतिकः। धर्मपथं विलोप्य यः स्वार्थेन न्यायनिर्णयं करोति तस्य मिथ्याचारिणः पापः पादांशेन कर्त्तुस्तद्वदेव साक्षिणस्तथैव पादभागाः सभासदोऽवशिष्टस्य पापभाग्राजाऽपि भवति। अतः सर्वदा धर्मपरैरधिकारिभिर्भाव्यम्।



योग्यानां नियोजने सर्वदैव सौख्यमयोग्याधिकारिणां विनियोजने सकृत्पापस्तेन राष्ट्रस्य जनताया हितहानिः।

पापकारिणः स्वचर्मचक्षुर्भिर्न कमपि पश्यन्निन्द्यं कर्म कुर्वन्ति परं द्रष्टा तु स्वस्यैवान्तःस्थित आत्मरूपः पुनः द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमवायवः रात्रिरुभे सन्ध्ये धर्मश्च प्रच्छन्नपापकर्तृदुर्वृत्ततां पश्यन्ति। व्यवहारे न्यायपालस्य समक्षं साक्षित्वे नियोजितस्य स्वसाक्षिरूपलेखनात्पूर्वं शपथपूर्वकं कथनं भविष्यतीति वार्त्तावर्णनम्; साक्ष्यानृते महत्पातकम् तेषां पापफलपरिगणनम्। अतः साक्षिणं प्रति न्यायाधिकारिणो परिगणिता नानादोषाः।



तत्रनानादृष्टान्तानामुदाहरणानि लोभमोहभयमैत्रकामक्रोधाज्ञानबालभावैः साक्षित्वप्रवञ्चनकरणेन विविधदण्डविधानमवश्यं करणीयं येन धर्मनियमः सुष्ठु प्रचलेत्। दण्डविधानेऽङ्गेषु दशस्थानेष्वेव प्रहरणम्। अधर्मदण्डनं सर्वथैव वर्ज्यम् तत्रादण्ड्यदण्डनं नरकप्राप्तिकरमयशस्यं राजा सावधानं सर्वं विचार्यैव कुर्यात्।



ऋणादाने कुसीदप्राप्तौ विभिन्नसूचिनिर्देशवर्णनम्। कस्यचिद् वस्तुनो निक्षेपे च वृद्धिवर्धनेसन्तुलीकरणवर्णनम्। गोप्यभोग्याऽऽधिविभेदपूर्वकं बलपूर्वकं भोग्याधिं भुञ्जानो चक्रवृद्धिं नार्हति वार्धुषिकः। उपनिधिः अन्तर्हितो न्यासः। आध्युपनिधी चिरं न स्थाप्यौ समये प्राप्ते नितरां मोक्षणीयौ। कालात्यये त्रिगुणीभूतं न कदापि दापनीयं द्विगुणीभूतमेव तत्करणीयम्। ऋणं दातुरादातुरुभयोश्चेत्प्रीतिः सम्मतिश्च भवेत्तदा गवादीनां स्वत्वापत्तिर्न नश्यति। समयेऽतिक्रान्ते यो ज्ञानेनावधिमुपेक्षयति तस्य न्यासं रक्षणीयत्वाद् भोक्तैव प्राप्तुं शक्नोति। इत्थमुत्तमर्णाधमर्णानां नियतकार्यविधिं परिगणय्य परार्णसंशोधनादि नृक्षादानं अक्षक्रीडासुक्रीडनकेन धनादानं सुरापाननिमित्तकमृणमथ च दण्डांशः शुल्कांशश्च पूर्वपित्रादिभिर्नदत्तस्तत्र पुत्रस्य दापनयोग्यता निषिध्यते। यदि मत्त उन्मत्त आर्त्त आधिग्रस्त बालोऽथवा वृद्धोऽसम्बद्धकृतश्च व्यवहारः सप्रतिष्ठां लब्धुं नार्हति।

यदि बलात्केनापि मनुष्येण बालकाद् उपधिकृतं भुक्तं लेखितं तत्सर्वं व्यवहारजातं न सिद्ध्यति। राज्ञा सर्वथैव व्यवहारकार्यं निष्पक्षतया

सञ्चालनीयं यद्यत्रानवधानता सा राज्ञो विनाशहेतुः। दायविषये ग्रह-विषये योग्यता प्राप्तस्य मानवनागरिकस्य वर्णनम्। छद्मना परद्रव्यापहारकाय राजा नानाविधदण्डव्यवस्थाभिर्दण्डयेत्।

१३ राजधर्मदण्डविधानवर्णनम्। २०४-२०५

अन्यां कन्यां रूपसम्पन्नां दर्शयित्वा शुल्कं गृहीत्वा यो रूपवयोगुणहीनां वा वोढुर्ददाति ते उभे कार्ये दण्डनीये। पाणिग्रहणसत्कारः कन्याया एव न तु स्त्रियाः।

१४ सम्भूयसमुत्थानवर्णनम्। २०६-२०६

दक्षिणयाऋत्विगादिषुवृतेषु वैदिककर्मसम्पादयितुमथच यज्ञकर्म सम्पादयितुं तत्र कर्मानुरूपोंऽशजात कर्तृभिः सममेव दातव्यम्। मध्ये एव विवादे प्रयुज्यमाने स्वकृतांशभागेव ऋत्विग्भवति नाधिकम्।

१५ प्रधानदक्षिणानां विभाग इत्थं सर्वेषामृत्विजा मुख्येभ्यो होताऽध्व-२१०-२११ युर्ब्रह्मोद्गातृभ्यः अर्धदक्षिणा यथा शतं तेभ्यः तदर्धं पञ्चाशदपरेभ्यस्तदर्धं पञ्चविंशतिर्मुद्राः तृतीयिनः पञ्चाशन्मुद्रामितस्यैव तृतीयांशभागिनश्चतुर्थेभ्यः पादमितं दद्यात्।

१६ यः कश्चन धर्मार्थं धनं याचमानस्तं द्यूतेन वा वृद्धिलाभे कृष्यादौ २१२-२१३ विनियुञ्जीततर्हि तत्सूदसहितं प्रत्याहरणीयम्। यद्यसौ व्यवहारविधिता स्वयाचिकां राजनिवेदनाय दद्यादसौ चौरवद् दण्डनीयः।

१७ वेतनदण्डवर्णनम्। २१५-२१६

अनार्तो भृत्यो यदि नियोजितकार्यं न कुर्यात्तदाऽसौ दण्ड्यो भृत्या च वञ्चयितव्यः आर्त्तश्चेत् स्वस्थो भूत्वा स्वनियतवेतनाधिकारी भवति।

१८ ग्रामदेशसङ्घानांकृते सम्विद्विधाय यदि विसम्वदेत् तदा राष्ट्रात्प्र-२१७-२१८ वास्योऽसौ नरः। दशदिवसावधि प्रत्यादानदानक्रमो दोषभाक् समयभेदिनां राष्ट्रात्प्रवासनमेवदण्डः।

१९ दोषवत्याः कन्यायाअसदाख्यानकथनेषण्णवतिपणानां दण्डमभियु-२१९-२२८ क्ताय दद्यात्; कन्यास्वेवपाणिग्रहणसंस्कारः करणीय-अकन्यासु लुप्तधर्मक्रियासु न तावत्पाणिग्रहणिका मन्त्राः प्रयोक्तव्याः।

या स्त्री पत्युराज्ञोल्लङ्घनं करोति साऽपि कठोरदण्डेन योजयितव्या। विभिन्न-हीनजातिभिः स्त्रीभिः संग्रहणे नानाकृच्छ्रदण्डानां विधानम्। हीनजातिकः पुरुषो स्वश्रेष्ठजातिस्त्रियं यदिगमनं कुर्यात्तदा प्राणान्तिको दण्डः। ब्राह्मणस्य किञ्चिन्न्यूनमेव दण्डनम्; राष्ट्रात्प्रवासो मुण्डनं च केशानां कारयेत्।

यस्य राज्ञोऽधिकृते राज्ये न कोऽपि चौरः नान्यस्त्रीगो, गुरुतल्पगो वा न दुष्टवागथ च न साहसिकदण्डहन्ता स राजपुङ्गवः शक्रलोकाधिकारी करादानं तुलापरिमाणं तत्रत्यनियोजकमापानां निरीक्षणं राज्ञा स्वाधिकारिभिर्निष्पक्षैः-राजपुरुषैरवश्यं कारयितव्यम्।

इत्थं व्यवहारेषु निष्पक्षो राजा सर्वथैवाऽतुलां कीर्तिं प्रजायाश्च कृतज्ञता-मावहति। राज्ञा वर्णाश्रमधर्मप्रचालनेन सदैव प्रजाः प्रयत्नेन पालनीयाः।

**नवमाध्यायः** **पृ० ८८१-९७७**

१ दम्पत्योः पत्नीरूपपतिरूपयोर्नानाजीवनसंग्रामकार्येषु धर्मपथे पदं १-१३
रक्षित्रोर्विधानवर्णनम्। स्त्रियःशक्तिरूपास्तदर्थं तासां शक्तेः क्षयो नैवेष्टः; सर्वथैव विभिन्नगृहस्थकार्येषु व्यापृतानां स्त्रीणामहर्निशं रक्षणमेव शास्त्रोद्दिष्टः श्रेयसां पन्थाः। अरक्षिताः स्त्रिय उभयोः कुलयोर्विनाशकारिण्यः। अतस्तासां रक्षा सदैव विधातव्यातासां रक्षणेन कुलाचारः सन्ततिसमुत्थानं चरित्रं कुलं सर्वाण्येतानि च रक्षितानि भवन्ति। यादृक्चित्रो यन्त्रे प्रतिबिम्बो मनुष्यस्य भवति तादृशी छाया तत्र चित्रभित्तौ परिष्काररूपेण समायाति तद्वदेव मातृ-गर्भे स्थितः पञ्चभूतात्मको भ्रूण ईश्वरेच्छया मातृपित्रोरविकलं मूर्त्तिरिव संपद्यते सन्ततिशुद्ध्यर्थं रजोवीर्यशुद्धिः शास्त्रकृद्भिः प्रतिपादिता। स्त्रियाः शक्तिः सर्वथैव रक्षणीया। जायाशब्दनिरुक्तिः। स्त्रीणां रक्षोपायासाध्यैः कर्मभिः शक्या कर्तुम्। अर्थसंग्रहे तद्व्यये गृहे शुचितासम्पादनाय देवार्चनादिषु तत्तद्वस्तु-संग्रहार्थं पाककर्म सम्पादयितुं च तेषां विनियोगः सुष्ठु प्रकारेण गृहपतिः सम्पाद्येत पत्न्यासह।

नारीणां षड्-दूषणवर्णनम् तेभ्यो वारणप्रयासः। १४-१७

२ स्त्रीणां चित्तसंक्षोभो नानादुष्टप्रयासैर्यथा संजायते तेषां परिगणनम्।

सर्वसुन्दरोमार्गस्तासां चित्तदौर्बल्यरोधनाय एष एव यत्नः करणीयो यत्र पतिर्जागरूकः सन्स्वपत्नीं शुभकार्ये प्रत्यहं नियुञ्जीत येन मनसश्चाञ्चल्यं न भवेत्। सतीत्वं स्त्रीणां स्वभावविपरीतत्वमितिमनुना प्राक्सृष्टेः सर्वं विचार्यैव गृहस्थधर्मस्य व्यवहारः कृतः। अशुद्धहृदयास्ताः सर्वथैव नानाव्यसनेभ्यः सततं रक्षणीयाः।



विशिष्टोदाहरणैः स्त्रीणां सदृषिभिः सत्पुरुषैः सद्गृहस्थसाहचर्यसम्बन्धादुत्कर्षप्रकर्षवर्णनमिहलोकयात्राविधानम्।



प्रजननकर्मणः गर्भजननात्प्रभृति परिपोषणान्तास्थितिरभिप्रेता स्त्रीनिमित्तमेतत्कार्यजातम्।

साध्व्याः स्त्रिया लक्षणम्; प्रजाधर्मो विश्वजन्य इति तत्प्रशंसनम्। कालोपपादिते यादृग्वीजं क्षेत्रे उप्यते तादृगेव स्वैर्गुणैः रोहणं भवतीत्यस्य तथ्यस्य परिपालनम्। बीजप्राधान्यात्पितुरेव सन्तानोपर्यधिकारिताऽतो परक्षेत्रे परदारादिषु गमनं शास्त्रेषु निषिध्यते। नानातिर्यक्पशुषु बृषादीनां नियोगेनानेकसन्ततिजन्म तत्र स्वामित्वं गोस्वामिनां वीजयोन्योर्नानास्थलेषु नैकविधा व्यवस्थेति सर्वं रमणीयम्।



यदा स्त्रीणां पत्यावसमये मृते सति जीवननिर्वाहादयो विधयो न सम्यक्प्रकारेण प्रचालयितुं शक्यन्तेऽथ च सन्तानयोगोऽपि न भवेत्तदाऽऽपदि स्त्रिया नियोगं विधाय स्वपतिगृहस्थदेवरेण सन्तानोत्पत्तिः करणीया परं तत्र तस्या एव नियोगो यस्या वाग्दत्तायाः भाविपतिरकालमृत्युं प्राप्तो भवेत्। घृताक्ता एव देवरादयः गर्भधारणपर्यन्तं नियोगविधिना व्यवहरेयुर्नान्यथा।

यदि कामजेन पुरुषेण विधवयाऽन्यसन्तानाः क्रियन्ते तदाऽपराधभाक्त्वं तस्याः। यादृक्पापो गुरुतल्पगस्य तादृगेव तन्नियोगकर्त्तुर्भवति। शास्त्रेषु नियोगविधिः पशुधर्मसंज्ञया निगदितोऽतोऽग्राह्यः। तत्र वेनराज्यशासनोदाहरणम्। वर्णसाङ्कर्यदोषो न स्यादित्येतदर्थं त्याज्य एष विधिः।

३ विभिन्न सङ्कीर्णयोनिजातानां पुरुषाणामनुलोमज-प्रतिलोमजस्त्री- २४-४२
सम्बन्धैर्विविधसङ्करजातीनां वर्णसङ्करसन्ततीनां वर्णनम् :—सूतवैदेहक-चण्डाल-नराधम-मागध-क्षत्रृजातिस्तथाऽयोगवानां परिगणनम्। निष्कर्षस्त्वयं यत्प्रतिलोमेभ्यउत्कृष्टजातीयासु समानजातीयासु च स्त्रीषु प्रतिलोमा हीनतराः पुत्राः संजायन्ते। तत्रोदाहरणं यदा ब्राह्मणः क्षत्रियवैश्यकुलजातासु स्त्रीषु योनिसम्बन्धं विधाय पुत्रं जनयति तदा तत्पुत्रस्य द्विजोत्पन्नसंस्कारैरुपनयनादिभिः संस्करणीयता यदा च हीनपुरुष उच्चकुलज्ञातीभिः स्त्रीभिः सम्बन्धं स्थापयति तदा विगर्हितसन्ततिः; तत्र संस्कारहीनतोत्तरोत्तरं समापतति। तत्र प्रतिवर्णं प्रातिलोम्यानुलोम्यवशात्पञ्चदशभेदास्तदनु तत्तद्वर्णसंकरजातस्य नानावृत्तीनां परिगणनम्।

इत्थं तपोवीजप्रभावैर्भानवजातौ मनुष्याणामुत्कर्षोऽपकर्षश्चेति क्रमो जन्मत एव विभाव्यते।

४ शनैः शनैर्बहूनां जातानां मनुष्याणां संस्कारविधिराहित्येन ४३-५०
श्रुतिस्मृति-सदाचार-परम्परानुगतविहितधर्मस्य शैथिल्याच्च वैदिकविधि-समतिक्रमणाच्च वृषलता समायाता तेषां पुण्ड्र-कोड्र-द्रविड-काम्बोज-यवन-शक-पारदापह्लव-चीन-किरात-दरद-खशा इत्यभिधानेन कथिताः श्रुतिसंस्कारपतिताः सञ्जाताः। ब्राह्मणक्षत्रियवैश्यशूद्रेभ्यो नानाऽनुलोमप्रतिलोमजासु स्त्रीषु यौन-सम्बन्धेन येषां जन्म सञ्जातं ते सर्वे दस्युशब्देन परिगणनीयास्तेषां वृत्तिजीविका-निर्वाहादिकं नानाकर्मभिः सञ्जायतेऽतस्तत्परिगणनम्।

अन्ते च चाण्डालश्वपचादीनां वृत्तिगणनं विधाय ग्रामाद्बहिर्वासत्वं यस्य मृतदेहस्य न कोऽपि ग्रहीता तस्य यथा राजाज्ञा निर्हरणमित्यादि तेषां जीविकोपार्जनं भवेत्। अतः कलुषयोनिजातानां पुरुषाणां द्वेषमत्सरत्वं स्वार्थपरत्वं निष्ठुरत्वं विहितक्रियावर्जितत्वञ्चेति लक्षणमिति ज्ञात्वा पुरुषाणामेषां निश्चयः करणीयः।

५ एते चातुर्वर्ण्याद् भ्रष्टा जनाः कुत्रचित्पितुः स्वभावं समनुवर्तन्ते ५९-६१
कुत्रचिच्च मातुः प्रकृतिं विन्दते योनिसङ्कराणां जनानां मातृतः पितृतश्च स्वभावे

परिवर्तनं दृश्यते। वर्णदूषकानामेषां वृद्धिः शासनेन सर्वथा निषेद्धव्या। यतस्तेषां वर्धनेन राष्ट्रस्य महती हानिः सम्भाव्यते।

६ एतेषां सङ्करजातानां ब्राह्मणार्थे गवार्थे धनम्विनैव ६२
स्वशरीरत्यागस्तद्वदेव बालस्त्रीणां समुद्धाराय यदि जीवनस्यार्पणं तदा जन्मसिद्धिः सञ्जायते।

७ चतुर्वर्णानां वृत्तिवर्णनम्; अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रह- ६३-१३२
इति पञ्चविधो धर्मः समासेन चतुर्वर्णानां कृते विहितः। अनुलोमसंकरजातानां सप्तभिर्युगैः प्रथमजन्मपितुः सादृश्यमिति कथनम्। प्रतिलोमजानां द्विजसंस्कारानर्हत्वम्। बीजक्षेत्रयोरथ बीजस्य क्षेत्रस्य च पृथक् पृथक्प्राधान्यमिति प्रतिपाद्य बीजप्रभाव एव सर्वतो गरीयानिति प्राधान्यं बीजस्य। ब्राह्मणानां प्राधान्येन षट्कर्मकर्मव्यपदेशस्तद्वदेवेतरेषां क्षत्रविट्शूद्राणाम्।

आपत्तिकाले ब्राह्मणः स्वकीय षट् कर्माणिकुर्वन्नशक्तौ क्षत्रियवृत्त्योपजीविकां कुर्यात्तथैवान्येषां वर्णानामापदि स्थितिः। वैश्यस्य वाणिज्यकृषिकुसीदा वृत्तयस्तासां प्रयोजनं धनवर्धनम्। तथैव त्रयाणां वर्णानां सेवैव शूद्रस्य धर्मस्तैः सहैव वृत्तिजीविकादीनां वर्णनम्।

## एकादशाध्यायः पृ० १०२३-१११६

१ प्रथमं प्रायश्चित्तविधिकृते प्रतिज्ञायास्मिन्नध्याये यद्दानं निर्धनेभ्यः १-१६
स्नातकेभ्यो देयमिति विषयान्तरं क्रियते तत्र समाधानमाह प्रकरण एष आश्रमधर्मसम्बन्धी तत्र प्रायश्चित्तानामतुल्यरूपत्वेन सहैव दानस्य निमित्तत्वमतस्तदधिकारिणः परिगणयति ग्रन्थकारः। अस्मिन् संसारे येऽर्थार्थिनः सन्ति तत्र विवाहाय धनमपेक्ष्यन्ते नित्ययज्ञाग्निष्टोमाद्यर्थं ये जनावृत्तिनिर्वाहकास्तेषां कृते दानं प्रशस्यते रोगपीडिताय स्नातकाय गुरुसेवार्थं विद्याव्रतेभ्यो विद्वद्भ्योऽवश्यं दानं दातव्यम्। यज्ञविधिमन्तरा स्वेच्छया सोमपाने प्रमाद इत्येतदर्थं प्रायश्चित्तविधिः।

यः कश्चन दुःखेन धनरहिततया जीवनसम्पादकेभ्यः स्वबन्धुबान्धवेभ्योऽधिकारिभ्यो धनसाहाय्यं न करोति पुनश्चपरजने स्वनामप्रख्यापनार्थं बहु ददाति

स मध्वास्वादमिवविषोपमं दानं करोति तत्र दाता:प्रत्यवायं लभते धर्मस्य निसर्गतो गतिरवरुद्धा भवति। राजा सार्वजनिककल्याणकामनया श्रीपरमेश्वरप्रीत्यर्थं समर्थेभ्यो वणिग्जनेभ्यो धनं गृहीत्वा योग्यवेदविद्भ्यो यज्ञसिद्ध्यर्थं धनं विनियुञ्जीत। यथाकालं सर्वे वर्णाः सर्वदैव विष्णुप्रीत्यर्थं यज्ञाय धनं गृह्णीयुः कदापि हठाद्धनग्रहणं न करणीयम्।

२ असत्पुरुषेभ्यो धनं गृहीत्वा यो राजा साधुजनेभ्यः प्रयच्छति तस्योभौ १७-२६
लोकौ सुपरिष्कृतौ। अयज्ञशीलानां धनमासुरपदवाच्यं यज्ञशीलानां च देवस्वमित्याख्यया प्रसिद्धं यज्ञनिमित्तं धनं यदा समाह्रियते तदा दण्डरूपेणावश्यकत्वं न कर्तव्यं तथाकरणे राजा दोषभाक् संजायते। अतः सर्वजनरक्षणपुरःसरं धर्मषड्भागग्रहणं राज्ञो धर्मजनकं नान्यत्। यो विप्रो यज्ञाय धनं गृहीत्वा तस्य यथायोग्यं विनियोगं न करोति स सर्वथैव दोषभाक्। यदि बहूनां यज्ञानां समयावधिपर्यन्तं सम्पन्नता न स्यात्तदा श्रौतस्मार्तविधिवद् अभिजिद्विश्वजिद्भ्यां कार्यं करणीयम्। अनापदि सर्वथैव वित्तशाठ्यं वर्जयित्वैव यज्ञसम्पादनं श्रेष्ठतरं यदि विद्यमानधनो यजमानः सविधि यज्ञं न सम्पादयति तदा प्रायश्चित्तीयते।

३ ब्राह्मणः स्वमन्त्रजपप्रभावेणैव स्वशत्रून् विजित्य जन्मनः साफल्यं ३०-३४
कुर्यात्। क्षत्रियः स्वबाहुबलेन शत्रून् जित्वा स्वस्थितिं सर्वथा रक्षेद् वैश्यशूद्रौ च धनेन स्वस्थितिं निरापदां कुर्याताम्। ब्राह्मणः स्वविधिप्रयुक्तजपहोमैश्चापत्तिं तरेत्। राजा कदापि ब्राह्मणो दुर्बलोऽयमिति मत्वाऽवमानेन व्यवहारस्तेन सह न कुर्यात्।

४ अग्निहोत्रे वेदपारगस्य विधिज्ञस्य ब्राह्मणस्यैव नियोग इष्टस्तत्र ३५-३६
प्रतिनिधिरूपेण न कन्या, नाऽपि युवतिर्नापि बालिशोऽज्ञानो बालको ग्रहणीयः। यदि कदाचिल्लोभयुक्तो यजमानः कथञ्चनैतान् जनानुपयुञ्जीत तदा तस्य नरके पातः सुनिश्चितः। यदि स्ववित्तानुसारिणी यज्ञदक्षिणा धनसम्पन्नो न दापयति ऋत्विग्भ्यो ब्राह्मणेभ्यस्तदाऽनाहिताग्निरूपं प्रायश्चित्तं प्रतिपद्यते। सर्वदैव स्वल्पदक्षिणा यज्ञा वर्ज्या विदुषा। अल्पदक्षिणको यज्ञ इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशूंश्च व्यथयति तस्मादल्पदक्षिणं यज्ञं परिवर्जयेत्।

५ नित्यविधिप्राप्तानामग्निहोत्रादीनां त्यागेन अपोहनेन च ब्राह्मणः ४०-५२
प्रायश्चित्तं प्राप्नोति तत्र चान्द्रायणव्रतविधानमेव शुद्धिकारकं नान्यथा। विहितकर्मणोऽकरणान्निन्दितस्य गर्ह्यकर्मणः करणाद् ब्राह्मणः प्रायश्चित्तीयते। अकामतः पापे कृते प्रायश्चित्तविधिः। कर्मव्यतिक्रमेऽपि तथैव श्रुतिनिदर्शनात्प्रायश्चित्तकरणम्। तत्राकामतः पतने वेदाभ्यासेन शुद्धिः कामतः पतने च विविधप्रायश्चित्तैश्च सञ्जायते। यदि दुश्चरितकृतानां कर्मणां प्रायश्चित्तकरणं न भवति तदा विरूपोऽन्यजन्मनि नरः सञ्जायते। तत्र नानारोगाकुलानां प्रायश्चित्तहीनानामन्यजन्मनि दुष्कर्म भुक्तवतां परिगणनम्। अतो भाविजन्मसु नानानिन्द्यरोगमुक्तिलाभार्थं विदुषा नित्यं प्रायश्चित्तं करणीयं येन दोषभाङ् न भवेत्।

६ महापातकानां वर्णनम्:—ब्रह्महत्या सुरापान ब्राह्मण- ५३-५७
स्त्रीनिषेवण-सुवर्णहरण-गुर्वङ्गनागमन तत्संसर्गश्च महापातकानि। पुनः प्रकारान्तरेण ब्रह्महत्यासमानि महापातकानि सुरापानसमानि हिरण्यचोरकर्मणां समानि गुरुपत्नीगमनसमानि च महापातकानि परिगणितानि।

७ पुनरुपपातकानां वर्णनम्:— ५८-६५
पशुहिंसन—शूद्राद्ययाज्यजातियाजन — पारदार्यदास्यवृत्तिगुरुमातृपितृत्यागस्वाध्यायविस्मृति-यज्ञाग्निहोत्रत्यागा इत्येतान्युपपातकानि। तत्र परिवेत्तुः कनीयसो भ्रातुरुद्वाहे दर्शपूर्णमासादौ तयोरेवार्त्विज्यम्। कन्यायादूषणकथनं, वार्धुषिकवृत्तिकल्पनं, व्रतस्यलोपस्तडागारामादीनां स्वस्त्रियाः पुत्रस्य च विक्रयउपपातक युक्तान्यऽतो वर्ज्यान्येतानि कर्माणि। नानाद्रव्याणां चौर्यं मद्यपस्त्रीसेवनं स्त्रीणां शूद्राणां विशां क्षत्रियाणाञ्च वधो नास्ति परलोक इति मिथ्यावाद इत्येतानि पुनरुपपातके परिगणितानि।

८ ब्राह्मणकृते दण्डहस्तादिभिः शरीरपीडाकरणमघ्रेयलशुन- ६६-६९
पलाण्डु पुरुषशकृदादीनां घ्राणकरणं तद्वदेव कुटिलता पुंसि कामकारः स्त्रीवत्सर्वमेतत्पतनलक्षणमतो मनुष्यः स्वात्मानं एभ्यः सततं रक्षयेत्। समाजे निन्दितजनेभ्यो धनद्वारा साहाय्यं वाणिज्येनानापदि जीविकापालनं शूद्रस्य सेवाऽथ च मिथ्याभाषणं गर्ह्यं कर्म तेषां वर्जनमेव श्रेयस्करम्। स्तम्बकीटादीनां तथा च

पक्षिणां हत्या मद्येन संश्लिष्टं भोजनजातं फलैद्यः कुसुमचौर्यं चेतसोऽस्थिरत्वं च सर्वदैव पतनहेतव इति तेषां परिवर्जनं करणीयम्।

९ ब्रह्महत्याप्रायश्चित्तम्। ७०-८०

द्वादशवर्षाणि यावत् कुटीं कृत्वा कृतवापनो भिक्षाशी ब्रह्महन्ता व्रतं कुर्यात्तस्य वधप्राप्तस्य शिरःप्रतिकृतिं विधाय स्वगले धारयेदेवं करणेनात्मशुद्धिःस्यात्। अथवा, यत्र धनुर्धराः पुरुषा युद्धे सज्जीभूतास्तेषां समक्षं स्थित्वा प्राणान्तं कुर्यात्। अथवा, समिद्धेऽग्नौ आत्मानं अधःशिरास्त्रिवारं पातयेत्। यदि शक्नुयात्तदाराजाऽश्वमेधयज्ञेन ब्रह्महत्यापनोदनं कुर्यात्। अथवा वेदाभ्यासशीलो नितरां स्वगृहे तिष्ठेत्। पुनः कल्पविशेषं प्रतिपादयति :— सरस्वती नदीमभिमुखीकृत्य मध्येमार्गं यावन्ति स्रोतांसि समायान्ति तत्र स्थितो वैदिकस्वाध्यायेन समयमतिवाहयेदेतेन प्रायश्चित्तोद्धारो भवेत्। एतस्मिन्नियतावधौ प्रतिदिनं कल्याणकारिकार्यं सम्पादनीयं सहैव तपस्याऽपि करणीया।

१० पुनः प्रायश्चित्तवर्णनम्। ८१-८८

आत्मनो दोषं ब्राह्मणानां क्षत्रियाणाञ्च समक्षं समुद्घाट्याश्वमेधेनेष्ट्वाऽवभृथस्नानेन मनुजो झटिति मुक्तो भवति पापात्।

पुनः पुनः प्रायश्चित्ते क्वाचित्के सन्देहे शिष्टब्राह्मणेभ्यः स्वाशयं समुद्घाट्य सर्वथा स्वात्मशुद्ध्यै यतनीयम्।

एषा पूर्वोक्ता शुद्धिरकामतो दोषकरण एव समुचिता कामतः करणे तु प्रायश्चित्ती भवति मनुजः। कामतो ब्रह्महत्यायास्तु शुद्धिरेव नास्ति।

११ अकामतः सुरापाने स्वशरीरमग्निप्रज्वलिते इन्धने प्रक्षिप्य शुद्धिरिष्यते ८९-९६

ब्राह्मणस्य। सुरापाने नाना दोषा अतो द्विजातिभिः सुरा न पेया। ये च सुरापानकर्तारो ब्राह्मणाः शूद्रा एव ते।

१२ सुवर्णचौर्यनिष्कृतिः। ९७-१०१

सुवर्णस्तेयी ब्राह्मणः स्वचौर्यकर्म ब्रुवन्राज्ञः समक्षं ततो दण्डं पृच्छेत्। यदा राजा तं वधेन दण्डयति तदा शुद्धिरथवा तपःकरणेन चौर्यप्रायश्चित्तशुद्धिः। तपःस्थितो ब्राह्मणो ब्रह्महत्यापापापनोदनवद् द्वादशवर्षाणि यावच्चीरवासा अरण्ये वसँस्तपः कुर्यात्तदैव मलाच्छुद्धिः।

१३ इत्थं गुरुतल्पगतस्य द्विजस्य लौहमय्याज्वलन्त्याःस्त्रियाः प्रतिमया १०२-१०५
सह संयोगो मृत्युर्वा शुद्धिकारणम्। अथवा स्वकीयशिश्नस्य कर्त्तनं कृत्वाऽ कुटिलो गच्छन्नञ्जलौधारयित्वाऽऽनिपाताद् गच्छेत्।

यदि मतिभ्रमात्स्वभार्याभ्रान्त्याऽगम्यागमनं क्रियते तदा तु कृच्छ्रं प्राजापत्यं वर्षमेकं कुर्यात्। अथवा नियतं त्रीन्मासान् यावत् चान्द्रायणं चरेत्। तत्काले पयोमूलघृतादि सेवनीयं यवागूपेयं च स्वजीवनाय समारम्भणीयम्।

१४ उपपातकिनां कृते देहविशुद्धये नानाविधव्रतानां प्रतिपादनम् १०६-११५
अकामतोगोहत्याकर्त्ता द्विमासं यावद् भैक्ष्यं चरन्कृच्छ्रसान्तपनं व्रतं कुर्यात्। वर्षमेकं गोरक्षाकरणमेव प्रायश्चित्तपरिहारः। गोहत्याप्रायश्चित्ती कदापि गवां-कृते मनसि हिंसाभावं न कुर्वीत सर्वात्मभावेन गोरक्षणपरायणः स्यादेवं करणेन त्रिभिर्मासैर्गोहत्याप्रायश्चित्तापनोदनं भवति। एकादश वृषभान्गाश्च वेदविद्भ्यो दापयेत्तदा पापान्मोचनं सञ्जायते। संक्षेपत इत्थं कृतोपपातकानां प्रायश्चित्त-विधानं प्रतिपाद्य कृच्छ्रचान्द्रायणादिभिरात्मशुद्धिरिष्यते प्रायश्चित्तकरणे।

१५ कामतः स्वरेतसः स्कन्दने ब्रह्मचारी पाकयज्ञान्पूर्णमासादीन् ११६-१२२
कुर्वीत अथवा घृतेन "सं मा सिञ्चन्त्विति" मन्त्रेणाहुतीर्जुहुयात्। मिथ्या-रेतः स्कन्दी ब्राह्मंतेजः समर्जयति तस्य विसर्जनं करोति तदर्थमेककालं भैक्ष्यं विधाय स्वत्रुट्यः ख्यापयन्सप्तगृहेषु प्रतिदिनं चरेदेवं प्रातर्मध्याह्नापराह्णेषु स्नानं कृत्वा वर्षेणैकेन शुद्ध्यति ब्रह्मचारी।

१६ सर्वेषु जातिभ्रंशकरकुकृत्येषु स्वेच्छया पतितस्य द्विजस्य कृच्छ्र- १२३-१२४
सान्तपनमनिच्छया च प्राजापत्यव्रतं शुद्धिकारणं भवति। इत्थं कामतोऽकामतः पतितगर्ह्यकर्मकरणे गुरुलघुभेदेन प्रायश्चित्तभेदः।

१७ यदि कश्चिद् द्विजो वधं क्षत्रियस्य करोति तदा १२५-१६१
ब्रह्महत्यायाश्चतुर्थांशो दण्डत्वेन तस्मै दातव्यो वैश्ये हतेऽष्टमांशोदण्डोदेयः सद्वृत्ते शूद्रे हते सति षोडशांशो दण्डः करणीयः।

अकामतः क्षत्रियहन्ता द्विजः सहस्रसंख्याकाः गा वृषभैकेन सहिता दद्यात्। अथवा नगराद्दूरं वसतिं विधाय कन्दमूलफलाहारस्तपः कृत्वा पापापनोदनं कुर्यात्। वैश्यघाती द्विजो गवामेकशतं दद्यात् तथैव शूद्रघाती षण्मासावधि

कृत्स्नचान्द्रायणादिकं कुर्यादथवैकादशगाः वृषसहिता दद्यादात्मप्रायश्चित्तार्थम्।

लघुचतुष्पदानां प्राणिनां हत्यायां शूद्रहत्यावदेव विधानं चरेत्। त्रिरात्रं पयः पीत्वा योजनपर्यन्तं गमनं वा विधायाब्देवताकं मन्त्रं जपेत्। इत्थं सूक्ष्म-प्रायश्चित्तविधिं प्रतिपाद्य क्रमशोऽभक्ष्यभक्षणोत्थितप्रायश्चित्तानां विधिरपि विशे-षेण विहिता विस्तरभयान्न लिख्यते मूलग्रन्थादेव सुधिया ध्येयम्।

१८ स्तेयदोषापहर्तॄणां व्रतानां विधिः। १६२-१७०

यदि द्विजः कामाद् धान्यान्नधनानां चौर्यं करोति तदा सजातीय-गृहाद् बहिःस्थितः कृच्छ्रसान्तपनेन पूतो भवति। मनुष्यापहारकः स्त्रीक्षेत्रगृहापहारकश्च चान्द्रायणव्रताच्छुद्धः सञ्जायते। अल्पमूल्यानां द्रव्याणां चौर्यकरणे कृच्छ्रसान्तपनेन भवेच्छुद्धिः। भक्ष्यभोज्यवस्तूनामपहरणे यानशय्या-सनादीनां च चौर्ये पञ्चगव्यप्राशनाच्छुद्धिर्जायते। इत्थं कुत्रचित्त्रिरात्रोपवासेन कुत्रचिच्च कणभोजनेन क्वचन त्रिरात्रं पयोव्रतेन शुद्धिरिष्यते।

१९ अगम्यागमने ये ह्युपाया गुरुतल्पगस्यप्रायश्चित्ते त- १७१-१७५

एवाश्रयणीयाः। पैतृष्वसेयी भगिनी मातुस्वस्रीया एताः सर्वदैवाऽगम्याः। एता वर्ज्या एव। मैथुनसेवने सचैलस्नानविधिः।

२० तथैव स्त्रियाः कामतो विषयकरणे तां पुरुषवदेव व्रतानि १७६-१७८

चारयित्वा पतिः शोधयेत्। पुनः परपुरुषसेवने तु कृच्छ्रचान्द्रायणेन तस्याः स्त्रियाः शोधनं भवेत्।

२१ पतितपुरुषैः सह संगतिकरणेन दोषः। १७९-१९१

तत्र येषां येषां संसर्गेण ये दोषाःसमापतन्ति तेषां निस्तारोऽपि तद्वदेव समाज-बहिर्निष्कासनं तथा व्रतादिभिः शुद्धिं विधाय पुनः प्रतिष्ठापनं करणीयम्। नवघट-स्थापनादिकं स्नानशुद्धिं विधाय कर्तव्यम्। इत्थमेव पतितासु स्त्रीष्वपि प्रायश्चित्त-विधिः कर्तव्या। अन्ततो ये बालघ्नाः कृतघ्नाः शरणागतहन्तारः स्त्रीघातकाश्च जनास्तेषां पापशुद्धिः शास्त्रदृशा नैव कर्तुं शक्यते।

२२ ये द्विजाः शास्त्रविधिमुत्सृज्य एववयोऽतिक्रमेण व्रात्याः १९२-२०१

सञ्जाता अथ च यज्ञोपवीतं गृहीत्वाऽपि पतितवदाचरन्तः स्थितास्तेऽपि त्रीन्कृच्छ्रान् विधाय शुद्ध्यन्ति। ये च ब्राह्मणा निन्दितकर्मभिरर्थार्जनं कुर्वन्ति

तेषां गायत्रीजपेन तपसा च शुद्धिः। यश्च ब्राह्मणोऽसत्प्रतिग्राही स त्रिसहस्र गायत्रीं प्रतिदिनं गोष्ठेस्थित्वा पयआहारेण मासमेकं कालं यापयञ्छुद्ध्यति। वेदविधिलोपको ब्राह्मणः सम्वत्सरं यावद्यावकाहारः संस्तत्पापात्पूतो भवति। श्वश्रृगालखरदष्टस्य प्राणायामकरणाच्छुद्धिरुष्ट्रयानं कामतः खरयानं चारुह्य विप्रः स्नात्वा प्राणायामं विधाय शुद्ध्यति।

२३ स्नातकव्रतलोपे नित्यानां कर्मणां समतिक्रमे २०२-२०५
चोपवासः शोधनम्।

२४ स्ववयोवृद्धकृते हुँकारत्वङ्कारयोः प्रयोगे प्रायश्चित्ती- २०६-२०८
स्नात्वोपोष्य वृद्धं प्रणामादिभिरभिवाद्यप्रसादयेत्। यदि कथञ्चिद् ब्राह्मणं तृणेनापि ताडयेत्कश्चित्तदाऽसौ प्रायश्चित्ती विनम्रो भूत्वा तं प्रसाद्य शुद्धो भवति सर्वथैव ब्राह्मणोपरि दण्डप्रहारकर्ता नरकगामी; यदि रुधिरस्य प्रवाहः स्यात्तदा तु दीर्घकालपर्यन्तं प्रहर्तुर्नरकवासः। तत्र निष्कृतिः कृच्छ्रातिकृच्छ्रव्रतैः।

२५ अत्रापरिगणितानां पापानां यदि प्रायश्चित्तमपेक्ष्यते तर्हि २०६-२२०
प्रायश्चित्तकर्तुः शक्तिं पापस्य गुरुतां लघुतां च विचार्य तस्मै दण्डं प्रकल्पयेत्।

प्राचीनदेवर्षिपितृसेविताः पापापनोदनोपायाः क्रमेण कथ्यन्ते; प्राजापत्यंनाम व्रतं तदस्ति यत्र मनुष्योऽयाचितमन्नं त्रिदिवसं प्रातस्तथैव त्रिदिवसं सायं त्र्यहं पराह्णे च व्रते गृह्णीयात्।

सान्तपनं नाम तद्यत्र गोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकैः प्राश्यैकरात्रं कृतोपवासः प्रायश्चित्ती तिष्ठेत्। इत्थमेवातिकृच्छ्र-तप्तकृच्छ्र-पराकचान्द्रायण-शिशुचान्द्रायणादीनां परिभाषणम्।

२६ सर्वेष्वेतेषु व्रतेषु महाव्याहृतिभिर्होमः करणीयः। २२१-२३१

यम नियमादिपालनं सर्वथैव कर्तव्यम्। स्वप्रायश्चित्तवेलायां मौनावलम्बनं पतितैः सहानभिभाषणं पालयेत्। भूमिशायी ब्रह्मचारी नितरामार्षग्रन्थस्वाध्यायशीलो व्रती स्यात्। यः कोऽप्येनः कृत्वाऽन्येभ्यो दोषं स्वं प्रकाशयेत्तपः कुर्वीत स्वाध्यायशीलः स्यादथच दानं दद्यात्तदा शुद्धिः। स्वकृताधर्मस्य प्रकाशनं स्वदुष्कृतानां कृते मनसि पश्चात्तापः। अन्ते च प्रक्षालनाद्धिपंकस्य दूरादस्पर्शनं वरमित्यभियुक्तोक्त्या समेषां मनुजानां स्वधर्म एव शुभकर्मफलजनक इति तमनलसः सेवेत।

धर्मेणाधर्मेण च यदा सुखदुःखानि चक्रवत्परिभ्रमणरूपेण प्राप्यन्ते तदा धर्मस्यैव क्रिया शोभनेति स आचरणीयः। विद्यारण्यस्वामिभिः "पञ्चदशी" ग्रन्थे सत्त्व-रजस्तमसां सविशेषरूपेण परिचयो दत्तः परं व्यवहारतः सत्त्वं ज्ञानं तमोऽज्ञानं रजो रागद्वेषाविति शास्त्रेऽस्मिन्प्रतिपादितम्। तत्प्रायो गीताकारानुसार्येव-वेदाभ्यासस्तपस्या ज्ञानं शौचमिन्द्रियनिग्रहधर्मकर्म्मस्वात्मचिन्तनमित्येतत्सा-त्त्विकगुणस्यलक्षणम्। राजसस्य गुणस्य कर्मणि प्रारम्भे रुचिः क्रमश उत्साह-हानिश्चातो वृथारम्भोऽधैर्यमसत्कार्यारम्भो नितरां विषयोपसेवनमिति लक्षणम्। तामसस्य लोभो निद्राऽधैर्यं क्रूरता नास्तिक्यं भिन्नवृत्तित्वं याचनाशीलत्वं प्रमाद इति लक्षणम्। सामान्यप्राणिष्वेतेषां सङ्गमनं—यत्कर्म कृत्वा कुर्वन्करिष्यन्नपि लज्जा समापतति तत्सर्वं तामसगुणलक्षणम्। अस्मिंल्लोके येन कर्मणा पुरुषः ख्यातिं प्राप्नोति पुनर्धननाशे न कोऽपि शोकस्तद्राजसलक्षणम्। येन कार्येण कृतेन समेषां तोषो लज्जाऽपि कर्तुंर्न जायतेऽथ चात्मा सन्तुष्यते तत्सत्त्वगुणस्य लक्षणं ज्ञात-व्यम्। अधमा-मध्यमाऽग्र्याभेदेन कर्मणां त्रिविधानां नानागतिप्राप्तिरिति-वर्णनम्।

२ कृतकर्मफलवर्णनम्। ६०-८१

अयं जीवो यां यां योनिं येन येन कर्मणा प्राप्नोति त्वासां सर्वासां परिगण-नम्। ब्रह्महा ब्रह्मराक्षसतां समश्नुते पृथक्पृथग्वस्तूनां स्तेयकरणेन विभिन्ननीच-गतीनां तद्दुःखानां च वर्णनम्। बलात्परद्रव्यापहारकस्तिर्यग्योनिं गच्छति, अहुतं हविर्भुक्त्वाऽपि सैव गतिः। स्वधर्माच्च्युतानां त्रिवर्णानां नानागतिप्राप्तिवर्णनम्। संक्षेपतो यादृशेन भावेन मनुष्यो यत्कर्म निषेवते तादृशेन शरीरेणासौ तत्फलमश्नुते।

३ विप्राणां निःश्रेयस्करकर्मवर्णनम्। ८२-१२६

वेदस्याभ्यसनं तपस्या ज्ञानार्जनमिन्द्रियाणां संयमः मनसा कर्मणा वचसा च प्राण्यहिंसा तथा गुरुसेवनं सर्वाभ्युदयकारी श्रेयसः पन्थाः। सर्वेषां कर्मणां श्रेष्ठतममात्मज्ञानं परं संसारे वैदिककर्मानुष्ठानमन्तरा नान्या गतिरतः कर्मसु तत्कर्मणो ज्यायस्त्वम्। एतच्छ्रुतिस्मृतिप्रतिपादितकर्मकरणेन विद्या बलवती भवत्यनायासेन मनुजश्चरमं पुरुषार्थं मोक्षं प्राप्नोति। प्रवृत्तकर्मणां सेवनेन देव-

साम्यं निवृत्तानां सेवनेन पञ्चभूतानामुपरिस्थितिरन्ते च सर्वभूतेष्वात्मभावं साम्यं पश्यन्नात्मयाजी स्वाराड्लोकप्रापको जायते। सर्वथैव ब्राह्मण आत्मज्ञानाभ्यासी शमशीलो वेदाभ्यासी च सयत्नं स्यात्। एवं करणेन तस्य जन्मसाफल्यं सञ्जायते।

वेदस्य सर्वोत्कृष्टता वेदबाह्यस्य सर्वस्य कर्मणोऽसारता तमोनिष्ठता च। वेदादेव सर्वसृष्टिविस्तार ऐहिकामुष्मिकाभ्युदयसाधकस्य धर्मस्य च निष्पत्तिः। वेदवित्पुरुषः सेनापतित्वं मण्डलेश्वरत्वं दण्डदानसामर्थ्यं सार्वभौमत्वयोग्यताञ्चावहति।

अज्ञग्रन्थपाठकर्तृधारिज्ञानिव्यवसायीपूत्तरोत्तरं श्रेष्ठत्वम्। विप्रस्य तपो विद्या चोभे निःश्रेयस्करे तपःकरणेन पापक्षयो विद्यया चामृतत्वप्राप्तिः।

प्रत्यक्षमनुमानं विविधागमं शास्त्रमित्येतानि त्रीणि चक्षंषि मानवानां, वेदशास्त्रस्याविरोधिना तर्केण आर्षं धर्मोपदेशं यः शास्त्रकुशलः पश्यति स एव श्रेयोभागी नान्यः। वेदानुसारि पर्षदो गठनं त्रैविद्यकैर्ब्राह्मणैस्तत्करणीयं धर्मस्य संशयनिराकरणार्थम्। सामयिकाज्ञानां कृतं यद्विधिदूषितं मतप्रवर्तनं तन्मनुसम्मतं नास्त्येव यतस्ते सर्वे स्वार्थलोलुपाः परमार्थलोपका अव्रता अमन्त्रका भवन्ति। एतादृशाः पुरुषाः सहस्रशोऽपि भवेयुस्तदाऽपि परिषन्न सञ्जायते। अधर्मे मनः कदापि न देयम्। आत्मा सर्वेभ्योगुरुतरः एतत्संहितानुसारं कार्यक्षमः पुरुष इहलोके परत्र च चरमामुन्नतिं प्राप्नोति महसे श्रेयसे च यत्नशीलः समस्तगुणाकरः पुरुषमूर्धन्यो नरो जायते। एतद्धर्मशास्त्रप्रशंसनम्। एतत्प्रतिपादितधर्मकरणेन नितरां गुणशालित्वं मनुष्यजन्मनः।

संक्षेपतो विरचिता विदुषां मुदैव,
सूची कृताऽपि ननु दोषकरी यथा स्यात्।
क्षाम्यन्तु देवयजनाः परमार्थतैव,
विद्याजुषां क्वचन नास्त्यनुदारभावः॥

इति विदुषां वशम्वदौ—

लक्ष्मणगढाभिजन-ब्रह्मदत्त-त्रिवेदि नवलगढाभिजन-रामनाथ-मिश्र दाधीचौ



॥ श्रीगणेशाय नमः ॥

# ॥ मनुस्मृतिः ॥

## मेधातिथिकृतमनुभाष्यसहिता ।

## अथ सप्तमोऽध्यायः ७ ।



**राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ॥**
**संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ १ ॥**

धर्मशब्दः कर्तव्यतावचन इत्युक्तम् । यद्राज्ञा कर्तव्यं तदिदानीमुच्यत इति प्रतिज्ञा । कर्तव्यं च दृष्टार्थं षाड्गुण्यादि, अदृष्टार्थमग्निहोत्रादि । तत्रेह प्राधान्येन दृष्टार्थमुपदिश्यते । तत्रैव च राजधर्मप्रसिद्धिः ।

राजशब्दस्तु नेह क्षत्रियजातिवचनः किं तर्ह्यभिषेकाधिपत्यादिगुणयोगिनि पुरुषे वर्तते । अत एवाह । यथावृत्तो भवेन्नृपः । 'नृप' ग्रहणेन जनपदैश्वर्यवतोऽधिकारमाह ।

प्रमाणान्तरमूला ह्यत्र धर्मा उच्यन्ते, न सर्वे वेदमूलाः । अन्यमूलत्वे च यदत्र धर्मशास्त्राविरुद्धं तदुच्यते । तथा च कात्यायनः "अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेदिति" ।

यथावृत्तः यद्वृत्तं यत्प्रकारं वाऽस्येति च बहुव्रीहिः । अन्यपदार्थो राजा । यथार्थप्राधान्येऽव्ययीभावः स्यात् । वृत्तं परिपालनार्थो व्यापारोऽदृष्टार्थश्च ।

संभवश्चोत्पत्तिः । स उक्तो "राजानमसृजत्प्रभुः" इत्यादिना ।

परमा प्रकृष्टा सिद्धिर्विजिगीषोरैकाधिपत्यम् ।

राजवृत्तस्य फलप्रतिज्ञेयम् ॥ १ ॥

**ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ॥**
**सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ २ ॥**

'ब्रह्म' वेदः । तत्र श्रुतः संस्कारो 'ब्राह्मः' । स वेदाध्ययनजन्यो ग्रहणवतोऽर्थलक्षणो वेदस्य; स्वाध्यायविधिनिर्वर्त्य इत्यर्थः । उपनयनं तु ब्रह्मग्रहणार्थत्वाद्ब्राह्ममिति युक्तम् । तथा च वक्ष्यति ( ४३ श्लो० ) "त्रैविद्येभ्यस्त्रयीं

विद्यामिति"। इतरथा विदितवेदितोपदेशः स्यात्। गर्भाधानादि स्मृतिशास्त्रा-दष्टाचत्वारिंशसंस्कारम्।

क्षत्रियेणेति। एतेन क्षत्रिय एव राज्याधिकारीति सूचितम्। क्षत्रियाभावे तदतिदेशोऽपि ग्राह्यः। अन्यथा प्रजालोपः स्यादिति भावः।

सर्वस्य करदस्य दीनानाथादेश्च।

अस्येति स्वविषयवासिनां यथास्वं जनपदपुरनिर्देशः।

यथान्यायम्। न्यायः शास्त्रं धर्मशास्त्ररूपम्, नार्थशास्त्रमौशनसादिप्रणीतम्, तमनतिक्रम्य।

परिरक्षणं परिपालनम्। अपायपरिहारः, दुर्वलानां वलवद्भिरनभिभवः, शास्त्रमर्यादानतिक्रमश्च। दुःखत्राणं परिरक्षा। शास्त्रातिक्रमे चादृष्टं दुःखम्। अतस्तदनतिक्रमे राजभयेन रक्षिता भवन्ति। राजदण्डे दुःखमिति चेन्महतो नरकादिदुःखाद्राजदण्डनमल्पीयः।

कर्तव्यमिति विधिः।

अधिकारश्चाष्टमे निरूपितः

अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात्॥
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः॥ ३॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च॥
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥ ४॥

विद्रुते पीडितेऽप्रतिष्ठिते वा। प्रभुः प्रजापतिः। स्तुतिरियम्॥ ३॥

अनिलो वायुः। वित्तेशो धनपतिर्वैश्रवणः। मात्रा अवयवाः। शाश्वतीः सारभूताः। निर्हृत्य निष्कृष्य॥ ४॥

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः॥
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥ ५॥

एषामिन्द्रादीनां सुरश्रेष्ठानां मात्राभिस्तेजोंशैर्निर्मितस्तस्माद्धेतोरभिभवति दुर्निरीक्ष्यमुखो भवति। तेजसा हेतुना।

निष्कृष्य निर्मित उत्पादितः यतः 'कृषि' रुत्पादने धातुर्वर्तते। तेनापायावधित्वान्मात्राभ्य इति पञ्चमी तृतीया वा पठितव्या॥ ५॥

तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च ॥
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ ६ ॥

तपति तपतीव संमुखोऽशक्यदर्शनत्वादेवमुच्यते । तदाह । न चैनं भुवि शक्नोति । ब्राह्मणजात्युत्कृष्टा ब्रह्मवर्चस्विनोऽपि नैनमभिमुखं वीक्षितुं शक्नुवन्ति । तदुक्तं "तमुपर्यासीनमधस्तादुपासीरन्" ॥ ६ ॥

सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ॥
स कुवेरः स वरुणः स चेंद्रः स्वप्रभावतः ॥ ७ ॥

अग्न्यादिदेवतानां मात्राशयत्वात्तच्छक्तियोगितयैवमुच्यते ।
प्रभावोऽलौकिकी या शक्तिः ॥ ७ ॥

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ॥
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥

मनुष्योऽयमित्येवं वालोऽपि भूमिपो राजा नावमन्तव्यः । किंतर्हि ? महती काचिदेषा देवतैतेन मानुषेण रूपेण स्थितेति । अतो दृष्टेनापि दोषेण राजन्यवज्ञा न युज्यते ॥ ८ ॥

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ॥
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ ९ ॥

अस्य विधेरर्थवादश्लोका एते । राजधर्मोऽपि सन् सर्वपुरुषार्थोऽयम् ।

योऽग्निं हस्तादिना स्पृशति, समिद्धस्याप्यन्तिकवर्ती भवति, स 'दुरुपसर्पी' नरः प्रमादस्खलितो दह्यते । राजा तु क्रुद्धः सपुत्रधनदारबान्धवं दहति । कुलं—ये केचिद् ज्ञातयः स्वजनाश्च तानप्यपराधसम्बन्धात्पशुभिर्धनसंचयैश्च सह नाशयति ॥ ९ ॥

कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ॥
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥ १० ॥

नतन्मन्तव्यं वन्धुर्मे राजा सुहृद्वेति । "कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि ।" प्रयोजनापेक्षया च शत्रौ मित्रवदाचरन्ति मित्रे शत्रुवत् ।

तथाऽशक्ताः कंचिदपराधं क्षमन्ते, शक्तिं प्राप्योन्मूलयन्ति। एवं देशकालावपि अतो 'धर्मसिद्ध्यर्थं' कार्यसिद्ध्यर्थं 'विश्वरूपं' कुरुते। क्षणान्मित्रं क्षणेन शत्रुः, नैकरूप एव राजा भवति।

अतो न विश्वसितव्यं राजनि। मैत्र्याद्वाल्लभ्यात्सौजन्याद्वा तत्तुल्यवयोदृष्ट्या न वर्तितव्यम्, अपि तु सर्वदा नयेन द्रष्टव्यः॥ १०॥

यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे॥
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः॥ ११॥

प्रसन्न आराधनया श्रियं ददाति। क्रुद्धो मृत्युना योजयति। अतः श्रीकामेनाराधनीयः। न केवलं श्रिया योजयति, यावदस्य शत्रवः सन्ति तानपि पराक्रम्य परितोषितो हन्ति। अतः शत्रुवधकामेन यथावत्परिचरणीयः।

पद्मा। श्रीःपर्यायोऽपि पद्माशब्दो महत्त्वप्रतिपादनार्थः प्रयुक्तः, महतीं श्रियं ददातीत्यर्थः। एते चार्था राज्ञः प्राप्यन्ते। यतः सर्वतेजोमयोऽसौ अग्न्यादित्यचन्द्रमसां तेजो बिभर्ति॥ ११॥

तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम्॥
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः॥ १२॥

प्रत्यवायाद्यथा नश्यति जनो नैवमभिप्रेतार्थलोभेनातः पुनः पुनराह। तं राजानं यो द्वेष्टि, प्रातिकूल्येन वर्तते तस्मिन्, स त्वसंशयं नश्यति। तस्य ह्याशु विनाशाय। अन्यः कश्चिदपराधं क्षमते अशक्यराजनिवेदनेन। तत्र व्यवहारभागस्य धनपरिक्षयो भवति। भूतोऽप्यर्थः। साक्षिणां चित्तवैचित्र्यादन्यथात्वमायाति—इत्यपेक्षमाणः कश्चित्क्षमेतापि राजा तद्विनाशार्थमपराधेन मनसि स्थितेन बाध्यत एवासौ शक्तिमत्वाद्राज्ञः प्रयतमानस्य स्वतन्त्रविरोधो जायते॥ १२॥

तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः॥
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत्॥ १३॥

यतः सर्वतेजोमयो राजा तस्माद्धेतोरिष्टेषु वल्लभेषु मन्त्रिपुरोहितादिषु कार्यगत्या धर्मं कार्यव्यवस्थां शास्त्राचाराविरुद्धां व्यवस्येन्निश्चित्य स्थापयेन्न

विचालयेत्। सा तादृशी राज्ञोऽनुज्ञा नातिक्रमणीया। 'अद्य पुरे सर्वैरुत्सवः कर्तव्यः। मन्त्रिगेहे विवाहो वर्तते। तत्र सर्वैः संनिधातव्यम्। तथा पशवो नाद्य सैनिकैर्हन्तव्याः। न शकुनयो वन्धयितव्याः। नर्तिका धनिकैराराधनीया एतावन्त्यहानि'।

एवमनिष्टेष्वपि। 'एतेन संसर्गो न कर्तव्यः। एतस्य गृहे प्रवेशो न देयः'।

एवंविधोऽत्र धर्मः पटहघोषादिना राज्ञाऽऽदिष्टो नातिक्रमणीयः। न त्वग्निहोत्रादिधर्मव्यवस्थायै वर्णाश्रमिणां राजा प्रभवति। स्मृत्यन्तरविरोधप्रसङ्गात्। अविरोधे चास्मिन्विषये वचनस्यार्थवत्वात्॥ १३॥

**तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम्॥**
**ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः॥ १४॥**

उक्ता राजोत्पत्तिः। दण्डोत्पत्तिरिदानीमुच्यते।

तस्मा इदं तदर्थम्। राज्ञः प्रयोजनसिद्धये दण्डमसृजदीश्वरः प्रजापतिः।

को राज्ञोऽर्थो दण्डेन ?

उच्यते। गोप्तारं सर्वभूतानाम्। 'गोप्ता' रक्षिता दण्ड एव। न दण्डेन विना राजा रक्षितुं शक्नोति। अतो राजत्वसिद्ध्यर्थ एव दण्डः सृष्टः।

धर्ममात्मजं ब्रह्मतेजोमयमिति दण्डस्तुतिः। न यागदानादि'धर्मः', किं तर्हि दण्ड एव।

न चायं प्राणधनहारित्वादधर्मो विज्ञेयः, अपि त्वेष एव धर्म आत्मजः शरीरादेव जातः प्रजापतेः।

न च पाञ्चभौतिकः, किं तर्हि ब्रह्मणो यत्केवलं तेजस्तेन निर्मितः।

'पूर्वं' राजसृष्टेः॥ १४॥

**तस्य सर्वाणि भूतानि स्थावराणि चराणि च॥**
**भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च॥ १५॥**

तस्य दण्डस्य भयात्। सम्वन्धिमात्रविवक्षायां भयहेतुत्वं नास्तीति षष्ठी। दण्डभयात्स्थावराणि भूतानि भोगाय फलकुसुमच्छायादिभिर्भोगार्थं कल्पन्ते,

तत्समर्था भवन्ति । यो हि स्थावरः फलं न ददाति स परिशोष्यते । न चेत्परिशुष्यति, सर्वतो व्याप्तदेशत्वाच्छित्वांऽगारीक्रियते ।

एतया वृक्षोपमया दण्ड्यस्य राजापथ्यकारिणः पुरुषस्यैवं कर्तव्यम्, छेदनमूलोत्पाटनादिना दण्डः प्रणेयः ।

स्थावरग्रहणं स्तुत्या दृष्टान्तार्थमीदृशोऽयं दण्डो यत्स्थावरा अपि दण्ड्यन्ते, किं पुनश्चराः । न तु स्थावराणां दण्डोऽयमित्येषा बुद्धिरस्ति ।

स्वधर्मान्न चलन्ति अकाले न पुष्यन्ति न प्रसुवते ॥ १५ ॥

तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ॥
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु ॥ १६ ॥

अन्यायवर्तिनो ये राजापथ्यकारिणो महामात्यादयस्तेषामयं दण्ड उच्यते । अन्येषां तु परस्परव्यवहारिणाम्'अनुबन्धं परिज्ञाये'त्यत्रोच्यते । तत्रैव चायं श्लोको व्याख्यातः ।

विद्याऽत्राधिका, सा च वेदार्थविषया ।

यथार्हतः यथार्हं यो यस्य योग्य इत्यर्थः ।

सम्प्रणयेत् प्रवर्तयेत्कुर्यादिति यावत् ।

एतत्सर्वमवेक्ष्य निरुप्य तत्तदपेक्षो दण्डः कर्तव्यः । अन्यथाप्रणीतो राज्ञो दृष्टमनर्थमावहेत् ।

दृष्टादृष्टभेदेन स्वप्रकृतिजनपदभेदेन सप्तमाष्टमयोर्दण्डमातृकाश्लोकयोर्भेदः ॥१६॥

स राजा पुरुषो दण्डः स नेता शासिता च सः ॥
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥ १७ ॥

स एव वस्तुतो राजा । तस्मिन्सति राजशक्तिः ।

स एव पुरुषः । येन बलीयसोऽपि पुरुषान् स्त्रीवन्न्यक्कृत्य वशीकरोति ।

स नेता । कार्याणि तेन नीयन्ते ।

शासिता । शासनं राजाज्ञा, तस्याः शासनीभावः दण्डे सति । धर्मतः कर्तृत्वमौपचारिकम् ।

चतुर्णामाश्रमाणां यो धर्मस्तत्र स प्रतिभूरिव । यथा प्रतिभूश्चलितुं न ददाति, तद्वद्दण्डोऽपि ॥ १७ ॥

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ॥
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १८ ॥

न राजा शास्त्रं शास्ति कर्तव्याकर्तव्ययोर्विधिनिषेधयोः किं तर्हि दण्ड एव। दण्ड एवाभिरक्षति बलवद्भ्यो दुर्बलान्। सुप्तेषु राजपुरुषेषु दण्डभयादेव न यथाकामं लोको व्यवहरति।

द्विविधो दण्डो राजदण्डो यमदण्डश्च ॥ १८ ॥

समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ॥
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ १९ ॥

धृतः प्रणीतः प्रवर्तितः। समीक्ष्य पूर्वोक्तदेशकालाद्यपेक्ष्य समीक्ष्य। रञ्जयत्यनुरागं प्रजासु जनयति। विपरीतं प्रणीयमानो न केवलं स्वकार्यं न करोति, 'यावद्गुरुपयुक्तो विषवद्विनाशयत्यर्थं जनस्य ॥ १९ ॥

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ॥
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥ २० ॥

अप्रणयनाद्दण्डस्य ये बलवत्तरा बलीयांसो बलेनाधिका महाप्राणतया शस्त्रहस्तमनुष्या भूयस्त्वेन वा, ते दुर्बलानपक्ष्यन् शूले मत्स्यानिव। यथा मत्स्या शूलाक्रियन्ते भोजनार्थमेवमशक्तो जनोऽधिकशक्तिभिरुपहीयेत, धनशरीरदारहरणादिना। तस्माद्दण्डार्हानतन्द्रितोऽनलसो दण्डयेत्। 'कुतो मया समीक्षा शक्या कर्तुं, नैव दण्डं करोमीति' नैवं बुद्धिः कर्तव्या ॥ २० ॥

अद्यात्काकः पुरोडाशं श्वाऽवलिह्याद्धविस्तथा ॥
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥ २१ ॥

श्वकाकादयोऽप्यत्यन्ताधमा देवैः सह संस्पर्धेरन्। देवेभ्यो दातव्यं हविश्चरुपुरोडाशादि तत्ते अद्युर्यदि दण्डेन न निवार्येरन्।

अन्यदपि यत्स्वाम्यं स्वस्वामिभावः स न स्यात्। जायापत्योः, पितापुत्रयोः। जायायाः पतिर्न स्यात्स्वातन्त्र्येण स्त्रियः प्रवर्तेरन्।

अधरोत्तरम्। यत्'अधरं' वृषलादि तत् 'उत्तरं' प्रधानं स्यात्। यदुत्तरं

ब्राह्मणादि तदवरतां निकृष्टतामियात्। शूद्रा धर्ममुपदिशेयुः। वदिको धर्मो नानुष्ठीयेत ॥ २१ ॥

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ॥
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ २२ ॥

स्वभावेनैव प्रकृत्यैव शुचिः शुद्धो धर्मार्थकामेषु स तादृशो नरो दुर्लभः, दुःखैर्लब्धुं शक्यः। किन्तु दण्डजितो दण्डेन जीयते, पथि स्थाप्यते। तद्भयान्न यथाकामं प्रवर्तते।

जगद्भोगायेति प्रागुक्तमेव ॥ २२ ॥

देवदानवगन्धर्वा रक्षांसि पतगोरगाः ॥
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥ २३ ॥

ये देवाः पर्जन्यो वायुरादित्य इत्यादयः। भोगाय कल्पन्ते शीतोष्णवर्षैर्नियतैरोषधीः पाचयन्ति। तद्दण्डभयाशङ्किनः। अन्यथा किमिति सूर्याचन्द्रमसौ धातृपर्जन्यौ वा स्वस्मात्कार्यकालान्नियतान्न विचलेताम्। कदाचिद्द्वे अहनी त्रीणि वा नोदियात्सूर्यः, सति स्वातन्त्र्ये। दण्डात्तु बिभ्यन्नातिक्रामति मर्यादाम्। तथा च श्रुतिः—

"भयात्सूर्यः प्रतपति भयात्तपति चन्द्रमाः। भयादग्निश्च वायुश्चेति"।

दानवादयश्च यदिदमखिलमहर्निशं न जगदुपघ्नन्ति, दण्डमाहात्म्यमेतत्। पतङ्गवयांसि गृहमण्डनाः शुकसारिकादयो यद्बालानामक्षिणी नोत्पाटयन्ति श्येनकाककङ्कगृध्रादयो यज्जीवतो नादन्ति तदप्येवमेव।

उरगाः सर्पाः केवलं क्रोधविषात्मकाः संभूय सर्वे न दशन्ति सर्वं प्राणिजातं तद्दण्डसामर्थ्यम्।

अतः स्तुतिरेषोच्यते। यद्देवादयो महर्धिका अचेतना वा स्वमर्यादातो न विचलन्ति भयात् किं पुनर्मनुष्याः।

अत्र श्लोकः पूर्वैः पठितः।

"दृष्ट्वा तु दैन्यं वनपाटलानां, पुष्पप्रगल्भं कुटजप्रहासम्।
सम्बन्धदानेन तदा जहास, नीचोऽपि रन्ध्रं प्रहरत्यवश्यम्" ॥ इति ॥ २३ ॥

दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ॥
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ २४ ॥

दण्डस्य विभ्रमोऽकरणमन्यायेन वा करणम्। तस्मिन्सति सर्ववर्णा दुष्येयुः इतरेतरस्त्रीगमनेन संकरप्रवृत्तेः। सेतवो मर्यादाः। ताः सर्वा भिद्येरन्। सर्वमर्यादापरिलोपः स्यादित्यर्थः। ब्राह्मणाश्च शूद्रवद्वर्तेरञ्छूद्राश्च ब्राह्मणवत्। अतश्च सर्वलोकप्रकोपः स्यात्। त्रयोऽपि लोका इतरेतरं वृष्ट्यातपादिना नोपकुर्युः ॥ २४ ॥

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ॥
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ २५ ॥

एतद्द्वयं मनुष्याणां प्रशस्ततमम्। अतस्तेनासता रूपकभंग्या स्तौति। द्विरूपो दण्डः, दुःखदो भयदश्च। भयहेतुत्वं श्यामतया, दुःखहेतुत्वं लोहिताक्षत्वेन।

परिसमाप्ता दण्डस्तुतिः।

दण्डोऽवश्यं कर्तव्यः। स च देशाद्यपेक्षयेति। अन्यः सर्वोऽर्थवादः।

नेता चेत्। 'नेता' दण्डस्य नायकः। स चेत्साधु पश्यति। सुनिरूपितं देशकालादिकं कृत्वा पालयति। तत्र प्रजा न मुह्यन्ति न केनचिद्दोषेण युज्यन्ते ॥२५॥

तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ॥
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ २६ ॥

इदं संप्रणेतुः साधुदर्शनं सत्यवादिता समीक्ष्यकारिता प्राज्ञता त्रिवर्गे कौशलं च।

सत्यवादी, यः शास्त्रानुसारितया दण्डं कृत्वा कुतश्चिन्महाधनत्वं विज्ञाय न तं वर्धयति, न च वल्लभस्य रागादवनं करोति।

प्राज्ञो देशादीनां बाध्यबाधकभावार्थमवस्थाविशेषज्ञः। कदाचिद्देशेन कालो बाध्यते कालेन वा देशः। उभौ वा तौ विद्याशक्ती तयोश्च परस्परमुत्सर्गापवादभावज्ञः। कार्यवशादर्थश्च बाधक एव बाध्यतामित्यतः प्राज्ञत्वमुपयुज्यते। धर्मादीनां च गुरुलघुताभावः। स्वल्पो यत्र धर्मस्तस्मिन्साध्यमाने महाननर्थो भवति, तत्र धर्मस्त्यज्यते। प्रायश्चित्तेन समाधास्यत इत्येवमादि बोद्धव्यम् ॥२६॥

तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्धते ॥
कामान्धो विषमः क्षुद्रो दण्डेनैव निहन्यते ॥ २७ ॥

कामान्धः रागप्रधानः। विषमः क्रोधनः। समत्वेन दण्डपातनेन शत्रौ मित्रे च वर्धते। क्षुद्रः छलान्वेषाद्दण्डेनैव निहन्यते। प्रकृतिकोपेनादृष्टेन वा दोषेण ॥ २७ ॥

दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ॥
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥ २८ ॥

सुमहद्यत्तेजः स दण्डः।

अकृतात्मभिः शास्त्रेण गुरूपासनया सहजेन वा विनयेन येऽनभिविनीतास्तैर्दुर्धरः, न शक्यते सम्यक् प्रणेतुम्।

नैवं मन्तव्यमाज्ञामात्रेण दण्डः प्रणीयते, का तस्य दुर्धरता ? यतो यस्तत्र न जागर्ति प्रयत्नवान्न भवति तं प्रमादिनं सबान्धवं दण्डो हन्ति। न शरीरेण केवलेन राजा नश्यति, यावत्पुत्रपौत्राद्यन्वयेन सह ॥ २८ ॥

ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ॥
अन्तरिक्षगतांश्चैव मुनीन्देवांश्च पीडयेत् ॥ २९ ॥

देशाद्यनपेक्षया यत्र दण्डः प्रणीयते तत्र सराजकस्य जनपदस्य तिर्यक्स्थावरसहितस्य नाशः। ततो मन्त्रिभिर्जनपदैश्च राजा विज्ञापनीयः। त्यक्तव्यो वा तादृशो देशः।

देवमुनयः पीड्यन्ते। इतःप्रदानजीवना देवाः। अस्मिंश्चानुष्ठानाद्युच्छेदान्नष्टा एव देवमुनयः। तथा च पुराणकारैः—

"वर्णाश्रमेभ्यः स्थित्वा तु लोकेऽस्मिन्यः प्रवर्तते।
स्वर्गादौ देवयोनीनां स्थितिहेतुः स वै स्मृतः॥"—इति।

प्रथमात् श्लोकादारभ्य यावदयं श्लोकस्तत्रायमर्थसंग्रहः। समवृत्तेन क्षत्रियेण जनपदपरिपालनं कर्तव्यम्। तच्च दण्डेन विना न भवतीति स देशाद्यपेक्षयाऽवश्यं निपुणतो निरूप्य स्वराष्ट्रे परराष्ट्रे वा यथाशास्त्रं प्रणेयः। अन्यथा तु प्रवृत्तावुभयलोकनाशः। अन्यः सर्वोऽर्थवादः ॥ २९ ॥

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ॥
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥ ३० ॥

सहायसंग्रहार्थं प्रकरणमिदानीमारभ्यते ।

यस्य च निरूपणा वक्ष्यमाणा तत्सहायादिगुणयोगिनश्चार्यसभ्यसेनापति-दण्डाधिकारिणो न सन्ति, तेन स्वयमेव निःशङ्कं नयकालगुणसम्पन्नेनापि न्यायतो न प्रणेतुं शक्यः । 'न्यायः' शास्त्रानुसारिणी देशाद्यपेक्षया च व्यवस्था । अतः सहायाः शोभनाः कर्तव्याः । यथा स्वयं मूढो विचित्तोऽसंस्कृतबुद्धिरस्ति सक्तो विषयेषु लुब्धो धनविनियोगं यथावन्न करोति तेन तादृशेनैतैर्दोषैर्युक्तेन न सम्यक् ध्रियते, एवमसहायेनापीति तात्पर्यम् । यस्तु विपरीतस्तेन शक्यते ॥ ३० ॥

एष एवार्थो वैपरीत्येनोच्यते—

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा ॥
प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥ ३१ ॥

शुचिरलुब्धः । सत्यसन्धः सत्यप्रधानः । सत्यमेव पुरोधाय सर्वक्रियासु प्रवर्तते स विजितेन्द्रियः । अजितेन्द्रियस्य कुतः सत्यम् । यथाशास्त्रमनुसरति वर्तते । सुसहायः शोभनाः सहाया अस्येति । अमूर्खैर्भक्त्यनुरक्तैः सहायैर्युक्तः । धीमता प्राज्ञेन । योऽसौ मूढः प्रागुक्तस्तस्यायं प्रतिपक्षतयोक्तः ।

अतः पञ्चभिर्दोषैर्हीनस्तावद्भिरेव गुणैर्युक्तो दण्डप्रणयनेऽधिकृतो दृष्टादृष्ट-फलातिशयभाग्भवतीति श्लोकद्वयस्यार्थः ॥ ३१ ॥

स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु ॥
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ३२ ॥

पितृपितामहादिक्रमागतो देशो व्यपदेशहेतुः । काश्मीरकस्य काश्मीरः, पाञ्चालस्य पाञ्चालाः स्वराष्ट्रम् । तत्र न्यायप्रवृत्तो न्यायेन वर्तेत, न्याययोगाद्वृत्त न्यायः । अतो बहुव्रीहिः । न्यायवृत्तिरिति वा पाठः ।

एतत्पूर्वसिद्धमनूद्य शत्रुषु भृशदण्डता विधीयते । परराष्ट्राणि पुनः पीडयेन्न तत्र विघ्नाद्यपेक्षणीयम्, राष्ट्रीयोपरोधो वा । तथाकुर्वतः प्रताप उपजायते । प्रतापधनस्य शत्रवो नमन्ति ।

ब्राह्मणेषु सर्वत्र क्षमान्वितः। अपराधेष्वपि साम्ना दण्डः प्रयोज्यः, न क्रोधेन।

परराष्ट्रवासिनोऽपि राष्ट्रघातकाले यदि शक्यन्ते रक्षितुं तदा न हन्यन्ते।

स्निग्धेषु सुहृत्सु अजिह्मोऽकुटिलबुद्धिः। कार्यसिद्धिकृत्तत्कार्यप्रधानः स्यात्। समानाभ्युदयप्रत्यवायाः सुहृदः 'स्निग्धाः' ॥ ३२ ॥

एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ॥
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ ३३ ॥

प्रक्रान्तवृत्तेः स्तुतिरियम्।

शिलोञ्छेनापि जीवतोऽत्यन्तक्षीणकोशस्य विस्तीर्यते यशः प्रथते। ततश्च परराष्ट्राणि स्वयं नमन्ते स्वराष्ट्रिकश्चानुरागादविचलितो भवति ॥ ३३ ॥

अतस्तु विपरीतस्य नृपतेरजितात्मनः ॥
संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि ॥ ३४ ॥

अतो वृत्ताद्विपरीतस्य चलितस्य।

अत्र हेतुरजितात्मता। यथाशास्त्रमनियतात्मा यः ॥ ३४ ॥

स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ॥
वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥ ३५ ॥

स्वधर्माणां च राजा सृष्टोऽभिरक्षिता। स्वधर्मनिष्ठानामपालने राज्ञः प्रत्यवायः। धर्मच्युतास्तु यदि केनचिदुपहन्येरन् न तत्र राज्ञोऽतीव दोष इति स्वे स्वे धर्म इत्यनेन दर्शयति।

अथवा 'न' श्लिष्यते—'अनिविष्टानामिति'। ये तु शास्त्रान्मित्राद्युपदेशाद्वा स्वधर्मायत्ताः न तेषां राजा द्वैधेन वर्तेत।

वर्णग्रहणं स्त्रीबालवृद्धानां रक्षार्थम्। न हि ते आश्रमस्थाः।

आश्रमग्रहणं तर्हि किमर्थम् ?

प्राधान्यार्थम्। ब्राह्मणवसिष्ठवत्।

प्रयोजननिर्देशो वायम्। आश्रमसन्ध्योपासनादिधर्माच्चलितुमेषान्न देयः। न चैवं दण्डाद्यपघातः कर्तुमेतेषां देयः। इतरथा बाधापरिहारः। एवं 'रक्षा' विज्ञेया। सन्ध्योपासनाद्यकरणेषु नामान्यस्य कस्यचिद्भवति (?)। द्विरूपा राज्ञः

कर्तव्यतेति वर्णाश्रमग्रहणम् । एतदेवोक्तं "वर्णानाश्रमांश्च न्यायतोऽभिरक्षेदिति" ॥ ३५ ॥

तेन यद्यत्सभृत्येन कर्तव्यं रक्षता प्रजाः ॥
तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ३६ ॥

वक्ष्यमाणाववोधार्थः श्लोकः ।

तेन राज्ञा सभृत्येन तदीयैः सहायैर्यत्कर्तव्यं प्रजारक्षणार्थं तदिदानीमुच्यते ॥ ३६ ॥

ब्राह्मणान्पर्युपासीत प्रातरुत्थाय पार्थिवः ॥
त्रैविद्यवृद्धान्विदुषस्तिष्ठेत्तेषां च शासने ॥ ३७ ॥

प्रातरुत्थाय शयनं त्यक्त्वा यथाविधानं कृतसन्ध्योपासनः, प्रथमं ब्राह्मणानां दर्शनं दद्यात् । उपासनमन्तिकोपवेशनकुशलप्रश्नादिकरणम् ।

परिः पादपूरणः ।

तिष्ठेत्तेषां च शासने । आज्ञाकरणं तेषां 'शासनम्' । यदि कस्यचिदुपकारायाविशेयुस्तद्विरुद्धं न शङ्क्यम्, नाप्यनर्थकमनुतिष्ठेत् ।

त्रैविद्यवृद्धान् । तिसृणां विद्यानां समाहारः त्रैविद्यम्, तदधीतिनः त्रैविद्या रूढ्या ऋग्वेदादिवेदत्रयाध्यायिन उच्यन्ते । विदुषस्तदर्थवेदिनश्च । एवं विधा ये ब्राह्मणास्तानुपासीत तदीयामाज्ञां कुर्यात् । वृद्धास्त्रैविद्यानां श्रेष्ठाः प्रकर्षवन्तोऽध्ययनविज्ञानयोः ॥ ३७ ॥

वृद्धांश्च नित्यं सेवेत विप्रान्वेदविदः शुचीन् ॥
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥ ३८ ॥

वृद्धान्वयस्थब्राह्मणान् । एतदपूर्वं अन्यत्पूर्वसिद्धं विप्रानित्यादि ।

शुचीन् निरुपाधीन् । एतदप्यपूर्वम् । यथैवाध्ययनविज्ञाने उपास्यत्वकारणमेवं शुचित्वमपि ।

द्वितीयश्लोकार्थोऽर्थवादः ।

रक्षोभिः । रक्षांसि निर्दयानि महाबलानि सर्वधर्मशून्यानि । तान्यपि वृद्धसेविनं पूजयन्ति ॥ ३८ ॥

**तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपि नित्यशः ॥**

**विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥ ३९ ॥**

वृद्धसेवायाः प्रयोजनमाह ।

तेभ्यो विद्वद्ब्राह्मणेभ्यो वृद्धेभ्यः विनयं राजवृत्तमधिगच्छेच्छिक्षेत ।

विनीतात्मा। यद्यपि स्वयंबुद्ध्याऽपि विनीतोऽर्थशास्त्रैर्वा, तथापि वृद्धोपदेशे यत्नवान् स्यात् । दृष्टकर्माणः शास्त्रज्ञेभ्यो निपुणतराः । अथवा पाटवातिशयजननार्थं विनीतेनापि स्वभावतो वृद्धेभ्य आर्येभ्य आत्मा विनेयः । स्वभावशुद्धस्य सुवर्णस्य तेजसंयोगादिनाऽऽधीयमानसंस्कारो विशुद्धतररूपवानसौ दृश्यते ।

अस्य विनयाधानस्य फलं न विनश्यतीति ॥ ३९ ॥

**बहवोऽविनयान्नष्टा राजानः सपरिग्रहाः ॥**

**वनस्था अपि राज्यानि विनयात्प्रतिपेदिरे ॥ ४० ॥**

पूर्वोक्त एवार्थः श्लोकत्रयंण दृढीक्रियते ।

अविनीताः सपरिग्रहा नष्टाः । पुत्रदारहस्त्यश्वादिसंपत्परिग्रहः ।

ये तु विनयिनः, न ते राष्ट्रं प्राप्य हारयन्ति । यावत्ते दूरस्था वनस्था अपि कोशहीना अपि, राज्यं प्रतिपेदिरे लब्धवन्तः ॥ ४० ॥

**वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ॥**

**सुदाः पैजवनश्चैव सुमुखो निमिरेव च ॥ ४१ ॥**

उभयत्राप्युदाहरणानि लोकसिद्धानि वर्णयन्ति । एतानि महाभारतादावाख्यानानि ज्ञेयानि ॥ ४१ ॥

**पृथुस्तु विनयाद्राज्यं प्राप्तवान्मनुरेव च ॥**

**कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥ ४२ ॥**

ब्राह्मण्यं चैव गाधिजः ।

"ननु च राज्याधिकारे को ब्राह्मण्यप्राप्त्युपन्यासावसरः? राष्ट्रप्राप्तिरेव यथापूर्वं वर्णयितव्या" ।

उच्यते। धनैश्वर्यादपि जात्युत्कर्षो दुष्प्रापः, सर्वाधिकारहेतुत्वात्।

"ननु च कथं तस्य विनयो हेतुः? षाड्गुण्यप्रयोगः अप्रमादः अतिव्यय-वर्जनं अलोभः व्यसनासेवनं एवमादीनि 'विनयः'। तदेतद्ब्राह्मण्यस्यैकमपि न कारणम्। तपो हि तत्र कारणत्वेन श्रुतं विश्वामित्रस्तपस्तेपे नानृषेः पुत्रः स्यामित्येवमादि"।

उच्यते। नार्थशास्त्रोक्तैव नीतिर्नयः। किं तर्हि? शास्त्रीयो विधिर्लोकाचारश्च। शास्त्रे च तपसा जात्युत्कर्षो जन्मान्तरे प्राप्यते इति विहितमेव विश्वामित्रस्य ब्राह्मण्यं तु तस्मिन्नेव जन्मनि क्षत्रियस्य सत इत्याख्यातमेव ॥ ४२ ॥

त्रैविद्येभ्यस्त्रयीं विद्यात् दण्डनीतिं च शाश्वतीम् ॥
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥ ४३ ॥

विद्यामिति द्वितीयान्तपाठेऽधिगच्छेदित्यनुपञ्जनीयम्।

समाप्तब्रह्मचर्यस्य राज्योपदेशात् त्रय्यर्थाधिगमेन तन्निष्पत्तेरभ्यासार्थोऽय-मुपदेशः।

त्र्यवयवा विद्या त्रिविद्या, तामधीयते त्रैविद्यास्तेभ्यस्त्रयीमृग्वेदादिवेदत्रयं विद्यात्। सन्दिग्धेषु पदार्थेषु वेदेभ्यो निर्णयं कुर्यात्। तैः सह वेदार्थं चिन्तयेदिति यावत्। न राजत्वाभिमानान्मदावलेपेन सर्वज्ञोऽहमिति बुद्ध्या संदिह्यमानानर्थानुपेक्षेत।

दण्डनीतिं च। दण्डविषया नीतिः। "दण्डो दमनमित्याहु" येन शत्रवः स्वप्रकृतयो विषयवासिनश्चान्यायकारिणो दम्यन्ते स दण्डोऽमात्यादिसंपत्। नीतिस्तस्य प्रयोजनं तत्र विधिस्तं शिक्षेत। तद्विद्भ्यश्चाणक्यादिग्रन्थविद्भ्यः।

शाश्वतीमिति स्तुतिः।

यद्यपि दण्डनीत्याऽप्यस्य सर्वलोकः शक्यते ज्ञातुम्, अन्वयव्यतिरेकमूलत्वादस्यार्थस्य, तथाऽप्यबुधबोधनार्थानि तानि शास्त्राणि, बुधानां च संवादार्थानीति, युक्तो दण्डनीतिशास्त्राधिगमः।

एवं आन्वीक्षिक्यपि तर्कविद्यार्थशास्त्रादिका। आत्मविद्याऽध्यात्मविद्या। विशेषणविशेष्ये वा पदे। आत्मने या हिताऽऽन्वीक्षिकी सा तर्काश्रया। तां शिक्षेत।

सा ह्युपयुज्यते व्यसनाभ्युदयोपरमचित्तसंक्षोभोपशमाय। या तु बौद्धचार्वाकादि-तर्कविद्या सा नातीवकृत्वा क्वचिदुपयुज्यते। प्रत्युतास्तिक्यमुपहन्ति, यो नातिनिपुणमतिः। यदा तु स्वतन्त्रामान्वीक्षिकीं वेद, तदा तस्य दूतसंवादादिपु वाक्यवैशद्यानामुपयोगो नोपहास्यो भवति।

वार्तारम्भाश्च पण्यानामर्थपरिज्ञानं वाणिज्यकौशलम्, समयेन वार्हस्पत्येन तत्र परिज्ञानं वार्ता। तन्निमित्ता आरम्भा 'वार्तारम्भाः'। वार्तास्वरूपं ज्ञात्वा तद्विषयकार्या प्रवृत्तिः 'आरंभः'।

एतल्लोकतो विद्यात्। वाणिज्याजीवनोऽत्र 'लोको'ऽभिप्रेतः। ते हि तत्र कुशला भवन्ति। लोकत इति च पूर्वयोरनुपङ्गः कर्तव्यस्तेन सर्वत्र तद्विद्भ्य इति लभ्यते॥ ४३॥

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्॥
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः॥ ४४॥

इन्द्रियजयस्य ब्रह्मचारिधर्मेपु सर्वपुरुपार्थतयोपदिष्टस्य पुनरिहोपदेशो राजधर्मेपु मुख्योऽयं विनय इति ज्ञापयितुम्। तदिदमाह जितेन्द्रिय इत्यादि। सर्वस्यैतत्प्रसिद्धं अजितेन्द्रियस्य न प्रजा वशे तिष्ठन्ति।

योगस्तात्पर्यम्।

दिवानिशमहोरात्रम्॥ ४४॥

दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च॥
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥ ४५॥

इदमपरमिन्द्रियजयोपदेशस्य प्रयोजनम्।

अजितेन्द्रियस्य दुष्परिहराणि व्यसनानि दुरन्तानि। दुःखकरोऽन्तोऽवसानं येपाम्। प्रथमं प्राप्तिकाले सुखयन्ति व्यसनानि, पश्चात्तु वैरस्यं जनयन्ति। ततो 'दुरन्तानि' उच्यन्ते।

अथवा दुष्प्रापोऽन्त एपाम्। न हि व्यसनिनस्ततो निवर्तितुं शक्नुवन्ति।

कामाद्धेतोः समुत्थानं जन्म येपाम्॥ ४५॥

एपां वर्जने प्रयोजनमाह गुरुलघुभावं च।

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ॥
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ ४६ ॥

अर्थधर्मवियोगेन व्यवहित आत्मवियोगः।
क्रोधजेषु सर्वैर्वियुज्यत इति विशेषः ॥ ४६ ॥

तानीदानीं व्यसनानि स्वनामतो दर्शयति—

मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ॥
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ ४७ ॥

आखेटकार्थो मृगवधो मृगया। अक्षस्तद्विषयक्रीडा। एतयोस्त्वनर्थत्वं प्रसिद्धम्।

दिवास्वप्नः कर्मानुष्ठानकाले कर्मस्वव्यापारः। न दिवाशब्देनाहरेव विवक्षितम्। तदुक्तं "जागर्तव्ये प्रसुप्तकेति"। अथवा मुख्य एव 'दिवास्वप्नः'। स हि प्रतिषिद्धः सर्वकार्यविघाती। स च दर्शनार्थिनामन्येषां तदसंपत्तेर्द्वेष्यताजनकः प्रजासु।

परिवादः रहसि परदोषावर्जनम्। तेन सर्वाः प्रकृतयो विरज्यन्ति। अपरिवाद्यानां च परिवादेऽधर्मः स्थित एव।

स्त्रियो मद इत्येतयोरनर्थरूपता सुप्रतीता।

तौर्य्यत्रिकं नृत्यगीतवादित्राणि। वृथाट्या अप्रयोजनमीषत्प्रयोजनं वा इतस्ततश्च परिभ्रमणम्।

दश परिमाणो दशकः। कामजः काम इच्छा, ततो जायते। विशिष्टसुखोपभोगार्थो वा अनुभूतविशेषाद्वा जायमानः 'कामजः' ॥ ४७ ॥

पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ॥
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ ४८ ॥

अमात्यादितो ये सुकृतबान्धवास्तत्र यन्निगोपनीयं तस्य प्रकाशनं पैशुन्यम्।

साहसं ज्यायसो नीचकर्मणि विनियोगः। स्वल्पेनैवापराधेन कराधानं कारावरोधो वा।

द्रोह उपांशुवधः।

तत्रोपघातो वा जीवत एवेर्ष्या ।

सर्वसाधारणस्य विषयस्य साधारण्यव्यावृत्तिः, असहनं वा गुणिनाम्, गुणेषु दोषाविष्करणं, असूया ।

अर्थदूषणं अर्थानामदानं हरणं वा ।

वाग्दण्डपारुष्ये प्रसिद्धे ।

क्रोधो द्वेषः । तत्प्रधाना एतत्कुर्वन्ति ॥ ४८ ॥

द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ॥
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ ४९ ॥

"उक्तं तावत्कामस्य व्यसनवर्गस्य लोभो मूलम् । विषयोपभोगस्पृहा कामः, इच्छा अभिलाषो लोभः इत्यनर्थान्तरं यतः । क्रोधजस्य कथं लोभो मूलं येनोच्यते तज्जावेतावुभौ गणाविति" ।

उच्यते । नात्र लोभकारणता तयोर्वर्गयोरभिप्रेता । किं तर्हि । वर्गद्वय-तुल्यता लोभस्य । यमेतानि सर्वाणि व्यसनान्यनर्थमुपजनयन्ति तमेवैको लोभो व्यसनहीनस्यापि । तदुक्तं "लोभः सर्वगुणानिव" इति । अत उपचारत एतदुक्तं तज्जावेताविति । यदि लोभो न जायेत कथं समानफलानि स्युः । कारणदोषो हि कार्यदोषं भासयति । अतस्तत्कार्यत्वाद्व्यसनेषु चेद्दोषः, ध्रुवं कारणस्याप्यसौ दोष उक्तो भवति ।

अथवा लुब्ध एव पैशुनादिंबहिष्कार्येष्वभिष्वङ्गं गच्छति । इतरस्तु स्वल्पके विषये अनुनयेन वापशाम्यति । सेयमुपचाराल्लोभमूलता व्यसनवर्गद्वय-स्योच्यते ॥ ४९ ॥

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ॥
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ ५० ॥

दिवा स्वप्नादिभ्योऽस्य चतुष्कस्य गणस्य बहुदोषतरत्वं प्रसिद्धमेव ॥ ५० ॥

दंडस्य पातनं चैव वाक्पारुष्यार्थदूषणे ॥
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ ५१ ॥

अयमपि त्रिकः पैशुनादिभ्यः पापीयानिति सुप्रतीतम् ॥ ५१ ॥

सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ॥
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ ५२ ॥

पानद्यूतयोः पानं गरीयः। तत्र हि संज्ञाप्रणाशः, अनुन्मत्तस्योन्मत्तत्वम्, अप्रेतस्य प्रेतत्वम्, कौपीनप्रकाशनम्, श्रुतप्रज्ञाप्रहाणम्, मित्रहानिः, सद्भिर्वियोगः, असद्भिश्च संप्रयोगः, गीतादिष्वर्थघ्नेषु प्रसङ्गः, रतमन्त्रप्रकाशनं च, मानिनोऽप्युपहास्यता, गम्भीरप्रकृतेरपि यत्किञ्चनवादिता मदवेगेनेति, पानदोषाः। द्यूते तु जितमेवाक्षविदुषा, अनक्षज्ञस्यापि पाक्षिकः पराजयः।

स्त्रीद्यूतव्यसनयोर्द्यूतव्यसनं गरीयः। येन तदेव जितं द्रव्यं तस्यापि विषं भवति। तथा च तन्निमित्तो वैरानुबन्धो जयः, साधारणः केवलं पराजयः, भुक्तनाशः। मूत्रपुरीषवेगधारणाच्च शरीरे शैथिल्यं व्याधिनिदानमेव। तेन क्षुद्रादिभिः स्वपीडातिशयात्। मातर्यपि च मृतायां दीव्यत्येव। कृतकृत्येषु च न सुहृद्भिरपि कृष्यते। तप्तायसपिण्डवत् परद्रव्याणि परिहरतो न प्रत्ययते च। क्षुधिते दुर्गतेऽन्नाद्यपपत्त्युपेक्षा विषयता सर्वगुणसंपन्नस्यापि तृणवदवज्ञायेत। इति द्यूतदोषाः। स्त्रीव्यसने त्वपत्योत्पत्तिः प्रतिकर्मभोजनभूयिष्ठानुभवनं धर्मार्थपरिग्रहः। शक्या च स्त्री राजहिते नियोक्तुमपवाहयितुं वा।

स्त्रीमृगयाव्यसनयोः स्त्रीव्यसनं गरीयः। अदर्शनं कार्याणाम्, स्त्रीव्यसनसंगेन राजकार्येषु च निर्वेदः, कालातिपातनम्, धर्मलोपः, पानदोषानुबन्धः, अर्थघ्नेषु चानृतादिषु प्रसंग इति। मृगयायां तु व्यायामः पित्तश्लेष्मबन्धः, मेदादिनाशः, चले स्थिरे वा काये लक्ष्यपरिचयः, प्रहरणे वैशारद्योपजननं ग्राम्यजनपरिजयश्चेति।

एवं कामजस्य चतुष्कस्य वर्गस्य स्ववर्गे पूर्वं पूर्वं पापीयः।

क्रोधजस्यापि च दण्डपातदोषानुबन्धः अर्थघ्नेष्वेवानृतादिषु संगः।

दण्डपातवाक्पारुष्ययोर्दण्डपातनं गरीयः। दण्डपातने हि शरीरविनाशादशक्यं प्रतिसंधानम्। वाक्पारुष्ये त्वमर्षजः क्रोधाग्निः शक्यते दानमानाम्भोभिः शमयितुम्।

वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यं गरीयः। तेजस्विनो हि पारुष्यवचनचित्तसंक्षोभे भयं नासादयन्ति। तथा च प्रवादः—

"स्थिरं साध्वसितं काण्डं भित्वा वाऽस्थिप्रवेशितम्।
विशल्यमङ्गं कुर्वन्ति न वाचो हृदयादपि ॥"
"रोहते सायकैर्विद्धं वनं परशुना हतम्।
वाचा दुरुक्तं बीभत्सेन्न संरोहति वाक्क्षतम् ॥"

भाग्यायत्तत्वादर्थस्येति न तेजस्विनोऽर्थदूषणं गणयन्ति।

एवमेतयोर्वर्गयोः पूर्वस्य पूर्वस्य गरीयस्त्वं निदर्शितम् ॥ ५२ ॥

**व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ॥**
**व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ ५३ ॥**

यद्यपि मृत्युव्यसने सर्वं हरेताम् तथाप्येवं विशेषः। मृत्युरस्मिंल्लोके सर्वहरः। व्यसनं पुनरिह चामुत्र च। तदिदमाह। व्यसन्यधोऽधो व्रजति नरकं गच्छतीत्यर्थः।

'व्यसनि' शब्देन अत्यन्तोऽभ्यास एतद्वर्गविषय उच्यते। अतश्चाभ्यासः प्रतिषिध्यते। न त्वीषदासेवनम्। व्यसनभूता ह्येते धर्मार्थकामप्राणहरा भवन्त्यन्यस्यापि पुरुषस्य, किं पुना राज्ञः। किंच असेवनमप्ययुक्तं पानादीनामशक्यं वेति। यतोऽभ्यासप्रतिषेधः॥ ५३ ॥

**मौलाञ्छास्त्रविदः शूराँल्लब्धलक्षान्कुलोद्गतान् ॥**
**सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान् ॥ ५४ ॥**

पितृपितामहान्वयागता बहुसुतधनवान्धवाः प्रकटगोभूमिधनास्तद्देशवासिनो मौलाः। 'मूलं' प्रतिष्ठा, तत्र भवा 'मौलाः'।

शास्त्रविदः। 'शास्त्रं' शासनं भृत्यविज्ञानम्। तेनान्येऽपि गुणा गृह्यन्ते तद्यथा। प्राज्ञः दृढकारी धारयिष्णुर्दक्षः वाग्मी प्रबलः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिर्दानशीलः योग्यसत्वयुक्तः स्तंभचापलहीनः प्रियो वैरिणामकर्तेति।

शूरशब्देन राजकार्ये शरीरकलत्रापत्यधनादिष्वपि निरपेक्ष उच्यते। तथा मरणेऽभीरुः। युद्धोत्साही। एक एव परिभवभयाद्बहुभिर्विरुध्यते। दृढप्रहारी बलवान्।

लब्धलक्षाः। परिदृष्टकर्मतामनेनाह। दृष्टखड्गव्यापाराः कृतार्थाधिकाराः अनुभूतमन्त्रिभूमयः।

कुलोद्गतान् कुलांकुशनिगृहीता ह्यकार्ये न वर्तन्ते।

सचिवान् सहायान् ।

नित्यमेते राज्ञः पार्श्ववर्त्तिनो भवेयुः ।

सप्त वाऽष्टौ वा । नियमोऽयं येन चाल्प एकचित्ता भवन्ति । ततश्च राजमन्त्र उद्घाटितः स्यात् । वहूनामपि मन्त्रभेदः । तस्मादेतावन्त एव कर्त्तव्याः ।

सुपरीक्षितान् धर्मार्थकामभयोपधाभिः । सेयं परीक्षोच्यते । पुरोहितः—स्वकार्ये राज्ञा व्याजेनाधिक्षिप्तः वहुनाऽर्थसंप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय—'एतच्च सर्वमन्त्रिभ्यो रोचते, अथ कथं भवते' इति प्रत्याख्याने 'धर्मोपधाशुद्धः' । सेनापतिः केनचिदपदेशेन पूर्ववदधिक्षिप्तः वहुना च संप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत् राजविनाशाय—'एतच्च सर्वमन्त्रिभ्यो रोचते, अथ कथं भवते' इति प्रत्याख्याने 'धर्मोपधाशुद्धः' । सेनापतिः केनचिदपदेशेन पूर्ववदधिक्षिप्तः वहुना च संप्रदानेनाप्तपुरुषैरेकैकममात्यमुपजपेत्—'एतच्च सर्वमन्त्रिभ्यो रोचते, अथ कथं भवते इति प्रत्याख्याने 'अर्थोपधाशुद्धः' । परिव्राजिका अन्तःपुरे लब्धविश्वासा एकैकममात्यमुपजपेत्—'सा राजमहिषी भवन्तं कामयते कृतसमागमोपायेति' प्रत्याख्याने 'कामोपधाशुद्धः' । राजप्रयुक्ता एव केचित्पुरुषा प्रवादमाविष्कुर्युः, 'कृतसमयैरमात्यै राजा हन्यत' इति । उपलब्धप्रवादः पुरोहितस्याप्तः कश्चिदमात्येषु मन्त्रं श्रावयेत्—'इमं प्रवादमुपश्रुत्य भवतां निग्रहो राजा क्रियत' इति । तेषामेव चान्यतमः पूर्वमेव कृतसंवित्कः प्रत्येकं राजामात्येपूत्साहयेत् । तत्र ये प्रत्याचक्षते ते 'भयोपधाशुद्धाः' ।

अथवा मौलांस्तावत्कुर्यादर्थप्रमादकर्तॄन्संनिधातॄन् । ये अर्थं ग्रामेभ्यः समाहरन्ति समाहृतं च रक्षन्ति विनियुञ्जते च । सर्वथाऽर्थव्यवहारिणो 'मौलाः' कर्त्तव्या इत्युक्तं भवति । शास्त्रविदो वुद्धिसचिवा मन्त्रिणः । शूरान् वलाध्यक्षान् ।

लब्धलक्षानित्यादि सर्वेषां विशेषणमेकैकस्य ।

समुदितपरीक्षा च योक्ता राजविषया राजामात्येपूत्साहनमिति, सा न युक्तेति मन्यन्ते । एष एव हि शुद्धिभेदो भवेदमात्यानाम् । तस्मादन्या काचित्स्त्री साध्वी प्रयोज्या अन्यश्च विनाशविषय उदाहार्यः ॥ ५४ ॥

**अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ॥**
**विशेषतोऽसहायेन किं नु राज्यं महोदयम् ॥ ५५ ॥**

यत्सामान्यं गृहस्थस्य गृहकृत्यं गोऽश्वादिपालनं सुकरमिति स्थितम् । स एव गां

पालयति स एव दोग्धि। न शक्यमेतदेकेन कर्तुम्। तदप्येकेन दुष्करं विशेषतोऽसहायेन दुष्करमशक्तेन न शक्यं कर्तुम्। कथं ह्येको गां चारयति कथं च भार्यां रक्षतु। राज्यं तु प्रतिमहारंभमुदयकर्म, तद्योगः फलवांश्च। अपेक्षमाणस्य महत्फलमुदेति। न चैकेन षाड्गुण्यं वेदितुं शक्यम्। तस्मादात्मसमाः परीक्षिताः सहायास्तेषु कार्येषु कर्तव्याः॥ ५५॥

तैः सार्धं चिंतयेन्नित्यं सामान्यं संधिविग्रहम्॥
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च॥ ५६॥

तैर्बुद्धिसचिवैर्मुख्यैश्चार्थाधिकारिभिः सह सामान्यं, यन्नातिरहस्यं तच्चिन्तयेत्सन्धिविग्रहम्। "किं सन्धिः संप्रति युक्तोऽथ विग्रहः'—उभयत्र गुणदोषान्विचारयेत्। इदं कर्त्तव्यावधारणं तु स्वबुद्ध्या कुर्याद्यथास्य परप्रयोज्यता न भवति।

इदं चापरं चिन्तयेत्—स्थानम्। तच्चतुर्विधम्, दण्डकोशपुरराष्ट्राणि। तत्र दण्डो हस्त्यश्वरथपदातयः। तेषां प्रतिकर्म पोषणरक्षणादि चिन्त्यम्। न ह्यसमाधानं प्रधानम्। तथा कोशस्य हेमरूप्यबाहुल्यं प्रचुररूप्यताआयव्ययलक्षणं च। कोशस्य यानि न्यायस्थानानि तानि न व्ययितव्यानि न विलम्बनीयानि भृत्यानाम्। तथा राष्ट्रस्य देशपर्यायस्य स्वाजीव आत्मसंधारणं परसंधारणेन नदीवृक्षाः पशवः शत्रुद्वेषाक्रान्तप्रायः गुप्तिगोचरः पशुमान् अदेवमातृकः आपदि च दण्डकरग्रह इत्येवमादि। पुरस्य वक्ष्यति "तत्स्यादायुधसंपन्नमिति" (७.७५)।

अथवा स्थानं स्वदेशाच्चाप्रच्यवनम्।

एवं समुदयोऽपि चिन्त्यः। तत्र कृषिर्व्रजगुल्मस्थानानि वाणिज्यशुल्कदण्ड इत्येवमादि।

गुप्तिं स्वराष्ट्रगतां वक्ष्यति।

लब्धप्रशमनं च देवताश्रमविद्यावतां धार्मिकाणां च मानदानत्यागायोगः उदितानां चाभ्यनुज्ञानं सर्वबन्धनमोक्षः। अनुग्रहो दीनव्याधितानाम्। उत्सवानां चापूर्वाणां प्रवर्त्तनम्। प्रवृत्तानामनुवृत्तिः।

यच्च कोशदण्डोपाधिकमधार्मिकचरित्रं तदपनीय धर्मव्यवहारान् स्थापयेत्। अधर्मचारित्रमकृतमन्यस्य कृतं वाऽन्यैः प्रवर्त्तयेत्। न वा धर्मकृतं चान्यैर्निवर्तयेदिति।

एवं स्थानादीनि चिन्त्यानि॥ ५६॥

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ॥
समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥ ५७ ॥

तेषां पृथक्पृथगेकैकस्य रहस्यभिप्रायं हृदयनिहितं भावमुपलभ्य। समस्तानां संहतानाम्। यत्कारणं कश्चित्पुरुषः परिषदि अप्रतिभानवान्भवति, रहसि प्रगल्भः, कश्चित्परिषद्यासादितप्रज्ञः। ततश्च तान्समस्तान्पृच्छेत्।

ततः स्वयं यद्युक्ततरं हितमात्मने तद्व्यवस्येद्विदध्यात्। तत्प्रामाण्यं तेषामेवान्यतमेनोपदिष्टं वा यदप्रत्यनीकं निर्दोषं च ॥ ५७ ॥

सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ॥
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥ ५८ ॥

विपश्चिता विदुषा अर्थशास्त्रज्ञेन। परं मन्त्रमत्यन्तं गोपनीयं मन्त्रयेत्। षाड्गुण्ययुक्तम्। अधिकतरप्रज्ञो हि ब्राह्मणः, धार्मिकत्वाच्च विश्वसनीयः ॥ ५८ ॥

नित्यं तस्मिन्समाश्वस्तः सर्वकार्याणि निक्षिपेत् ॥
तेन सार्धं विनिश्चित्य ततः कर्म समारभेत् ॥ ५९ ॥

तादृशि ब्राह्मणे सर्वराष्ट्रमण्डलं निक्षिप्य विश्वस्तो राज्यसुखं भुञ्जीत च। तेन सह विनिश्चित्य यानासनादि कर्म व्यवहारसंग्रहादि समाचरेत् ॥ ५९ ॥

अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् ॥
सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ॥ ६० ॥

यदुक्तं 'सप्त चाष्टौ वेति' तस्यायमपवादः।
अर्थसमाहर्तॄन्संनिधातॄन्सुपरिक्षितानुपधाभिः कुर्यात् ॥ ६० ॥

निर्वर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ॥
तावतोऽतन्द्रितान्दक्षान्प्रकुर्वीत विचक्षणान् ॥ ६१ ॥

सर्वे एते मन्त्रज्ञा विचक्षणाः विद्वांसश्चाधिकारिका कर्त्तव्याः। दक्षान् भयसंविधानेऽप्यवसादहेतावत्युत्साहवन्तः।

अतन्द्रितान् अनलसान्। उक्तं चाध्यक्षप्रचारे :—
"बुद्धिमाननुरक्तश्च युक्ता धर्मार्थकोविदः।
शुचिर्दक्षः कुलीनश्च मन्त्री यस्य स राज्यभाक् ॥

तस्मिन्निक्षिप्य कार्याणि भोगसंगी न नश्यति ।
राजवश्यविधिस्तेन दानानुग्रहणैरिति" ॥ ६१ ॥

तेपामर्थे नियुञ्जीत शूरान्दक्षान्कुलोद्गतान् ॥
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥ ६२ ॥

अर्थे आयव्ययव्यहारे । शुचीनर्थेष्वस्पृहान्नियुञ्जीत ।

तान्यर्थस्थानान्युदाहरणेन दर्शयति । आकरकर्मान्त इति । 'आकाराः' सुवर्णरूप्याद्युत्पत्तिसंस्कारस्थानानि, 'कर्मान्ता' भक्ष्यकार्पासावापादयः ।

अंतर्निवेशने—अन्तःपुरभोजनशय्यास्त्रीगृहाणि भीरवस्तत्र नियोज्याः ।

शूरा हि राजानमेकाकिनमुपजप्ता हन्युः । दक्षाः सर्वेऽपि व्युत्थानशीलतया द्वन्द्वोपरिपातमपरिगणय्य स्वामिनः कार्यं काले नातिपातयन्ति ॥ ६२ ॥

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ॥
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥ ६३ ॥

दूतस्यायमधिको गुणः इङ्गिताकारचेष्टज्ञता । परविपये राज्ञो मन्त्रिणां च संधित्सतामिङ्गितानि । दूतस्यादरेण संपरिग्रहः, विश्वसनम्, मुहुर्मुहुः संपूर्णतद्वाक्यस्य तस्य चाभिनंदनम् । एतानि विपर्यस्तान्युपेक्षेत । आकारः शरीरवैकृत्यं म्लानिर्मुखस्य वर्णवैकृत्यम् । तूष्णींभावो दीर्घोष्णनिःश्वासता । एवमादिविकारैर्दैन्यं सूचयति—'अस्तिकाचिदापदस्य तेनायं विवर्ण' इति । वाक्यवैशारद्यम, शारीरसंस्कारः एवमादि हर्षं सूचयति ।

शुचिः स्त्रीगतेऽर्थे । गमनविशेषैर्यतः स्त्रासम्बन्धे मन्त्रभेदः परिभवश्च ॥६३॥

अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित् ॥
वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥ ६४ ॥

अनुरक्तः अहार्यो भवति । दक्षः देशकालौ नातिक्रमति । स्मृतिमान् । अमुषितस्मृतिप्रसङ्गेन स्वामिसंदेशं कथयति । देशकालवित् । देशकालौ ज्ञात्वाऽन्यदप्यसंदिष्टं तत्कालयोग्यं कथयति । वपुष्मान्स्वाकृतिः । प्रियदर्शनत्वान्निपुणमुचिं वक्ति । वीतभीः अनेन निपुणमुच्यते । वाग्मी संदेशस्योत्तरे प्रतिवचनसमर्थो भवति ॥ ६४ ॥

उक्तानां दूतगुणानां संपादनप्रयत्ने प्रयोजनमाह।

अमात्ये दंड आयत्तो दंडे वैनयिकी क्रिया ॥
नृपतौ कोशराष्ट्रे च दूते संधिविपर्ययौ ॥ ६५ ॥

अमात्ये सेनापतौ दण्डो हस्त्यादिबलमायत्तम्, तदिच्छया कार्येषु प्रवृत्तेः।

दण्डे वैनयिकी। यो विनेयः स्वपरराष्ट्रगतः स दण्ड्यो यतः। विनयाश्रिता 'वैनयिकी'। 'क्रिया' कार्यम्।

नृपतौ कोशराष्ट्रे आयत्ते। सञ्चयस्थानं 'कोशः'। 'राष्ट्रं' जनपदः। द्वे च ते पराधीने न कर्तव्ये। स्वयमेव विलम्भनीयफलग्रासाच्च (?)।

दूते सन्धिविपर्ययौ। प्रियवचनेन स्वामिकार्यप्रदर्शनेन 'सन्धिः'। तद्वैपरीत्येन 'विग्रहः'। एतदुभयं दूतायत्तम्॥ ६५॥

एवं दूतार्थानुवादः। एष एवार्थः पुनरुच्यते।

दूत एव हि संधत्ते भिनत्त्येव च संहतान् ॥
दूतस्तत्कुरुते कर्म भिद्यन्ते येन मानवाः ॥ ६६ ॥

दूतः संधत्ते। यथोक्तम्। संहतानेकीभूतान्स एव भिनत्ति। अनुक्तमपि प्रियं संदिशति—प्रतिकूलमनाचरितमित्यादि। सुवर्णादिद्रव्यमप्रतिश्रुतमित्याह, एवं भिनत्ति दूतः।

तदेतत्कर्मान्तरमुपदिष्टम्, येन राजानो भिद्यन्ते। वाक्पारुष्यापन्ना एवं सम्भवन्ति॥ ६६॥

अन्यदपि दूतकार्यं दर्शयति।

स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ॥
आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥ ६७ ॥

बुध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ॥
तथा प्रयत्नमातिष्ठेद्यथाऽऽत्मानं न पीडयेत् ॥ ६८ ॥

स दूतो यातव्यस्य राज्ञः कृत्येषु कार्येषु॥ ६७॥

जाङ्गलं सस्यसंपन्नमार्यप्रायमनाविलम् ॥
रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥ ६९ ॥
धनुर्दुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ॥
नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम् ॥ ७० ॥

उक्तप्रकारेण द्विगुणोत्सेधेनैष्टकेन शैलेन द्वादशहस्तादूर्ध्वमुद्धतेन तालमूलेन कपिशीर्षचिताग्रेण दृढप्रणाल्या परिकृतं धनुर्दुर्गम्।

महीदुर्गमगाधेनाश्रयणीयेन चोदकेन परिवेष्टितं दुर्गम्।

समंततोऽर्धयोजनमात्रं घनमहावृक्षान्वितं वार्क्षम्।

चतुरङ्गबलाधिष्ठितं प्रवरायुधवीरपुरुषप्रायं नृदुर्गम्।

गिरिपृष्ठे दुरारोहमेवैकमार्गानुगतमन्तर्नदीप्रस्रवणोदकं गिरिदुर्गम् ॥७०॥

सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ॥
एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ ७१ ॥
त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्ताश्रयाप्सराः ॥
त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः ॥ ७२ ॥

आद्यानि त्रीणि धनुर्दुर्गादीनि आश्रिताः आश्रयं कृतवन्तः। मृगाः। गर्ताश्रया गर्गरनकुलादयः। अप्सरा ग्राहकूर्मादयः। एषां दुर्गाणां तदाश्रितानां च यादृशा गुणदोषास्तादृशा एव राज्ञामपि भवन्तीति प्रदर्शनार्थम्।

त्रीण्युत्तराणि प्लवङ्गमाः कपयः ॥ ७२ ॥

यथा दुर्गाश्रितानेतान्नापहिंसन्ति शत्रवः ॥
तथाऽरयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ॥ ७३ ॥

दुर्गविधानप्रयोजनश्लोकोऽयम्।

अत्यल्पबला अपि दुर्गाश्रिता महाबलैररिभिर्न सहसा शक्यन्तेभिभवितुमतो दुर्गाश्रयो युक्तः ॥ ७३ ॥

एकः शतं योधयति प्राकारस्थो धनुर्धरः ॥
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ ७४ ॥

सुप्रसिद्धमेतद्दुर्गप्रयोजनम् ।

प्राकारदृष्टान्तेन गिरिदुर्गवलमेतदिति । तदयुक्तम्, महीदुर्गेऽपि प्राकारसम्भवात् । तस्मात्सर्वेषां दुर्गाणां तत्प्रयोजनं स्वबुद्ध्या रूप्यते ॥ ७४ ॥

तत्स्यादायुधसंपन्नं धनधान्येन वाहनैः ॥
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥ ७५ ॥

आयुधैः खड्गप्रासादिभिः संपन्नमुपेतम् । आयुधग्रहणं वर्मशिरस्त्राणोपस्करादेरन्यस्यापि युद्धोपकरणस्य प्रदर्शनार्थम् ।

धनं रूप्यसुवर्णादीनि ।

वाहनानि रथाश्वादयः ।

शिल्पिभिर्यन्त्रावाहतक्षप्रभृतिभिः ।

यवसेन ।

ब्राह्मणैर्मन्त्रिपुरोहितैरन्यैर्वा । दण्डिकापोतेन ( ? ) ध्यजशङ्कया कदाचिन्नृपधर्मसाहाय्येन प्रवर्तन्ते ।

प्रदर्शनार्थत्वाच्च भिषगौषधाद्यपेक्षेत । संरोहणाद्युपयोगि संनिधापयितव्यम् ॥ ७५ ॥

तस्य मध्ये सुपर्याप्तं कारयेद्गृहमात्मनः ॥
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥ ७६ ॥

सुपर्याप्तम् । यावदात्मनो राज्ञो राजपुत्रकोशायुधाश्वागारादिषूपयुज्यते । गुप्तं बहुकक्षाकम् । गृहं कारयेत् । सर्वर्तुकं सर्वर्तुमाल्यफलैः शोभितम् । सर्वे ऋतवो यत्रेति । ऋतुशब्देन तत्कार्याणि पुष्पफलादीनि लक्ष्यन्ते ।

'सर्वर्तुगमिति' पाठे सर्वानृतून्गच्छति प्राप्नोतीति व्युत्पत्तिः । अर्थस्तु स एव । यो यत्र भवति स तेन व्याप्त इत्युच्यते ।

शुभ्रं सुधाधवलितम् ।

जलवृक्षसमन्वितं धारागृहोद्यानवनसंपन्नम् ॥ ७६ ॥

तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् ॥
कुले महति संभूतां हृद्यां रूपगुणान्विताम् ॥ ७७ ।

तद्गृहमाश्रित्य भार्या तत्र सहायार्थं महतः कुलादुद्वोढव्या। एतत्संबन्धेन संरक्षणार्थम्।

सवर्णामित्यादावुच्यते तत्प्राक् प्रदर्शितम्।

हृद्यां मनोरमां कान्तिलावण्ययुक्ताम्।

रूपं संस्थानम्। गुणा वचनाचरणादयः। तैरन्वितां युक्ताम्॥ ७७॥

पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः॥
तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च॥ ७८॥

सत्यपि द्वितीयानिर्देशेन प्राधान्यावगमे विवक्षितमेवैकत्वम्, अन्यत्राप्युपादानात्। यूपं छिनत्ति भार्यां विन्देतेतिवत्।

ऋत्विजो वृणुयात्। तेषां च सङ्ख्या श्रुतित एवावगन्तव्या। गुणाश्च "नातिस्थूलो नातिकृशः नातिदीर्घो नातिह्रस्वः नातिवृद्धो नातिबालः—सप्तपुरुषान् विद्यातपोभ्यां पुण्यैश्च कर्मभिः समनुष्ठितोभयभावान्। तान् प्रति नाब्राह्मण्यमाशङ्क्यते—विद्वान्याजयति" इत्यादि।

गृह्याणि कर्माणि शान्तिस्वस्त्ययनादीनि। वैतानिकानि वैहारिकाणि त्रेताग्निविषयाणि॥ ७८॥

यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः॥
धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगान्धनानि च॥ ७९॥

आप्तदक्षिणैर्भूरिदक्षिणैः पौण्डरीकादिभिः।

भोगान् धनानि च। वस्त्रगन्धविलेपनादयो भोजनविशेषाश्च 'भोगाः', 'धनानि' सुवर्णादीनि।

नित्यमेव तद्दानमिच्छन्ति।

धर्मार्थं तस्योत्पत्त्यर्थमेव॥ ७९॥

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्॥
स्याच्चाम्नायपरो लोके वर्तेत पितृवन्नृषु॥ ८०॥

बलिं करं धान्यादीनां षष्ठाष्टमादिभागमाप्तैरर्थोदुपधाशुद्धैः।

यथोक्तमाम्नायपरश्च स्यात्। आगमप्रधानतर्कशास्त्राण्याश्रयेत्।

अथवा पारंपर्यागतमेव भागं गृह्णीयान्नाधिकम्।

वर्तेत पितृवन्नृपु। करदेष्वन्येपु च स्नेहवुद्ध्या वर्तेत ॥ ८० ॥

अध्यक्षान्विविधान्कुर्यात्तत्र तत्र विपश्चितः ॥
तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ॥ ८१ ॥

अध्यक्षा अधिकृताः प्रत्यवेक्षितारस्तान्कुर्यात्। विविधान् वहुप्रकारान् मृदूनुग्रान् धार्मिकान् अर्थार्जनपरांश्च।

तत्र तत्र सुवर्णकोष्ठागारे पण्यकुप्यकर्मस्वधिकृताः प्रत्यवेक्षितारस्तान् शुल्कनौहस्त्यश्वरथपदात्यादीन् विपश्चितः स्थापयेत्।

सर्व एते अमात्यगुणसंपद्युक्ता विज्ञेयाः। यथोक्तमध्यक्षप्रचारे "तेऽध्यक्षाः सर्वाणि कार्याण्यवेक्षेरन्नन्येपां नृणां तत्स्थानोपयोगिनां कार्याणि कुर्वताम्, हस्त्यध्यक्षेण हस्तिपकाः अश्वाध्यक्षेण तुरङ्गमाद्याः, गवाध्यक्षेण कर्पणादयः" ॥८१॥

आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत् ॥
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते ॥ ८२ ॥

गुरुकुलेऽधीतावगतवेदार्था गार्हस्थ्यं प्रतिपित्सवो धनेन पूजयितव्याः।

इदमपि नैत्यमिकदानम्। अत एवाह नृपाणामक्षय इति। नित्यत्वादक्षयो यावज्जीविकः। काम्यत्वे चाफलभावि निवर्तते। यदुक्तं 'सांतानिकं यक्ष्यमाण-मिति' ( ११-१ ), तदेवेदम्।

अन्य त्वाहुः। तत्रार्थिभ्यो दानं विहितम्। इह त्वनर्थिनामधिकारात् विधानमात्रया वस्त्रयुगादिदानेन च नराणां पूजा कर्तव्या। तथा चाह विप्राणां पूजको भवेदिति।

निधिरिव निधिः, उत्तमफलत्वात्।

ब्रह्मसंनिहितो ब्राह्मः ॥ ८२ ॥

न तं स्तेना न चामित्रा हरन्ति न च नश्यति ॥
तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ॥ ८३ ॥

ब्राह्मणेभ्यो योऽर्थो दत्तः, न तं स्तेना आटविकादयोऽमित्राश्च शत्रवा हरन्ति। न भूमिष्ठमिव विस्मृत्य प्रातिभाव्येन वा नश्यति ॥ ८३ ॥

न स्कन्दति न च्यवते न विनश्यति कर्हिचित् ॥
वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥ ८४ ॥

एष एवार्थोऽवश्यानुष्ठेयः प्रकारान्तरेण पुनरुच्यते। अग्नौ यद्धूयते तत्कदाचित् स्कन्दत्यधः पतति हूयमानम्, तथा च्यवते पुरोडाशादि क्षामतया। ततश्चकर्मवैगुण्याद्विनश्यति शिष्टानाम्। इदं तु यद् ब्राह्मणेभ्यो दानं न तस्यैते दोषाः सन्ति। अत एवाह। वरिष्ठमग्निहोत्रेभ्यः अग्नौ होमेभ्यः इत्यर्थः। मुख्यार्थवृत्त्या कर्मनामधेयमेवाग्निहोत्रशब्दस्तदा चादिग्रहणं व्याख्येयम्।

मुखे हुतमिति। पाणिरेव ब्राह्मणस्य मुखं "पाण्यास्यो हि द्विजः स्मृत" इति वचनात्। वरिष्ठं श्रेष्ठम्।

अर्थवादश्चायं न पुनर्होमनिन्दैव॥ ८४ ॥

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ॥
आचार्ये शतसाहस्रमनन्तं वेदपारगे ॥ ८५ ॥

"विप्रेभ्य इति च प्रकृतम्। तथा च प्रागप्युक्तम् ( ३ । ९६ ) "वेदतत्त्वार्थ विदुषे ब्राह्मणायेति। न च यथाश्रुतदानफलोपपत्तिः। कीदृशं हि तत्साम्यं— जातितः परिमाणतः उपकारतो वा। यदि तावज्जातितस्तदिति, औषधपानोद्देशेन देवलेभ्यो दत्तं खाद्यदानं दुःखायैव स्यात्। तिक्तकटुकषायानि प्रायश औषधानि विरेचनीयानि, न प्रीतिजननानि। अथ परिमाणतः, तत्रापि यदि द्रव्यमनपेक्ष्य केवलपरिमाणसाम्यम्, सुवर्णं दत्तं तत्परिमाणं ताम्रं लभ्येत, अन्यद्वा मृत्काष्ठादि। अथ जातितः परिमाणतश्च, तत्र प्रागुक्ता एव दोषाः। अथोपकारतः, तत्रापि हि यदि तज्जातीय एवोपकारः व्याधिनिवृत्तिरौषधोपकारः। असति च व्याधौ फलस्य विनिवृत्तिरतो व्याधिनिवृत्तिफलकेनौषधदानेन व्याधिराक्षेप्तव्यः। सुसमं वा अन्यदुःखं इति प्राप्तम्। तस्मात् यथा निवीतं मनुष्याणां उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इत्युपव्यानविशेषान्निवीतादयो न पृथग्वाक्यानि तथेदमपि द्रष्टव्यम्।"

अत्रोच्यते। नात्राख्यातश्रवणमस्ति, सर्वेषां समत्वात्। तत्र यद्यर्थवादः 'सहस्रं वेदपारग' इति तदर्थवादोऽस्तु। अथायं विधिः, विध्यन्तरशेषभावात्सर्वत्र विधिरभ्युपेतव्यो विशेषाभावात्। निवीतादिषु तूपव्ययत इत्यत्राख्यातदर्शनात

तदर्थस्य विधिविषयत्वयोग्यत्वाभावादेकत्वावगमाच्च युक्तार्थवदेव तद्व्यनुक्तो विशेषः। यत्तु नाब्राह्मणेभ्यो दानमस्तीति तद्विस्मृतं भवेत्। दीनानाथादिभ्यः सर्ववर्णेभ्यो दानस्य विहितत्वात्। एतान्येव च विधायकानि वाक्यानि ब्राह्मणेभ्यो राज्ञां दानस्य।

यत्तूक्तं "यथाश्रुतफलानुपपत्तिः सर्वप्रकारेणास्याभ्युपगम्यमानत्वादिति"।

अत्रोच्यते। लौकिकीयं वाचोयुक्तिः सममिति। यल्लोके नात्युत्कृष्टं तदेवमुच्यते। समलवणाः सक्तव इति। उपकारापेक्षा च 'द्विगुणमिति' संख्याश्रुतिर्यावत्तस्योपकारस्तावद्द्विगुणी भवति। न तद्द्रव्यप्राप्तिर्नापि तज्जातीय एवोपकारः, किंतु प्रीत्यतिशयोत्पत्तिः। न चेह फलविशेषश्रुतिर्येनेयमाशङ्काऽपि स्यात्कि तदेव द्रव्यं प्राप्येत उत स एवोपकार इति। अश्रुतफलविशेषेषु स्वर्गः फलम्। किंच तिलादिदाने प्रजाप्तिः फलं श्रूयते। तत्र का द्रव्यसाम्याशङ्का। तस्मान्न्यायमप्यर्थ उत्तरोत्तरोऽत्र च पात्रादिशयदानात्फलातिशयसिद्धिः। तथा चाह "पात्रस्य हि विशेषेणेति" (८६)।

ब्राह्मणब्रुवे ब्रुवशब्दः कुत्सायाम्। जातिमात्रब्राह्मणोऽध्ययनादिगुणहीन इत्यर्थः। आचार्य उपनेता। वेदपारगोऽध्ययनश्रवणाभ्यां वेदस्यान्तं गतः ॥८५॥

पात्रस्य हि विशेषेण श्रद्दधानतयैव च ॥
अल्पंवा बहु वा प्रेत्य दानस्य फलमश्नुते ॥ ८६ ॥

पातयतेऽधर्मकर्मणः, पात्यमानं वा त्रायत, इति पात्रं संप्रदानम्। अथवा घृततैलाधारः पात्रमुपचारादिदमपि पात्रम्। अत्रापि हि द्रव्यं निधीयते। आह च (७।८२) "नृपाणमक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयत" इति। तस्य विशेषो भेदः सगुणनिर्गुणत्वादिः। तेन हेतुना दानस्य फलमवाप्यते।

अल्पं वा। गुणवते वृत्तस्वाध्यायसंपन्नाय दत्तं बहु, निर्गुणाय त्वल्पम्।

देशकालविधानेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तु तद्धर्मस्य प्रसाधनम् ॥

तत्र देशः स्वनिवासदेशादन्यो जानपदः। दूरदेशप्रोषितायां संनिहितत्वादुत्तमस्य हेतुरुपघातः। यज्ञप्रवृत्तस्य केनचिदंगेन न्यूनता ग्रहोपराग इत्येवमादिः। विधानम्। उदकपूर्वकस्वस्तिवाचनसंस्कारातिशयो भावप्रसाद इत्यादि।

द्रव्यं गोभूहिरण्यादि । श्रद्धा प्राप्त्यभिलाषातिशयः, 'कथमिदं मे निवर्ततेति बुद्धिसंतानः ।

प्रेत्येति । क्रियासमनन्तरं फलोत्पत्तेरनियममाह, न पुनर्जन्मान्तरफलतामेव । वैदिकानां कर्मणां फल एव कामस्य नियमावगमात् ॥ ८६ ॥

समोत्तमाधमै राजा त्वाहूतः पालयन्प्रजाः ॥
न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन् ॥ ८७ ॥

सर्वोपायपरिक्षये राज्ञो विहितं युद्धम् । तत्र संग्रामभूमिगतस्याहूतस्य समन्यूनाधिकबलेनोपेक्षाप्रतिषेधार्थमिदं पदम् । न मन्तव्यं निकृष्टबलं न हन्मीति ।

अथवा ये शत्रव आटविकादयः प्राक्स्थितां मर्यादामतिलंघ्य देशमुत्क्रामन्ति शत्रुभिर्वा राज्ञः संदधते, न चेत्ते युद्धेन विना नियन्तुं शक्यन्ते,—तदा निकृष्टबलैरपि तैर्योद्धव्यमेव । यद्यपि तैरसौ शब्देन नाहूतो वस्तुतस्त्वाहूत एव भवति ।

एष हि क्षत्रियाणां धर्मः यदाहूतः प्रकृतैस्तैर्युद्धे सर्वेण सह योद्धव्यमेव । जातिवयःशिक्षापुरुषकारादि नापेक्षितव्यम् । एष धर्मः स्मर्तव्यः ॥ ८७ ॥

संग्रामेष्वनिवर्त्तित्वं प्रजानां चैव पालनम् ॥
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥ ८८ ॥

त्रयाणां धर्माणां तुल्यफलत्वाय श्लोकोऽयम् ॥ ८८ ॥

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ॥
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ८९ ॥

आहूयन्ते युद्धार्थमितरे यत्र वीराः स आहवः संग्रामः । मिथः स्पर्धमाना अन्योन्यं परस्परं जिघांसन्तो हननेच्छवः युद्ध्यमानाः प्रहरन्तः परं शक्त्या परया शक्त्या यथाबलमित्यर्थः । छांदसत्वात्परेत्यस्य स्थाने परमिति रूपम् । अपराङ्मुखा युद्ध्यमाना इति सम्बन्धः । स्वर्गं यान्ति ।

"ननु च राज्यलोभात्प्रवृत्तानां दृष्टस्य फलस्य संभवात्कुतः स्वर्ग उच्यते" ।

वक्ष्यमाणयुद्धनियमापेक्षः स्वर्गः । न हि तेषां नियमानामन्यत्प्रयोजनमस्ति । 'न कूटैरायुधै'रित्यादिना त्यक्तराज्यस्यापि शक्तप्रणिपातेन तदनुजीवनसंभवात्

भवेत्। तस्मादर्हस्तत्फलसंभवः। अथवा निश्चिते पराजये निराशस्य युद्धावतरणम्, तच्च स्वर्गायैव। अस्मादेव वचनान्नात्मत्यागनिषेधस्य विषयोऽयम्।

महीक्षितो मण्डलेश्वरा न पुनस्तदनुजीविनः तेषां हि स्वाम्यर्थैव प्रवृत्तिर्न स्वार्था। अतश्च कुतस्तेषां फलसम्बन्धः, ऋत्विजामिव दक्षिणापणेन परिक्रीतानाम्। एवमेषामपि भृतिपरिक्रीतानां कुतः स्वर्गादिफलोत्पत्तिः।

ननु च अविशेषेणैतदुक्तम् (५। ९७) "उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः सन्तिष्ठते यज्ञ" इति। तथा "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्चशूरश्चाभिमुखो हतः।" इति। तथा भारते युद्धप्रेक्षिणामपि स्वर्गः संदर्शितः। मन्त्रलिङ्गानि च सन्ति "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः। ये वा सहस्रदक्षिणास्ताँश्च देवापि गच्छतात्॥" सहस्रदक्षिणानां यजमानानां शूराणां च रणशिरसि त्यक्तप्राणानां महाफलत्वं दर्शयन्ति। 'ये युध्यन्ते' न च मरणायैव क्रीयन्ते। नहि संपरिग्रहकालेऽयमुपसंवादोऽस्ति। यथा होत्रोद्गात्रादीनां स्वप्रवचनसमाख्यानियतार्त्विज्यपदार्थानुष्ठानायैव वरणम्। तस्मात्प्रभुकार्योद्देशेन यन्मरणं तदनुक्रान्तफलायैव। न च परप्रयुक्तात्कर्मणोऽन्यस्य फलं नास्ति। अश्वमेधावभृथे हि ब्रह्मघ्नस्य स्नानादयजमानस्यैव शुद्धिः।

अत्रोच्यते। प्रजार्थे युद्धे प्राणत्यागो धर्मायैव। यदुक्तम् 'उद्यतैराहव' इति, तदा भृतिपरिक्रीतस्यास्वतंत्रस्य यस्य वा 'कुर्विति' प्रयाणं रण इत्येव परिकरो बद्धस्तदपेक्षमेतत् यज्ञसंस्थावचनम्। एवंभूतश्चाभिमुखो हत इति।

अथवा नरकाभाव एव 'सूर्यमंडलभेदनं' युद्ध्यमानस्य भविष्यति। यत्र विषयान्तरेश्वरेण राज्ञा परस्य राज्ञो विषयो हन्यते भज्यते जनो लुप्येत्तत्र तदर्थं युद्धे प्राणत्यागो धर्मार्थः। अन्धं तमो हि नरके तदभावात्सति प्रकाश्ये सूर्यमण्डलभेदनवचनम्। सूर्यमंडलं भिनत्ति, उपरिष्टाल्लोकानाप्नोति, नाधःप्रपततीत्यर्थः। भृतिपरिक्रीतस्य प्रभोः संग्रामे समुपस्थिते, तमेव जहतो नरकनिपतनम्; तदर्थं युध्यमानस्य भर्तृपिण्डानृण्यं गतवतो दुष्कृतेनाप्रतिबध्यमानस्य स्वैः सुकृतैर्युक्त एव स्वर्गादिलाभः। अत उक्तं "सद्यः संतिष्ठते यज्ञ" इति। अव्यवधानेन यज्ञफलमविशेषश्रुतौ स्वर्गमवाप्नोतीत्यर्थः। एवं भारतेऽपि भृतिपरिक्रीतानां स्वर्गफलावाप्तिवचनमुपपद्यते। युद्धप्रेक्षिणां तु स्वर्गावाप्तिरर्थवाद एव। अथवा बहुषु जीवनोपायेषु सत्सु यच्छस्त्रेण जीवनं ततो नियमात्स्वर्गः।

यत्तु न मरणाय क्रीयन्त इति, शस्त्रभृतां भृतिदाने नान्यद्युद्धात्प्रयोजनमस्ति विशेषानुपदेशात्—'सर्वकार्योद्यताः, सर्वप्रकारं मदर्थः संपादनीय' इति परिक्रीयन्ते —तत्र यदा युद्धमुपस्थितं भवति, तदा आ शरीरपातात्प्रभोरर्थः, कर्तव्यः, तथाऽऽनृण्यं भवति। अनुपस्थिते तु युद्धे यदि भृत्यस्य मरणं भवति, तदा सर्वेऽनृणा एव। उद्युक्ते ह्यसौ तत्कार्ये तादृश एवास्योपसंवादः। युद्धकाले योद्धव्यं भवतीति लिङ्गदर्शनमपि तूपपद्यत एव।

अश्वमेधावभृथे तु स्पष्टं वचनं 'तस्मात्समागमे तेपामिति'। इह तु युद्धसाध्यमिति विशेषः॥ ८९॥

**न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून्॥**
**न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः॥ ९०॥**

तानिदानीमदृष्टार्थान्नियमान्दर्शयति।

कूटानि यानि वहिः काष्ठमयान्यन्तर्निशितशस्त्राणि।

कर्णिनः। शरा ये शल्यस्य मूले मध्ये वा कर्णाकारैः फलकैः क्रियन्ते। ते हि प्रविष्टा दुरुद्धरा भवन्ति। उद्ध्रियमाणाः प्रहारैरभिन्नमपि शरीरैकदेशं भिन्दन्ति।

दिग्धा विषोपलिप्ताः।

अग्निना ज्वलितमादीपितं तेजोमयफलकं येपाम्।

एतैर्न योद्धव्यम्॥ ९०॥

**न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम्॥**
**न मुक्तकेशं नासीनं न तवास्मीति वादिनम्॥ ९१॥**

रथस्थेन रथारूढ एव हन्तव्यः, स्थलस्थितो न हन्तव्यः।

क्लीबो नपुंसकः, पौरुपहीनो वा।

अन्यत्र दृढ आसीन उपविष्टो रथपृष्ठे भूमौ वा।

तवास्मीति वदति यस्तमपि न हन्यात्। शब्दनियमोऽत्र न विवक्षितः। दीनं वदन्नेवंजातीयकैरपि—शब्दै 'स्त्वदीयोऽहं त्वामाश्रितोऽस्मीति'—न हन्तव्यः॥ ९१॥

न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ॥
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ ९२ ।

न नग्नम् । 'न भग्नमिति' वा पाठः ।

विसन्नाहस्य प्रतिषेधान्नग्नस्य प्राप्तिरेव नास्ति । तेन शिरस्त्राणाद्यभावेनैकदेशेन नग्नतया नग्नो द्रष्टव्यः । भग्नस्यापि परावृत्तप्रतिषेधात्संमुखस्थोऽपि, 'त्वया सह न युध्येयमिति' वक्ति, स नानुबन्धनीयोऽवश्यं योद्धव्यमिति ।

नायुध्यमानं पश्यन्तम् । यः प्रेक्षक एव केवलः स न हन्तव्यः । यस्तु प्रेक्षते युध्यते च, न तत्र प्रतिषेधः ।

परेण समागतः । अन्येन सह युध्यमानोऽन्येन न हन्तव्यः ॥ ९२ ॥

नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् ॥
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥ ९३ ॥

आयुधव्यसनमायुधकृच्छ्रमायुधभङ्गः, कुण्डलिभावः खड्गस्य, ज्याछेद इत्येवमादिस्तं प्राप्तम् ।

आर्तः हतपुत्रभ्रातादिः ।

भीतं मुखरागादिना विज्ञाय, शस्त्रसंमुखमपि ।

परावृत्तं प्रत्यावृत्य स्थितम् ।

एते नियमाः ।

प्रतिषेधपक्षे प्रत्यवायः । तदा च स्वर्गप्राप्तिवचनमर्थवादः ।

किं पुनरत्र युक्तम् ।

पुरुषार्थः प्रतिषेधः । "न कलञ्जं भक्षयेत्" इतिवत् । तथा हि नञो मुख्यार्थवृत्तिता भवति ।

सतां धर्ममिति । शिष्टानामेष आचार इत्याह अनुस्मरन्निति ॥ ९३ ॥

यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ॥
भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥ ९४ ॥

नैवं मन्तव्यं—परावृत्तो यदि हन्यते तदा, दुष्कृत्य हतस्तु नेति,—किंतर्हि परावृत्तमात्रनिबन्धनं दोषवचनम् । किंच न परावृत्तहतेनेयं बुद्धिः कर्त्तव्या—

'अनुभूतखड्गप्रहारोऽस्म्यनृणः कृतभर्तृकृत्य' इति। तथाविधाः प्रहारा न कस्मैचिदर्थायेति दोषातिशयदर्शनेन दर्शयति भर्तृसंबन्धिदुष्कृतमिति। यच्च वचनमुत्तरत्र तदीयसुकृतग्रहणमिति, तदर्थवादः। न ह्यन्येन कृतं शुभमशुभं वाऽन्यस्य संभवति न च सुकृतस्य नाशः। किन्तु महता दुष्कृतेन प्रतिबन्धे चिरकालभाविता सुकृतस्य फलस्य उच्यते ॥ ९४ ॥

यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् ॥
भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥ ९५ ॥

यच्चास्य सुकृतं किंचिद्भर्ता तत्सर्वमादत्त इति।

अमुत्रार्थमुपार्जितम् अर्थोऽस्यास्तीत्यर्थः। अर्श आदित्वादच्। अमुत्रामुष्मिंल्लोके यत्प्रयोजनं तदर्जितम्। तदस्य निष्फलं भवति।

अमुत्रार्थोऽस्येति वा अमुत्रार्थं व्यधिकरणो बहुव्रीहिर्गमकत्वात्प्रयोजकत्वाच्च ॥ ९५ ॥

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून्स्त्रियः ॥
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥ ९६ ॥

कुप्यं शयनासने ताम्रभाजनादि।

यो यज्जयति तस्य तत्। राज्ञः स्वामित्वाद्ग्रहणे प्राप्ते तदपवादार्थमेतत्। सुवर्णरूप्यभूम्यावासकादि राज्ञ एव। एवमर्थं परिगणनम्। आयुधसंवाहनादि राज्ञ एव। धान्यादीनां पृथगुपादानाद्धनशब्देन गोमहिष्यादिकमुच्यते। तथा राजधनंचार्धमिति प्रयुञ्जते ॥ ९६ ॥

राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ॥
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥ ९७ ॥

येन यज्जितं तेन तद्गृहीतव्यमित्यस्यायं विशेष उच्यते।

स्वयमुद्धारं राज्ञे दद्युरुत्तमद्रव्यमुद्धृत्य दद्युरित्यर्थः। न सर्वं तैर्ग्रहीतव्यमिति।

एषा वैदिकी श्रुतिः। "इन्द्रो वै वृत्रं हत्वा" इत्याद्युपक्रम्य "स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेति"।

राज्ञा वा पृथग्जये स्वयंजये यत्रायं विभागो नास्त्यनेनायं ग्रामो जितः एष च परकीयः सामन्तादिः सर्वेण सर्व उत्खातमूलः सकृत्कृतः, तत्र राज्ञा लब्धप्रशमनन्यायेन भृत्याः संविभजनीयाः ॥ ९७ ॥

एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः ॥
अस्माद्धर्मान्न च्यवेत क्षत्रियो घ्नन् रणे रिपून् ॥ ९८ ॥

उपसंहारोऽयम् ।

'योधाः' योद्धारस्तेषां धर्मो योधधर्मः ।

अनुपस्कृतः अगर्हितः । अविकृतो वा । अत एवाह सनातनः—स्वेच्छया प्रवर्तितो विकृतः स्यात् ।

न च्यवेत न चलेत । सर्वदाऽनुतिष्ठेत् । क्षत्रियग्रहणं मुख्यस्तस्यात्राधिकार इति दर्शयितुं न त्वन्यस्य तत्स्थानापन्नस्य नायं धर्म इति ॥ ९८ ॥

अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ॥
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥ ९९ ॥

न क्षत्रियः संतुष्टः स्याद्ब्राह्मणवत्किन्त्वलब्धार्जने यत्नं कुर्यात् । अर्जितं च धनं रक्षेद्रक्षितं च वर्धयेत्कोशसंचयं कुर्यात् । ततः पात्रेभ्यो दद्यात् । न यथायं व्ययं कुर्यात् । तदुक्तं "आयादल्पतरो व्यय" इति ।

एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम् ॥
अस्य नित्यमनुष्ठानं सम्यक्कुर्यादतन्द्रितः ॥ १०० ॥
अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ॥
रक्षितं वर्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥ १०१ ॥

पुरुषस्य येऽर्थास्तेषां प्रयोजनं चतुर्विधम् । चतस्र एताः क्रियास्तत्र प्रयोज्याः, अर्जनरक्षणवर्धनदानानि ।

उपकारवचनोऽर्थशब्दः । पुरुषार्थसिद्ध्यर्थमेतत्प्रयोजनम् । तस्य चतुर्विधस्य प्रसक्तस्य नित्यमनुष्ठानं कुर्यात् ॥ १००-१०१ ॥

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ॥
नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः ॥ १०२ ॥

उद्यतो दण्डोऽनेनेत्युद्यतदण्डः। उद्यत उद्युक्तः सव्यापार इति यावत्। तत्र हस्त्यादिबलं नित्यं योग्याभिरभिविनयेत्। शिक्षा वाहनदमनादिभिर्विधेया। करणयोग्या अभ्यासाश्च। तद्वाहनादिषु वस्त्राभरणसंस्कार इत्यादिरुद्यतदण्डता। तथा कुर्वतोऽस्योत्साहशक्तियोगो मण्डले प्रकाशीभवति।

तथा नित्यं विवृतपौरुषः। विवृतं प्रकाशतामागतं पौरुषं कर्तव्यम्। सन्धिपालाटवीस्थानादिष्वाप्तपुरुषैरधिष्ठिताः सन्निरुद्धाः कवचिनः सततं जागरणार्थं नियोज्याः।

नित्यं संवृतसंवार्यः। संवरणीयं संगोपनीयमात्मगतं कृत्वा तत्स्थानं संवृतं कर्तव्यमुपग्रहेण परोपजापरक्षणेन च।

नित्यं छिद्रानुसरणेन, सर्वं शत्रोः कृत्यपक्षं ज्ञात्वा झटिति तदुपजापः ॥१०२॥

**नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ॥**
**तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १०३ ॥**

अनन्तरस्य फलम्।

सर्वं जगदुद्विजते बिभेति। प्रतापख्यातिर्भवति चेति। तस्मात्सर्वाणि भूतानि स्वप्रकृतीः परांश्च दण्डेनैव प्रसाधयेत्। एवं यत्नवतो भीता शत्रवो नमन्त्ययत्नेनैव ॥ १०३ ॥

**अमाययैव वर्त्तेत न कथंचन मायया ॥**
**बुध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः ॥ १०४ ॥**

माया छद्म। तेन न वर्तेत। अविश्वसनीयस्तथा स्यात्। न च परप्रकृतीरज्ञातरूपा उपजपेत्। अरिणा प्रयुक्तां च मायां यथावद्बुध्येत। बुद्ध्या ज्ञात्वोपजापं कुर्यात्।

तत्र कृत्यपक्षश्चतुर्विधः। क्रुद्धलुब्धभीतावमानितैः।

तत्र येन कृतं शिल्पं किंचिदुपकारो वा दर्शितः, तौ विप्रलभ्येते प्रसादेन नियोज्येते अवमन्येते वा। तदर्थोऽपि तत्समानः शिल्पोपकारी क्रुध्यति, नास्यास्मदीयं शिल्पमुपकारो वोपयुज्यते। तादृशा उपजापसहा भवन्ति। तथा वाल्लभ्येनोपगृहीतः, पश्चान्मानाधिकाराभ्यां भ्रष्टः प्रवासितबन्धुतद्वल्लभः प्रसभमभिपूज्य स्वीकृतः, सकुल्यैरन्तर्हितः, सर्वस्वमाहारितस्तत्समानकर्मविद्योऽन्यः पूज्यते सोऽवधीर्यते इत्येवमादिः क्रुद्धः।

केनचित्कृतं पैशुन्यं तत्समानदोषेभ्यो दण्डितं अंतभ्रमदण्डपाताः सर्वाधिकारस्थाः सहसोपचितार्था इत्यादि लुब्धवर्गः ।

परिक्षीणः कदर्यो व्यसनी वहुऋण इत्यादिर्भीतवर्गः ।

आत्मसंभावितः शत्रुपूजामर्थितः नीचैरुपहतः तीक्ष्णः साहसिको भोगेनासंतुष्ट इत्येवमादिरवमानितवर्गः ।

एतत्परस्योपजपेत् आत्मनश्च रक्षेत् ॥ १०४ ॥

नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य च ॥
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ १०५ ॥

एष एवार्थः पुनरुच्यते ।

तथा यत्नातिशयं कुर्याद्यथा परस्य छिद्रमन्विच्छेदात्मनश्च रक्षेत् । य एवं क्रुद्धादिः कापटिकादिचारपुरुषैर्ज्ञायते स एवात्मीयोऽनुनीयत इति ।

कूर्मवदङ्गं गूहेद्रक्षेद्विवरमात्मनः । परोपजापात्स्वच्छिद्ररक्षणं महाप्रयोजनमित्येतदनेनाह ॥ १०५ ॥

वकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमे ॥
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥१०६॥

यथा अप्सु दुर्गाश्रयमपि मत्स्यवलं स्वभावतस्तद्ग्रहणार्थं बकः पर्युदासनपरतया तद्ग्रहणोपायं ध्यानादियोगादासादयति एवमर्थचिन्ताभियोगातिशयेन सुदुष्प्रापा अप्यर्था आसाद्यन्त इति मत्वा न निर्वेदं गच्छेत् ।

यथा च शशोऽल्पकायत्वाच्छक्नोति निष्पतितुमुपरि संघादपि, तथा एकोऽप्यसहायः सर्वतः समुत्थितसामन्तकोपोऽशक्तोऽवस्थातुं दुर्गेऽरिसंपातं कृत्वा तस्माद्विनिष्पतेद्गुणवति संश्रयार्थम् ।

यथा च वृकः पशुग्रहणाभियोगाद् वालप्रमादमासाद्यावलुम्पते, एवं स्वरक्षापर इति मत्वा तद्ग्रहणाभियोगो न मोक्तव्य, भविष्यति स कालो यत्रायं वृकवदवलुम्पिष्यते ।

यथा सिंहो महाकायानपि हस्त्यादीन्हन्ति पराक्रमोत्साहशक्तियोगात्, एवं महदरिवलमिति न भेतव्यम्, अल्पप्राणेनापि कदाचिदुत्साहवता महाप्राणो निहन्यत इति ॥ १०६ ॥

एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ॥
तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥ १०७ ॥

ये परिपन्थिनः प्रतिपक्षतया वर्तन्ते ते वशमानेतव्याः । न त्वानुकूल्येन ये वर्तन्ते तेऽपि सामादिभिः पूर्वम्, न प्रथमत एव दण्डेन ॥ १०७ ॥

यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ॥
दण्डेनैव प्रसह्यैतांश्छनकैर्वशमानयेत् ॥ १०८ ॥

सामादिभिरशक्या दण्डेन वशमानेतव्या इति यदुक्तं तदिदं दण्डेन प्रसह्याभिभूय शनकैर्यादृशो दण्डोपक्रमस्तेन । न साहसिकतया ॥ १०८ ॥

सामादीनामुपायानां चतुर्णामपि पण्डिताः ॥
सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये ॥ १०९ ॥

वक्ष्यमाणानां सामादीनामुपानां सामदण्डौ निगद्येते प्रशस्यतया । सति साम्नि क्षिप्रं कंपो न भवति । दण्डे तु सर्वसिद्धिः ॥ १०९ ॥

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ॥
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥ ११० ॥

ये राजानमभिद्रुह्यन्ति तेषां ये सुहृद्बान्धवा, सम्बन्धोपसर्पिणो वा, न ते विनाशयितव्या, यदि न तत्कार्याभ्यन्तराः । य एव दुष्टास्त एव निग्राह्या, न तत्सम्बन्धिन इत्येतन्निर्दातृदृष्टान्तेन प्रतिपाद्यते ।

यथा धान्यकक्षयोः सहोत्पन्नयोरत्यन्तसहितयोरपि नैपुण्येन धान्यं रक्षति कक्षमुद्धरति । एवं स्वराष्ट्रे यावन्तस्तेषां सुहृदावपि, तयोर्दोषवान्यः स एव निग्राह्यः, न यः सुसङ्गतोऽपि । अतः साध्वसाधुविवेकेन साधवो रक्ष्या असाधवो निग्राह्याः ॥ ११० ॥

मोहाद्राजा स्वराष्ट्रं यः कर्शयत्यनवेक्षया ॥
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥ १११ ॥

यस्तु राजा पूर्वोक्तविवेकमकृत्वा मोहेनानवेक्षया स्वराष्ट्रं कर्शयति स दण्डैः सह भ्रश्यत्यचिराद्राज्याज्जनपदाननुरागेण प्रकृतिकोपेन जीविताच्च । साहसिकैरेकाकिभिरपि जीवितनिरपेक्षैर्हन्यते ॥ १११ ॥

शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ॥
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥ ११२ ॥

स्वराष्ट्रेऽत्यन्तमवहितेनानुराग उत्पादनीयस्तद्धि शरीरस्थानीयम्। शरीरे कर्शितेऽपथ्यभोजनरूक्षभोजनादिभिर्यथा प्राणा उत्क्रामन्ति, एवं राष्ट्रकर्शनादपि ॥ ११२ ॥

राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ॥
सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥ ११३ ॥

'संग्रहो' रक्षाविधानम्। सुसंगृहीतं रक्षाविधानेन वशीकृतं परिपालितं वा येन स्वराष्ट्रं स पार्थिवः सुखमेधते ॥ ११३ ॥

द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् ॥
तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम् ॥ ११४ ॥

द्वयोर्ग्रामयोर्मध्ये गुल्मं कुर्यात्। गुल्मो रक्षितृपुरुषसमूहस्तेनैवाधिष्ठितं संग्रहं कुर्यात्। तद्युक्तमधिष्ठातारं पुरुषं कुर्यात्। अधिकारी संग्रह इहोच्यते।

एवं त्रयाणां पञ्चानां च।

अथवा राजभाव्यार्थग्रहणस्थानं संग्रहः ॥ ११४ ॥

ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा ॥
विंशतीशं शतेशं च सहस्रपतिमेव च ॥ ११५ ॥

एकैकस्मिन् ग्रामेऽधिपतिं कुर्यात्। तदुपरि दशग्रामपतिम्। एवं सर्वत्र ॥ ११५ ॥

ग्रामदोषान्समुत्पन्नान् ग्रामिकः शनकैः स्वयम् ॥
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिने ॥ ११६ ॥

विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ॥
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ ११७ ॥

ये ग्रामदोषा एकग्रामाधिकृतेन न शक्यन्ते समाधातुम्, तान्दशेशाय निवेदयेत्। एवमशक्तो यावत्सहस्रपतिर्विज्ञाप्यः ॥ ११७ ॥

यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः ॥
अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥ ११८ ॥

एकग्रामाधिकृतस्य वृत्तिरियम् ।

ग्रामिको ग्रामाधिकृतस्तान्यवाप्नुयाद्गृह्णीयात् । वृत्त्यर्थं राज्ञे प्रदातव्यानि ग्रामवासिभिः । अन्नादीनि तु धान्यादेः षष्ठाष्टमभागादिः । यथा वक्ष्यति "धान्येऽष्टमं विशाम्" इत्यादि ( अ० १० । १२० ) ॥ ११८ ॥

दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च ॥
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥ ११९ ॥

दशसु ग्रामेष्वधिकृतो दशी । एवं विंशी । छान्दसः शब्दसंस्कारः । कुलं ग्रामैकदेशः । क्वचिद् हट्ट इति प्रसिद्धः क्वचिद्गुष्ट इति ।

एतदेव पञ्चगुणं विंशतिग्रामेष्वधिकृतः । सर्वं ग्रामशताध्यक्षः ।

पुरं नगरं सहस्रेशः स्थानकर्मानुरूपेण वृत्तिं कल्पेतेत्येतत्सत्यम् ॥ ११९ ॥

तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ॥
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥ १२० ॥

तेषां ग्रामकार्येष्वितरेतरं विप्रतिपत्तिः । अन्यः स्वकार्येऽन्यः सचिवो महत्तमः स्निग्धो रागद्वेषवर्जितो दर्शनाय नियोक्तव्यः ॥ १२० ॥

नगरे नगरे चैकं कुर्यात्सर्वार्थचिन्तकम् ॥
उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥ १२१ ॥

उच्चैःस्थानं प्रधानभूतमित्यर्थः । घोररूपं प्रतापवन्तम् । नक्षत्राणामिव ग्रहं अंगारकम् । हस्त्यश्वादिबलसंपन्नम् ॥ १२१ ॥

स ताननुपरिक्रामेत्सर्वानेव सदा स्वयम् ॥
तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥ १२२ ॥

स नगराधिकृतस्तान्सर्वानपि पतीननुपरिक्रामेत्स्वबलेन पूरयेत् । सति प्रयोजने । तेषां सर्वेषामधिपतीनां तद्वृत्तं सम्यक् परिणयेत् सम्यग्रूपतया परिजानीयात् । कैः । राजचरैः कापटिकादिभिः ॥ १२२ ॥

राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः ॥
भृत्या भवंति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥ १२३ ॥

परस्वमादातुं शीलं येषां ते परस्वादायिनः शठाः असम्यक्कारिणः प्रायेणाधिकृताः सन्तो भवन्ति । प्राक्शुचयोऽपि रक्षन्ति वित्तानि । अतः प्राक्शुचित्वानुमानेन नोपेक्षणीयाः । यत्नतः प्रतिजागरितव्याः ।

तेभ्यो रक्षेदिमाः प्रजाः । न केवलं राजार्थनाशः अनवेक्षया, यावत्प्रजा अपि निर्धनीकुर्वन्ति ॥ १२३ ॥

ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः ॥
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥ १२४ ॥

ये रक्षाधिकृताः कार्यिकेभ्यो व्यवहर्तृभ्यो व्यापारवद्भ्यो हृललेशोद्देशिकया दण्डयन्ति जनपदांस्तेषां सर्वस्वहरणप्रवासने राजा कुर्यात् ॥ १२४ ॥

राजकर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च ॥
प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥ १२५ ॥

युक्तानां नियुक्तानां स्त्रीणामन्तःपुरदास्यादीनाम् । प्रेष्यजनस्य दोलकवाहादेः । प्रत्यहं वृत्तिं कल्पयेन्न सांवत्सरीयं सकृद्दद्याद्ग्रामं तदेकदेशं वा ।

स्थानकर्मानुरूपतः । 'स्थानं' प्रधानं नियोगः शय्यारक्षादि, 'कर्म' शरीरव्यापारस्तदनुरूपेण वृत्तिर्देया । प्रधाने स्थाने स्वल्पेऽपि कर्म्मणि महती वृत्तिर्निकृष्टे स्थाने महत्यपि कर्मणि स्वल्पेत्येतदुभयानुरूपम् ॥ १२५ ॥

पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् ॥
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः ॥ १२६ ॥

अवकृष्टः संमार्जनशोधनविनियुक्तस्तस्य भक्तार्थं पणो देयः ।

उत्कृष्टस्य षट्सु षट्सु मासेषु गतेष्वाच्छादवस्त्रम् । धान्यद्रोणश्च मासिकः । चतुराढको द्रोणः ।

पणपरिमाणं वक्ष्यति ।

वृत्तिकल्पनार्था एते ॥ १२६ ॥

**क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम्॥**

**योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत्करान्॥ १२७॥**

करग्रहणविधिः।

कियता मूल्येन क्रीतमेतत्कियच्च विक्रीयमाणं लभते कियता च कालेन विक्रीयते कियत्प्रतिभावेन नेत्येवमादिरूपक्रयविक्रयपरीक्षा।

अध्वानं चिराचिरगमनप्राप्यताम्।

भक्तं सक्त्वोदनादिमूल्यम्।

परिव्ययस्तदुपकरणं सर्पिः सूपशाकादि धनादि च।

योगक्षेममरण्ये कान्तारे वा गच्छतो राजभयं चौरभयं निश्चौरता वेत्यादि।

एतदपेक्ष्य वणिग्भ्यः करा आदातव्याः।

"वणिग्भिर्दापयेत्करान्" इति पाठो युक्तः। गत्यादिनियमेन कर्मसंज्ञाया अभावात्।

दण्डवचनो वा धातुस्तदा दण्डिवद्द्विकर्मकत्वम्॥ १२७॥

**यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः॥**

**तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः॥ १२८॥**

क्षीणकृषेर्न्यूनः करो ग्रहीतव्य इत्येवमर्थमेतत्।

वार्योकसो जलौकसः। षट्पदा भ्रमराः। यथा ते स्वल्पमाददानाः परिपुष्टा भवन्ति तथा राज्ञा मूलोच्छेदो न कर्तव्यः॥१२८॥

**यथा फलेन युज्येत राजा कर्ता च कर्मणाम्॥**

**तथावेक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान्॥ १२९॥**

एतदेवाह। कर्मणां कर्त्ता वाणिजकः राजा च फलेन युज्येत। तथा करान्कल्पयेन्न परिमाणनियमकारणमस्ति। यत्र महान्लाभस्तत्राधिकमप्युक्तपरिमाणातिक्रमेण ग्रहीतव्यम्॥ १२९॥

**पञ्चाशभाग आदेयो राज्ञा पशुहिरण्ययोः॥**

**धान्यानामष्टमो भागः षष्ठो द्वादश एव वा॥ १३०॥**

मूल्याधिकयोः पशुहिरण्ययोः पञ्चाशद्भागो ग्राह्यः । धान्यानां भागविशेषः सुकरदुष्करापेक्षया मन्तव्यः । पंचाशत्पूरणः पञ्चाशः । विंशत्यादिभ्य इति पक्षे तमट् । पञ्चाशद्भाग इति पाठे द्विभागादिवत्संख्यान्तरम् ॥ १३० ॥

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ॥
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥ १३१ ॥

द्रुशब्देन वृक्षा उच्यन्ते । शेषं प्रसिद्धम् । एतेषां षष्ठो भागो लाभाद्ग्रहीतव्यः ॥ १३१ ॥

पत्रशाकतृणानां च चर्मणां वैदलस्य च ॥
मृण्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥ १३२ ॥

म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ॥
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥ १३३ ॥

तथा कुर्याद्यथा क्षुधाऽस्य विषये श्रोत्रियो नावसीदति ॥ १३३ ॥

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥ १३४ ॥

अनन्तरविधेरतिक्रमफलमेतत् ॥ १३४ ॥

श्रुतवृत्ते विदित्वाऽस्य वृत्तिं धर्म्यां प्रकल्पयेत् ॥
संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥ १३५ ॥

धर्म्यां वृत्तिम् । यया कुटुम्बधर्मस्यावसादनं न भवति । वृत्तिं प्रकल्प्य सर्वतो रक्षेच्चौरादिभ्यः । स्वयमधिकव्ययाच्च ॥ १३५ ॥

संरक्ष्यमाणो राज्ञाऽयं कुरुते धर्ममन्वहम् ॥
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ १३६ ॥

धार्म्मिकश्रोत्रियरक्षायाः फलमेतदायुर्द्रविणराष्ट्रवृद्धिः ॥ १३६ ॥

यत्किञ्चिदपि वर्षस्य दापयेत्करसंज्ञितम् ॥
व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥ १३७ ॥

कृषिधनप्रयोगक्रयविक्रयादिव्यवहारेण जीवन्तं पृथग्जनं ब्राह्मणाच्छ्रोत्रियादन्यं करं दापयेत् ।

करसंज्ञा सञ्जाताऽस्य करसंज्ञितम् ॥ १३७ ॥

**कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः ॥**

**एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥ १३८ ॥**

शिल्पमात्रोपजीविनस्तान्मासं मासमेकमहः कर्म कारयेत् ।

आत्मोपजीविनश्च शूद्रा वेशभारवाहादयः ॥ १३८ ॥

**नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया ॥**

**उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च पीडयेत् ॥ १३९ ॥**

करशुल्कादेरग्रहणमात्मनो 'मूलच्छेदः', अतिबहुग्रहणं परेषाम् । तत्र तृष्णया भवतीत्यनुवादः । आत्मनो मूलच्छेदेनात्मपीडा भवति, कोशक्षयात् । अतस्तेऽपि पीड्यन्ते । उपस्थिते विग्रहे क्षीणकोशशक्तिररिभिरपरुद्धोद्धरणेऽवश्यं भवेत् । सा च तेषां महती पीडा । यत्तु सार्वकालिकं करग्रहणं तत्सम्पादयतो न खेदिता भवन्ति ॥ १३९ ॥

**तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः ॥**

**तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः ॥ १४० ॥**

तीक्ष्णमृदुता नित्यमभ्यसनीया । तादृशो राजा प्रजानां संमतो भवत्यभिप्रेतः ॥ १४० ॥

**अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् ॥**

**स्थापयेदासने तस्मिन्खिन्नः कार्येक्षणे नृणाम् ॥ १४१ ॥**

प्रजानां सम्बन्धिनि कार्यदर्शने खिन्नः श्रान्तः । धर्मज्ञादिगुणयुक्तं सर्वसहममात्यं तस्मिन् कार्येक्षणे नियुञ्जीत । न पुनस्तस्मिन्नेव सिंहासने ॥ १४१ ॥

**एवं सर्वं विधायेदमितिकर्त्तव्यमात्मनः ॥**

**युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ १४२ ॥**

सहायसंग्रहप्रभृत्युक्तस्यार्थस्यैवमिति परामर्शनम् । विधाय कृत्वा

राजनि तथाविधानामप्रतिपत्तिःस्यात्। अत उद्धतवेषाभरणं न कथंचित् स्यात्। वेषः केशवसनविन्यासादिविशेषः। आभरणं कर्णिकादि। तत्रोद्धतवेष ऊर्ध्व-वस्त्रो जवनरक्ताम्बरधारितेत्यादि। उद्धतभरणो दीप्तिमद्बहुरत्नालङ्कारो बहुहारश्च स ह्यादित्य इव दुर्निरीक्ष्यः सामान्यजनानां विशेषतोऽभियुक्तानाम्। पश्येदिति। सभाप्रवेशस्य प्रयोजनमाह—पश्येद्विचक्षणः।

अयं च राज्ञो दर्शनोपदेशो दण्डप्रणयने यथास्थानार्थप्रतिपादनपर्यन्तो भविष्यति। तात्पर्यं तस्यैव रक्षाधिकारः प्रयुक्तः स्यात्। ईदृशस्य च दर्शन-स्यान्येषामसंभावनादनधिकारः। सर्वेषां संशयच्छेदमात्रफलं तु व्यवहारदर्शनं प्रायश्चित्तोपदेशवद्विदुषो ब्राह्मणस्यास्त्येव। उक्तं हि 'धर्मसंकटेषु ब्रूयादिति'। तथैकवर्ग्याणां वाणिज्यकर्षकपशुपालप्रभृतीनां स्ववर्गसामयिकार्थविप्रतिपत्तावन्यस्यां वोत्सुकनिर्णयाद्भूतिरिति तथाविधव्यवहारदर्शने नियोगः। तथा हि पठितम् ( ना० स्मृ० ७ )

"कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः।
प्रतिष्ठा व्यवहाराणां गुर्वेभ्यस्तूत्तरोत्तरम्" ॥ इति।

तत्र 'कुलानि' बन्धुजनसमूहः। तैर्या व्यवस्था कृता ततो न विचलितव्यम्। अथ तत्र नाश्वस्युस्तवैतेऽधिकतरं संबन्धिन इति वदन्तस्ततः श्रेणिषु निवेदितव्यम्। 'श्रेणयः' समानव्यवहारजीविनो वणिक्प्रभृतयः। तेषां बन्धुभ्योऽधिकगुरुत्वम्। बान्धवा हि ज्ञातिधर्मभयाद्विचलितं न नियच्छन्ति। श्रेणयस्तु राजगमनेन श्रेणि-धर्मो राजपुरुषप्रवेशात्परिभवनीयत्वेन नश्यतीति अविचलनार्थं प्रतिभूग्रहणपूर्वकं विचारयन्ति य एतस्माद्विचलति। परिषदि दण्डो दातव्यश्चलितुं वाऽपि त्वया न देयमिति। 'गणा' गणशश्चारिणो गृहप्रासादादिकरा मठब्राह्मणादयश्च ते स्वगणिनां व्यवहारं पश्येयुः। तत्राविचलार्थं उपसदः कर्तव्याः। पूर्वे समान-कर्मजीविन एकाकिनोऽपि,इमे तु संभूयकारिण इति विशेषः श्रेणिभ्यः सम्भूयकारितया विवादिनो भूमिज्ञत्वात्। अन्ये तु कुलानीति मध्यस्थपुरुषानाहुः। ते हि कार्या-भ्यन्तरा अश्रेणिकृता एव निर्णेतारः। 'अधिकृतः' त्रैविद्यो विद्वान् ब्राह्मणः। तस्य हि धर्मसंकटेषु प्रवक्तृत्वं विहितम्। तस्य पूर्वेभ्यो गुरुत्वं वैदुष्यात्। नृपस्यापि गुरुत्वमतिशयशक्तित्वादतः स्वयं विदुषा नृपेण निर्णीते नास्त्येतत्—

"यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ।।" इति ।

अन्येषु करणेष्वेतद्भवति । तत्र ह्यस्ति वचनावसरो नाधिकृतैः सम्यक निर्णीतं राज्ञा तु विवेचिते किं वक्ष्यतीति ।

अर्थान्तरम्—नृपैरधिकृतो राजस्थानीयब्राह्मणः । तथाऽन्यस्य गृहिणः स्वतन्त्रस्तु गृहे गृहीति स्वातन्त्र्यस्मरणाद्दण्डपर्यन्तोऽस्त्येव व्यवहारः सुपरीक्षितो भवति । वासनाविनयार्थं श्रुतिग्राह्यप्रसक्तशिष्यसुताद्याः "अन्यत्र दण्डाच्छारीरात्पतनीयाच्च कर्मण" इति । स्वल्पेऽपराधे गृहस्थ एव राजायते । महति व्यतिक्रमे राजनिवेदनमेवोचितमित्यस्यार्थः ।

अतश्च यत्कैश्चित्पश्येदिति परिसंख्यार्थत्वमारोप्य ब्राह्मणादीनामधिकार आशङ्कितः पुनश्च क्लेशेन समर्थितस्तदयुक्तम् । विषयभेदादधिकारभेदात् । स्वविषयो हि राज्ञो दण्डावधिको ब्राह्मणादीनां निर्णयावधिः । अधिकारोऽपि भिन्नः । राज्ञो राज्यस्थितिप्रयोजनम्, इतरेषां संशयच्छेदादेरपरोपकारकत्वम् । अतो नो वृत्तिसङ्कराशङ्कैव नास्ति । कार्यो विप्रतिपत्तिनिरासः । अर्थिनां विप्रतिपन्नयोर्हि साम्यं व्यवहारदर्शने राज्ञा कर्तव्यम् । नो चेत्संविदाने को राज्ञः स्वाधिगमे निरोधः ।। २ ।।

**प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।।**
**अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ।। ३ ।।**

पूर्वेणार्धेन निर्णयहेतवः कथ्यन्ते । उत्तरेण विवादपदसङ्ख्यानिर्देशः । 'पश्येदिति' पूर्वश्लोकादनुषज्यते कार्याणीति च । प्रत्यहं पश्येत्कार्याणि प्रतिदिवसगमने व्यवहारनिर्णयः कर्तव्यः । हेतुभिरिति हेतुर्निर्णयसाधनम् । स च द्विविधः । प्रमाणरूपो व्यवस्थारूपश्च । तत्र प्रमाणरूपोऽर्थनिर्णयहेतुः साक्ष्यादिः । व्यवस्थारूपो यतोऽसत्ये वाऽर्थनिश्चये व्यवहारः संतिष्ठते । यथा सत्यशपथ उभयानुमत एकः साक्षी यद्यर्थिप्रत्यर्थिभ्यामभ्युपगतप्रमाणभावः सभ्यैरपरिक्षितोऽपि निर्णयहेतुतां प्रतिपद्यते । न च परीक्षितस्य पुंसो वचनादसत्यात्पूर्ववदर्थनिश्चयः प्राश्निकानामभ्युपगमेऽपि व्यवस्थाहेतुर्भवति ।

सा च व्यवस्था द्विविधा। साधारण्यसाधारणी च। देशभेदादाश्रयभेदात्साऽपि द्विविधा। अविरुद्धा विरुद्धा च। अविरुद्धा यथा केषांचिद्दाक्षिणात्यानामपुत्रा स्त्री भर्तर्युपरते सभास्थाणुमुपारोहति तमुपारूढाऽधिकृतैः परीक्षिता कृतलक्षणा तत्क्षणानन्तरं सपिण्डेषु ऋक्थं लभते। तथोदीचां लभ्यमानां कन्यां याचमानाय भोजनं यदि दीयते तत इयं तुभ्यं दत्तेत्यनुक्तेऽपि प्रतिश्रुता भवति। विरुद्धा च। क्वचिद्देशे वसन्ते धान्यं प्रयुज्यते शरदि द्विगुणं प्रत्यादीयते। तथाऽनुज्ञातभोग आधिर्द्विगुणेऽपि तदुत्थधने प्रविष्ट आ मूलहिरण्यदानाद्भुज्यत एव। एषा हि "अशीतिभागं गृह्णीयात्" "कुसीदवृद्धिर्द्वैगुण्यं नात्येतीति" ( १५१ ) विरुद्धा।

तत्र भेदाश्रया देशदृष्टहेतुशब्देनाभिहिताः। शास्त्रदृष्टास्तु हेतवः शास्त्रे पठिताः। ते च केचन शास्त्रकारैः कल्पितव्यवस्थाः केचिद्यथावस्त्ववस्थिता अनुदिताः। तत्र कल्पितव्यवस्था यथालेख्यं यथोपभोगः साक्षिणश्चानुमानं वस्तुनियतं "यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्" ( ४४ ) इति। यद्यपि सर्वं लौकिकं न शास्त्रकारवचनवत्प्रामाण्यं लभते तथाऽपि लौकिकमेव क्वचिच्छास्त्रमाश्रयितव्यम्। यच्चेदृशे चापराध इदं दिव्यं इयता च कालेन भोगः प्रमाणमिति लौकिकमपि तच्छास्त्रदृष्टमित्युक्तम्। तस्यां च व्यवस्थायां शास्त्रकाराणां मूले संभवति सा प्रमाणम्। या त्वसंभवतन्मूला सा नादरणीया। यथा लेख्यक्रमपाठः। ( याज्ञव० व्य० ८८ ) "उभयाभ्यर्थितेनैवं मया ह्यमुकसूनुना लिखितं ह्यमुकेनैव लेखकस्तत्त्वतो लिखेत्॥" इति। यस्यादावेव लेखकः स्वनाम निवेशयेदिदंनामाहममुष्य पुत्रो लिखामीदमिति न कश्चिद्दोषः स्यात्। स ह्येवमर्थं नाम निवेशयत्यनेनेदं लिखितमिति लेखक उपलक्षितो यथा स्यात्। यदि ह्यसौ लेखकः प्रमाणान्तरेण प्रत्ययितो भवति ततस्तल्लिखितं प्रमाणम्। यदि चासावात्मानं स्वगोत्रनाम्ना नोपलक्षयेत्ततः कस्य प्रत्ययितता प्रमाणान्तरादन्विष्यताम्। अथ तु लेख्यान्तरदर्शनेनान्येन वा हेतुना विशिष्टलेखक इति प्रत्यभिज्ञानं स्यादनुपलक्षितोऽपि न कश्चिद्दोषः। तत्र यदि लेखको न लिखेन्मयेदं लिखितमिति भवेदेव तादृशं लेख्यं परिपूर्णलक्षणम्। एषा च लेखकपरीक्षा तत्रोपयुज्यते। पत्रलेखकस्य साक्षित्वान्तर्भावोऽन्येषां साक्षिणामल्पत्वात्। यत्र त्वन्ये बहवः

प्रत्ययिताः साक्षिणः स्वहस्तारूढाः सन्ति तत्र लेखकसम्वधिनी प्रत्ययितता नोपयुज्यते। तथेयमपरा व्यवस्था ( नारद १ । १४५ )
"लिखितं लिखितेनैव साक्षिमच्चैव साक्षिभिः। साक्षिभ्यो लिखितं श्रेयो लिखिते न तु साक्षिणः"

नास्यामपि व्यवस्थायां किंचिन्निवन्धनमस्ति। तथा हि द्विविधं लेख्यम्—स्वहस्तकृतं परहस्तकृतं च परहस्तकृतमपि द्विविधम्—स्वहस्तलेखकलिखितमधिकृत-लेखकलिखितम्। तदेतत्परहस्तकृतं सर्वप्रकारं साक्ष्यात्मकमेव। तत्र साक्षिभ्यो लिखितमिति भेदानुपपत्तेः। इदं हि तस्य लक्षणम् ( याज्ञ० व्यव० ८७ )।

"साक्षिणः स्वस्वहस्तेन पितृनामादिपूर्वकम्। तत्राहममुकः साक्षी लिखेयुरिति ते समम्" इति। नाप्येकहस्तलिखितस्य प्रामाण्यमिष्यते। यथैकस्य साक्षित्वे "अथायं भेदहेतुसाक्षिणो हस्तारूढास्त एव लेख्यमिति" नानेन विशेपेण श्रेयस्त्वं भवति।" प्रत्ययितता हि श्रेयस्त्वे हेतुः। सा चोभयत्रापि परीक्ष्या। तस्मादीदृशे लेख्ये साक्षिद्वैधान्त्यायो वहुत्वं परिगृह्णीयादिति। अधिकृतत्वमपि न विशेषः। परीक्षितोऽधिक्रियत इत्येतत्तत्राधिक्यम्। न च सर्वे राजाधिकृताः सुपरीक्षिता भवन्ति। यदि तु निरुपाधिस्तादृशश्चेदत्यन्तगुणयोगात्स्याढुपेयादेवासौ एक एव संवादकत्वम्। तथा हि राजाग्रहारशासनान्येककायस्थहस्तलिखितान्येव प्रमाणीभवन्ति। अदातुः स्वाहस्तक्यं स्वयम-भ्युपगमः 'इयदस्मान्मया गृहीतमिदं चास्मै दातव्यमिति'। तत्र यदि पश्चात् ब्रूते न गृहीतमिति तदा पूर्वनिवद्धं ब्रवाणैर्जीयते। तत्र साक्षिणामवसर एव नास्ति।

"ननु च यदीयाल्लेख्यादभ्युपगतमेतदनेनेत्यवगम्यते, उत्तरकालं च स एवाह न गृहीतमिति, तत्रोभयोरभ्युपगमयोः केन हेतुना पूर्वेणोत्तरा वाध्येत न पुनरुत्तरेण पूर्वा। तुल्यत्वाद्विरुद्धत्वसंशयः। ततश्च प्रमाणान्तरव्यापारणमेव युक्तम्।"

भवेदेवं यदि तुल्यता स्यात्। न गृहीतमिति ह्यभ्युपगमो लोभादिनाऽपि संभवति, न त्वगृहीत्वाऽनुन्मत्तो गृहीतमिति ब्रूयात्। तत्रापि यदि ब्रूयात्प्रति-दत्तमिति लेव्यं तु न संपादितं असंनिधानात्प्रतिलेख्यं च न गृहीतं लेखकासंनि-धानात्कार्यान्तरेऽतिपातिनि त्वरावत्वान्नास्त्येव प्रमाणान्तरस्य साक्ष्यादेरवसरः।

यदपि "लिखितं लिखितेनेति" नैषा परिभाषा वस्तुसामर्थ्यायातामवगतिं वाधितुं शक्नोति। दृश्यन्ते हि धनिकहस्तगतलेख्यं क्रमेण संशोधयन्तः, न च पृष्ठे

संशोधितं धनमभिलिखन्ति । अद्य तावदिदं दत्तं प्रातरन्यदानीयैकीकृत्योपर्यारोपयिष्यामि सर्वं वा कतिपयैरहोभिः संशोध्य लेख्यं पाटयिष्यामीति । धनिकेन चोपरुद्धस्यासंभवत्यंशमूललाभधने संशुद्धिभागमात्रे दीयमाने कुत इयं तत्प्रभवति न ददाति यावत्प्रतिलेख्यं न दत्तमिति । यदि चैषापरिभाषा "लिखितं लिखितेनैवेति" तदा वलोपधिकृतत्वं कथं विचार्यताम् । न हि तत्र लेख्यान्तरसंभवः । तेन यथाऽत्र सत्येव लेख्ये तन्निश्चयार्थं प्रमाणान्तरं व्यापार्यते तद्वदन्यत्रापि व्यापारणीयम् । यथा कश्चिदावेदयेत्—'अस्य प्रत्ययं गत्वा लेख्यं मया कृतमनेनोक्तमद्य पुण्याहकारणमिमां च धनमात्रां गृहाण, श्वस्ते सर्वं दाताऽस्मीत्युक्त्वा सैव धनमात्रा दत्ता परिशिष्टं न दत्तमिति'—तदाऽस्त्येव साधकान्तरव्यापारणावसरः । तत्र यद्यधमर्णस्यास्मिन्प्रकारे साक्षिणः सन्ति तदाऽभिहिते लेख्य आभासीकृते श्वो दानमुत्तमर्णेन साधनीयम् । अथ तयोरपि रहसि परिभाषेयमभूत्तदा दैव्याः क्रियाया अवसरः । अथ तु तस्यामपि व्यभिचरित्वादनाश्वासः सत्यशपथेन व्यवस्था कार्या ।

"नन्वेवं सति स्वहस्तलेख्यं प्रमाणान्तरसंवेदसापेक्षत्वादप्रमाणमेव । तत्र 'विनाऽपि साक्षिभिः सिध्येत्' 'न स्वहस्तपरिचिह्नितमिति' विरोधः । अनेनैव न्यायेन प्रत्यक्षं दीयमानं द्रव्यं न पश्यति । केवलं तत्समक्षं गृहीत्वा परिभाष्यत इयदिदमस्मान्मया गृहीतमिति । तेऽपि साक्षिणः स्युः । तत्रापि शक्यते वक्तुमस्य प्रत्ययं गत्वा प्रपन्नोऽहमिति ।"

उक्तमत्र न स्मृतिविरोधाद्वस्तुस्थितिराहन्तुं शक्यते । अपि च यत्रास्य वचनस्यावसरो नास्ति तत्र प्रमाणं भविष्यति । कचिन्नास्ति—यत्र चिरकालं तिष्ठति धनिकहस्ते लेख्यं यदि हि तेन धनं दत्तं तदा कथमनेन वा नाम न मार्गितं लेख्यं न त्याजितमिति । न हि चिरकालमुपेक्षा वस्तुनीदृशे संभवति । मिथ्यावादिता त्वस्यानुमीयते । तथा चोक्तम् "सद्यस्त्र्यहाद्वा कार्येषु वलं राज्ञो निवेदयेदिति" । यत्र वा भोग्यबन्धो न च भोग आम्नातोऽपहारकालस्तत्र विप्रतिपत्तौ विनाऽपि साक्षिभिः स्वहस्तलेख्यं न ह्यधमर्णा वक्तुं लभन्ते प्रीत्या त्वयैतदुक्तं संप्रति त्यजेति । न च पूर्वोक्तस्य वचनस्यावसरः । कृतं लेख्यं ततो दास्यामीत्युक्त्वा न दत्तमिति । यदि न दत्तं कथं बन्धभोगो मर्पितः ।

ननु चवं सति लेख्यसहायो भोगः प्रमाणं स्यात्। केवलस्य तु भोगस्य प्रामाण्यमामनन्ति। "लिखितं साक्षिणो भुक्तिरिति"।

किमिदं प्रत्युक्तं पर्यनुयुज्यामहे। विशिष्टकालो भोगः प्रमाणं न भोगमात्रम्। एवं हि पठ्यते (१४७) "यत्किंचिद्दशवर्षाणि"—तथा "पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकीति" (या०.व्य० २४)।

कस्तर्ह्यस्यार्थो "लिखितं लिखितेनैवेति"।

व्याख्यातमन्यैः। कर्तृविशेषसंशयेऽनेनैतल्लिखितं न वेति लिखितेन निश्चिततत्कर्तृकेण निश्चीयते। यत्तु साक्षिसमक्षं तत्र कृताकृतसंदेहं साक्षिभिर्हरति त एव तत्र प्रमाणम्। न तत्र तत्कृतलेख्यान्तरदर्शनमुपयुज्यते। बुद्धिपूर्वेषु च ऋणादानादिषु केवलेभ्यः साक्षिभ्यो लिखितं श्रेयः। साक्षिणो हि विस्मरेयुरन्यतरेण वा सम्बन्धं गच्छेयुरन्यद्वा पातकस्यासाक्षित्वे हेतुमासादयेयुः। लेख्यं त्वभियोगवत् आत्माधीनतया सुरक्षमिति साक्षिभ्यः श्रेयस्त्वं तस्य। एतदेवाह "लिखिते न तु साक्षिणः" इति। स्वहस्तप्रतिष्ठेन विस्मृतमप्यर्थं वृत्तमिति मन्यते। मृता वा साक्षिणस्तद्वस्तुप्रत्यभिज्ञानेन प्रमाणीभवन्ति।

व्याख्यानान्तराणि भर्तृयज्ञेनैव सम्यक्कृतानीति तत एवावगन्तव्यानि सर्वथा प्रमाणमूलानि स्मृतिकारणम्। व्यवस्था तु कर्तव्येति। न च स्मृतेरेव प्रमाणकल्पना युक्ता। न हि व्यवहारस्मृतिर्वेदमूला शक्यते वक्तुम् सिद्धार्थरूपत्वात्प्रत्यक्षाद्यवगम्यत्वाज्जयपराजयप्रकाराणाम्। सिद्धो ह्ययमर्थः—एवं व्यवहारे जीयत इतर इतरो जयतीति। यदाऽप्यत्र लिङश्रुतिः 'सोऽपि हरीतकीं भक्षयेदारोग्यकाम' इतिवदवसेया। ईदृशेषु विधिस्वरूपेषु प्रत्ययेषु द्रव्यशुद्धेः प्रसङ्गेनार्थो विवेचित इति न पुनः प्रयतामहे।

अष्टादशसु मार्गेषु विषयो विवादस्य। एतानर्थानुद्दिश्य पुरुषाः प्रायेण विवदन्ते। न विरुद्धानि कार्याणि प्रयोजनान्यर्थसिद्धय इति यावत्तान्युत्तरत्र दर्शयिष्यामः।

पृथक् पृथक् प्राधान्यमेतेषामाह। एतानि प्रत्येकं प्रयोजकानि न पुनः परस्परमन्तर्भवन्ति। यथान्यान्यनुषङ्गादिष्वन्तर्भवन्ति। नैवमेते। अनुषक्तानि तु सहस्रशः सन्ति ॥ ३ ॥

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ॥
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ ४ ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ॥
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ ५ ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ॥
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥ ६ ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ॥
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ ७ ॥

पाठक्रमापेक्षमृणादानस्याद्यत्वं प्राथम्यम्। अथवा मुख्यमाद्यम्। अनेन हि वनवासिनोऽपि स्पृश्यन्ते ऋणादानानुपक्तमनृणादानमेव च। यथा ऋणं ते मया दत्तं शुद्धिलेख्यं प्रयच्छेत्यादि। नैतदृणादानम्, अनुक्तं तु तत्रेति तद्व्यपदेश्यम्। तथा "ऋणं देयमदेयं च येन यत्र यथा च यत्। दानग्रहणधर्माश्चेति।" (नारद १।१) तत्र देयमृणं स्वकृतं पितृकृतं च यस्य च ऋक्थं हरेत्। अदेयं स्वकृतं द्विगुणादधिकं पितृकृतं च द्यूतादिभागेनेति पुत्रे भर्त्रा पित्रा चेति। तथा ( नारद १।१६ )
"न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा। अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत् ॥"

यद्यपि देयमित्यत्रैतदन्तर्भूतं तथापि द्यूतादिकृतं विशेषानपेक्षं स्वरूपतो देयम्, इदं तु कर्तृनियमादिति गोबलीवर्दवद्भवति चेद्भेदो यावदिति द्वैगुण्यपर्यन्तं तत्रापि भेदः पूर्ववत्। यत्रेति पाठे देशकालग्रहणम्। यत्रैव गृहीतं तत्रैव देयम्। सत्यां धनिकेच्छायां देशान्तरेऽपिं। सति संभवे कालोऽपि। शरद्यनिच्छेत्युक्तम्। "ग्रैष्मे वा सत्सु सस्येषु यदा वाऽस्य धनागमं मन्येतेति"। 'यथा' सति संभवे सर्वम्। असति कश्चिदंशो यावत्क्रमेण संशुद्धमिति। सर्वभावेन परिक्षीणेन "कर्मणाऽपि सममिति" ( मनु० ८।१७७)। दानग्रहणधर्मा' इति साक्षिलेख्यादयः। पारुष्ये दण्डवाचिके इति। दण्डश्च वाक् च दण्डवाचं 'द्वन्द्वाच्चुदषहान्तादिति' (पा० ५।४।१०६) समासान्तस्तदस्यास्तीति "अत इति ठनाविति" ठन्(पा० ५।२।११५)। स्त्रीपुंधर्म इति। स्त्रीसहितः पुमानिति शाकपार्थिवादिवत्समासः। स्त्री च पुमांश्चेति विग्रहे स्त्रीपुंसधर्म इति स्यात् ॥ ४—७ ॥

एषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम् ॥
धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम् ॥ ८ ॥

भूयिष्ठग्रहणं प्राधान्यख्यापनार्थम्। अन्येऽपि व्यवहारहेतवः सन्ति। यथा निवसनार्थं त्वया मे वेश्म दत्तं तत्र किमित्यर्वाग्वत्सरादन्यस्मै ददासीति। न चेदं दत्तानपाकर्म न ह्यत्र स्वस्वत्वनिवृत्तिरस्ति भोगानुज्ञामात्रं वसतः। तथा मदीयस्थण्डिलाभिमुखं त्वया वेश्मनि गवाक्षं कृतमिति। धर्मं शाश्वतमाश्रित्येति। अर्थकामावशाश्वतौ। अथवा शाश्वतो धर्म अनिदंप्रथमतो या व्यवस्था तामनुपालयेत्। या त्विदानीन्तनैः प्रवर्तिता साऽशाश्वतत्वादनादरणीया ॥ ८ ॥

यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ॥
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥ ९ ॥

"अष्टादशपदाभिज्ञं प्राड्विवाकेतिसंज्ञितम्।
आन्वीक्षिक्यां च कुशलं श्रुतिस्मृतिपरायणम्" ॥

कुतश्चिदतिपातिकार्यान्तरव्यासङ्गादपाटवाद्वा यदि स्वयं न पश्येत्तदा विद्वान्ब्राह्मणो नियोज्यः। विद्वत्ता च या व्यवहारविषया सा तदधिकारत एवार्थगृहीता। न हि यो यन्न जानाति स तत्राधिकारमर्हति। धर्मशास्त्रपरिज्ञानं तु रागद्वेषदोषेण विपरीतार्थावधारणनिवृत्त्यर्थमुपयुज्यते। धर्मज्ञस्तु सतोरपि रागद्वेषयोः शास्त्रभयेन न विपर्येति इत्युपयोगवद्धर्मशास्त्रपरिज्ञानम्। व्यवहारदर्शनं तु तदर्थगृहीतम्। येन विना न शक्यते व्यवहारनिर्णयः कर्तुम् तद्विज्ञानं तदधिकाराक्षिप्तम्। यत्तु ज्ञात्वाऽन्यथा क्रियते तन्निवृत्तिरुपदेशान्तरविषया। वक्ष्यति चैवमर्थं यत्नान्तरमपि—'वेदविदस्त्रयः', 'राज्ञश्च प्रकृतो विद्वानिति'। शास्त्रान्तरपरिज्ञानं तु व्यवहारेऽधिक्रियमाणस्यादृष्टाय स्यात्। नियोज्यो विद्वान्स्यादिति पठितव्यम्। नियुञ्ज्यादिति नियुञ्जीत स्वराद्यन्तोपसृष्टादिति हि कातीया आत्मनेपदं स्मरन्ति ॥ ९ ॥

सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः ॥
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥ १० ॥

सभ्यैरिति जातिविशेषानुपादानेऽप्युत्तरत्र विप्रग्रहणाद्ब्राह्मणैः सहेति च पूर्वत्र ब्राह्मणग्रहणाद्ब्राह्मणा एव विज्ञायन्ते। त्रिग्रहणं त्वेकद्वयोः प्रतिषेधार्थम्।

त्रिप्रभृतयस्त्विष्यन्त एव । साक्षिप्रकरणे चैतद्वक्ष्यामः । सभामेव प्रविश्याग्र्यामिति । राजस्थानापत्त्या सभां प्रविश्य स्थानासनेषु तद्धर्मेषु । पुनर्वचनं प्रदर्शनार्थं धर्मान्तरनिवृत्त्यर्थं वा तेन राजस्थाने नोपविशति ॥ १० ॥

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ॥
राज्ञश्चाधिकृतो विद्वान्ब्रह्मणस्तां सभां विदुः ॥ ११ ॥

उक्तं सभां प्रविश्य व्यवहारान्पश्येदिति । सभाशब्दश्च लोके गृहप्रासादविशेषे वर्तते "मयेन निर्मिता दिव्या सभा हेमपरिष्कृतेति"—क्वचित्पुरुषविशेषसंघटिता सभेति तन्निवृत्त्यर्थं सभाया लक्षणमाह । यत्र त्रयो ब्राह्मणा वेदविदः सन्निधीयन्ते, राज्ञश्च सम्बन्धी प्रकृतोऽधिकृतो विद्वानिति । अथवा प्रकृतोऽनन्तरश्लोके सन्निहितः । सेह सभाऽभिप्रेता । ब्रह्मग्रहणं स्तुत्यर्थम् । यथा ब्रह्मणः सभा निरवद्यैवमियमपीति ॥ ११ ॥

धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते ॥
शल्यं चास्य न कृन्तन्ति विद्धास्तत्र सभासदः ॥ १२ ॥
सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ॥
अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्विषी ॥ १३ ॥

अनेनार्थेन द्वयं विप्रतिषिध्यते । प्रतिपन्नाधिकारेण मिथ्यादर्शनं न कर्तव्यमन्येन च क्रियमाणं नोपेक्षणीयम् । तत्रोभयथा दोषः अब्रुवन्नन्येन विपरीतेऽनुष्ठीयमाने तूष्णीमासीनो हस्तक्षेपेण वा शास्त्रन्यायविरुद्धं ब्रुवन्किल्विषी पापभाग्भवति । तेन नैषा प्रत्याशा कर्तव्या—द्वितीयः प्राड्विवाको मिथ्या पश्यति, स एव योक्ष्यते, अहं तूष्णींभूत उदासीनः किमित्येनसा योक्ष्य इति । सभाप्रवेशनिषेधेन चात्र व्यवहारदर्शनाधिकारप्रतिपत्तिः प्रतिषिध्यते । सभा वा न प्रवेष्टव्येति । व्यवहारदर्शनाधिकारो न प्रतिपादनीय इत्यर्थः । प्रतिपन्नश्चेत्समञ्जसं वक्तव्यम् । अनेन त्वनधिकृतस्यापि यदृच्छया सन्निहितस्य मिथ्यापश्यत्सु सभ्येषु विदुषस्तूष्णींभावं नेच्छन्ति । तथा च "नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति" ( नारद ३ । २ ) । अथ राजपुरुषपर्यनुयोग आशङ्क्यते किमित्यनधिकृतो ब्रवीति ततश्च तत्प्रदेशादपसर्तव्यम् । तदिदमुक्तं दुर्बलहिंसाया च विमोचने शक्तश्चेदिति ( गौतम सू० २१ । १९ ) ॥ १३ ॥

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ॥
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ १४ ॥

धर्मः शास्त्रन्यायदेशनियता व्यवस्था। सा चेदधर्मेण तद्व्यतिक्रमरूपेण हन्यते विनाश्यतेऽर्थिना प्रत्यर्थिना वा। तथा सत्यमनृतेन साक्षिभिर्हन्यते। प्राड्विवाकादयश्च प्रेक्षंते न तत्त्वमुद्धरन्ति ततस्ते हताः शवतुल्या भवन्तीति निन्द्यन्ते। तस्मान्नार्थिप्रत्यर्थिनौ विपरीतमाचरन्तौ सभासद्भिरुपेक्ष्यौ, साक्षिणश्च। धर्माधर्मग्रहणेन सत्यानृतग्रहणेन वा सिद्धं श्लोकपूरणमुभयोरुपादानम्। अतो विषयभेदेन व्याख्यातम् ॥ १४ ॥

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ॥
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥ १५ ॥

न भयादन्यथादर्शनं कर्तव्यं यतो धर्मो व्यतिक्रान्तः सन् हन्ति इत्यर्थः——प्रत्यर्थी तत्सहायो राजा वा। तथा धर्म एव पालितः सर्वतो भयमपनुदति नापकर्तुमर्थ्यादयः क्रुद्धा शक्नुवन्ति। तस्मादेवंजानानः सुखदुःखे धर्माधीने इति धर्मो न हन्तव्यः इति। यदि वयं धर्मं हन्मस्तदा सोऽस्मान्सर्प इव रोषितः प्रतिहन्तीत्यतो धर्मो हतः सन्मास्मान्वधीदित्यात्मपरित्राणार्थं धर्मो रक्षितव्यः॥१५॥

वृषो हि भगवान्धर्मस्तस्य यः कुरुते त्वलम् ॥
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥ १६ ॥

वृषलशब्दनिर्वचनेन मिथ्यादर्शी निन्द्यते। न जातिवृषलो वृषलः, किं तर्हि यो वृषस्य कामवर्षिणो धर्मस्यालंकुरुते। निवृत्तिवचनोऽलंशब्दः।

स वृषल इत्येतमर्थं देवाः प्रतिपन्नाः। मनुष्यास्तु यदि जातिशब्दमेव मन्यन्ते कामं मन्यन्तां प्रमाणतरास्तु देवाः। ते चानेन प्रवृत्तिनिमित्ते वृषलशब्द-प्रयोगं मन्यन्ते। देवग्रहणमर्थवादः। तस्माच्छ्राद्धकाले वृषलैर्न प्राप्तव्यम्। "हन्तव्यो वृषलश्चौर" इत्याद्यासु क्रियासु मिथ्यादर्शी ब्राह्मण एव वृषलशब्देन ग्रहीतव्य इति। अतो वृषलत्वं मा प्रापमिति धर्मं न लोपयेन्न नाशयेदिति वृषलत्वाध्यारोपो निन्दा ॥ १६ ॥

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ॥
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ १७ ॥

भयाद्धर्मातिक्रमो न कर्तव्य इत्येतत् "धर्म एव हतो हन्ति" इत्यनेनोपदिष्टम्। स्नेहतो न कर्तव्य इत्यनेनोपदिश्यते। यत एकः सुहृद्धर्मस्तत्र स्नेहो भावनीयः। अन्योऽपि मनुष्यः सुहृत् कार्यमपेक्ष्य जहाति जीवन्तम्। योऽपि स्यादत्यन्तमित्रं तस्यापि सौहार्दमा निधनात्। धर्मस्तु मृतमपि पुरुषमन्वेत्यतो न सुहृदपेक्षया मिथ्यादर्शनमुपेक्षा वा कर्तव्या।

"भार्या पुत्रो मित्रमर्थाश्च रिक्थं नश्यन्त्येते देहनाशे नरस्य।
धर्मस्त्वेको नैनमुज्झत्यजस्रं तस्माज्जह्यात्पुत्रदारान् न धर्मम्॥"

यदन्यद्धर्माद्भार्यादि तत्सर्वं शरीरेण समं सह नाशं गच्छति। धर्मादन्यो मृतं न परित्रातुं कश्चित्समर्थ इत्यतः सुहृद्बान्धवानुरोधादपि धर्मो न हातव्यः ॥१७॥

पादो धर्मस्य कर्त्तारं पादः साक्षिणमृच्छति ॥
पादः सभासदः सर्वान्पादो राजानमृच्छति ॥ १८ ॥

न चैषा मनीषा कर्तव्या—"अर्थिना प्रत्यर्थिना वाऽन्यतरस्य भूम्याद्यपह्रियते स एव भूम्यपहारदोषभाग्भविष्यति। वयं तु तदकारिणः किमिति दोषवन्तः स्यामः"—यतस्तत्पापं चतुर्धा विभज्यते। अर्थवादश्चायम्। न ह्यन्यकृतस्यैनसोऽन्यत्र गमनमस्ति। तेषामपि मिथ्यादर्शननिषेधातिक्रमादुत्पद्यते पापं मिथ्यालम्बनं, राज्ञः स्वयमपश्यतोऽप्यधिकृतराजस्थानीयादिदोषाद्दोषवत्त्वम्। यदि वा राजाधिकृतो मिथ्याचरितेन ज्ञापितः पराजितं दुष्टं न निगृह्णीते न च पुनः सम्यक् निर्णयं करोति ततः सोऽपि पापभाग्भवति। अधिकृतोपलक्षणार्थं वा राजग्रहणम्। यदा राजा स्वयं मिथ्या पश्यति तदा दुष्यति। यदा राजस्थानीयस्तदा तस्य दोष इत्यर्थः ॥ १८ ॥

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ॥
एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥ १९ ॥

एष एवार्थो विपर्ययेणोच्यते। यत्र दोषवान् दोषं गोपयितुं न लभते प्रकटीक्रियते तदीयो दोषस्तत्र सर्वं साधु संपद्यत इति। 'यत्र धर्म' इत्यत आरभ्य

मिथ्यादर्शनोपेक्षणप्रतिषेधार्थं निन्दाप्रशंसाभ्यां शुभाशुभफलदर्शनार्था अर्थवादाः ॥ १६ ॥

जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ॥
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥ २० ॥

उक्तं ब्राह्मणैः सह धर्मनिर्णयं कुर्यान्मन्त्रिभिश्च मन्त्रज्ञैः । तत्र मन्त्रिणां जातेरविशेषितत्वाच्छूद्रा अपि सभां प्रविष्टा मन्त्रित्वादनुज्ञातव्यवहारनिर्णयास्तद्गता धर्मव्यवस्थां कथंचित्संस्कृतबुद्धयो ब्रूयुः । न च सर्वत्र व्यवहारे स्मृतिशास्त्रपरिज्ञानमुपयुज्यते येन तदभावादर्थलुप्तत्वादनर्थकः शूद्रप्रतिषेध आशङ्क्येत । तथा हि जयपराजयकारणानि लौकिकप्रमाणवेद्यान्येव साक्ष्यादीनि—अयं साक्षी धार्मिको न चैतस्य केनचित्सम्बन्धेन सम्बन्धी अयं त्वसाक्ष्यसकृद्दृष्टव्यभिचारत्वादित्येवमादि शक्यते व्युत्पन्नबुद्धिना स्वयमुत्प्रेक्षितुं न स्मृतिशास्त्रैकगोचरम् । अतः प्राप्तस्य प्रतिषेधोऽयम् । न च मन्त्रित्वे पुरोहितवज्जातिनियमः । तथाहि 'तैः सार्धं चिन्तयेत्' इत्युक्त्वा ततो ब्राह्मणेन सह चिन्तयेदिति । तेनायमर्थो यद्यपि कथंचिच्छूद्रो न्यायलेशात्समधिगच्छेत्तथापि राजाधिकरणे विवदतो मन्त्री निग्रहाधिकृतो वा न किंचित्प्रब्रूयात् । पूर्वश्लोकार्थप्रतिषेधशेषतया व्याख्येयः । न हि जातिमात्रोपजीविनो वैदुष्यादिगुणरहितस्य धर्मप्रवक्तृत्वनियोगः शक्यो वक्तुम् तस्यैव रूपपरीक्षायां 'तस्माद्विषं भक्षय मा चास्य गृहे भुंक्था' इतिवत्प्रतिषेधशेषभूतमिदमनुज्ञानं न पुनरनुज्ञानमेव । अत एव काममित्याह । कामशब्दप्रयोगे हि विधित्वं व्याहन्यते ।

अन्ये तु ब्रुवते । ब्राह्मणस्य प्रवक्तृत्वविधानात्तदा नियोज्यो विद्वान्स्याद्ब्राह्मण इति क्षत्रियादयस्त्रयोऽपि वर्णा निषिद्धास्तत्रेह पुनः शूद्रप्रतिषेधो विद्वद्ब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थ इति शेषं समानम् ।

जातिमात्रमुपजीवतीति मात्रशब्दोऽवधारणे । ब्राह्मणजातिमेव केवलामुपाश्रित्य जीवति नाध्ययनादीन् गुणविशेषान्निर्गुणत्वात् । ब्रुवशब्दः कुत्सायाम् ॥ २० ॥

यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् ॥
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥ २१ ॥

पूर्वविधिशेषोऽयमर्थवादः। यस्य राज्ञः शूद्रो धर्मविवेचनं धर्मनिर्णयं करोति तस्य सीदति नश्यति राष्ट्रं प्रजाः कर्दमे गौरिव ॥ २१ ॥

यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम् ॥
विनश्यत्याशु तत्कृत्स्नं दुर्भिक्षव्याधिपीडितम् ॥ २२ ॥

अयमपि पूर्ववदर्थवाद एव। प्रकरणाच्च शूद्रभूयिष्ठता विवादनिर्णये शूद्रविषया द्रष्टव्या। यत्र शूद्रा भूयांसो विवादनिर्णयकारास्तद्राष्ट्रमाशु विनश्यति दुर्भिक्षव्याधिपीडाभिः। राष्ट्रनाशे च राष्ट्रपतेर्नाश इत्युक्तं भवति। नास्तिकाक्रान्तमिति दृष्टान्तः। यथा नास्तिकैः परलोकापवादिभिर्लौकायतिकाद्यैराक्रान्तमधिष्ठितमतश्चाद्विजम्। न हि नास्तिकानां ब्राह्मणादिभेदो यथार्थः संकीर्णत्वात्। तदुक्तं वैद्यवणिग्व्यपदेशादिवद्ब्राह्मणादयः। यत्र वा धर्मसंकटे तु न द्विजाः प्रमाणीक्रियन्ते। तदद्विजम् ॥ २२ ॥

धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ॥
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥ २३ ॥

धर्मः प्रधानः यस्मिन्नासने भवति तद्धर्मासनम्। राजासने हि राज्यस्थित्यानुगुण्येनार्थमेव प्रधानीकरोति न्यक्कृत्यापि धर्मम्। व्यवहारनिर्णये तु धर्ममेव प्रधानमाश्रयेदित्यर्थः, न पुनराश्रयभेदोऽनेन ज्ञाप्यते। संवीताङ्गः वस्त्रादिना स्थगितशरीरः। प्रणम्य लोकपालेभ्य इन्द्राद्यष्टौ लोकपालास्तान्नमस्कृत्य कार्यदर्शनमारभेतेत्यदृष्टार्थमेतद्द्वयं अङ्गसंवरणं लोकपालप्रणामश्च। समाहितः अनन्यचित्तः कार्यदर्शने। एवं हि दृष्टार्थं भवति। प्रणामविशेषणं वा समाहितग्रहणम्। यद्यप्यत्र किंचिदुक्तमेव प्रतिभाति तथापि पद्यग्रन्थत्वान्नातीव पौनरुक्त्यम्। लोकपालेभ्य इति चतुर्थी संप्रदाने। कथम्? क्रियाग्रहणं संप्रदानसूत्रे चोदितं 'श्राद्धाय निगृह्णते' 'पत्ये शेत' इत्याद्यर्थम्। न च क्रियाग्रहणं गृह्णात्यादिविषयमेव, भाष्येऽनुक्तत्वात् ॥ २३ ॥

अर्थानर्थावुभौ बुध्वा धर्माधर्मौ च केवलौ ॥
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥ २४ ॥

धर्माधर्मावेव केवलावर्थानर्थौ—न गोहिरण्यादिलाभोऽर्थस्तद्विपर्ययोवाऽनर्थः। किं तर्हि। धर्म एवार्थोऽनर्थश्चाधर्म इति बुद्ध्वा हृदि निश्चित्य कार्याणि पश्येत्। अथवाऽर्थानर्थावपि बोद्धव्यौ धर्माधर्मावपि। धर्मस्य सारता बोद्धव्याऽर्थस्य फल्गुता। अथवा यत्र महाननर्थः स्वल्पश्चाधर्मस्तत्रानर्थं परिहरेत्। शक्यो हि महताऽर्थेनैपदधर्मो दानप्रायश्चित्तादिना निराकर्तुम्। सन्निपाते च व्यवहारिणां बहूनां वर्णक्रम आश्रयितव्यः। एष च दर्शने क्रमो वर्णानां यदा सर्वेषां तुल्यपीडा भवति। यदा त्ववरवर्णस्याप्यात्ययिकं कार्यं महद्वा तदा 'यस्य चात्ययिका पीडा' इत्यनेन न्यायेन तदेव प्रथमं पश्येत् न क्रममाद्रियेत राज्यस्थित्यर्थो हि व्यवहारनिर्णय इत्युक्तमतो न यथाश्रुतमाश्रयणीयम् ॥ २४ ॥

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ॥
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ २५ ॥

तथा चेदमाह। अनुमानेनापि सत्यानृतवादिता व्यवहारतः साक्षिणां च निश्चेतव्या इति श्लोकार्थः। अतश्च स्वरादिग्रहणं प्रदर्शनार्थम्। तेन यन्निश्चितलिङ्गं तेनैव परिच्छिन्द्यादित्युक्तं भवति, न पुनः स्वरादिभिरेव सव्यभिचारित्वात्तेषाम्। अनुचितसभाप्रवेशा हि महाप्रकृतिदर्शनेन सत्यकारिणोऽपि स्वभावतो विक्रियन्ते। प्रगल्भास्तु संवृताकारा भवन्ति। स्वरश्च वर्णश्चेङ्गितं च स्वरवर्णेङ्गितानि तेषामाकाराः स्वरवर्णेङ्गिताकाराः। आकारो विकारः। स्वाभाविकानां हि स्वरादीनामन्यथात्वम्। तैर्विभावयेन्निश्चिनुयात्। भावमभिप्रायमन्तर्गतं मनुष्याणां विवादिसाक्ष्यादीनाम्। तत्र स्वरस्य विकारो वाचि गद्गदरुदितादि। वर्णस्य गात्ररूपविपर्ययादि। इङ्गितं स्वेदवेपथुरोमाञ्चादि चक्षुषा संभ्रमक्रोधदृष्टिपातेन। चेष्टितेन हस्तनिक्षेपभ्रूविक्षेपादि। स्वसंवेद्यं चैतत् यद्गूह्यमानमप्यभिप्रायं स्वरादयः प्रकाशयन्ति निपुणतो लक्ष्यमाणाः। यतः प्रसिद्धमेतेषां गूढाभिप्रायप्रकटनसामर्थ्यम् ॥ २५ ॥ तथा हि लोके—

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ २६ ॥

दृष्टशक्तिनाऽनेन श्लोकेन स्वरादीनां पूर्वोक्ताऽर्थाधिगमेन दर्शयतीत्यपौनरुक्त्यम्। तत्राक्रियन्ते विक्रियन्त इत्याकारा इङ्गितादयः। इङ्गितं व्याख्यातम्।

व्यक्तिभेदाद्बहुवचनम्। गतिः पूर्वश्लोकादत्राधिका। सा प्रस्खलन्ती स्वभावतोऽन्यथाभूता। भाषितं पौर्वापर्यविरुद्धं वचनम्। वक्त्रविकार आस्यशोषादिः। शेषं पूर्वश्लोक एव व्याख्यातम्। एतैर्विकृतैरन्तर्गतं चित्तं लौकिकैरन्यत्रापि गृह्यत इति समासार्थः ॥ २६ ॥

बालदायादिकं रिक्थं तावद्राजानुपालयेत् ॥
यावत्स स्यात्समावृत्तो यावद्वाऽतीतशैशवः ॥ २७ ॥

ननु च व्यवहारदर्शनं वक्तव्यतया प्रस्तुतम्। तत्र कः प्रसङ्गो बालधनरक्षायाः।

उच्यते। विवादपदतामेवैतद्विषयान्निवर्तयितुमिदमारभ्यते। बालधनं राज्ञा स्वधनवत्परिपालनीयम्। अन्यथा पितृव्यादिबान्धवा मयेदं रक्षणीयं मयेदमिति विवदेरन्। न चान्यः प्रसङ्गोऽस्ति। आशङ्क्यमानव्यवहारवच्च। न केवलेषु राजधर्मेषूपदिश्यते अतोऽस्मिन्नेवावसरे वक्तव्यम्। बालो दायादोऽस्य तदिदं बालदायादिकम्। दायादः स्वाम्यत्रोच्यते। बालस्वामिकं धनं तावद्राजा रक्षेद्यावदसौ समावृत्तो गुरुकुलात्प्रत्यागतो यावद्वाऽतीतशैशवः अतिक्रान्तबालभाव अयं च विकल्पः। यो गृहशैशवी भवति तदर्थमतीतशैशवमुच्यते—यस्तु व्रतकः स निवृत्तेऽपि शैशवे आ समावर्तनात्प्रतिपाल्यधनः स्यात्। अथवा द्विजातीनां समावर्तनमवधिरन्येषां शैशवात्ययः ॥ २७ ॥

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ २८ ॥

यः कश्चिदनाथस्तस्य सर्वस्य धनं राजा यथावत्परिरक्षेत्। तथाचोदाहरणमात्रं वशादयः। एवं प्रजापालनमनुष्ठितं भवति। पूर्वस्तु श्लोकः कालनियमार्थः। वशा वन्ध्या। अपुत्राऽसमर्थपुत्राऽविद्यमानपुत्रा दुर्गतपुत्रा वा। वशाश्चापुत्राश्चेति द्वन्द्वः। ननु च वशाऽप्यपुत्रैव। सत्यम्। उभयोपादानं तु सत्यपि भर्त्तरि तस्याः संरक्षणार्थम्। तस्यां ह्यधिविन्नायां भर्ता निरपेक्षो भवति। निष्कुलाग्रहणं तासां विशेषणं यासां न कश्चिद्देवरपितृव्यमातुलादिः परिरक्षकोऽस्ति स्त्रीत्वाच्च स्वयमसमर्थाः बान्धवास्तु मत्सरिणः। तासामेतदुच्यते

वन्धुभिर्हि स्त्रीणां शीलशरीरधनानि रक्षितव्यानि। तदुक्तम्—( नारद १३ । २८—२९ )

"विनियोगोऽस्ति रक्षासु भरणे च स ईश्वरः। परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ॥ तत्सपिंडेषु वाऽसत्सु पितृपक्षः प्रभुः स्त्रियाः। पक्षद्वयावसाने तु तु राजा भर्ता प्रभुः स्त्रियाः ॥"

या तु स्वयमेव कथंचिच्छक्ता न तत्र वान्धवानां व्यापारोऽस्ति। अत एवाह। आतुरास्विति। असामर्थ्यमेतेन लक्ष्यते। अन्यैस्त्वातुरभर्तृका आतुरा व्याख्याता। अविधवाऽपि भर्तुरसामर्थ्याद्राज्ञैव रक्ष्या स्यादिति निर्मनुष्याणामेतत्। कुलं वन्धुजातं यासां नास्ति ताः निष्कुलाः। अन्ये तु कुलटां निष्कुलामाहुः। तासामपि वेशाद्युपार्जितं धनंअपतितानां राज्ञा रक्ष्यम्। अस्मिंश्च पक्षे स्वतन्त्रनिष्कुलाग्रहणम्। पतिव्रतासु विधवासु। मृतभर्तृका विधवा। धव इति भर्तृनाम। तद्विरहिता विधवा। सा चेत्पतिव्रता भवति तदा सा रक्ष्यधना। व्यभिचाररतानां तु स्त्रीधनानर्हत्वं स्मृत्यंतरे पठ्यते।

"अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका।
व्यभिचाररता या च स्त्रीधनं न तु साऽर्हति ॥" इति।

तस्यास्तु निष्काशनं विहितम्। निष्काशनं च प्रधानवेश्मनो वहिरवस्थापनम्। न तु निर्वासनमेव। यतः पतितानामपि तासां गृहांतिके वासो भक्ताच्छादनमात्रदानं च विहितम्।

एवमेव विधिं कुर्याद्योषित्सु पतितास्वपि ॥
वस्त्रान्नपानं देयं च वसेयुश्च गृहान्तिके ॥

तेन यः कश्चित्स्त्रीणां निर्वासनविधिः। 'स्त्रीधनं द्रव्यसर्वस्वम्' इत्यादिषु श्रूयते स एवं विषय एव द्रष्टव्यः। तथापि यावद्भिक्षोत्सर्पणादिना किंचिदर्जितं तदर्हत्येव। न वान्धवा अपहरेयुः। इह त्वस्मिन्नेव निमित्ते आधिवेदनं विहितं न तु स्त्रीधनापहारः। यथा ह्याह—

"मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥" (मनु० ९ । ८०)

अतश्च मानवस्मृतिबलेन 'स्त्रीधनं न तु साऽर्हति' इत्येषा स्मृतिरेवं व्याख्यायते। आधिवेदनिकं स्त्रीधनमेषा नार्हति नैतस्यै देयमित्यर्थः। यदुक्तं

"अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्" इति न तु प्राग्दत्तमस्या अपहर्त्तव्यम्। वयं तु ब्रूमः। पुरुषद्वेषिण्या व्यभिचाररतायाश्च युक्त एवापहारः। यत इहाप्युक्तम्—

"अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा।
सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा"॥ (मनु० ९ । ७८)

भूषणपरिच्छदैर्वियुक्ता कर्तव्येत्यर्थः ॥ २८ ॥

**जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ॥**
**ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥ २९ ॥**

बान्धवानां स्त्रीधनमपहरतामयं चौरदण्डः। ते हि बहुभिरुपधाभिरपहरन्ति। अस्वतन्त्रैषा स्त्री किं ददाति किं वा भुंक्ते वयमत्र स्वामिन इति अचौराशंकया चौरदण्डो विधीयते। जीवन्तीनां तासां स्वबान्धवा देवरादयस्तद्धनं ये हरेयुस्ताञ्छिष्यात् पृथिवीपतिर्निगृह्णीयात्। चौरदण्डो वक्ष्यमाणः "येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। छेत्तव्यं तत्तदेवान्यत्तन्मनोरनुशासनमिति" ( ८ । ३२१ ) स्वबन्धुभ्यश्चैतद्विशेषेण राज्ञा रक्षितव्यम्। चौररक्षा तु सर्वराष्ट्रविषया विहिता ॥ २९ ॥

यद्द्रव्यं स्वामिनो नष्टं प्रमादात्कथंचित्पथि गच्छतो भ्रष्टमरण्ये कान्तारे वा स्थापयित्वाऽरण्यपालैरन्यैर्वा राजपुरुषैर्लब्धं राजसकाशमानीतं तद्राज्ञा रक्षां कृत्वा राजद्वारे राजमार्गे वा प्रकाशं स्थापयितव्यम्। पटहघोषणेन वा कस्य किं हारितमिति प्रकाशयितव्यम्। यतः प्रदेशाल्लब्धं तस्मिन्नेव प्रदेशे रक्षिपुरुषाधिष्ठितं कर्तव्यम्। एवं त्रीणि वर्षाणि स्थापयितव्यम्। तत्रार्वाक् त्रिभ्यो वर्षेभ्यो यः कारणत आत्मीयं ज्ञापयेत्तस्योद्धृतवक्ष्यमाणेषु भागादिभागकं समर्पयितव्यं, परतः स्वकोष्ठे प्रवेशनीयमिति।

प्रनष्टः स्वामी यस्य रिक्थस्य तत्प्रनष्टस्वामिकम्। प्रनष्टोऽविज्ञातः। रिक्थं धनम्। त्रयाणामब्दानां समाहारस्त्र्यब्दम्। त्रिवर्षवत् त्र्यब्दे ङीवभावः। अब्दशब्दः संवत्सरपर्यायः। निधापयेत्स्थापयेत्। अर्वाक्त्र्यब्दात्पूर्वं त्रिभ्यो वर्षेभ्यः हरेत्स्वामी स्वीकुर्यात्। अर्वाक्शब्दोऽवधौ दिग्देशादिकात् पूर्वमाह।

अन्ये तु नृपतिर्हरेदिति भोगानुज्ञानमपहारमाहुः। न हि ऊर्ध्वमपि त्रिभ्यो वर्षेभ्यः परकीयस्य द्रव्यस्यापहारो युक्तः। तस्मात्त्रिभ्यो वर्षेभ्य ऊर्ध्वमनागच्छति राज्ञा स्वामिनि भोक्तव्यम्। तैरयं श्लोकः कथं व्याख्यानीयो "यत्किंचिद्दशवर्षाणीति"

८ । १४७ ) । यदि च परकीयस्यापहारो न युक्त इत्युच्यते भोगोऽपि नैव युक्तः । परकीयं वस्त्रादिवद्भुज्यमानं नश्यत्येव । तत्रापहारोपचारो युक्तः, भुक्तेरेवापहार-फलस्य सद्भावात् । गजतुरगादेस्तु कीदृशो भोग इति वाच्यम् । तस्मान्न यथा-श्रुतार्थत्यागे कारणमस्ति । हरतिश्च गृह्णात्यर्थे असकृद्दृष्टप्रयोग अकथं हरेदित्यादौ । तस्मात्परेण नृपतिर्हरेत्स्वीकुर्यादित्ययमेवार्थः ॥ ३० ॥

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि ॥
संवाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति ॥ ३१ ॥

कथं पुनः स्वामी प्रनष्टे धने स्वामित्वं ज्ञापयेदत आह । यः कश्चिदागत्य ममेदं स्वं द्रव्यमिति ब्रूयात्सोऽनुयोज्यो यथाविधि । अनुयोज्यः प्रष्टव्य इत्यर्थः । कोऽसावनुयोगविधिः ? को भवान् ? किं द्रव्यं हारितं किंरूपं किंपरिमाणं किंसङ्ख्याकं संपतितमपतितं वा, यदि पतितं, कस्मिन्देशे ? तथा कुत आगमितं त्वयेत्येवं पर्यनुयोगः कर्तव्यः । स यदि संवादयतिरूपसङ्ख्यादीन् । 'रूपम्'— प्राणिवस्त्रादिविषयं शुक्लं वस्त्रं गौर्वेत्येवमादि । तथा 'संख्या'—दश गावो वा युगानि वा । आदिग्रहणाद्धस्तादिप्रमाणं सुवर्णादिपरिमाणं प्रकीर्णरूपकं वा । एतत्सर्वं संवादयति तदाऽसौ स्वामी भवति । अतस्तद्द्रव्यमर्हति स्वीकर्तुम् । संवाद उच्यते । यादृशमेकेन प्रमाणेन परिच्छिन्नं तादृशमेवास्यानेन परिच्छिद्यते । रूपसंख्यादिग्रहणं च प्रदर्शनार्थं स्वामित्वकारणानामन्येषामपि साक्ष्या-दीनाम् ॥ ३१ ॥

अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ॥
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥ ३२ ॥

मिथ्या प्रवर्तमानस्य दण्डोऽयमुच्यते । यो न ज्ञापयति नष्टस्य धनस्य देशं कालं चास्मिन्देशे काले वा हारितम् । तत्त्वतः परमार्थतः । वर्णं शुक्लादिकम् । रूपं पटीशाटकयुगं वेत्यादिकमाकारम् । प्रमाणं पञ्चहस्तायामं सप्तहस्तमात्रं वा । अवेदयानः । तदा तत्समं यावति द्रव्ये मिथ्याप्रवृत्तस्तत्तुल्यं दण्डमर्हति ॥ ३२ ॥

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ॥
दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥ ३३ ॥

आददीत गृह्णीयात्षष्ठं भागं दशमं द्वादशं वा प्रनष्टलब्धाद्द्रव्यात्। अवशिष्टं स्वामिनेऽर्पयेत्। तत्र प्रथमे वर्षे द्वादशो भागो द्वितीये दशमस्तृतीये षष्ठ इति। अथवा रक्षाक्लेशक्षयापेक्षो भागविकल्पः। सतां धर्ममनुस्मरन् शिष्टानामेष समाचार इति जानानः॥ ३३॥

प्रनष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम्॥
यांस्तत्र चौरान् गृह्णीयात्तान् राजेभेन घातयेत्॥ ३४॥

प्रनष्टमधिगतं प्रनष्टाधिगतं पूर्वं प्रनष्टं पश्चादधिगतम्। अधिष्ठितं युक्तैस्तत्परैरारक्षपुरुषैः। तिष्ठेत्। तथास्थितमपि यदि केचन चौरा गृह्णीयुस्तान् राजा इभेन हस्तिना घातयेत्। हस्तिग्रहणमदृष्टार्थम्॥ ३४॥

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः॥
तस्याददीत षड्भागं राजा द्वादशमेव वा॥ ३५॥

निखातायां भूमौ गुप्तं स्थापितं धनं निधिरुच्यते। वर्षशतिका वर्षसहस्रिकाश्च निधयो भवन्ति। तत्र यदि भूमेर्विदार्यमाणायाः कथंचित्केनचिन्निधिरासाद्यते स तु राजधनम्। तथा च गौतमः 'निध्यधिगमो राजधनम्' इति (१०। ४३)। एतच्चास्मर्यमाणनिधातृके निधौ द्रष्टव्यम्। तस्याऽऽख्याता षष्ठं लभेतेत्युक्तम्। अयं तु श्लोको यत्राख्यातैव निधाता तत्पुरुषो वा पितृपितामहादिस्तद्विषयो द्रष्टव्यः। ममायं निधिरिति यो ब्रूयात्सत्येन प्रमाणेन ज्ञापयेदित्यर्थः। तस्याददीत षड्भागमिति। निश्चिते तत्स्वामिकत्वे राज्ञः षष्ठादिभागग्रहणम्। विकल्पश्चाऽऽख्यातृगुणापेक्षया॥ ३५॥

अनृतं तु वदन्दण्ड्यः स्ववित्तस्यांशमष्टमम्॥
तस्यैव वा निधानस्य संख्ययाल्पीयसीं कलाम्॥ ३६॥

यस्तु मयाऽयं निहितो मत्पूर्वजेन वेति प्रतिज्ञां न साधयति सोऽसत्यवादी दण्ड्यः। यावत्तस्य वित्तमस्ति ततोऽष्टमं भागं तस्यैव वा निधानस्याल्पीयसीं कलां मात्रां भागमित्यर्थः। न तु तदेव द्रव्यं सुवर्णादिकं दापयेत्किन्तु तत्परिमाणमन्यद्वा सममूल्यं यया धनमात्रया दण्डितोऽवसादं न गच्छेद्विनयं वा ग्राह्येत। अनुबन्धादिविशेषापेक्षया पुरुषगुणापेक्षया च विकल्प आश्रयणीयः।

आतिशायनिकात्पूर्वदण्डात्स्वल्पो दण्ड इति ज्ञापयति । तेन यस्य वहु वित्तं स्वल्पो निधिस्तत्र निध्यपेक्षां मात्रामष्टमांशम् अर्थादीनां दण्ड्यः । सा ह्यल्पीयसी भवति ॥ ३६ ॥

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम् ॥
अशेपतोऽप्याददीत सर्वस्याधिपतिर्हि सः ॥ ३७ ॥

विद्वान्ब्राह्मणः पूर्वैः पित्रादिभिरुपहितं निधिं यदा पश्येत्तदा सर्वमेवाददीत । न राज्ञे पूर्वोक्तं भागं दद्यात् । अस्यार्थवादः सर्वस्याधिपतिर्हि सः । तथा चोक्तं सर्वस्वं ब्राह्मणस्येदमिति । एतच्चाशेपतो ग्रहणं यो ब्राह्मणस्वामिक एव निधिः । यस्त्वविज्ञातस्वामिकः तस्मिन्विद्वद्ब्राह्मणदृष्टेऽप्यस्त्येव राज्ञो भागः । यतो वक्ष्यति "निधीनां तु पुराणानाम्" इति ॥ ३७ ॥

यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ ॥
तस्माद्द्विजेभ्यो दत्त्वाऽर्धमर्धं कोशे प्रवेशयेत् ॥ ३८ ॥

यो राज्ञा स्वयं निधिरधिगतस्तस्मान्निधेरयं ब्राह्मणेभ्यो दाननियमो राज्ञः । कोशशब्देन वित्तसंचयस्थानमुच्यते । पुराणं निहितं क्षिताविति निधिरूपानुवादः ॥ ३८ ॥

निधीनां तु पुराणानां धातूनामेव च क्षितौ ॥
अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥ ३९ ॥

अन्येनापि दृष्टस्य निधे राज्ञा भागः पूर्वोक्तो ग्रहीतव्य इत्यस्य विधेरर्थवादोऽयम् । निधीनां हि पुराणानामिति धातूनामेव च क्षितौ । अयं त्वप्राप्तविधिः । सुवर्णरूप्यादि मृदः सिन्दूरकालाञ्जनाद्याश्च धातवः । सुवर्णाद्याकरभूमीर्यः खनति यो वा पर्वतादिपु गैरिकादि धातूनुपजीवति तेनापि पूर्ववद्राज्ञे भागो दातव्यः । अर्धभागिति । अर्धशब्दोंऽशमात्रवचनः समासनिर्देशात् । यथा ग्रामार्धो नगरार्धमिति । नपुंसकलिङ्गस्तु समप्रविभागः । इह तु समासे लिङ्गविशेषप्रतिपत्त्यभावात्पूर्ववत् पड्दशद्वादशादेर्भागस्य प्रकृतत्वात्तद्वचनो विज्ञायते । अर्धं भजत एकदेशं गृह्णातीत्यर्थः । अत्र हेतू रक्षणादिति । यद्यपि क्षितौ निहितस्य केनचिदज्ञानान्न राजकीयरक्षोपयुज्यते तथापि तस्य बलवताऽपहारः

संभाव्यते । अतोऽस्त्येव रक्षाया अर्थवत्त्वम् । एतदर्थमेवाह भूमेरधिपतिर्हि सः । प्रभुरसौ भूमेस्तदीयायाश्च भुवो यल्लब्धं तत्र युक्तं तस्य भागदानम् ॥ ३९ ॥

दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ॥
राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम् ॥ ४० ॥

चौरैर्यन्नीतं किञ्चिद्धनं तद्राजा प्रत्याहृत्य नात्मन्युपयुञ्जीत । किंतर्हि य एव मुषितास्तेभ्य एव प्रतिपादयितव्यम् । सर्वग्रहणेन च चण्डालेभ्योऽपि देयमिति । 'चौराहृतम्' इत्यन्यस्मिन्पाठे चौरैः आहृतमिति विगृह्य 'साधनं कृतेति' समासः । पाठान्तरे चौरहृतमिति तृतीयेति योगविभागात्पूर्ववद्वा समासः । अयं त्वत्रार्थो यच्चौरैर्हृतमशक्यप्रत्यानयनं तद्राज्ञा स्वकोशाद्दातव्यम् ।

उत्तरश्लोकार्ध एवं योजनीयः । राजा तदुपयुञ्जान इति । अनेकार्थत्वाद्धातूनामुपपूर्वो युजिर्लक्षणजाऽप्रतिपादन एव द्रष्टव्यः । यो ह्यन्यस्मै प्राप्तकालं धनं न ददाति स्वप्रयोजनेषु विनियुङ्क्ते तेन तदीयमेव तदुपयुक्तं भवतीति युक्तमुच्यते । राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्विषम् । किल्विषं पापम् ॥ ४० ॥

जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित् ॥
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥ ४१ ॥

कुरुकापिशकाश्मीरादिदेशो नियतावधिः 'जनपदम्' । तत्र भवा धर्मा जानपदाः' । केचित् तत्र भवन्ति ये तद्देशव्यपदेश्यैरनुष्ठीयन्ते । अथवा तन्निवासिनो जनाः मंचाः क्रोशन्तीतिवत् जनपदशब्देनाभिधीयन्ते । तेषामनुष्ठेया 'जानपदा' । 'तस्येदमिति' (पा० ४ । ३ १२० ) तद्धितः । जातेर्जानपदा जातिजानपदा इति षष्ठीसमासः । जातिमात्रविषया देशधर्मा राज्ञा परिपालनीयाः । समीक्ष्य विचार्य । किमाम्नायैर्विरुद्धा अथ न—तथा पीडकराः कस्यचिद्रुत न—एवं विचार्य येऽविरुद्धास्तन्प्रतिपादयेदनुष्ठापयेदित्यर्थः । तथा च ववक्ष्यति "सद्भिराचरितं यत्स्यात्" इति, ( ८ । ४६ ) । अथवा जातयश्चते जान पदाश्चेति विशेषणसमासः । जातिशब्देन च नित्यत्वं लक्ष्यते । प्रशंसामात्रं चैतद्देशधर्माणाम् । यथा जातिर्नित्य एवं देशधर्मा अपि शास्त्राविरुद्धा नित्याः । ते नित्यवदनुष्ठेया दृष्टार्था गोप्रचारोदकक्षरणादयः । यथा ग्रामीक्ष अत्र प्रदेशे गावो न चारणीया

इति समयमाश्रयन्ति कस्यचित्कार्यस्य सिद्ध्यर्थं तत्र यो व्यतिक्रामति स राज्ञा दण्ड्यः।

अथवा जनपदे भवा 'जानपदा' देशनिवासिन उच्यन्ते। जात्या जानपदा 'जातिजानपदाः'। जातिर्जन्मोत्पत्तिरिति यावत्। एतेन देशसम्बन्धस्य पुरुषाणां नित्यता लक्ष्यते। ये तद्देशजास्तद्देशाभिजनास्तन्निवासिनश्च गृह्यन्ते तेषां सर्वविशेषणविशिष्टानामनिदंप्रथमतो जाता ये धर्मास्ते जातिजानपदशब्देनोच्यन्ते। 'वृद्धाच्छेति' तद्धिते प्रसक्ते छान्दसत्वादणेव कृतः।

अथवाऽभेदोपचारात् पुरुषशब्दस्तत्सम्बन्धिषु धर्मेषु प्रयुक्तः। तेनायं देशनियमो धर्माणां स एवंविधात्पुरुषात्प्रतिद्रष्टव्यः। एते हि देशधर्मा म्लेच्छानां न पुनरार्याणाम्। ते हि तिर्यक्समानधर्माणोऽन्यत्रानधिकृताः स्वसमाचारप्रसिद्धं धर्ममनुतिष्ठन्ति मातृविवाहादि। सोऽयं सार्वभौमेन न निवारणीयः। स्वदेशाचारवतां तेषां जातिधर्मोऽयं जनपदनिवाससम्बन्धेनाभ्यनुज्ञानात्। आम्नायविरोधोऽप्यत्र नास्ति। अधिकृतानां विरोधान् विरोधो न तिरश्चाम्।

ननु "अहिंसा सत्यमक्रोधः शौचमिन्द्रियसंयमः" इति प्रतिलोमाधिकारेणैवोक्तम (१०। ६३)। म्लेच्छाश्च प्रतिलोमा एव। तत्र यदि मातृविवाहे मूत्रोत्सर्गे चोदकशुद्ध्यभावे न दुष्यति क इन्द्रियसंयमः कीदृशं वा शौचमिति।

उक्तमेतत्। आर्यावर्तमध्यवर्तिनामेते धर्माः शौचादयः। चातुर्वर्ण्ये तु तत्तद्देशनियमो धर्माणां नास्ति। केचिददृष्टार्था देशधर्मा इति वक्ष्यामः।

एककार्यापन्ना वणिक्कारुकुसीदचातुरिकादयः। तेषां धर्माः 'श्रेणीधर्माः'। यथा केचन वणिङ्महत्तरा वचनेन परिच्छिन्नं राज्ञो भागं प्रयच्छन्ति—इमां वणिज्यां वयमुपजीवाम एष ते राजभागोऽस्माकं यावल्लाभोऽस्तु न्यूनोऽधिको वा। तत्र राज्ञाऽभ्युपगते वणिज्ये लाभातिशयार्थं राष्ट्रविरोधिनीं चेतरेतरव्यवस्थां कुर्वन्ति—इदं द्रव्यमियन्तं कालमविक्रेयम्, अयं राज्ञोऽपदेशेनार्थो दण्डः पतति, देवतोत्सवार्थो वा। तत्र यदि कश्चिद्व्यतिक्रामति स एवं श्रेणीधर्मव्यतिक्रामन्दण्ड्यः।

कुलधर्मा इति। 'कुलं' वंशः। तत्र प्रख्यातमहिम्ना पूर्वजेन धर्मः प्रवर्तितो भवति योऽस्मद्वंशजः कुतश्चन धनं लभेत स नादत्वा ब्राह्मणेभ्योऽन्यत्र विनियुञ्जीतेत्यादयो धर्माः। तथा सति योग्यत्वे य एव पूर्वपुरुषाणां याजकाः कन्यादिसंप्रदानता वा त एव कार्याः। भूतदतिक्रामन् राज्ञोऽनुष्ठापयितव्यः।

एतेषां च सामवायिकत्वादधर्मत्वशङ्कया पुनर्वचनम्। न चायं संविद्व्यतिक्रम इति वक्ष्यामः ॥ ४१ ॥

स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ॥
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥ ४२ ॥

पूर्वोक्तस्य जानपदादेर्धर्मस्य दृष्टादृष्टताऽनेन प्रदर्श्यते। स्वानि कर्माणि कुलस्थित्यनुरूपाणि ये कुर्वन्ति ते दूरस्था अपि प्रिया भवन्ति। सर्वस्यान्यो निकटवर्त्ती संसर्गातिशयात्प्रियो भवति। स्वकर्मकारी तु दूरस्थ एव प्रियः। स्वे स्वे कर्मण्यवस्थिता इत्यनेन परकर्माननुष्ठानमाह। ये न परकर्माणि कुर्वन्ति ते सर्वस्य प्रिया भवन्तीति श्लोकार्थः ॥ ४२ ॥

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ॥
न च प्रापितमन्येन ग्रसेतार्थं कथंचन ॥ ४३ ॥

कार्यं विवादवस्तु। तद्राजा स्वयं न प्रवर्तयेत्। कस्यचिद्द्वेष्यस्योपघातार्थं धनिनो वा धनग्रहणार्थं न तदीयमृणिकमन्यं वाऽपराद्धमुद्वेजयेत्—एष ते धारयति किमिति ममाग्रतो नाकर्षसि—एतेन वा तावदपराद्धं यावदहमेनं निपातयामीत्येवं राज्ञा न कर्तव्यम्। सत्यपि द्वेषे धनलोभे वा। न च प्रापितमावेदितमन्येनार्थिना ग्रसेत निगिरेन्नोपेक्षेतेति यावत्। अवधीरणायां निगिरेदिति प्रयुज्यते। तत्समानार्थश्च ग्रसतिः। तथा च वक्तारो भवन्ति यावत्किंचिदस्योच्यते तत्सर्वं निगिरति न किंचिदयं प्रतिवक्ति।

अन्ये तूत्तरं श्लोकार्द्धमेवं व्याचक्षते। न च प्रापितं व्यवहारादन्येन प्रकारेणार्थं धनं ग्रसेत स्वीकुर्यात्। यदि हि राजा छललेशोद्देशिकया धनदण्डे प्रवर्तेत ततः परलोके दोषो द्रष्टव्यः। स्वराज्ये चोपघातः स्यात्।

अथेदमपरं केषांचिद्व्याख्यानम्। नोत्पादयेत्स्वयं कार्यं राजा। साक्षादुपलभ्याप्यकार्यकारिणं न स्वयं किंचिद्ब्रूयात्, तस्य पराधीनेन यावद्व्यवहारेण नाकृष्टः। येन परव्यवहारदर्शनमेव पराजितस्य निग्रहाय भवति, न राजा। एतच्च ऋणादानादिष्वेव द्रष्टव्यम्। ये तु स्तेनसाहसिकादयः कण्टकस्थानीयास्तान राजा स्वयमेवावगम्य गृह्णीयात्। शेषं समानम्।

नाप्यस्य पूरुष इति अस्य राज्ञः पुरुषोऽधिकारी मनुष्यः ॥ ४३ ॥

यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ॥
नयेत्तथाऽनुमानेन धर्मस्य नृपतिः पदम् ॥ ४४ ॥

यदुक्तं न स्वयं दृष्ट्वाऽपि राजा सहसा कंचिदाक्रमेत वा निगृह्णीयात् ततः नर्मणाऽप्येतत्संभवति । कथं पुनरेतदवगन्तव्यम् किं परिहासकृतमेतदुत क्रोधाद्यनुबन्धकृतमिति । अत आह अनुमानेनैतज्ज्ञातव्यम् । यथा मृगयुर्मृगव्याधो विद्ध्वा मृगं नष्टं दृष्टिपथादपक्रान्तं छिद्रनिसृतैरसृक्पातैः स्रवद्भिः शोणितैः पदं मृगस्य नयत्यासादयत्येवं राजाऽनुमानेन परोक्षे प्रत्यक्षे वाऽर्थकारणं निश्चिनुयात् । धर्मश्च कृतव्यवहारविषयस्तत्वावगमः । उक्तस्याप्यनुमानस्य पुनर्वचनं स्मृतिदार्ढ्यार्थम् ॥ ४४ ॥

सत्यमर्थं च संपश्येदात्मानमथ साक्षिणम् ॥
देशं रूपं च कालं च व्यवहारविधौ स्थितः ॥ ४५ ॥

व्यवहारविधौ व्यवहारकर्मणि स्थितः प्रवृत्तो न केवलं व्यवहाराक्षराणि संपश्येद्यावदेतदपरं सत्यादि । तत्र सत्यस्य दर्शनम्—यद्यप्यर्थिप्रत्यर्थिनोरन्यतरेण शालीनयता परिपूर्णाक्षरं नाभिहितं तथापि यदि राजा प्रमाणान्तरतः पूर्वोक्ताद्वाऽनुमानादेव कथंचिदीदृशोऽयमर्थ इति निश्चेतुं पारयेत् तदा तदाश्रयेन्नोपेक्षेत । अनेनैतन्न सर्वमुक्तमिति । तदुक्तम् (या० व्य० १९) "छलं निरस्य भूतेषु व्यवहारान्नयेन्नृप इति ।

अर्थस्य दर्शनम्—अर्थशब्दो धनवचनः प्रयोजनवचनो वा । तत्र यदि महान्तमर्थमासादयेत्तदा त्यक्त्वाऽप्यन्यानि राजकार्याणि नोद्विजेत, व्यवहारेक्षणं कुर्यादेव । अथवा यदि कश्चिद्ब्रूयात्साक्षिभिरर्थ एतस्माद्गृहीतोऽन्येन वा सभ्येन तत्र निरूपयितव्यं यदेतद्व्यवहारपदं यदि स्वल्पं न संभवति धनग्रहणम् । अथ गुरुसभ्याः साक्षिणश्च दैन्यं गतास्तदा संभावनीयं प्रमाणान्तराच्च निश्चेतव्यम् ।

एतच्चात्मानं साक्षिणं कृत्वा गवेषणीयम् । एतदुक्तं भवति । कण्टकशोधनन्यायेन चारैश्चारयेत् । अथवाऽत्मानं संपश्येदात्मनोऽवस्थां संपश्येत्कोशक्षयं महाकोशतां वा । अस्मिन् पक्षे साक्षिण इति स्वतंत्रं पदम् ।

देवस्य दर्शनम्—क्वचिदल्पोऽप्यर्थो महत्त्वमासादयति, महानपि योऽन्यत्र स क्वचिल्लघुर्भवतीति । एतद्देशस्य दर्शनम् ।

एवं कालोऽपि द्रष्टव्यः ।

रूपं व्यवहारवस्तुस्वभावः । तस्य गुरुलघुतां पश्येदिति ।

अन्यैस्तु व्याख्यातम् । सत्यार्थयोः सारफलतां पश्येदात्मानं साक्षिणं कृत्वा । एतदुक्तं भवति । अर्थात्सत्यं गुरुत्वेन महाप्रयोजनत्वादुभयोर्लोकसाधनरूपतयाऽऽश्रयितव्यम् । अर्थस्त्यक्तव्योऽसारत्वात् । देशः स्वर्गादिः सत्यसमाश्रयप्राप्यः । कालश्चिरं तत्र वासः । रूपं सुरूपं सुन्दरं मनोहरम् । सत्यत्यागेन केवलार्थसमाश्रयणात् ॥ ४५ ॥

सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः ॥
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ॥ ४६ ॥

सन्तः प्रतिषिद्धवर्जकाः, धार्मिका विहितानुष्ठायिनः । यद्यप्येक एव शब्द उभयमर्थं प्रतिपादयितुं शक्नोति तथापि भेदोपादानाद्विषयविभागेनैवं व्याख्यायते । तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यं तद्देशकुलजातीनां प्रकल्पयेदनुष्ठापयेत् । अविरुद्धं श्रुतिस्मृतिभिरुपलभ्यमानाभिः । यदुक्तं "जातिजानपदान्धर्मान्" (४१) इत्यत्र श्लोके देशकुलाद्याचारस्य प्रामाण्यं तस्यानेन विशेषः कथ्यते । आम्नायेनाविरोधेन तत्प्रमाणम्, न विरोधे तत्प्रमाणम् तेन दृष्टार्थान्यपि ग्रामदेशराजकार्याणि शास्त्राविरुद्धान्यादरणीयानि, न विरुद्धानि । यथा क्वचिद्देश ऋणिक आत्मानं विक्रय्य धनं दाप्यते । तच्च "कर्मणाऽपि समम्" इत्यनेन विरुद्धम् । अन्यच्च श्लोकेन दर्शितम् । अन्यस्य त्वाचारस्य शिष्टसम्बन्धितयैव प्रामाण्यमुक्तम् "आचारश्चैव साधूनाम्" इति । न च तद्विरुद्धार्थसमाचरणेन साधुत्वमुपपद्यते । तस्माद् यत्नाद्दृष्टाय तद्विषयोऽयमुपदेशः ।

अन्यस्त्वाह । देशान्तरे धार्मिकैः सद्भिर्द्विजैर्यदविरुद्धं श्रुत्या स्मृत्यन्तरेण वाऽऽचर्यते तद्देशान्तरेऽपि राजा प्रकल्पयेत् । यथोद्वृषभयज्ञादय उदीच्येषु प्रसिद्धास्ते प्राच्यैर्दाक्षिणात्यैः प्रतीच्यैश्चानुष्ठेयाः । कुतः । आचाराद्धि स्मृतिरनुमातव्या । स्मृतेः श्रुतिः । सा च यद्येवमनुमीयते—'उदीच्यैरेतत्कर्तव्यमिति' तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात्तत्र जातस्तत्र भवस्तत आगतस्तमभिप्रस्थितः शेष

इति चैतस्य लक्षणविकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपातेषु तद्धितस्मरणान्नास्त्युदीच्यो नाम य उदीच्यशब्देन निवर्त्येत। ततश्च पुरुषमात्रेणैतत्कर्तव्यमित्यापतति। देशसमाख्याया नियतनिमित्तत्वाभावेनानियामकत्वात्। अथैवं वाक्यमनुमीयेत—'उदीच्यां जातेन तद्देशवासिना वा' तदपि व्यभिचारि। तत्र जातोऽपि नान्यत्र करोति तन्निवास्यप्यन्यत्र जातो न करोत्येव। अथोदग्देशाभिजनस्तन्निवासी चेति—नित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव। न हि जातिगुणगोत्राणीवाभिजननिवासौ नित्यौ। तस्मान्नित्यस्य कस्यचिदनुष्ठातॄणामवच्छेदकस्यानुपपत्तेः सर्वविषया धर्माः। न देशधर्मा नाम केचन सन्ति। अनेनैव न्यायेन कुलधर्मा अपि।

कथं 'तर्हि देशधर्माः कुलधर्मा' इति च स्मृतिकारभेदेन व्यपदिश्यन्ते।

उक्तं दृष्टार्था नियता व्यवस्था। तत्र धर्मस्तस्य च नियम उपपद्यत इति उक्तम्। कुलं च गोत्रैकदेशः। यस्तु कृत्स्नगोत्रधर्मो—यथा 'न वासिष्ठा वैश्वामित्रैः सम्बध्नीयुरिति'—स नित्यत्वाद्गोत्रव्यपदेशस्य नित्यएवेति विरम्यते ॥ ४६ ॥

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः ॥
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

यत्सर्वेषु व्यवहारपदेषु साधारणं तदुक्तम्। विशेषविवक्षायामिदमाह। सोपचयं कालान्तरे दास्यामीति यो धनमन्यस्माद्गृह्णाति सोऽधमर्णः। यस्तु सोपचयं प्रत्यादास्यामीति प्रयुङ्क्ते स उत्तमर्णः। सम्बन्धिशब्दावेतौ। अधमर्णस्यार्थः। अर्थो धनं प्रकरणाद्यदेवोत्तमर्णाय देयं तदेवोच्यते। तस्य सिद्धिरुत्तमर्णं प्रति निर्यणः। द्वितीयोऽर्थशब्दः प्रयोजनवचनः। अयं समुदायार्थः। उत्तमर्णेन यदा राजा चोदितो भवत्यधमर्णेन यो गृहीतोऽर्थः स मे सिद्ध्यतु दापयतु भवान्—राजा त्वधमर्णात्तदा दापयेद्धनिकस्यार्थम्। धनमस्यास्तीति धनिकः। उत्तमर्ण एव च प्रसिद्ध्या धनिक उच्यते। दापयेदिति सम्बन्धाच्चतुर्थी प्राप्ता। सा त्वपूर्णत्वात्संप्रदानभावस्य न कृता। यथा ग्नतः पृष्ठं ददाति, रजकस्य वस्त्रं ददातीति। न ह्यत्र मुख्यो ददात्यर्थः। इहाप्युभयोः स्वत्वस्य भावात्। उभयोः स्वत्त्वाभावादपरिपूर्णो ददातीत्यर्थः।

किमुत्तमर्णवचनादेवासौ दापयितव्यः नेत्याह विभावितमिति। यदा

निश्चितेन प्रमाणेन धारयतीति प्रतिपद्यते। अथवा विभावितः स्वयं प्रतिपन्नः। यतो विप्रतिपन्नस्य वक्ष्यति 'अपह्नवेऽधमर्णस्येति' (५२)। कथं पुनः स्वयं प्रतिपन्नो विभावित इत्युच्यते। नेष दोषः। विस्मरणे स्वहस्तलेख्यादिना स्वयं प्रतिपन्नश्च भवति। विभावितश्चाप्रतिपन्नश्च जानानोऽपि मिथ्याप्रतिपन्नः ॥ ४७ ॥

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ॥
तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥ ४८ ॥

नेहाप्राप्तार्थादुत्तमर्णाद्राज्ञे भागं वक्ष्यत्यधमर्णाद्दण्डम्। तत्र स्वभागतृष्णया राजान उपायान्तरेण धनमार्गणं धनिकानां कारयेयुरतस्तन्निवृत्त्यर्थमिदमुच्यते। यैर्यैर्वक्ष्यमाणैरुपायैः स्वधनं पूर्वप्रयुक्तमुत्तमर्णो लभेत तैस्तैरधमर्णं दापयेत्। संगृह्य स्थिरीकृत्य। अनेनैवोपायेनैतस्मादेतल्लभ्यत इत्येतन्निश्चित्येत्यर्थः। अथवाऽनुकूलमुपसांत्वनं संग्रहः। उत्तमर्ण एव उत्तमर्णिकः। उत्तमं च तदृणं चोत्तमर्णम्। तदस्यास्तीत्युत्तमर्णिकः। "अत इनि ठनाविति" ( पा० ५। २ ११५ ) रूपम्। एवमितरोऽपि। वृद्धिलाभार्थं प्रयोगविषयं धनमृणम्। द्वौ च तस्य सम्बन्धिनौ प्रयोक्ता ग्रहीता च। प्रयोजकस्य च तत्— "उत्तमं भवति। स्वतन्त्रो धनदाने प्रत्यादाने च। इतरस्य सोपचयप्रदानाद्ग्रहायामत्वाच्च 'अधमत्वम्'। व्युत्पत्तिमात्रं त्वेतत्। रूढ्यैव त्वेतौ प्रयोक्तृग्रहीत्रोर्वाचकौ। के पुनस्तत्रोपाया इत्येतत्प्रदर्शनार्थनार्थ उत्तरश्लोकः ॥ ४८ ॥

धर्मेण व्यवहारेण छलेनाचरितेन च ॥
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ ४९ ॥

तत्र धर्मस्कन्धकरीत्या स्तोकं स्तोकं ग्रहणमिदमद्य इदं श्व इदं परश्वः—यथा कुटुम्बसंवाहोऽस्यैवं वयमपि तव कुटुम्बभूताः संविभागयोग्या इत्यादि पठितप्रयोगो धर्मः। यस्तु निःस्वः स व्यवहारेण दापयितव्यः। अन्यत्र कर्णोदकवद्धनं दत्वा कृषिवाणिज्यादिना व्यवहारयितव्यम्। तत्रोत्पन्नं धनं तस्माद्ग्रहीतव्यम्। यस्तु 'व्यवहारो' राजनिवेद्यस्तस्य सर्वोपायपरिक्षये योज्यत्वाद्बलग्रहणेन च गृहीतत्वात्। यस्तु साक्षान्न ददाति विद्यमानधनोऽपि स छलेन दापयितव्यः। केनचिदपदेशेन विवाहोत्सवादिना कटकाद्याभरणं गृहीत्वा न दातव्यं—यावदनेन तद्धनं न दत्तम्। आचरितमभोजनगृहद्वारोपवेशनादि। बलं राजाधिकरणो-

परस्थानम् । तत्र राजा साम्नाऽप्रयच्छन्तं निगृह्य च प्रपीड्य दापयतीति । ननु स्वगृहसंबंधिधनादि 'बलं' यतः "प्रकृतीनां बलं राजा" इति पठ्यते अस्मिन्नेव प्रसङ्गे उशनसा । अन्ये तु राज्ञ एवायमुपदेश इति वर्णयन्ति राजधर्मप्रकरणात् । राजा ज्ञापित उपायैरेनं दापयेत्पराजितं स्वयं प्रतिपन्नं च । न तु सहसाऽवष्टभ्य सर्वस्वं धनिने प्रतिपादनीयः । यत उभयानुग्रहो राज्ञा कर्तव्यः । सर्वस्वादाने चाधमर्णस्य कुटुम्बोत्सादः स्यात्सोऽपि न युक्तः । उक्तं हि

"नावसाद्य शनैर्दाप्यः काले काले यथोदयम् ।
ब्राह्मणस्तु विशेषेण धार्मिके सति राजनि" इति ।

तस्मात्किंचनवृद्ध्या संदापनीयः । कुटुम्बादधिकधनसंभवे सर्वं दापनीयः । सर्वासंभवे च "कर्मणाऽपि समं कुर्यात्' इति । अन्यस्मिन्व्याख्याने छलाचारौ राजानमज्ञापयित्वा न कार्यौ ॥ ४९ ॥

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ॥
न स राज्ञाऽभियोक्तव्यः स्वकं संसाधयन्धनम् ॥ ५० ॥

उक्तस्यैवार्थस्य स्पष्टीकरणार्थः श्लोकः । न छलादिनोपायेन स्वेच्छयोत्तमर्णोऽधमर्णाद्धनं संसाधयन् राज्ञा किंचिद्वक्तव्यः—'मामविज्ञाप्य किमित्यस्मादाभरणादि स्वधनसंशुध्यर्थं व्याजेन छद्मना गृहीत्वा किं नास्मै प्रतिप्रयच्छसीति' ॥ ५० ॥

अर्थेऽपव्ययमानं तु कारणेन विभावितम् ॥
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥ ५१ ॥

सत्यपि विभावके प्रमाणे यो न स्वयं प्रतिपद्यते न तस्य छलाद्युपायप्रयोगः कर्तव्यः । किंतर्हि राजैव तेन ज्ञापयितव्यः । तत्र राज्ञाऽऽकारितेऽर्थे ऋणेऽपव्ययमानमपह्नुवानं—नास्मै किंचन धारयामीति वदन्तं—कारणेन साक्षिलेख्यभुक्त्यात्मकेन विभावितं धारयामीति प्रतिपादितं दापयेदुत्तमर्णाय धनम् । दण्डलेशं च स्वल्पं दण्डं दण्डमात्रमित्यर्थः । अन्यत्र दशमं भागं वक्ष्यति । यस्तु तावद्दातुमशक्तः सोऽल्पमपि दशमाद्भागाद्दण्डं दापयितव्यः । अथवा यः प्रमादात्कथंचिद्विस्मृत्यापजानीते तस्यायं यथाशक्ति दशमभागाल्पतो दण्डः । कारणं प्रमाणं त्रिविधम् । तदन्यैरिह संभवतीति परिगणितम् । तथा चाहुः—

कथमिज्यते। अथ वाक्सरस्वत्योरेकत्वेनैवं देवताभावे शब्दावगम्यरूपत्वाद्देवताया भिन्नौ चैतौ वाक्सरस्वतीशब्दौ। यथाऽग्नये जुहोतीति चोदितेन ज्वलनाय कृशानवे वा स्वाहेति हूयते, वायवे निरूप्य जुहुयाद्वायुर्वै प्राण इत्युक्तेऽपि न प्राणायेति हूयते।

सत्यम्। वागेव देवता। सामानाधिकरण्याद्देवतार्थे तद्धितः। न सरस्वतीमिति द्वितीयानिर्देश्या देवता। कर्मणि हि द्वितीया। संप्रदानं च देवता न कर्म।

कथं तर्हि सरस्वतीपदान्वयः।

अर्थवादोऽयम्। अग्नये जुहोत्यग्निर्वै सर्वा देवता इति। वागेव सरस्वती—तयेष्ट्या साऽपीष्टा भवति। यागेन देवताऽवगम्यते। कथम्। अग्निर्यष्टव्यः प्रजापतिर्यष्टव्यस्तथाग्निं यजति यदग्निं यजतीत्यादि केचिदाहुः। देवताः स्वतस्तत्र तत्र पूज्यन्ते। दैवतपूजा वचनोऽत्र यजिः। पूजा च पूज्यमानकर्मिका। तत्र युक्ता द्वितीया। तथा च देवता पूजनीयेत्यादि स्मर्यते।

एतच्च न युक्तम्। अस्मिन् हि पक्षे देवतात्वमन्यतो मृग्यम्। तत्र यागसंप्रदानं देवतेति स्मरणविरोधः। एषा च स्मृतिर्बलीयसी। निरपेक्षत्वात्। पूर्वा देवता उद्देश्या ध्येया च। यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति तत्क्रियाकर्मत्वात्कर्मण्येषा द्वितीया ॥ १०५ ॥

कूष्माण्डैर्वाऽपि जुहुयाद्घृतमग्नौ यथाविधि ॥
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥ १०६ ॥

कूष्माण्डा नाम मन्त्रा यजुर्वेदे पठ्यन्ते। तैर्घृतमग्नौ जुहुयात्। जुहोतिश्च देवतामुद्दिश्य द्रव्यस्य त्यागः। आधारविशेषणे तत्रेहाग्नावित्यधिकरणनिर्देशान्मांत्रवर्णिकी देवता वेदितव्या। येषु च मन्त्रेषु देवताविशेषलिङ्गं न दृश्यते—यथा 'देवकृतस्यैनसोवयजनमसि' इत्यादिषु—तत्र प्रजापतिर्देवतेति याज्ञिकाः। अथवा यस्यान्यत्र देवतात्वं दृष्टं सह संबन्धि यावत्। तथा च निरुक्तकाराः 'अपि वा सा कामदेवता स्यादिति'। यद्यपि याऽन्यस्य हविषो देवता साऽन्यस्य न कदाचित् तथाऽपि यजति श्रूयते द्रव्यं मन्त्राश्च तेऽत्रासत्यां देवतायां जुहोतीति रूपं तदुत्तरेण जुहुयादिति व्याख्येयम्। तच्चायुक्तम्। तथाभिघारयेदिति वक्तव्यं

स्यात्। वयं तु ब्रूमो 'देवकृतस्यैनसोवयजनमसि' इत्यत्र कर्मैवावयजनमेवावयाजनमित्युच्यते। अतस्तद्देवता। सर्वत्र च मन्त्राभिधेयं वस्त्वस्त्विवति न देवतायां मन्त्रवर्णाभावः।

उदित्यृचा वा वारुण्येति। उदुत्तमं वरुणपाशमस्मत् इति (ऋग्वेद १।२४।१५) एषा ऋक् वरुणदेवता उदिति प्रतीकेन लक्ष्यते। वारुणीग्रहणं चान्यस्या 'उ त्वा मदंतु स्तोमा' ( ऋग्वेद ८ । ६४ । १ ) इत्युच्छन्दप्रतीकाया निवृत्त्यर्थम्।

तृचेनाब्दैवतेन चेति। देवतैव दैवतम्, आपो दैवतम् अस्य त्र्यृचस्य तेन— आपो हिष्ठा' इत्यादिना ( ऋग्वेद १० । ६ । १ )। अतश्चैकैकया एकैकाहुतिः प्रत्येकशब्दवत्, समस्तेन च समुदायाहुतिरेकेति।

घृतमग्नाविति सर्वत्रानुषङ्गः।

यथाविधि। यादृशः शिष्टसमाचार इत्यर्थः। तेन च हविषः सत्वादप्राप्तायामितिकर्तव्यतायां परिसमूहनपर्युक्षणावेक्षणस्रुवहोमाद्येतावन्मात्रमनुजानाति।

वाशब्दाद्वैकल्पिकाः सर्व एव ॥ १०६ ॥

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः ॥
तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वतः ॥ १०७ ॥

पञ्चदशाहोरात्राणि पक्षः। त्रयाणां पक्षाणां समाहारः त्रिपक्षम्। 'अकारान्तोत्तरपदो द्विगुः' इति ( वार्तिक २ । ४ १७ ) स्त्रीत्वे प्राप्ते पात्रादिदर्शनात्प्रतिषेधः।

यद्येवं त्रिपक्षीति न प्राप्नोति।

छान्दसस्तत्र लिङ्गव्यत्ययः।

ल्यब्लोपे कर्मणि पञ्चमी। त्रीन्पक्षान्यावदतीत्य यः साक्ष्यं न ददाति। अगदोऽपीडितशरीरस्तदृणं प्राप्नुयादित्यर्थः।

दशबन्धं च। दशमं च भागं दण्डनीयस्तस्मादृणात्।

ऋणादिषु इत्यादिग्रहणेन सर्वव्यवहारोपक्रमः। द्वितीयमृणग्रहणमुपलक्षणार्थम्। यस्मिन्व्यवहारे साक्ष्यमियन्तं कालं न भवति पराजीयमानस्य साक्षिणो वोढारइत्युक्तं भवति।

गदो रोगः तत्समानप्रत्युत्थानहेतूपलक्षणार्थम्। तेनात्र कुटुम्बोपद्रवधनिकोपरोधाद्यपि परीक्ष्यम्।

वन्धशब्दः सङ्ख्यादिपरो दण्डविषये दशमांशवचनः।

नरग्रहणं सर्वतोग्रहणं च श्लोकपूरणार्थम्।

अन्ये त्वाहुस्तद्दणं प्राप्नुयादित्यस्यायमर्थः—ऋणापहरणलक्षणेन पापेन युज्येत। राज्ञे वा जीयमानस्य यो दण्डस्ततो दशममंशं दद्यादिति दण्डितः पुनः दण्ड्यते ॥ १०७ ॥

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ॥
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥ १०८ ॥

सप्ताहादिति पञ्चमीदर्शनादर्वागित्यध्याह्रियते। सप्तानां दिवसानामन्यतमस्मिन्नहनि यस्य साक्षिणा रोगादि दृश्यते स मृषावादी दैवेन विभावितः पूर्वोक्तेन विधिना दापयितव्यः। रोगोऽत्यन्तपीडाकरः, अग्निर्गोवाहनदहनः, पुत्रदारादिप्रत्यासन्नज्ञातिमरणं, तस्य कूटसाक्षित्वे लिङ्गम् ॥ १०८ ॥

असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः ॥
अविन्दंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत् ॥ १०९ ॥

अविद्यमानाः साक्षिणो येष्वर्थेषु व्यवहारेषु तेऽसाक्षिकाः। तेषु सत्यमजानानो राजातत्त्वतो लौकिकेनानुमानेनापीत्यर्थः। तत्र शपथेनापि वक्ष्यमाणेन दैवेनानुमानेन लम्भयेत् जानीयात्। लभिः प्राप्तिवचनोऽपि सामर्थ्याज्जानात्यर्थः। न ह्यन्य सत्यस्य 'लाभः'। 'न विन्दन्' इति पाठेऽप्येवमेव व्याख्येयम्। 'असाक्षिकेषु शपथेन लम्भयेत्' इत्येतावद्विध्युद्देशवाक्यावसानात् श्लोकपूरणार्थम् मिथः—परस्परम् ॥ १०९ ॥

महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ॥
वसिष्ठश्चापि शपथं शेपे पैजवने नृपे ॥ ११० ॥

अर्थवादोऽयं पूर्वोक्तस्य शपथविधेः। महर्षिभिः सप्तर्षिप्रभृतिभिः। कार्यार्थं संदिग्धकार्यनिर्णयार्थं शपथाः कृताः। अस्मिन्नर्थे च भगवतः कृष्णद्वैपायनस्याख्यानमुदाहर्तव्यम्। पुष्करेषु तेष्वपहारितेष्वितरेतरं सप्तर्षयः शेपिरे 'यस्ते हरति

पुष्करं स इमां पापकृतो गतिं गच्छेत्' इत्यादि। देवैरिन्द्रप्रभृतिभिः। इन्द्रो ह्यहल्यां प्रत्यभिशप्तः शापभयाद्बहुविधं शपथं चकार। वसिष्ठश्चेति पृथङ्निर्देशः प्राधान्यख्यापनार्थः। शपथं कृतवानित्यर्थः। उपपदादेव विशेषावगतेः शपतिः करोत्यर्थमात्रे वर्तते। यथा 'यज्ञं यजत' इति स्वपोषं पुष्ट' इति तथा 'शपथं शेप' इति ज्ञेयम्। 'शप उपलंभने' इति लिटि प्रथमपुरुषात्मनेपदैकवचने शेपे इति रूपम्।

पैजवनो राजा बभूव। तस्मिन्काले विश्वामित्रेणाकृष्टो मण्डलमध्यगतः कामक्रोधाभ्यां संक्षुब्धाचरणोऽवासुरो यातुधानोऽस्मीति शपथं गृहीतवान्। विश्वामित्रेणोक्तस्तस्य राज्ञः समक्षमनेनैव तत्पुत्रशतमशितमेष हि रक्ष इति। ततः स उवाच अद्यैव म्रियै यदि रक्षः स्यामित्यात्मन्यनिष्टाशंसनमत्र शपथः। पुत्रदारादिशिरःस्पर्शने एतदनिष्टाशंसनं शपथो मन्तव्यः॥ ११० ॥

न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः॥
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति॥ १११ ॥

मिथ्याशपथे फलाख्यानमेतत्। वृथाऽन्यथाऽसत्यमिति यावत्। तत्रापह्रियमाणसुवर्णादिद्रव्यजात्यपेक्षोऽनृतशपथदोषोऽन्यथाशपथे स्वल्पे। गरीयसि तु कार्ये गौरवादधिकतरो दोषोऽस्त्येव। प्रेत्य नाशो नरकम्, इह महदयशः। प्रमाणान्तरैस्तु ज्ञाते राजदण्डः॥ १११ ॥

कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने॥
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्॥ ११२ ॥

कामः प्रीतिविशेषो विशिष्टेन्द्रियस्पर्शजन्यः, स यासु भवति पुरुषस्य ताः कामिन्यो भार्यावेश्यादयः। तत्र यः शपथः। कामसिद्ध्यर्थो यथा 'नाहमन्यां कामये प्राणेश्वरी मे त्व'मित्याद्यः। यस्तु 'संप्रयुज्यस्व मया' 'इदं त्वया देयं' 'दास्य' इति—तत्र भवत्येव दोषः। शपथे—विषयसप्तमी चेयं न निमित्तसप्तमी। तेन यस्यामेवैकाकिन्यां यथाप्यते तत्रोक्तरूपशपथे न दोषः। निमित्तसप्तम्यां तु निमित्ते परद्रव्यापहारे दोषः स्यात्। अतश्च 'कामाद्दशगुणं पूर्वम्' ( ८ । १२१ ) इत्यादिकं दण्डविधानं न युज्यते। तथापि निमित्तानन्तरकृते विवादेऽस्त्येव वृथाशपथदोषः। एवं सर्वत्र।

विवाहेषु । न त्वयाऽन्या वोढव्या न वाऽन्यो वोढव्य इति अन्यस्यापि सुहृदादेर्विवाहार्थमेवंविधमनृतमदोषः । न पुनर्जात्यपह्नवादौ ।

गवां भक्ष्ये । गवां यवससिद्ध्यर्थं मयाऽपहर्तव्यं—न मयाऽपहृतं परस्य चातत्संबन्धिभिरभिशक्तस्य वृथासाक्ष्ये शपमानस्य न दोषः ।

एवमिन्धने ।

ब्राह्मणानामभ्युपपत्तिरनुग्रहः । सर्ववर्णानुग्रहेऽनुज्ञातमेव । किमिह पुनर्वचनेन । केचिदाहुः—शपथो ब्राह्मणेऽनुज्ञायते, शूद्रादिषु त्वनृतमेव । एतच्च 'तद्धि सत्याद्विशिष्यते इति ( ८ । १०४ ) वचनान्नैतदनृतम् । अतो न भवति प्रतिषेधो ह्यसौ । वृथाशपथस्य पूर्वेण प्रतिषिद्धस्य प्रतिप्रसवशास्त्रमेतत् । तस्मात्सर्ववर्णानुग्रहे शपमानस्य न दोषः । किमर्थं तर्हीदमुच्यते । तत्र वधात्परित्राणमुक्तं सर्ववर्णविषयम् । अभ्युपपत्तिस्तु ब्राह्मणस्यैव । सा हि धनलाभादिना संभवति । सर्वतश्च परसंबन्धिनीषु क्रियास्वेवंविधासु शपथाभ्यनुज्ञानमुपायान्तरेण तत्सिद्ध्यसंभव एव द्रष्टव्यम् ॥ ११२ ॥

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ॥
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ११३ ॥

ननु च यद्यहमेवं कुर्यां तदिदमनिष्टमाप्नुयामिति संकीर्तनक्रिया शपथः, तं यः कारयेत्स शापयेदित्युच्यते । 'सत्येन शपे' सत्यादिनिबन्धनोऽयं 'धर्मो वा मे निष्फलः स्यादिति' । एवं चायुधानामपि करणत्वं वाहनानां च । एतैरात्मानं शपेत्—'एतानि निष्फलानि स्युरिति' ।

गोबीजकाञ्चनानि वैश्यो हस्तेन स्पर्शयित्वाऽभिशपेदेतानि वा मे निष्फलानि पूर्ववत् ।

शूद्रं सर्वैस्तु पातकैः । वक्ष्यमाणानि पातकानि मे स्युरिति शूद्रो वाच्यते ॥ ११३ ॥

अग्निं वाऽऽहारयेदेनमप्सु चैनं निमज्जयेत् ॥
पुत्रदारस्य वाऽप्येनं शिरांसि स्पर्शयेत्पृथक् ॥ ११४ ॥

अग्निमाहारयेदेनं हस्तेनाश्वत्थपर्णव्यवहितेन तयोः प्रदेशान्तरं सप्तपदसंहितमित्यादि स्मृत्यन्तरान्निपुणतोऽन्वेष्यम । पारंपर्यप्रसिद्धेश्चैतदेवोच्यते ।

अप्सु जले निमज्जयेत् प्राड्विवाक इत्यर्थः ।

पुत्रदारशिरांसि स्पर्शयेत् । पुत्रस्य दारस्य शिरः स्पर्शयेत्—हस्तेन, शपथाधिकाराद्वाचाऽपि, शपथस्यैवंरूपत्वादित्युक्तम् । पृथगेकैकस्य ॥ ११४ ॥

**यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ॥**
**न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥ ११५ ॥**

तप्तायसपिण्डोऽनवद्य गृहीतो न दहति । आपश्च नोर्ध्वं प्लावयन्ति, सत्यशपथे । केशादो न चार्तिमृच्छति पीडां न प्राप्नोति । रोगोऽग्निरित्यन्यत्रोक्तम् । स शुद्धः शुचिर्निर्दोषः । क्षिप्रम्—चतुर्दश वाऽहान्यवधिः स्मृत्यन्तरात् ॥ ११५ ॥

**वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ॥**
**नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः ॥ ११६ ॥**

कथं पुनरग्निर्न धक्ष्यति, आपो नोन्मज्जयिष्यन्ति । न हि महाभूतानि विपरियन्ति स्वभावतो चैतन्यादिति—पर्यनुयोगमाशङ्क्यार्थवादेनोक्तमर्थं दृढीकरोति । यद्यप्ययमन्वयव्यतिरेकसमधिगम्योऽर्थः प्रत्यक्षवेद्यो वा तथापि धूर्तकल्पितेन्द्रजालवद् भ्रान्तिवदत्र मुखविभीषिकासञ्जनमात्रफलं शपथं मन्यमानो वैदिकं निदर्शनमुपन्यसति भवन्ति प्रतिपत्तारोऽर्थागमेन पूर्ववृत्तदर्शनाद्दृढतां प्रतिपद्यन्ते ।

वत्सो नाम काण्व ऋषिरभवत् । स च कनीयसा वैमात्रेयेण भ्रात्राभिशस्त आक्रुष्टः—'न त्वमसि ब्राह्मणः शूद्रापुत्र' इति । स तं प्रत्युवाच—'सत्येनाग्निं प्रविशामि यदि न ब्राह्मण' इति । तस्येदमुक्तवतः प्रविष्टस्य नाग्निर्ददाह रोमापि । कथम् ? सत्येन हेतुना ।

कथमग्निः सत्यं जानातीति चेदत आह जगतः स्पशः गूढात्मा परकीयकृताकृतज्ञः 'स्पश' उच्यते । स च चारः प्रणिधिरिति च प्रसिद्धः । अग्निर्हि भगवान्सर्वभूतान्तरचारी कृताकृतानां वेदिता । तथा च छान्दोग्ये ताण्डके प्रयोगो देवासुरसेनयोरभ्यन्तरे गौतममाश्रयन्ति गौतममिन्द्रं द्रढयेत्तत्र चाह "इह नो भवान्स्पशश्चरत्विषेत्यादि" । अर्थवाचिनिदर्शनेऽपि पञ्चविंशब्राह्मणमुदाहार्यम्—'वत्सश्च ह वै मेधातिथिश्च काश्यपावास्ताम् । तं वत्सं मेधातिथिराक्रोशत् अब्राह्मणोऽसि इत्यादि तस्य हालमेववौषधम्' इति ।

ननु च चौरा अपि न दह्यन्ते। साधवोऽपि दह्यमाना दृश्यन्ते। तत्कथं शपथे आश्वासः।

उच्यते। न दृश्येन व्यभिचारेण व्यवस्थेयमपनेतुं शक्यते। कादाचित्कत्वाद्व्यभिचारस्य। प्रत्यक्षादिष्वपि प्रमाणेषु दृश्यत एव तादृशो व्यभिचारः। न च तानि न प्रमाणम्। अथ व्यभिचारवन्ति नैव प्रत्यक्षादिशब्दवाच्यानि—यद्व्यभिचरति न तत् प्रत्यक्षं, यत्प्रत्यक्षं न तद्व्यभिचरतीति वचनात्। इहापि शक्यते तद्वक्तुं—यद्व्यभिचरति नासौ शपथो यः शपथः स न व्यभिचरतीति। कः पुनः शपथः। यः समस्तेतिकर्तव्यतामात्राद्यपग्रहेण निरूपितकुहकः स्तंभनाभावः। विपरीतोऽशपथः। न तादृशस्य व्यभिचारोऽस्ति। अथापि स्यात्तत्रापि प्राक्कृतस्य कर्मणः फलविपाको भवति, निमित्तत्वात्। कृतापराधोऽपि पूर्वकृतेन गरीयसा शुभेन मुच्यते। अकृतापराधो जन्मान्तरदोषेण निगृह्यते। विचित्रा हि कर्मणां फलपाकाभिव्यक्तिहेतवः, सहस्रादेको मिथ्या गृह्यते, उत्सर्गतस्त्वमिथ्यात्वम्। पुत्रेष्टिकारीर्यादिष्वप्येतत्समानम्।

तस्मात्साक्षिवच्छपथेऽपि प्रत्येतव्यम्। तेऽपि हि कदाचिन्मिथ्यावदन्ति।

न भयप्रदर्शनमात्रमेतत्। रूढ्या शपथा उक्ताः सत्यं प्रतिष्ठत इति ॥ ११६ ॥

यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत्। ॥
तत्तत्कार्यं निवर्त्तेत कृतं चाप्यकृतं भवेत् ॥ ११७ ॥

यस्मिन्व्यवहारे कूटसाक्षिभिर्व्यवहारः कृतः स्यात्स निवर्तयितव्यः।

कृतं चाप्यकृतं भवेत्। गृहीतधनोऽप्युत्तमर्णः प्रतिपादयितव्यः, इतरो-दण्डो गृहीतोऽपि त्याज्यः। वाङ्मात्रेण जितस्त्वमसीति निश्चिते कार्यं निवर्तते इत्युच्यते। दण्डपर्यन्तं कृतमपीति विशेषः। वीप्सा श्लोकपूरणायाम् ॥ ११७ ॥

लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च ॥
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥ ११८ ॥

कौटसाक्ष्यं लोभादिनिमित्तम्। विषयकथनं दण्डविशेषमार्थम्। वितथमसत्यम्। सर्वत्र पञ्चमी हेत्वर्था ॥ ११८ ॥

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् ॥
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥ ११९ ॥
लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम् ॥
भयाद्द्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥ १२० ॥

लोभाद्यो वितथं वक्ति स सहस्रं दण्डनीय इत्येवं योजना कर्तव्या । तत्र यः परस्माद्धनमुपादाय विपरीतं वक्ति तस्य लोभो हेतुः ।

मोहात् । स्वभावतो यथार्थवादी यथादृष्टार्थवादी च केनचिच्चित्तसंक्षोभहेतुना प्रश्नकाले व्यामूढः सम्यक् प्रश्नार्थमनवधार्यास्मृतत्वाद्वाऽन्यथा ब्रूयात्स मोहादित्युच्यते ।

भयं त्रासः । यदि मदीयेन सत्यवचनेनायं जीयेत तत्रायं कदाचित् ज्ञातिधनादिबाधया मां व्यापादयेदित्याशङ्का ।

सहस्रमिति संख्येयविशेषावगतिर्वाक्यान्तरात्पणानामिति ।

पूर्वं तु साहसं प्रथमं 'पणानां द्वे शते सार्धे' ( श्लो० १३८ ) इत्यादौ ।

द्वौ मध्यमौ साहसाविति विपरिणामः ।

पूर्वं चतुर्गुणं सहस्रमेवेत्यर्थः । वृत्तानुरोधेन विचित्रया शब्दवृत्त्या स एवार्थः कथ्यते ॥ ११८—१२० ॥

कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् ॥
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥ १२१ ॥

मन्मथः कामः । यत्र स्त्रियो विवदन्ते तत्संबन्ध्यन्यतरां कामयमानोऽनृतं वदति अर्धतृतीयानि सहस्राणि दण्ड्यते । क्रोधात्त्रिगुणं परं प्रथमसाहसस्य प्रकृतत्वात्ततः परो मध्यः । सर्वान्ते लोकविज्ञानादिति वा उत्तम एव 'परः' । द्वेषः 'क्रोधः' । अज्ञानादिति । यो विपरीतं प्रथमं ब्रूयाद्भ्रान्त्या, नतु प्रश्नकाले । द्वे शते दमः । प्रदर्शनमेव विपरीतं नाभिधानम् । बालिश्यं बालभावः अप्राप्तव्यवहारता । ईषदपक्रान्तबालभावस्याप्राप्तबुद्धिस्थैर्यस्यायं बालिश्यदण्डोऽन्यस्य त्वसाक्षितैव ॥ १२१ ॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ॥
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥ १२२ ॥

उभयप्रयोजनो दण्ड इति दर्शयत्यवश्यानुष्ठेयत्वाय । शास्त्राचारनिरूढा व्यवस्था 'धर्मः' तस्य 'अव्यभिचारो' ऽनिवृत्तिरुच्यते ॥ १२२ ॥

कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ॥
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥ १२३ ॥

सकृदपराधानां पूर्वो दण्डः । अभ्यासात्प्रवर्तमानानां दण्डयित्वा प्रवासनं राष्ट्रान्निष्कासनं मरणं वाऽर्थशास्त्रे प्रयोगदर्शनात्तद्रूपत्वाच्च दण्डविधेः । ब्राह्मणं तु विवासयेत् । वाससोऽपहरणं विवासनं गृहभंगो वा । विवासं करोति तत्करोतीति णिचि णाविष्टवदिति टिलोपे रूपम् । त्रीन्वर्णानिति क्षत्रादयस्त्रयः, ब्राह्मणस्य दण्डान्तरविधानात् ॥ १२३ ॥

दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् ॥
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥ १२४ ॥

स्थानशब्दो विषयपर्यायः । एतैः प्रदेशैः पीडयितव्यः प्रत्यपराधम् । शब्देन ब्राह्मणस्य धनदण्डविधानादक्षतत्वोपदेशः शरीरपीडापरिहारार्थः कल्पते—सत्यपि धनस्य दशसङ्ख्यान्तर्भावे ।

वयं तु ब्रूमः—'समग्रधनमक्षत' मित्यत्र धनपीडाऽपि निषिद्धैव ब्राह्मणस्य । तस्माद्यः सकृत्कथंचिदपराद्धः श्रुतशीलाभिजनयुक्तस्तस्य धनदण्डोऽपि नास्ति । तथा च गौतमस्तादृशमेव ब्राह्मणमधिकृत्य 'द्वौ लोके धृतव्रतौ' इत्युपक्रम्य 'षड्भिः परिहार्यश्चेत्यादि' ( अ० ८ सू० १—१३ ) ॥ १२४ ॥

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ॥
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥ १२५ ॥

उपस्थं प्रजनधर्मः स्त्रीपुंसयोः । उद्देशमात्रमिदं विनियोगस्तूत्तरत्र भविष्यति । यत्र च दण्डविशेषो नाम्नातस्तत्र यो येनैवाङ्गेनापराद्धः स तत्रैव पीडयितव्यः । तत्रागम्यागमन उपस्थनिग्रहः । चौर्य उदरत आहारनिवृत्त्यादिना । वाग्दण्डपारुष्ये जिह्वाहस्तयोः । पादवलेन व्यक्तिक्रामन्पादयोः । विवृत्य विश्रब्धं

राजदारान्वीक्षमाणश्चक्षुषोः। अनुलेपनगन्धमाजिघ्रन्नासिकायाम्। रहसि राजानं मन्त्रयमाणं कुड्यपटान्तरित उपशृण्वन् कर्णयोः। धने प्रसिद्धो दण्डः। देहे मारणं महापातकिनः ॥ १२५ ॥

अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ॥
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥ १२६ ॥

उक्तानुक्तदण्ड्येष्वपराधेषु मातृकाश्लोकोऽयम्। एतदर्थानुसारेण सर्वत्र दण्डक्लृप्तिः कर्तव्या। तत्र पौनःपुन्येन प्रवृत्तिरनुबन्धः। प्रवृत्तिकरणं वा, अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि। तं परिज्ञाय। किमयमात्मकुटुम्बक्षुद्वसायेन धर्मतंत्रप्रसङ्गेन वा—अथ मद्यद्यूतादिशौण्डतया—तथा प्रमादाद्बुद्धिपूर्वं वा परप्रयुक्तस्वेच्छया वेत्यादिरनुबन्धः। देशो ग्रामारण्यगृहजलजन्मप्रसवभूम्यादिः। कालो नक्तं दिवादिः। सुभिक्षदुर्भिक्षबाल्ययौवनादि वा। सारः शक्त्यशक्ती आढ्यत्वदारिद्र्ये। अपराधोऽष्टादशानां पदानामन्यतमः। एतत्सर्वं पौर्वापर्येण निरूप्य तथा दण्डं पातयेत्कुर्याद्यथा स्थितिः सांसारिकी न भ्रश्यतीति ॥ १२६ ॥

अधर्मदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ॥
अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत् ॥ १२७ ॥

अधर्मप्रधानदण्डमधर्मदण्डनम्। पूर्वोक्तमनपेक्ष्येदं शास्त्रपाठमात्रेण राजेच्छया रागद्वेषादिभिर्वा। तद्यशोनाशकं कीर्तेश्च विच्छेदकम्। स्वदेशे गुणख्यातिर्यशः देशान्तरे कीर्तिः। जीवतो वा पूर्वकालिकं यशः उत्तरकालिकी कीर्तिः। निर्दोषगुणवतीकीर्तियशस्वी। अन्यो वा भेद उन्नेयोऽर्थवादत्वात्। अस्वर्ग्यं स्वर्गप्राप्तौ कर्मान्तरजन्यायां प्रतिबन्धकम्। परत्रापीति श्लोकपूरणार्थम्, स्वर्गस्यामुष्मिकत्त्वात् ॥ १२७ ॥

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ॥
अयशो महदाप्नोति नरकं चैव गच्छति ॥ १२८ ॥

पूर्वश्लोकोऽनुबन्धादिनिरूपणविधिशेषः। अनेन त्वनपराधानां दण्डनं प्रतिषिध्यते सापराधानां च विधीयते।

वृत्त्यर्थतां दण्डस्य मन्यमानोऽनुग्रहेणाहासीदिति ( अयशः ) ॥ १२८ ॥

**वाग्दण्डं प्रथम कुर्याद्धिग्दण्डं तदनन्तरम् ॥**
**तृतीयं धनदण्ड तु वधदण्डमतःपरम् ॥ १२९ ॥**

यो गुणवानीपत्प्रथममेवापराद्धः स वाचा निर्भर्त्स्यते 'न साधु कृतवानसि मा पुनरेवं कार्पीरिति'। तथा विनीयमाने यदि न निवर्तते 'कोऽत्रदोप' इति वा प्रतिजानीयात्तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते। ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः। तदप्यगणयन्नैश्वर्यादिना हंतव्यः। वधदण्डश्च ताडनाङ्गच्छेदनादि, न मरणमेव ॥ १२९ ॥ यत आह

**वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् ॥**
**तदैषु सर्वमप्येतत्प्रयुञ्जीत चतुष्टयम् ॥ १३० ॥**

मारणं चेद्वधः किं तदन्यद्यन्न शक्यते—कथं चैनं पापं निगृह्णीतेत्यादिपरुपवाक्यपूर्वं दुर्विनीतेपु धनदण्डवधौ समुच्चेतव्यौ। कृतेऽपि शरीरदण्डे यदि नावतिष्ठते ततो न कृतनिग्रह इत्युत्सृजेदपि तु स वधदण्डः कर्तव्यः। धनवधदण्डयोश्च पुनः प्रवृत्त्यर्थोऽयमारम्भः। वाग्दण्डे तु मृदुत्वात्कः पृच्छति। धनेन च निगृहीतस्य पुनर्वधो दृष्टो"ऽङ्गुलिग्रन्थिभेदस्येति" ( ९ । २७७ ) ॥ १३० ॥

**लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ॥**
**ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेपतः ॥ १३१ ॥**

ताम्रादीनां लिक्षादयः संज्ञा भुवि प्रसिद्धाः।

"किं शास्त्रपरिभापया। तत्र वृद्धव्यवहारो गवादिशब्दवत्" इत्यत आह लोकसंव्यवहारार्थम् अर्थशब्दो विपयवचनः। तेन व्यवहारप्रसिद्धिराश्रिता भवति।

"ततश्च गवादिशब्दतुल्यतया व्यवहारात् प्रसिद्धः—किं शास्त्रोपदेशेन"।

उच्यते। नियमार्थ उपदेशः। अन्येषामपि परिमेयानामयस्कांस्यसुवर्णादीनामेताः संज्ञाः सन्ति, तन्निवृत्त्यर्थः। क्वचिद्देशे परिमाणे भेदोऽप्यस्ति, तन्निवृत्त्यर्थश्च। क्वचित् संवन्धतया नियम्यते। तथा च क्वचिदष्टाचत्वारिंशता माषबन्धं क्वचिच्चतुःषष्ट्या क्वचित् साष्टेन शतेन तदेतत्सर्वं नियम्यते।

अथ चैवं संबन्धः क्रियते—या संज्ञा भुवि प्रथितास्ता लोकसंव्यवहारार्थं वक्ष्यामि। सर्वस्य लोकस्याभिरेव संव्यवहारो यथा स्याद्दण्डादिनियोगस्याप्यन्यथा प्रसिद्धिः ॥ १३१ ॥

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ॥
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ १३२ ॥

इमं श्लोकं केचिन्नाधीयते त्रसरेणौ विप्रतिपत्त्यभावात्। गवाक्षकुचिकाविवरप्रविष्टे सूर्ये यो रेणुर्दृश्यते स त्रसरेणुः। अन्तरशब्दो विवरपर्यायः। प्रथमं तत्प्रमाणानामिति ॥ १३२ ॥

त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ॥
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥ १३३ ॥

तत्रोपचितपरिमाणाः। न पुनरयं लिक्षाशब्दः स्वेदजक्षुद्रजन्तुवचनः। तास्तिस्रो लिक्षा एको राजसर्षपाख्यपरिमाणपदार्थः। एवं योजनीयम्। ततश्च ये व्यभिचारयन्ति न यथोक्तपरिमाणा यवादयोऽर्था इति ते निरस्ता भवन्ति। नहि यवादीनामर्थानां परिमाणम्। "कथं तर्हि यथोक्तपरिमाणार्थः। यथा चोपक्रान्तसंज्ञाः प्रवक्ष्यामि परिमाणमिति। त्रसरेणुश्चार्थो नियतपरिमाणस्तेनैतत्सर्वं निश्चेयम्। शक्नुवन्ति च निपुणास्त्रसरेणून् संहन्तुमिति नानारभ्यार्थोपदेशः। एतत्स्वर्णकाराभिमानसंख्यास्मृतिरूपं निर्बाधं भवति। तत एव वस्तु निपुणतोऽशेषतोऽवधारयितव्यम् ॥ १३३ ॥ ।

सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम् ॥
पञ्चकृष्णलिको माषस्ते सुवर्णस्तु षोडश ॥ १३४ ॥

"मध्यशब्दो भ्रान्तिहेतुः। परिमाणपरत्वे नात्यन्तमपचितो नातिस्थूलः सर्षपपरिमाण इति मध्यग्रहणमर्थवत्। संज्ञापरत्वे तु न किंचिन्मध्यशब्देन, यवशब्दसंज्ञात्वात्"।

तदसत्। नायं संदर्भो येन प्रत्यवयवं प्रयोजनमुच्यते। पद्यग्रन्थोऽयम्। तत्र गतार्थमपि वृत्तानुरोधात्किंचिदुच्यते। अस्ति चास्यान्वयः। अनन्विताभिधानं हि वाक्यार्थविरोधान्न प्रमाणम्। न चावगताभिधानमपि। परिमाणभेदांस्त्र-

सरेणुशतमानादीनाद्यन्तानपेक्ष्य मध्यपठितत्वान्मध्यो यवाख्यः परिमाणविशेषः।

पञ्चकृष्णला अस्मिन्सन्ति पञ्चकृष्णलिकः। "अत इनि ठनौ" इति ठन कर्त्तव्यः। 'पञ्चकृष्णलक' इति पाठे कवन्तो बहुव्रीहिः।

ते कृष्णलाः षोडश एकः सुवर्णः॥ १३४॥

**पलं सुवर्णाश्चत्वारः पलानि धरणं दश॥**
**द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः॥ १३५॥**

पलमिति संज्ञानिर्देशः। सुवर्णमिति संज्ञी। चत्वार इति विशेषणम्। धरणमिति संज्ञा। दश पलानीति संज्ञी। द्वे कृष्णले इति संज्ञा। रूप्यमाषक इति समुदायसंज्ञां मन्यन्ते।

"ननु रूप्यविषयमाषकनिर्देशे द्वे कृष्णले प्रतिपत्तव्ये इति प्रतिजानीते। ततश्चानिश्चयः।"

समधृते। तुलासूत्रके उन्मानादिहीने यदि धार्यते। प्रयोजनं मध्यशब्दवत्, यतोऽसमयाद्धार्यमाणतया परिमाणानिश्चयः॥ १३५॥

**ते षोडश स्याद्धरणं पुराणश्चैव राजतः॥**
**कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः॥ १३६॥**

षोडशरूप्यमाषका रूप्यस्य धरणं भवति। पुराण इति संज्ञान्तरम्। कार्षापणः पण इति च द्वे संज्ञे ताम्रकर्षस्य। कर्षाख्यश्च शब्दो लोकत एव प्रसिद्धार्थ इह गृह्यते व्यभिचारदर्शनासत्त्वेन न कृष्णलादिवत्परिभाष्यते॥ १३६॥

**धरणानि दश ज्ञेयः शतमानस्तु राजतः॥**
**चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः॥ १३७॥**

शतमान इति संज्ञा दशानां धरणानाम्। रजतशब्देन सुवर्णमप्युच्यते। तेन रूप्यसुवर्णयोरियं संज्ञा। सुवर्णस्य मानं तु शास्त्रान्तरात्परिमातव्यम्। तथा च विशेषयिष्यति शतमानं तु राजतमिति॥ १३७॥

**पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः॥**
**मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः॥ १३८॥**

मध्यम उत्तम इत्यत्र साहसपदानुषङ्गः कर्त्तव्यः। मध्यमोत्तमशब्दावत्र केवलावपि शास्त्रान्तरदृष्टौ—'आभ्यां दण्ड उत्तम' इति। तत्र शास्त्रसिद्ध्या साहचर्यात्साहसं प्रतीयते। अवयवाः स्पष्टाः ॥ १३८ ॥

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ॥
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥ १३९ ॥

यो राजसभायामानीतो धर्मेण ऋणं देयतया प्रतिजानीते सत्यमस्मै धारयामि स पञ्चकं शतमर्हति दण्डमिति शेषः। अनेन संकल्पितेन विंशतितमो भागो दण्ड्यते—'किमिति मत्सकाशमुत्तमर्णः प्रेषिता वहिरेव कस्मान्न परितोषित, इत्यतोऽनेन शास्त्रव्यतिक्रमेण दण्डमर्हति। यस्तु व्यतिक्रमान्तरं करोत्यपह्नुते—'नाहमस्मै धारयामीति'—स तैः प्रतिपादितस्तद्द्विगुणम्। तस्मात्पञ्चकाद्द्विगुणं दशकं शतमित्यर्थः। तन्मनोः प्रजापतेरनुशासनं सृष्टिकालप्रभृति व्यवस्था नीतिरिति यावत्।

अन्ये तु तच्छब्देन देयमेव प्रत्यवमृशन्ति। यावत्तस्मै देयं तद्द्विगुणम्। तेन यावदृणमित्यनेनैकवाक्यं भवति। अन्यथा वाक्यभेदः। विषयविशेषानिर्देशादेकविषयत्वे विकल्पः प्राप्नोति।

स च न युक्तो द्विगुणस्यात्यन्तबहुत्वात्। असत्यपि निर्देशे तस्य विषयो दर्शनं तस्य प्रत्यासन्नेषु पञ्चकमित्यर्थस्तस्यैवानुप्रत्यवमर्शो युक्तः ॥ १३९ ॥

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् ॥
अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ॥ १४० ॥

अशीतीति विधेयनिर्देशः। वसिष्ठविहितामित्यादिरर्थवादः। वसिष्ठो भगवान् त्रिकालज्ञो लोभादिदोषरहित इति तां वृद्धिं गृहीतवानत एषा प्रशस्ता। धनं तया वृद्धिमुपैति। न च लोभदोषोऽस्ति। सृजेत्प्रयुञ्जीत यदा धनं तदाऽधमर्णस्य तां वृद्धिं धनप्रयोगकाले निर्दिशेद्। सर्वद्रव्येषु वस्त्रधान्यहिरण्यादिष्वेतदेव वृद्धिपरिमाणम्। संख्येयपरमेयादिषु'रसस्याष्टगुणा वृद्धिः' इत्यादिप द्वैगुण्यापवाद इति वक्ष्यामः ॥ १४० ॥

द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ॥
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ॥ १४१ ॥

द्वौ वृद्धिरस्मिन् शते दीयते तद् द्विकं शतम् । द्विशता पूर्वयाऽजीवतो बहुकुटुम्बस्यायं द्विकशतविधिः । मासमनुवर्तते । सतामित्यादिरत्रायमर्थवादः सतां धर्ममिति । एषाऽपि वृद्धिः साधूनां धर्मः । नैतया साधुत्वं हीयते । नात्यन्तमर्थपर उच्यते तद्दर्शयति न भवत्यर्थकिल्बिषी । अन्यायेन परस्वग्रहणात्पापमर्थकिल्बिषं तदस्यास्तीत्यर्थकिल्बिषी ॥ १४१ ॥

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ॥
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ १४२ ॥

ब्राह्मणादिवर्णक्रमेण चतुर्णां वर्णानां सकाशाद्द्विकादयश्चत्वारः कल्पाः यथासङ्ख्यं न ग्राह्यतयाऽनुज्ञायन्ते । समम् । न पादेन वाऽर्धेन वाऽधिकम् । तदाधिक्येऽपि सपादद्विकं सार्द्धद्विकमिति द्विकादिव्यपदेशस्यानिवृत्तेराशङ्कानिवारणार्थं समग्रहणम् । यथा मात्रान्यत्वेऽपि संज्ञान्तरव्यपदेशं निवर्तयति । इदमपि पूर्वेणाजीवतः कल्पान्तरम् । यस्य वाऽल्पं धनं महते धर्माय गृहीतारश्च नातिधार्मिकास्तत्रायं विधिः । 'येऽसाधुभ्योऽर्थमादायेति' न्यायेन ।

समामिति पाठान्तरम् । संवत्सरं यावदेषा वृद्धिर्न परतोऽपि महत्त्वाद् द्वैगुण्यं स्यात् ॥ १४२ ॥

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ॥
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ॥ १४३ ॥

बहुधा प्रयोगः—गृहीत्वाऽऽधिमन्यथा च । आधिरपि द्विविधो—गोप्यो भोग्यश्च । भोग्योऽपि द्विविधः—समयाद्धुज्यमानभोगः स्वरूपतो वा । आधिर्दोग्ध्री गौः पिहितसुवर्णादि । तत्र भोग्यमाधिमधिकृत्येदमुच्यते न त्वेवाधौ सोपकार इति । विविधः सोपकारः—क्षीरिणी गौः क्षेत्रारामादि च । तस्मिन् भुज्यमाने । कुसीदे भवा कौसीदी अनन्तरोक्ता वृद्धिस्तां नाप्नुयात् । आधिं तु भुञ्जानो नान्यां वृद्धिं लभेत । गोप्येऽप्याधौ कालसंरोधाच्चिरमवस्थानाद् द्विगुणीभूतेऽप्यमोक्ष्यमाणे न निसर्गोऽस्ति न विक्रयः । अन्यत्र च विधिनाऽर्पणं निसर्गः । अन्यत्र संक्रामितं द्विगुणीभूतमपि पुनर्वर्धत एव । तथा च पठिष्यति 'सकृदाहृतेति' । विक्रयः

प्रसिद्धः । सोऽपि न कर्तव्यः । "किं तर्ह्यस्यामवस्थायां कर्तव्यम्" । तावदाधि भुञ्जीत यावद्द्विगुणं धनं प्रविष्टं ततो मोच्य आधिः । तदुत्पन्ने प्रविष्टे द्विगुणे धने भोग्यस्तावदेव, अभोग्यस्तदनन्तरम् । भोग्यस्त्वाधिः शान्तलाभस्तिष्ठत्येव यावदाधाता नागतः । यस्तु कथंचिद्धनिको दरिद्रतामुपगतस्तावन्मात्रशेषधनः स कश्चित्कालं प्रतीक्ष्य राजनि निवेद्य विक्रीणीत बन्धम्—ततो विक्रयादुत्पन्नं द्विगुणमात्मनो धनं गृहीत्वा शेषं मध्यस्थहस्ते ऋणिकसात्कुर्यात् ।

ननु च "आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्येत्" इति पठ्यते ( याज्ञ० २ । ५८ ) ।

एतदुत्तरत्र व्याख्यास्यामः । प्रणश्यत्वान्न पूर्वस्वामिनः स्वाम्यहानिः प्रयोक्तुश्च स्वत्वापत्तिः । यदि च निसर्गविक्रयौ न स्तः कीदृशमस्य स्वाम्यमुच्यते ? तस्मात्प्रतिषेधसामर्थ्येन प्रणाशवचनं प्रतिषिद्धभोगस्य भोगानुज्ञानार्थं व्याख्यायते । वस्त्रादिविषयं वा । तस्य हि भुज्यमानस्य प्रणाश एव । न क्षेत्रादेरिव तिष्ठतः स्वरूपात्प्रपच्यवमानस्य भोग्यता संभवति । तेनैतत्स्मृतिव्यवस्थायां व्याख्येयम् ।

गौणौ चात्र प्रणाशनिसर्गौ । विक्रयप्रतिषेधस्तु मुख्य एव । न ह्यसौ गौणतया प्रतिपत्तुं शक्यते । एतदेव प्रस्तुत्य "न स्यातां विक्रयाधीने" इति स्मृत्यन्तरे पठितम् । अत इह निसर्गोऽन्यत्राधानम् विक्रयसाहचर्यात् । सदृशौ हि तौ केनचिदंशेन ॥ १४३ ॥

**न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ॥**
**मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ १४४ ॥**

"ननु च प्रागप्येतदुक्तं 'न त्वेवाधाविति ( १४३ )" ।

सत्यम् । यत्र यावत्येव वृद्धिस्तावानेव भोगः स पूर्वस्य विषयः । यत्र तु महती वृद्धिः स्वल्पोपभोगश्चेद्बलादिना भुञ्जानस्य सर्वेण सर्ववृद्धिहानिः । यत्र क्षेत्रगवादिर्बन्धस्तद्भोगश्च न वृद्धिसम्मितः स चोपचितामपि वृद्धिं न ददाति, न च बन्धनं द्विगुणं, तत्र कयाचिदतिमत्यात्यन्तमुक्तैव वृद्धिर्निश्चेतव्या ।

यदि तु वस्त्रादि भुज्यमानं नश्येत्तत्र मूल्येन तोषयेदेनम् आधातारम् । इतरोऽपि वृद्धिं लभते । अतोऽन्यथाऽददन्मूल्यमाधिस्तेनो भवेत् । यज्जातीयमाधिं भुक्तवांस्तदपहारे यो दण्डः स एव दाप्यः । स्तेनश्चौरः ।

अन्ये व्याचक्षते । वलाद्भुक्ते वृद्धिहानिः । भुञ्जीत तन्मूल्यत एव वा । यद्दणिकस्य मूल्यं मूल्यहिरण्यम् । यत्र भुञ्जान उच्यते 'मा मे वन्थं विनीनशो मा भुङ्क्ष्व कतिपयैरहोभिर्मोक्षयामि' तथाऽप्युच्यमानो भुङ्क्त एवेति सोऽस्य विषयः ॥ १४४ ॥

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ॥
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥ १४५ ॥

आधिरुक्तार्थः । प्रीत्या भुज्यमान उपनिधिस्तु शास्त्रान्तरवदन्तर्हितो न्यासः । तौ चिरकालं न स्थाप्यौ । किं तर्हि ? प्राप्ते काले मोक्षणीयौ । आधेर्मोक्षणकाले द्विगुणीभूतं धनम् । तस्यातिक्रमस्तस्मिन्नपि कालेऽमोक्षणम् । उपनिधिरपि यावता कालेन नास्यावसरो भवति मदीयमेवैतद्भोक्ताऽहमिति स प्रत्याहरणकालः । ततोऽधिकः कालः कालात्ययः । तं नार्हतः स न कर्तव्य इत्यर्थः । हेतुमाह । अवहार्यौ भवेतां ताविति । तौ हि दीर्घकालमवस्थिता वप्रत्याह्रीयमाणौ अवहार्याविति स्थितम् । तस्माद्द्विगुणीभूतधनेऽधिमोक्षणे प्रयतितव्यम् । सुहृदुपदेशोऽयं न त्वेवाध्युपनिध्योर्भूयसाऽपि कालेनापहारः । यतो वक्ष्यति—"आधिसीमावालधनमिति" ( १४६ ) । अतस्तस्यायमनुवादः ।

अन्ये त्वाधिविषयमुपदेशमिच्छन्ति । यो द्वेषेण द्विगुणीभूते धने कालं क्षपयति, तत्त्रिलाभं धनं नाधिकं वर्द्धते, न चास्याधुनाऽन्यत्राधानविक्रयौ स्तः, इह वृद्धिमयं मा लभतामित्यनेन मात्सर्येण—तत्रेदमुच्यते अवहार्यौ भवेतां ताविति । अनया बुद्ध्याऽमोक्षयतः स्वाम्यमस्य निवर्तते । यस्तु कथंचिदसति धने न मोक्षयति तस्य निसर्गविक्रयौ न स्त इति । अथवाऽपरोऽर्थो मुखेनोपेक्षयति—परहस्तगतया शङ्कयोच्यते अवहार्यौ भवेतामिति ॥ १४५ ॥

संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ॥
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ १४६ ॥

प्रीतिरेव संप्रीतिः । तया हेतुभूतयोपभुज्यन्ते धेन्वादयस्ते न नश्यन्ति । पूर्वस्वामिसंवन्धहान्या भोक्तुः स्वत्वापत्ति'र्नाशः' स धेन्वादीनां प्रीत्या भुज्यमानानां न भवति ।

"ननु च सर्वस्यैवोपनिधेर्भोगेनापहारो नास्ति। वक्ष्यति 'निक्षेपोपनिधिस्त्रिय' इति ( १४९ )। को विशेषो धेन्वादीनाम्"।

उच्यते। यत्र दशवर्षो भोगो न च स्वरूपनाशस्तत्र 'यत्किंचिदिति' ( १४७ ) सामान्यवचनेन प्राप्तेऽपहारे उपनिधेः प्रतिषेधः। धेन्वादीनां तूपनिधित्वमेव नास्त्यतः प्रतिषेधस्य नायं विषय इति स्यादाशङ्का। धाननिमित्तो हि धेनुशब्दो यदि परसंवत्सरे धेनुः स्यात् परत उपसर्या यदि गर्भमादध्याद्धेनुत्वमापद्येत तदा जनयेदाशङ्कामस्यैवेयं न देवदत्तस्य। यतः प्रष्ठौही न भोग्या प्रीतिसंभोग्यश्चोपनिधिः। येन स्वकैर्भोग्यं परिपाल्य पुनर्भुज्यमानं दृष्टम्। न पुनरुपनिधेरेतद्रूपम्। भोग्यो ह्युपनिधिः। असद्भावाद्भोगस्य च कीदृशगुणमुपनिधित्वम्। उपनिधेश्चासौ प्रतिषेधः। तस्मादुपनिधिरूपातिक्रमादसति तस्मिन्प्रतिषेधे यत्नान्तरमुक्तम्।

उष्ट्रादीनामपि दशवर्षाणि भुज्यमानानामवस्थान्तरापत्तिः। अतस्तत्रापि नोपनिधित्वम्।

वहन्निति केचिदश्वविशेषणं मन्यन्ते। वृषस्य नायं विधिः। अपरे तु गर्दभाश्वतरार्थं मन्यन्ते। दम्यो बलीवर्दः। प्रयुज्यते वाहनार्थं यो दीयते।

अन्ये तु पुनः प्रतिषेधं विकल्पार्थं मन्यन्ते। एतद्व्यतिरेकेणान्यस्योपनिधेरस्ति कादाचित्कोऽपहारः। तेन यद्वस्त्रादि प्रीत्या भुज्यते तच्च परिक्षीणं तत्रास्त्येवापहारः न हि प्रीत्या गृहीते वस्त्रे परिक्षीणे स्वामिनोपेक्ष्यते पुनरवसरोऽस्ति देहि मे वस्त्रं विनाशितं त्वया तत्समेन मूल्येन संशोधयेति ॥ १४६ ॥

**यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ॥**

**भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ १४७ ॥**

यत्किंचिद्भुज्यमानमिति व्यवहितेन संबन्धः। धनीति सन्निधानात्सामान्यनिर्देशेऽपि भुज्यमानधनोपेक्षणं प्रतीयते। यत्किंचिदिति दासीदासासारभाण्डादि सर्वं ग्राहयति। न हि तल्लोकेऽत्यन्तं धनमिति प्रसिद्धं गोभूहिरण्याद्येव महार्घं धनमिति प्रसिद्धतरम्। तेनायमत्र वाक्यार्थः। यत्किंचिद्द्रव्यं परेण भुज्यमानं धनी धनस्वामी दशवर्षाणि यावत्प्रेक्षते—न किंचिद्वक्ति, न राजनि व्यवहरति, न कुलसमक्षं भोक्तारं वदति 'मदीयमेतत्किमिति त्वया स्वयं भुज्यत' इति—स दशभ्यो वर्षेभ्य उत्तरकालं न तल्लब्धुं स्वीकर्तुमर्हति। निवर्ततेऽस्य स्वमिति यावत्। प्रेक्षणेन ज्ञेयतामात्रमुच्यते न प्रत्यक्षतैव। संनिधाविति वक्ष्यामः।

परैः—न ज्ञातिसंबन्धिभिः। तथा च स्मृत्यन्तरं—'ज्ञातिसंबन्धिभिर्विना' इति॥ "संबन्धिबान्धवैश्चैव भुक्तं यज्ज्ञातिभिस्तथा। न तद्भोगो निवर्तेत भोगमन्यत्रकल्पयेत्॥"

तदयुक्तम्। अव्यवस्थैवं सति स्यात्। के ज्ञातयः के वा संबन्धिन इति संबन्धमात्रग्रहणे न किंचिद्व्यावर्त्यम्। तस्माद्येनान्यदायं भुज्यते स एवं भवति। किन्तु तथा सति परशब्दोनुवादमात्रमनर्थः, कस्यापि न परव्यपदेशः। स निरस्यते। यथा भार्यापती पितापुत्राविति। तत्र ह्यात्मन्यपि व्यपदेशोऽस्ति "अर्द्धो ह वा एष आत्मनो यज्जाया"—"आत्मा वै पुत्र नामासि" इति। तेन दम्पत्योः पितृपुत्रयोर्न भोगाभोगौ कारणम्। तेषामपि विभक्तधनानां भोगकाले प्राप्तेऽभोगो बाधक एव। भार्याया अपि स्त्रीधने भर्तृसकाशाद्गृहीते बन्धेन पत्युर्भोगे नासिद्धिः। सा ह्यत्यन्तपरवती। नोभयोर्विभागोऽस्ति। स्त्रीधनमपि तेनैव तस्याः परिपालनीयम्। 'राजा स्त्रीश्रोत्रियद्रव्यादन्यत्र' इति च पठ्यते।

एवमनेन स्वामिन उपेक्षमाणस्य स्वाम्यहानिरुक्ता॥ १४७॥

कस्य तर्हि तत्संभवतीत्येवमर्थमुत्तरश्लोकः

**अजडश्चेदपोगण्डो विषये चास्य भुज्यते॥**

**भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति॥ १४८॥**

न स तल्लब्धुमर्हतीत्यस्य शेषः। अजडश्चेदपोगण्ड इति। जडः अप्रतिपत्तिमान्। पोगण्डो बालः। प्राक्षोडशाद्बालः पोगण्ड इत्युच्यते। एतच्च स्वधनसंरक्षणासामर्थ्यकारणानामन्येषामप्युपलक्षणार्थम्। मद्यद्यूतविपक्तता दीर्घरोगगृहीतता तपःस्वाध्यायैकपरत्वं व्यवहारेष्वनैपुण्यं वागिन्द्रियाभावो बाधिर्यम्। यस्यैतेऽसामर्थ्यहेतवः सन्ति न तदीये धने भोक्तुर्बहुतरेणापि कालेन स्वत्वमापद्यते।

विषये चास्य भुज्यते। अस्येति धनिनः प्रत्यवमर्शः। विषयः काश्मीराणां काश्मीरः, पञ्चालानां च पञ्चालः। यदि भोक्ता च स्वामी चैकस्मिन्नेव देशे वसेत्तथापि शक्तिविहीनस्यायं व्यवहारः।

अत्रापि व्याख्याने प्रपञ्च एवायम्। अजडापोगण्डग्रहणस्य प्रदर्शनार्थतया व्याख्यातत्वात्। तेन यस्य जानतो यदुपेक्षाकारणं न संभाव्यते तदीयं धनं दशवर्षाणि भुञ्जानो भोक्तैवार्हति—तस्य तत्स्वमित्यवगन्तव्यम्।

ननु च न भोगात्स्वत्वं युक्तम्। स्वत्वे सती भोगो युक्तः। भोगाद्धि स्वत्वेऽव्यवस्था स्यात्। यश्चायमवधिर्दशवर्षाणीति स स्मृत्यन्तरेण न सर्वस्मिन्धन इष्यते। किं तर्हि? "पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी" इति (याज्ञ० व्य० २४)। अन्ये तु विंशतिवार्षिकेणापि भोगेन स्वाम्यमनुमन्यन्ते। एवं ह्याहुः "अनागमं च यो भुङ्क्ते बहुन्यब्दशतान्यपि।" (नारद ८७। ७०) तथा "संभोगो यत्र दृश्येत न दृश्येतागमः क्वचित्। आगमः कारणं तत्र न संभोग इति स्थितिः॥" (नारद ८४)

त्रिपुरुषभुक्तिवादिनस्तावदेवं पठन्ति (नारदीये १।९१)

"यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्। न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्॥"

अस्यायमर्थः। आगमो दानादिः। असति तस्मिन्यद्भुक्तं पितृपितामहप्रपितामहैस्तच्चतुर्थस्य सिध्यति, न तु विंशत्या वर्षैः तत्रान्यत्रोक्तम्।

"आदौ तु कारणं दानं मध्ये भुक्तिस्तुसागमा। अन्ते तु भुक्तिरेवैका प्रमाणं स्थावरे भवेत्॥"

तृतीयस्य भोगात्सिद्धिर्न प्रथमद्वितीययोः पितृपितामहयोः। अस्यापि न विंशतिवर्षैर्भोगः प्रमाणम्। अन्ये त्वागमरहितस्य वार्षशतिकस्यापि भोगस्याप्रामाण्यमनुमन्यन्ते। तथा चाहुः

"अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः॥"

"भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित्। आगमः कारणं तत्र न संभोग इति स्थितिः॥"

(नारद ८७, ८९, ८४)

या तु बहून्यब्दशतानीति तदाहर्तुर्विषयमात्मीयमेव भोगं चिरकालत्वे हेतुमाह। तस्य पितृपितामहभोगेन विना न सिद्ध्यतीत्यर्थः। "कथं पुनरेकस्यानेकाब्दशतो भोगः पुरुषस्य"। नैष दोषः। चिरकालप्रतिपादनपरा बहुत्ववचनाः शतं सहस्रमित्यादयः शब्दाः। यथा "शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय" इति। एतदुक्तं भवति। विंशतिवार्षिकाद्भोगादधिकादपि न प्रथमभोक्तुर्भोगात्स्वत्वसिद्धिः। अर्थात् पुत्रस्यापि न सिद्ध्यतीति यथाश्रुतमेव। न हि बहुष्वब्दशतेष्वागमस्मरणं संभवति। ततश्च चिरन्तनदेवायतनब्राह्मणमठग्रामा राजभिरपह्रियेरन्। लेख्यशासनमपि राजाधिकृतलेखकलिखितमिति चिरन्तनेषु नैवप्रत्यभिज्ञायेत्। कूटशासनमपि संभाव्येत। तस्माच्चिरन्तनो भोगः स्वत्वस्य दानाद्यागमसंभावनामा

ज्ञापको हेतुर्न तु कारकः । अत एव भुक्तिः प्रमाणमध्ये पठिता ॥ "लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्" इति ( नारद ६६ ) । न तु स्वत्वकारणमध्ये "सप्तवित्तागमा इति" ( मनु १० । ११५ ) "श्रुतशौर्यतपःकन्या" इत्यादौ च ।

अथवा यत्र वलादि भोगकारणं संभाव्यते तद्विषयमेतत् 'अनागममित्यादि' अत्रैव प्रकरणे पठितम् ( नारद० ८७ ) ।

"अन्वाहितं हृतं न्यस्तं वलावष्टब्धयाचितम् ।

अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥" इति । ( नारद० ६२ )

ननु च 'आधिः सीमा' इत्यनेनैवायमर्थः सिद्धः ।

उक्तस्य कालस्य त्रिपुरुषं यावद्भुङ्क्ते स एवार्थः । अयं तु तत उत्तरकालमपि निवृत्त्यर्थमारभते । तथा च वहून्यब्दशतानीत्यत्र वचनम् । 'अन्वाहितं' यत्प्रकटमन्यथा प्रदर्श्यान्तर्हितमन्यदवस्थाप्यते । 'हृतं' रात्रौ सन्धिभेदच्छलादिना । 'वलावष्टब्धं, प्रसह्येति शेषः । शिष्टं प्रसिद्धम् ।

"यदि त्रिपुरुषा भुक्तिः प्रमाणं कस्तर्हि 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशति-वार्षिकी' इत्यस्यार्थः ?"

केचिदाहुः । कियन्तं कालं भुञ्जानस्य सति लेख्यदोषादौ सक्ताभियुक्तादि-कृतत्वं क्रमाक्षरविलेपादसत्यनयाभ्यामधमर्ण उच्यते । संदिग्धरूपमपि लेख्यमियता भोगकालेन निश्चीयते ।

अन्ये त्वाहुः—यत्रैव तामेव भूमिमेकस्य वन्धायार्पयति तामेव चापरस्यैकस्याऽऽद्यं प्रमाणमपरस्य पाश्चात्यं—तत्र सत्यपि प्रामाण्यस्याद्यत्वे पाश्चात्यो विंशतिवार्षिको भोगो वलवान् ।

एतच्चायुक्तम् । येनैव स्वीकृतो वन्धस्तथैव सः—'आधेः स्वीकरणात्सिद्धिः' इति वचनात् । स्वीकारश्च भूमेर्भोगाभिलापैव । तेनेदृशे विषये स्वल्पेनापि कालेन वन्धसिद्धिः । एतदेवाभिप्रेत्योक्तम् ।

"विद्यामानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।

विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम् ॥" इति । ( नारद० ७७ )

विशेषग्रहणं गवाश्वादावभुज्यमानेऽपि नासिद्धिर्यतस्ते नावश्यंभोग्याः । तथाहि

भवेद्गौर्गर्भं न गृह्णाति कीदृशोऽस्या अतो भोगः। भूमिस्तु सर्वदा फलदेति भोगलाभमन्तरेण न वन्धत्वसिद्धिः ।

तत्रापि कथंचिदुपेक्ष्यमाणस्य तु यच्छतः प्रथमभोगकाल एव यदि द्वितीयेनाऽऽधिग्राहकेण संनिकर्षादिना स्वीकृतः स्यादितरेण वाद्यप्रमाणवता देशविप्रकर्षात्कार्यत्र्यासङ्गाद्वा न स्वीकृतस्तदा विचार्यते नेयता तदसिद्धिः। यदा तु गृहीताधिरेव समनन्तरं राज्ञा प्रव्राजितो महान्तं व्याधिमाससाद न वाऽस्यान्योर्थरक्षाद्यधिकृतः कश्चिदस्ति स चिरेणाप्यागतः सिद्धावपि निरुपधिप्रमाणकाले लभत एव स्वीकृतमप्यन्येन ।

अन्ये तु भ्रातृणां न्यूनाधिकविभक्तानां पुनर्विभागः समीकरणार्थ उक्तः। स विंशतिवर्षेभ्य ऊर्ध्वं नास्तीत्येवमर्थमिदमाहुः। एतावन्मात्रफलत्वे तत्रैवाभिधानमुचितम्। सामान्याभिधानं तु प्रकरणोत्कर्षेणान्यविपयतामपि ज्ञापयति ।

अपरे तु—"खिलीभूता भूमिर्येन क्षेत्रीकृता तत्र भूमिस्थानोपभोग उक्तः। स चेदेतावन्ति वर्षाणि निगृहीतस्तथा सूत्रक्षेत्रयन्त्रैश्च स्वामी भूमित्वेन स च विपय" इत्येवमाहुः ।

इह भवन्तस्त्वाहुर्यौ समानदेशौ समानसामर्थ्यौ समानस्वभावौ समानधनौ तुल्यप्रयोजनावपरस्परसम्बन्धिनौ तयोरन्यतरस्येतरेण भुज्यमानमियन्तमवधिं समक्षमुपेक्षमाणस्यास्य नैव स्थावरेषु स्वाम्यम्। किन्तु त्रिपुरुपभुक्तिविरोधात् सर्वेण सर्वम्। विरुद्धे ह्येते स्मृती। ते न किमपि कल्पनमर्हतः येनास्ति च स्वाम्यं नास्ति चेत्। किंचिद्युज्यते तत एव व्यवस्था युक्ता ।

यद्यपि स्वत्वागमकारणानि वहूनि सन्ति दानविक्रयवन्धकारणादीनि तथाऽप्यनुपलभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविपये वन्धरूपताऽभ्युपगन्तुं युक्ता। चञ्चलं भोग्यं च स्वत्वम्। वस्त्वपचये तत्प्रत्याहर्तुं लभ्यते। ततश्च त्रिपुरुपा भुक्तिः सर्वस्य स्वत्वमापादयति। दानविक्रयसंभावना च यावत्येव सा वार्षिकी भविष्यति। विंशतिवार्षिके भोगे न किंचिदनुपपन्ना ।

यत्रोभावप्यागमन्तरेण भोगमात्रवलात्प्रवृत्तौ तत्र पूर्वो भोगश्चिरन्तनोऽपि विंशतिवर्षभोग्येन सांप्रतिकेन निरुपाधिना वाध्यते। दण्डपूर्विकयाऽऽगत इयत्कालो भोगः त्रिपुरुपागताया भुक्तेर्वाधक इत्युक्तं भवति ।

भग्नं तद्व्यवहारेणेति। व्यवहारग्रहणं धर्मनिवृत्त्यर्थम्। तेन यदि कथंचिज्जानीते तदा जीयेत। तथापि त्वनेनोपनिधिभोगज्ञापने प्रमाणं नास्ति, तेन व्यवहरतो जीयन्ते तद्धर्मो नास्ति। तादृशेन भोगेनापि हृत इति तिष्ठत्वेतत्।

आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ॥
राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति ॥ १४९ ॥

आधीयत इत्याधिर्बन्धकद्रव्यं गोभूहिरण्याद्युच्यते। यच्चोत्तमर्णाद्धनमादीयते। उपनिधिः शास्त्रान्तरेणान्तर्हितो न्यास उक्तः। यदप्रदर्शितरूपं सचिह्नवस्त्रादिना पिहितं निक्षिप्यते। प्रीतिभोग्यं तु युक्तमुपनिधिशब्दवाच्यम्। तस्य निक्षेप-ग्रहणेननैव गृहीतत्वात्।

सीमा मर्यादा ग्रामादीनाम्। बहुसाधारण्याद्धि तत्रोपेक्षा संभवति। गृहादीनां तु प्राकारपरिखादिरूपा द्वित्रिहस्तपरिमाणरूपा द्वयोः साधारणी याऽन्यतरे कथंचिदुपजीर्यमाणा स्वल्पत्वाद्भोगश्च कश्चित्कियन्तं कालमुपेक्ष्येतापि। तत्रापि दानादिस्वत्वापगमहेतुं संभावयतः। अतस्तत्पुत्राः पौत्रा वा गूढचिह्नादिना प्रज्ञापितसीमत्वादाच्छिन्दन्त्येव।

बालधनं दृष्टान्तार्थं पोगण्डशब्दस्य दर्शितत्वादित्युक्तम्।

स्त्रियो दास्यः भार्या वा। नेतरस्याधनस्यापहार उक्तो 'धनस्य दश-वार्षिकी' इति।

"ननु च नेह धनमस्ति, यत्किंचिदिति वस्तुमात्रनिर्देशोऽयम्"।

नैवम्। धनीति सम्बन्धेन धनविषयतैव यत्किंचिदिति सामान्यशब्दस्य प्रतीयते। क एवमाह स्त्रियो न धनमिति। इत्थं विनियोज्ये द्रव्ये धनशब्दो वर्तते। अथास्मादेव स्त्रीधनात्स्वत्वमात्रोपलक्षणम्। धनोपमानेन पुमांसोऽपि भोगेन दासाः स्वीक्रियन्त एव।

राजस्वम्। देशेश्वरा राजानस्तेषां धनम्। ते हि महाधनत्वादुच्चत्वान्वयं धनमनन्विच्छन्तो विरुतभेदादिभिर्निधनीक्रियन्ते।

तदूनापेक्षया श्रोत्रियद्रव्यं श्रोत्रियधनाभियुक्तिः ॥ १४९ ॥

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः ॥
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥ १५० ॥

उक्तं 'न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्' इति ( १४४ )। सर्वस्य हि ग्रहणमुच्यते। तत्र निषिद्धे भोगे बलादाधि भुञ्जानो सर्वां हारयत्येव वृद्धिम्। अननुज्ञाते प्रतिषेधनम्। रहस्युपभुज्यमानभोगे न चाधिर्नश्यति तत्र रूप्यसुवर्णालङ्कारादावर्द्धवृद्धित्यागोऽनेन श्लोकेनोच्यते।

यत्तु नवं महार्घमलङ्करणवस्त्रादि परिधीयमानं नाशितं तत्र न केवलं वृद्धिहानिः, यावद्धनं नष्टं तत्परिपीड्य मूलतः प्रविशतीति महत्तरैर्व्याख्यातम्। यज्वना तु व्याख्यातम्—यत्र स्वामी व्यवहरति अध्यधीनश्च, तत्राध्यधीनेन बन्धो दत्तः, स्वामिना च दृष्टः, तत्र धारणकेन कस्मिंश्चिदवसरेऽध्यधीनः पृष्टः 'प्रयोजनं ममानेन बन्धेनास्ति' तत्रोपनिधिन्यायेन तेनानुज्ञातः कालान्तरे भुञ्जानं यदि स्वामी पश्यंस्तदनुज्ञातं बन्धं क्षपितवान्—सतीदृशे विषयेऽर्द्धवृद्धित्यागः।

तदयुक्तम्। यतस्तुल्यो व्यवहारः परस्परापेक्षः स्वामिभृत्ययोः। तत्र तत्रान्यतरेणानुज्ञाते नायमननुज्ञातः प्रयुज्यतेऽधर्मतः। स्वामिशब्दस्यार्थे स्वत्वमीदृशि विषये भवति। अन्यथा बन्धं यो ददाति सोऽवश्यं स्वाम्येन युक्तः।

"अध्यधीनस्तु न स्वामी।"

यद्येवं चौरस्तर्हि। तस्मात्स्वामित्वाध्यारोपः। उपयोगे वाऽध्यधीने स्वाम्यनुज्ञाव्यवहाराद्ब्रह्मदत्तवत्। अतः पूर्व एवार्थः।

स्वामिग्रहणं पादपूरणार्थम्।

भुङ्क्तेऽविचक्षण इत्यकारः संहितया प्रश्लिष्टनिर्दिष्टो वेदितव्यः। यस्य ह्यस्ति वुद्धिः 'वृद्धिर्ममास्येवाधिको लाभो वस्तुभोग इति' सोऽविचक्षणः। न हि लोकशास्त्रनियोजनीया स्थितिः यदुभौ लाभश्च भोगश्च वृद्धिः स्यात् तेन सा वृद्धिर्भोक्तव्या।

निष्कृतिः परशुद्धिर्विनिमय इति यावत्।

अन्ये तु द्विगुणीभूतेऽप्यमोक्ष्यमाणे प्रतिषेधनमिच्छन्ति—तस्य हि स्वल्पोऽपराध इति वदन्तः।

प्रथमं तावदादावेव तैर्याज्ञवल्क्यवचनस्य विषयो देय 'आधिः प्रणश्येदिति' ( व्य० ५८ ) ॥ १५० ॥

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता ॥
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ १५१ ॥

लाभार्थो धनप्रयोगः कुसीदम् । तत्र वृद्धिः । अथवा । प्रयुज्यमानं प्रयोक्तृसम्बन्धिधनमेव कुसीदम् । यदीयं स्वल्पं दत्त्वाऽधिकं ग्रहीष्यामीति धनं दीयते तत्कुसीदम् । तत्र वृद्धिः । सा द्विगुणत्वं नातिक्रामति । तावदुत्तमर्णेन वृद्ध्यर्थं धनं दत्तवताऽधमर्णाद् ग्रहीतव्यं यावन्मूलधनं द्विगुणं प्रविष्टम् ।

"ननु वृद्धेर्द्वैगुण्यं श्रूयते । मूलेन सह त्रिगुणं प्राप्नोति"

नैवम् । 'गुणो'ऽवयव उच्यते । स तावदवयविनमपेक्षते । प्रकृतं च धनम् । अतः प्रयोगविषयस्य धनस्यानेन प्रकारेण द्वैगुण्यमुक्तं भवति । तथा च स्मृत्यन्तरं 'चिरस्थाने द्वैगुण्यं प्रयोगस्य' ( गौतम १२।३१ ) "मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने" इति ( याज्ञ० व्य० ६४ ) ।

वृद्धिश्चानेकरूपा । कार्षापणेषु प्रयुक्तेषु कार्षापण एव वर्द्धते । क्वचित्सन्ततिः— 'स्त्रीपशूनां वेति' संततिः । क्वचिदाधिभोगः, गोभूम्यादेः ।

तत्रेदं द्वैगुण्यं सरूपवृद्धिविषयं केचिदाहुः । तत्र हि मुख्यं वृद्धेर्द्वैगुण्यं प्रतीयते । संततौ न विज्ञायते किं सङ्ख्ययाऽस्याद्वैगुण्यमुत परिमाणेनोत मानतो वेयम् अतो वेत्याद्यनिश्चयः । पशूनां मूल्याद्धि महार्घत्वं हस्त्यश्वादिषु क्रयविक्रयादौ दृश्यत एव । महाप्रमाणा हि महार्घा भवन्ति ।

"ननु च संततौ सारूप्यमस्त्येव । गोः संततिर्गौरेव । तत्र भेदोपन्यासो न युक्तो वृद्धिः सरूपा संततिश्चेति ।"

उच्यते । नैकजातीयत्वमात्रेण सारूप्यं भवति, किन्तु वयःपरिमाणादिसाम्येन । अतो युक्तो भेदोपन्यासः । भोगलाभेऽपि कुतो द्वैगुण्यप्रतीतिः । उपकारकाणि जनयितुं गावः प्रयुज्यन्ते । गोभूम्यादि पयोयवसादयो यथासंभवं भुज्यन्ते । तत्र कीदृशं द्वैगुण्यम् । समाचारश्च क्वचिद्दृश्यते । वर्षशतानि भूमिरामूलहिरण्यादानाद्भुज्यते । पठति च याज्ञवल्क्यः "आधिश्च भुज्यते तावद्यावत्तन्न प्रदीयते" ( व्य० ६० ) इति ।

अत्रोच्यते । वृद्धिमात्रे श्रूयमाणे द्वैगुण्यं कथं विशेषेऽवस्थाप्यते । न हि श्रुत्या सामान्यप्रतिपत्तिर्भवन्ती विना प्रमाणेन विशेषेऽवस्थातुमर्हति । यत्तु संततावनुपपन्नं द्वैगुण्यमित्यवगमे यत्नः क्रियताम् । मूलमर्घेण परिनिश्चितवता वृद्धिस्तत्सामान्या एव तज्जातानां भवति । भूमिभोगेऽपि यवसगोधूमादौ तत्पच्यमानस्यार्घतः शक्यत

एव समत्वं निश्चेतुम् । उपकारवचनोऽपि गुणशब्दोऽस्ति । "क एवं सति समगुणो भवति क उपकारको भवतीति कथं गम्यते ।" अनेन यावन्मूल्यं गोधान्यविनिमयादुत्पद्यते तावदेव चेत्तत उत्पन्ना वृद्धिस्तदा भवति समगुणत्वम्—परिमाणादिसाम्याभावेऽपि । यस्तु कचित्समाचारः—भवतैव परिहृतः कचिद्ग्रहणं प्रयुञ्जानेन । समाचारभ्रंशसंभवे स्मृतयो नियामिका अर्थवत्यः ।

"आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते" इत्यत्र यावद्दानात्तद्द्विगुणमप्रविष्टम् इत्यपि शक्यते नेतुम् । स्मृत्यन्तरैकवाक्यत्वाच्चैतदेव युक्तमध्यवसातुम् । उपपादितं चैतन्निपुणतोऽन्यत्र ।

सकृदाहिता । सकृदित्यनेन व्यवस्थापितोऽङ्गीकृतः पुनःपुनःप्रयोग इति यावत् । 'आधानं' स्थापनमुच्यते । वचनव्यवस्थया च निरूपणं स्थापनमेव । पुनः प्रयोगश्च द्विगुणीभूते धने आदीयमाने भवति । यदा द्विगुणो हि वृद्ध्यर्थं उत्तमर्णोऽधमर्णश्च तदीयेन धनेन महत्कार्यं करिष्यन् करणपरिवृत्तिं करोतीति या प्राक्तनी वृद्धिरियं वाऽद्यप्रभृति वर्धत इति—तदा द्विगुणभूतमपि पुनर्वर्धत एव । पुरुषान्तरसंचारेण वा । यदि द्विगुणीभूतं धनिकस्योपयुज्यते तदाऽधमर्ण उच्यमानोऽन्यपुरुषं ददतमर्पयति 'एष त इयद्भिरहोभिर्दास्यतीति' तत्र स्वहस्तं दीयमानं पुनर्वर्द्धते । न चायं दानं प्रति प्रतिभूः किन्तु निक्षेप्ता दातैव । एतत्तु ऋजुना पुरुषान्तरमसंक्रान्तमिति व्याख्यातम् ।

अथवा प्रागपि द्वैगुण्याद्यदा बन्धमन्यस्मै प्रत्यर्पयति—दीनारेषु सलाभेषु द्वित्वे—तस्य बन्धस्य मोक्ष एव धर्म्यः । बन्धस्य प्राग्वृद्धौ स्थितायां तस्मादहःप्रभृति पुनर्द्वैगुण्यमाप्नोति । यदा तदीयं बन्धकं तदनुज्ञयोत्तमर्णेनान्यत्राधाय स्वधनं गृह्यते तदा वर्धत एष पुरुषान्तरसंचारः ।

उभयत्र द्विगुणीभूते प्रयोक्ताऽधमर्णकेन येनकेन प्रकारेणान्यस्माद्ग्रहणमनुज्ञाप्यते ।

यदि वाऽस्मादन्यद्गृह्यते ग्रहीता देशान्तरं गमिष्यन् कार्यान्तरेण चान्यत्र संचारयति ।

ऋजुस्तु तस्मादेवाधमर्णादनवीकृते प्रयोगे द्विगुणाधिकां वृद्धिं नेच्छति । अत आह 'पुरुषान्तरमसंक्रान्ते पुनः क्रियाप्रयोजनं च वक्ष्यामः' ।

ये तु व्याचक्षते—"या वृद्धिरुपचिता सांवत्सरी युगपत्सर्वैवानीयते तत्रायं विधिः । या पुनः प्राप्तदानाऽपि सर्वा न दीयते तत्र द्विगुणादधिकग्रहणमपि" तेषां न 'न'शब्दो यथार्थो नापि 'आहित' इति । सांवत्सरी तावदुपचिता ग्राह्या द्वितीयसंवत्सरे पुनरानयनमस्त्येवेति न कचिद्द्वैगुण्यनियमः स्यात् ।

अथ—"यो द्विगुणीभूतं सलाभं धनमानयति तत्राधिकनिषेधोऽस्तु । प्राग्द्वैगुण्याद् वृद्धिमात्रदानसमर्थो वृद्धिं ददाति । मूलं तस्यापरिमितग्रहणमिति" ।

एतदपि न किंचित् । यः संवहति तस्यानुग्रहो न्याय्यो नाधिकग्रहणम् । यस्तु राज्ञा द्विगुणीभूतमपि कथंचिद्दाप्यते तस्याधिकमोक्ष इत्येतदन्याय्यम् । न चाहितेत्यस्य शब्दस्यायमर्थः ।

अथ 'आहृतेति' पाठान्तरम्—तथापि सकृच्छब्दो न निश्चितार्थो न्यायस्तु परित्यक्तः स्वकृतश्च पाठः स्यान्न मानवी स्मृतिरित्युक्तैव व्यवस्था न्याय्या ।

धान्यादिषु पञ्चतां पञ्चगुणतां नात्येति ।

स्मृत्यन्तरे धान्ये चतुर्गुणोक्ता "हिरण्यवस्त्रधान्यानां वृद्धिर्द्वित्रिचतुर्गुणा" इति ( नारद, याज्ञ० व्य० ३९ ) । तत्र व्यवस्था—यदि दरिद्रभूतः प्रयोक्ता ग्रहीता च महाधनसंपन्नस्तेन धान्येन महान्तमर्थं कृतवांस्तदा पञ्चगुणाऽन्यथा चतुर्गुणा ।

'सदं' फलं वार्क्षम्, धान्यस्य पृथगुपादानात् ।

लव उदीच्येपूर्णाविषयः प्रसिद्धः ।

वाह्यो गर्दभोष्ट्रबलीवर्दादिः ॥ १५१ ॥

कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति ॥
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ १५२ ॥

अनुसरन्त्यनुधावन्त्यनुवर्तन्ते सर्व एवार्था एतमित्यनुसारः शास्त्रोदितः समाचारः । स च विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तः । तस्मादधिका वृद्धिः कृता यावत्तथाऽधमर्णेनोत्तमर्णस्य न सिध्यति । कुतः ? व्यतिरिक्ता—यतः शास्त्रबाह्येत्यर्थः ।

अर्थवादान्तरमाह । कुसीदपथमाहुस्तमितिं । कुपुरुषा यत्र सीदन्ति तत् कुसीदम् । धर्मेण तद्धर्माणो लक्ष्यन्ते । कुसीदीनामयं पन्था मार्गो व्यवहारो न

साधूनामिति निन्दा। यस्यावश्यमधिका कर्तव्या—महद्धि कार्यमयं मदीयेन धनेन साधयतीति बुद्ध्या—तदा वर्णविभागमनपेक्ष्य पञ्चकं शतं ग्रहीतुमर्हति लिप्सेत्—तदर्थमिदमुच्यते।

पाठान्तरं 'कृता तु साराद्धिकेति'। यस्याकिंचनस्य सतः स्वल्पा कृता तेनैव धनेनान्यथा वा महार्थतां प्राप्तस्तस्य या पुरुषसाराद्धिका क्रियमाणा न सिध्यति। यः परं पञ्चकशतमर्हति ॥ १५२ ॥

**नातिसांवत्सरीं वृद्धिं न चादृष्टां विनिर्हरेत् ॥**

**चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ॥ १५३ ॥**

संवत्सरे भवा सांवत्सरी। ताम् अतिक्रान्ता अतिसांवत्सरी। भवप्रत्ययार्थः सामर्थ्यादन्तर्भूतः। अथवा संवत्सरमतिक्रान्ता अतिसंवत्सरेति प्राप्ते वृद्धीकारौ छन्दस्तुल्यत्वात्कर्तव्यौ।

येषां वृद्धिरनन्तप्रकान्तं पञ्चकं शतं सर्ववर्णविषया सा संवत्सरं यावद्ग्रहीतव्या, नातीते संवत्सरे। अथवा यावत्संवत्सरम्। संवत्सरो वर्षः। तावद्वृद्धिर्न ग्रहणीया। अधमर्णेनापि संवत्सरादूर्ध्वं न विलंवितव्यम्।

विनिर्हरेत् विनिष्कृष्य स्वधनादारभ्योपनयेदित्यर्थः।

अर्वागपि संवत्सराद्या दीयते साऽप्यतिक्रान्तसंवत्सरैव। अथवा मासादारभ्य संवत्सरस्य यावद्वृद्धिः परिमाणतो निरूपितव्या—मासेन यद्वर्द्धते संवत्सरेण वेत्येवं प्रयोगः कर्तव्यः। न तु संवत्सरद्वयस्य लाभार्थी कदाचिच्चिरकालं ग्राहयति—किं मे कतिपयमासिकेन लाभेन यदि द्वे वर्षे ततोऽधिकं वा गृह्णासि तद्ग्रहणे एषा वेयता कालेन वृद्धिस्तत्रार्वाचीनमपि दददधमर्णे द्विसांवत्सरीं यथा कालकृतां तदा दाप्येत। "एकां वृद्धिमनादेयां न दद्यान्नापि दापयेत्" इति। यथा मासिकी वृद्धिः प्रथमे मासि द्वितीय एवाह्नि शोधयन्दाप्यते तथा यदैवमभ्युपैति संवत्सरेण यद्वर्धत इति तदा तथैव दाप्यते न तु तदधिककालकृता।

न चादृष्टां विनिर्हरेत्। शास्त्रे या न दृष्टा दशैकादशिकाद्या पञ्चकादधिका न तां गृह्णीयात्। 'व्यतिरिक्ता न सिध्यति' ( १५२ ) इत्यस्यैवायमनुवाद इति केचित्। इदं तु युक्तम्—अदृष्टामनुपचितामित्यर्थः। यावद्बहुभिर्मासैर्न संहतीभूता तावन्न ग्राह्या दिवसवृद्धिर्मासवृद्धिः।

"ननु च 'मासस्य वृद्धिं गृह्णीयात्' ( १४२ ) इत्युक्तम् ।"

परिमाणं मासिकम् । तद्वृद्धेर्न तु ग्रहणम् ।

चक्रवृद्धिः कालवृद्धिः कारिका कायिका च या तामपि न विनिर्हरेदित्यनुषङ्गः—नैवादद्यादिति । यद्यप्यधमर्णस्य प्रतिषेधस्तथापि सामर्थ्यादुत्तमर्णस्यैव द्रष्टव्यः । अधमर्णो ह्यार्तः किं न करोति । अथवा 'विनिर्हारो' ग्रहणमेव । तेनोत्तमर्णस्यैव शाब्दः प्रतिषेधः ।

"ननु च द्विकादिवृत्तिविधानाच्चक्रवृद्ध्यादीनां प्राप्तिरेव नास्ति—किं प्रतिषेधानुषङ्गेण ?"

उच्यते । अप्राप्तः प्रतिषेधः पाक्षिकीं वृद्धिमनुमापयति । यथाऽऽधाने न ब्रह्मसामाभिगायेदित्यविहितं सामगानं प्रतिषेधे नास्तीति ज्ञापयति । तेनेता अपि प्रतिषेधद्वारेणाभ्यनुज्ञायन्ते । केषांचिदूनव्यवहारिणां चक्रवृद्ध्यादयोऽपि भवन्ति । तेन स्थलपथवारिपथिका वाणिजो यथोक्तम् ( या० व्यव० ३८ ) ।

"कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् । दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ।।" इति । कान्तारगादीनामेव स्वकृता सर्वजातिविषया साधारणी वृद्धिर्न त्वन्येषाम् ।

तत्र चक्रवृद्धिः स्मृत्यन्तरे पठिता—'वृद्धेर्वृद्धिश्चक्रवृद्धिः' ( नारदीये १ । १०४ ) । अन्ये तु चक्रवद्यानं गन्त्र्यादि—तद्वृद्धिश्चक्रवृद्धिः । तेषां यस्मिन्नहनि चक्रं वर्तते तत्रैव वृद्धिः । यदा तु नदीसंतारे दुर्दिनादिना अप्रयाणं तदा नास्ति वृद्धिः । एवमन्येषामपि बलीवर्दादिवाह्यप्रयोक्तॄणामीदृशी वृद्धिश्चक्रवृद्धिरुच्यते ।

कालवृद्धिः "प्रतिमासं तु कालिका" ( नारदीये १ । १०३ ) । मासग्रहणमुपलक्षणार्थम् । याऽनुपचिता वृद्धिर्दिवसे दिवसे गृह्यते मासि मासि वा यस्याः कालो न प्रतीक्ष्यते अथ चैतस्मिन्काले यदि न ददासि तदा द्विगुणीभवति धनमित्येकरूपा कालवृद्धिः ।

कारिता । इत्थंकृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाधमर्णौ कुरुतः । एषाऽपि दिग्भागवणिजामेव । अन्येषां तु "व्यतिरिक्ता न सिध्यति" इत्युक्तम् । "पञ्चकं शतमर्हतीति" ।

अथवा हिरण्ये प्रयुक्ते वासांसि वृद्ध्या गृह्यन्ते, तत्राधिलक्षणं द्रव्यं, सा 'कारिता' यथाभोगलाभे न्यासरूपविषये च स्यात् ।

कायिका कायकर्मणा संशोध्या। कायजीविका च—येषां क्रमेण काचैवाधिकादीनाम् (?) ॥ १५३ ॥

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनःक्रियाम् ॥
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥ १५४ ॥

वृद्धिद्विगुणीभूतमृणं धनपरिक्षयाद्दातुमशक्तोयः स पुनः क्रियां कारयितव्यः। करणं लेख्यसाक्ष्यादि परिवर्तयितव्यः। वृद्धिं तु दद्यात् निर्जितां—यावती गणनया भवतीत्यर्थः। द्विगुणादधिकं न ग्राह्यमिति यदुक्तं तस्यायमपवादः। जयो ह्ययं प्रयोग इति।

"कुतः पुनः द्वैगुण्यापवादार्थता"।

यावता नेह किंचिदीदृशं वचनमस्ति वृद्धिसहितं धनं वर्द्धते मूलधनं वा। केवलं पुनःक्रिया श्रूयते। सा च करणं परिवर्तयेदिति व्याख्यान्तरेण व्याख्याता।

"यदि न वर्धते किमर्थं तर्हि करणपरिवर्तनम् ?"

उच्यते। शान्तलाभे धनेऽदीयमाने आलस्यादिसंभावना साक्षिणश्च दीर्घे गच्छति काले विस्मरेयुः। यथोक्तम्—

"यत्र कार्ये भवेद्येन कृतोपेक्षा दशाब्दिकी।
विवादस्तत्र नैव स्यात्साहसेषु विशेषतः ॥"

तथा "दशवर्षोपेक्षितमृणमसाध्यमिति"। तथा च पूर्वं स्म व्याचक्षते।

अयं च राज्ञं उपदेशः पीडितस्यानुग्रहः। यदि च द्विगुणस्य नवीकरणेन पुनः प्रयोगो वृद्धिसहितस्य पुनर्वृद्धिर्महानयं पीडितस्यानुग्रहः (?)। अथ सर्वं तदानीमवष्टभ्य न दाप्यत एषोऽनुग्रहो निर्धनस्य। ईदृशोऽनुग्रहो दैवेनैव कृतः। तथा च सर्वस्मृतिष्वस्यामवस्थायां विहितम्—

"अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्।
प्रेक्ष्य शक्तिमृणं दाप्यः काले देशे यथोदयम्" ॥

यद्यधमर्णो दैवदोषान्निर्धनीभूतस्तदा न दुर्गावरोधादिना राज्ञा पीडयितव्यः। किं तर्हि कर्तव्यम्? यदाऽस्य कथंचिद्धनं भवेत्तदा यथासंभवं शनैः शनैर्दापयितव्यः। 'प्रेक्ष्य शक्तिं' धनवत्तां ज्ञात्वेत्यर्थः। 'दाप्यः' उचितस्य।

वक्ष्यति 'कर्मणाऽपि समं कुर्यात्' इति (१७७)। तस्मात् करणपरिवृत्तौ यदेवोक्तमस्माभिस्तदेव प्रयोजनम् ॥ १५४ ॥

अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत् ॥
यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति ॥ १५५ ॥

अदर्शयित्वा हिरण्यम्, अदत्वा निर्धनत्वादहिरण्यम्, तत्रैव पुनः करणं परिवर्तयेत्। साक्षिसमक्षमेवं ब्रूयात् 'एतावन्मूलमस्मै धारयामि एतावती च वृद्धिरिति' तत्रैवारोपयेत् यावत्संवत्सरात् वृद्धिरिति तावद्वृद्ध्याचक्षते। पुनःकरणे वृद्धिसहितमूलीभूते लघीयसी वृद्धिः कर्तव्या। यावत्या वृद्ध्या नातिपीड्यते। या प्रागासीत्ततो न्यूनेत्यर्थः। यज्वासहायनारदानां तु मते काकिणीमात्रमपि शक्तः करणपरिवृत्तिकाले दापयितव्यः। येन साक्षिणो न श्रवणमात्रे साक्षित्वं—ददाति तत्समक्षमधमर्णः। अर्थसंबन्धोऽपि प्रत्यक्षीभवति। यतः श्रवणाश्रवणे च कृता भविष्यन्ति, ततश्चित्तं तिष्ठति, धने दशवर्षोपेक्षितमित्यादि व्यनश्वरो भविष्यति (?) ॥ १५५ ॥

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः ॥
अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात् ॥ १५६

'वाराणसीं यास्यामि तदीयं पुण्यं मे भाण्डं च हेतुः, एषा च ते वृद्धिरिति।' तत्र यदि कान्तारनदीसंतरणं राष्ट्रोपप्लवादिना तं देशं न गतस्ततोऽर्वाग्देशात्कियता लाभेन प्रवृत्त्याऽव्यावृत्तस्तदा यथानिरूपिता वृद्धिर्न दाप्यते। यतस्तं देशं यावद्वहतां या वृद्धिरप्राप्तानां सा कथं स्यात्? दीर्घमध्वानं वहतां युग्यानां महान्क्लेशः स्वामिनश्च तावन्तं कालं कृतैव वृद्धिर्युग्योपकारः। शीघ्रं तु प्रतिनिवृत्तानां स्वामिनः पुनरन्यत्रोपकारणं संपद्यत एव। एष एवातिक्रमः।

एवं कालातिक्रमः—'मासं मे वहन्तु बलीवर्दा इयती तव वृद्धिरिति'। तत्र यदि पक्षात्प्रत्येति तत्र चक्रवृद्धिमधमर्णः समारूढः प्रतिपन्नोऽङ्गीकृतवानिति यावत्। तस्यां वृद्धौ देशकालौ व्यवस्थितौ। यत्तया पूर्वोक्तेन प्रकारेण देशविशेषं कालविशेषं वा न, निर्विशेषणमेव, कृतवान् स एवंविधोऽधमर्णस्तौ देशकालौ अतिक्रामन नाप्नुयात्तत्फलं वृद्ध्याख्यं नाप्नुयान्न भजेत न दद्यादित्यर्थः ॥ १५६ ॥

किं तत्र नैवास्ति वृद्धिरथवा पञ्चकं शतम् ? तेनेत्याह

**समुद्रयानकुशला देशकालार्थदर्शिनः ॥**
**स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति ॥ १५७ ॥**

समुद्रयानग्रहणं यात्रोपलक्षणार्थम्। स्थलपथिका वारिपथिकाश्च वणिजो यां वृद्धिं स्थापयन्ति सा तत्राधिगमं प्रति निश्चयं प्रति। सैव निश्चेतव्येत्यर्थः।

देशकालार्थदर्शिनः—अस्मिन्प्रदेश इयानर्थलाभोऽस्मिन्नियानिति ये पश्यन्ति जानते—न तु समुद्रयान एव च ये कुशलाः कर्णधारादयः।

अन्ये पूर्वश्लोकमेवं व्याचक्षते यदृच्छाध्याहारेण— अधमर्णेन या देशं कालं चाश्रिता तां च प्राप्य तद्देशोदितं फलं लाभाख्यं तस्माद्देशाद्यदि नाप्नुयात्तदा कीदृशी तत्र वृद्धिरित्याकांक्षायामुत्तरश्लोकः। चक्रवृद्धिग्रहणं कारिताया अपि प्रदर्शनार्थम्।

लोभातिशयभाजां वणिजां क्षयव्ययादिसंविधिज्ञाः परस्परस्य यां वृद्धिं स्थापयेयुस्तां राजा प्रमाणीकुर्यात्।

तत्राधिगमं प्रतीति। प्रति कर्मप्रवचनीयोऽधिगमस्य लक्षणत्वाल्लक्षणेत्थंभूताख्याने तद्युक्ते च द्वितीया ॥ १५७ ॥

**यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ॥**
**अदर्शयन्स तं तस्य यतेत स्वधनादृणम् ॥ १५८ ॥**

ऋणप्रयोगे द्विविधो विश्रम्भः—प्रतिभूराधिर्वा। तत्र प्रतिभूपक्ष इदमुच्यते। त्रिविधश्च प्रतिभूः—दर्शने प्रत्यये दाने च। तत्र दर्शनप्रतिभुवमधिकृत्येदमाह। यस्यदर्शनाय प्रतिभूस्तिष्ठेदमुष्मिन्प्रदेशे मयैष तव दर्शनीयः—स तथाऽकुर्वन्स्वधनात्तस्य ऋणं यतेत प्रयत्नं कुर्याद्दातुमिति शेषः। दद्यादिति यावत्। ऋणग्रहणं व्यवहारवस्तुमात्रोपलक्षणार्थम्। तेन यावन्तोऽर्थविषया व्यवहारेऽनुक्राम्यन्ते तत्तद्वस्तु दद्यात् दर्शनेनान्यतरेणाभियुक्तः। वाक्पारुष्यसंग्रहणादौ पणपरिभाषा कर्तव्या यदि न दर्शितं चेत्तन्मया दातव्यम्। अकृतायां तु परिभाषायां राजदण्डमेव दाप्यः। शरीरे तु निग्रहान्तं विक्रयणं सुवर्णम् ॥ १५८ ॥

**प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् ॥**
**दण्डशुल्कावशेषं च न पुत्रो दातुमर्हति ॥ १५९ ॥**

प्रतिभुवः कर्म प्रातिभाव्यम् । प्रतिभुवा यत्कर्तव्यं परर्णसंशोधनादि तत् 'प्रातिभाव्यम्' ।

अर्हत्ता योग्यता । साऽनेन प्रतिषिध्यते । तस्यां च प्रतिषिद्धायामधिकार-प्रतिषेधः । अनधिकृतश्च न ददातीत्येवं न दातव्यमित्युक्तं भवति । सर्वत्रार्हतौ क्रियापदे व्याख्याते द्रष्टव्ये ।

"कथं पुनः पुत्रस्य प्रातिभाव्यादिप्राप्तिस्तर्हि । तदृणस्य पित्राऽगृहीतत्वात् ।"

नैष दोषः । यद्येन दातव्यतयाऽङ्गीकृतं तद्गृहीततुल्यफलत्वाद्गृहीतमेव । तन्निश्चितस्वरूपत्वमापन्ना अतः प्रतिषिध्यन्ते ।

वृथादानं परिहासादिनिमित्तं प्रतिश्रवणम्—'कुरु कार्यमिदं परिनिष्पन्ने इदं दास्यामीति' निष्पादिते कार्ये पित्राऽदत्ते प्रतिश्रुते कथंचित्पुत्रो न दाप्यते । एवं पारितोपिकादिवंदिपरिहासादिविषयम् । यं चाहममुष्माद्वणिज एतस्येयद्दापये इति—तत्र तु मनुष्ये प्रेषिते कथंचिद्दातुमघटितेऽसंनिधानाद्वणिजोऽन्यतोऽपि कारणाद्वृत्तान्तरे पितरि मृते पुत्रो न दाप्यते ।

अक्षनिमित्तमाक्षिकम्—सभिकाय यद्धार्यतेऽन्यतो वा यत्प्रयोजनं तद्-गृहीतमिति शक्यते ज्ञातुम् । तस्य प्रतिषेधः । यः परित्यक्तबान्धवोऽक्षमालास्वेव शय्यासनविहारी प्रसिद्धः कीडनकस्तदृणमाक्षिकमिति शक्यते निश्चेतुम् ।

सुरापाननिमित्तं सौरिकम् । सुराग्रहणं मद्योपलक्षणार्थम् । तेन यः पानशौण्डोऽत्यन्तमद्यपस्तदृणप्रतिषेधः ।

दण्डशुल्कयोरवशेषः । यत्र पित्रा दण्डांशः शुल्कांशश्च कश्चिद्दत्तः परिपूर्णौ दण्डशुल्कौ न दत्तौ तादृशस्य प्रतिषेधः । यत्किंचित्पित्रा दत्तं स तद्दाप्यते । स्मृत्यन्तरेऽप्यविशेषेणोक्तं "प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डा न पुत्रानध्याभवेयुः" इति ( गौतम १२ । ४१ ) । तत्र विकल्पः । महत्यपराधे महति च धने पैत्रिके-ऽवशेषस्य प्रतिषेधः । शुल्केऽप्येवम् । स्वल्पे तु सर्वस्य ॥ १५९ ॥

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः ॥
दानप्रतिभुवि प्रेते दायादानपि दापयेत् ॥ १६० ॥

पूर्वश्लोके यो विधिर्मया चोदित उक्तः—यथा पुत्राणां न भवति पैत्रिकं प्रातिभाव्यं—तद्दर्शनप्रातिभाव्ये ।

"यद्येवं प्रत्ययप्रतिभुवः पुत्रा दाप्यन्ताम्"—अत आह दानप्रतिभुवि प्रेते दायादाः पुत्रा दाप्यन्ते नान्यस्मिन् ।

"यद्येवं प्रथमोऽर्द्धश्लोकोऽनर्थकः । दानप्रतिभुवः पुत्राणां साधन उक्ते सामर्थ्यादन्यस्य प्रतिभुवो नास्ति पुत्राणां संबन्ध इति गम्यते । अथ विस्पष्टार्थ-मुच्यते—प्रत्ययग्रहणमपि कर्तव्यम् । इतरथाप्रतिषेधे दर्शनग्रहणाद्विधौ च दानग्रहणादुभयपरिभ्रष्टस्य किंविधिरुतप्रतिषेध इति संशयः स्यात्" ।

नास्ति संशयः । स्मृत्यन्तरे स्पष्टमुक्तत्वात ( या० व्य० ५४ )

"दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा । नतत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः ॥" इति । इहापि दानप्रतिभुवीत्यस्य विधित्वादन्यत्राप्राप्तिः । दर्शनग्रहण-मुपलक्षणार्थम् । अनुवादे चोपलक्षणत्वमदोषः । किंप्रयोजनमिति चेद्विचित्रा श्लोकानां कृतिर्मानवी ॥ १६० ॥

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम् ॥
पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥ १६१ ॥

अनेन श्लोकेन संदिहानः प्रश्नं कृत्वोत्तरेण निश्चाययति । संदेहहेतुः पदद्वयेनादातरि विज्ञातप्रकृताविति । सप्तम्यन्तानि समानाधिकरणानि पदानि व्याख्यायन्ते—अदातरि-प्रतिभुवि-विज्ञातप्रकृतौ । ऋणमुत्तमर्णः केन हेतुना परीप्सेत लब्धुमिच्छेत्—किंकेवलेनैवात्मव्यापारेण उत प्रतिभुवः पुत्रमपि व्यापारयति ।

"कुतः संदेहः ? उक्तम् 'प्रेते दानप्रतिभुवि'इति ततोऽन्यस्मिन् मृते कस्तत्पुत्राणां संबन्धः ?"

यतस्तु खलु विज्ञातप्रकृतिर्विज्ञातकारणः प्रतिभूत्वेन धनं गृहीत्वा स्थित इत्येतन्निश्चितमतो भवति बुद्धिरस्ति तत्पुत्राणां संबन्धो यतस्तेन ऋणसंशुद्ध्यर्थमस्य निसृष्टमिति ।

पुनः शब्दः पूर्वस्माद्विशेषमाह । यदि दानप्रतिभुवः पुत्राः संबध्यन्ते यस्त-द्धदाता तस्मिन्मृते । दातोत्तमर्णः । पश्चात्तत उत्तरकालमित्यर्थः ।

शेषं व्याख्यातम् ।

परीप्सा प्राप्तीच्छा ॥ १६१ ॥

निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः ॥
स्वधनादेव तद्द्यान्निरादिष्ट इति स्थितिः ॥ १६२ ॥

निरादिष्टं निसृष्टं स्वधनादर्पितं—भव लग्नक इदं ते धनं मत्तस्त्वया संशोधनीयं यद्यहं न दद्याम्।

अलंधनः पर्याप्तधनः। यावद्धनमुत्तमर्णाय दातव्यं तावत्परिपूर्णं प्रसृष्टम्। स्वल्पे तु निसृष्टे बहुनि संशोध्ये न दापयितव्यः।

पूर्वस्य प्रश्नस्योत्तरमिदम्।

यद्यपि दानप्रतिभूरद्य निरादिष्टस्तत्पुत्रो दाप्यते स्वधनादेव। तद्द्यान्निरादिष्टपुत्र इति द्रष्टव्यं तस्यैव प्रकृतत्वात्। साक्षात्प्रतिभुवस्तु प्रतिभूत्वादेव प्राप्तिरिति।

इति स्थितिः। एषा शास्त्रमर्यादा विचारादेव।

अलंधन इति सिद्धे यन्निरादिष्टोऽलंधन इति चैवमभिधानं तत्पद्यग्रन्थानुरोधेन ॥ १६२ ॥

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा ॥
असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥ १६३ ॥

कार्यपर्यायो व्यवहारशब्दः। यत्किंचिद्दानाधानविक्रयादिकार्यं लेख्यादि च प्रमाणम्। एतैः कृतं तन्न सिध्यति कृतमप्यकृतं भवति।

मत्तोन्मत्तौ विख्यातौ। आर्त्तो धनबन्धुनाशादिपीडितः प्रत्युपस्थितभयश्च। यौगिकत्वान्मत्तादिशब्दानां यावन्मदादियुक्तास्तावत्तत्प्रमाणाभावबोधकोऽयं प्रतिषेधः। प्रदर्शनार्थं चैतदप्रकृतिस्थत्वमात्रस्य। यथोक्तम्—'कुर्यादप्रतिकृतिं गतः। तदा प्रकृतमस्याहुरस्वतन्त्रे सहेतुत' इति। अप्रकृतिस्थश्चोच्यते उपप्लुतबुद्धिः स्वकार्यविवेचने असमर्थः। उक्तं च

"कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः। रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिंगताः॥" इति। (नारद १।४१)। कामादीनां द्वन्द्वं कृत्वा पीडितशब्देन तैः पीडिता इति साधनंकृतेति तृतीयासमासः। तेन पीडितस्य प्रतिषेधः। स चायं संप्रति मन्मथाधिष्ठितः स्त्रीपरिरम्भणादि परीप्समानो भवति। 'अभियुक्ता' द्यूतादि-

क्रियान्तरे दत्तावधानाः। एते हि तत्र संसजन्तः स्वामिनोऽपि स्व इत्यस्य प्रातिभाव्यादिक्रियानिश्चयस्यानवधानान्न प्रमाणम्। यतः क्रियान्तरावहिततया परेण पृच्छ्यमाना इदमस्मै दीयतामङ्गीकृतं वा प्रातिभाव्यमियति वस्तुनीदृशेऽनेन च प्रकारेणोच्यत इत्येवमादि निपुणतो नावधारयन्ति—प्रकृतिक्रियाविघ्नो वा माभूदस्मिन्निहस्थ इत्यभिप्रायमभ्युपगच्छन्ति—गच्छ त्वं यद्ब्रवीषि तत्सर्वमनुष्ठीयत इति पारतन्त्र्यं वाऽङ्गीकुर्वन्ति। तदुक्तम्—'अस्वतन्त्रे सहेतुत' इति। येन हेतुना ऽस्वतन्त्रोऽप्रमाणं सोऽस्य स्वतन्त्रस्यापि हेतुर्विद्यते। यथाऽस्वतन्त्रः स्वमपि न विनियुङ्क्ते एवमयमपि कामादिवशीकृतोऽर्थविवेकं कार्याणां च गुणदोषौ क्रियमाणावनधिगच्छन्नस्वतन्त्रेण तुल्यो भवति। 'आर्तो' व्याख्यातः। अभियुक्तार्तशब्दौ च धर्मिवचनौ लक्षणया धर्मपरौ विज्ञेयौ—अभियोगोऽभियुक्त आतुर इति। व्यसनानि कामक्रोधसमुत्थितानि मृगयादीनि। अभियुक्तव्यसन्यपि काञ्चित्क्रियां तात्पर्येण कुर्वन्नुच्यते। अव्यसन्नप्रवृत्तोऽपि तद्ध्यानरतः। अथवा कामक्रोधशब्दौ कामिनि क्रोधवति वर्तेते। अत्र च पक्षे भयव्यसनशब्दौ कृतद्वन्द्वौ तृतीयान्तौ पीडितशब्देन संबध्येते। अन्ये तु स्वतन्त्रा एव। 'रागद्वेषाभ्यां परीता' व्याप्ताः। रागः क्वचिदात्मीयेष्वभिषङ्ग आत्मीयतया परिगृहीतस्य कस्यचित्संबन्धिनोऽपि ध्यायतो वाऽभिप्रेतसिद्धौ मनसः परितोषो रागः। तद्विपरीतो द्वेषविषयः। परिपन्थिन्यनात्मीयतया परिगृहीते तदस्वास्थ्यतद्विपर्ययात्परितुष्टिवृत्तिरित्येवमादिरूपौ रागद्वेषौ। सर्वथाऽस्य भावबुद्धिश्चलिता क्षणमपि विवक्षिते कार्ये नावतिष्ठते। अन्यद्वदन्नन्यदाचरति। एवंरूपोऽप्रकृतिस्थः। अन्यथा सर्वएव पुरुषाः कामादियुक्ताः जराजीर्णाक्षिशिरोरोगार्त्तिमन्तोऽप्रकृतिस्थाः स्युः। न चैवम्।

अध्यधीनो गर्भदासः पुत्रशिष्यौ भार्या च। यदापि रूढ्या गर्भदास एवाध्यधीनस्तथाऽप्यस्वतन्त्रोपलक्षणार्थत्वात्सर्व एव ते गृह्यन्ते। स्वधनदानादि स्वामिनमनुज्ञाप्य यत्कुर्वन्ति तत्सिध्यति। तथा च नारदः ( १।३३ )—

"यद्बालः कुरुते कार्यमस्वतन्त्रकृतं च यत्। अकृतं तदिति प्राहुः"॥ इति

"अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता।

अस्वतन्त्राः स्त्रियः पुत्रा दासाद्यश्च परिग्रहः॥

"स्वतन्त्रस्तु गृही यस्य तस्य तत्स्यात्क्रमागतम् ॥"

"ननु यदि न स्वातन्त्र्यं स्त्रीणामुच्यते पुंसश्च स्वातन्त्र्यमेतदनुपपन्नम्। यतः साधारणं धनम्। कथमेकाकी मनुष्यो भार्ययाऽननुज्ञातो दानविक्रयादिभ्यः प्रभवेत्"।

अत्रोक्तम्—"स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि" इति। तथा 'कुले ज्येष्ठ' इत्युपक्रम्य 'तत्कृतं तत्कार्यजातं नास्वतंत्रकृत'मिति च। धनसाधारण्ये हि पुरुषोऽपि स्त्रीवदस्वतन्त्रः। यच्छब्दे स्वाम्यं पारतन्त्र्यं चेति तद्विरुद्धमिव स्वामित्वस्येत्येताश्च व्यवस्थेति योज्यं भवति। पारतन्त्र्यं परविधेयता तदिच्छानुवर्तित्वम्। यदि च परतन्त्रः परेच्छामन्तरेण विनियोक्तुं न लभते कीदृशमस्य स्वाम्यम्। अथ दानाधानविक्रये यत्र प्रकृतत्वादनीशाः। स्वशरीरे परिभोगादौ यावदिच्छं स्वधनं विनियोज्यते, परतन्त्रमहाधनानां शास्त्रनिगृहीतात्मनां द्विजानां नात्मोपभोगो भवेत्। बालस्य स्वाम्यपारतन्त्रे उपपन्ने। यदा प्राप्तव्यवहारस्तदा ईशिष्यते। एवं पुत्रादावपि। स्त्रियास्तु न कदाचिदपारतंत्र्यम्।

"बालया वा युवत्या वा वृद्धया वाऽपि योषिता।
न स्वातन्त्र्येण कर्तव्यं कार्यं किंचिदिति स्थितिः॥" (मनु० ५। १४७)।

स्वाम्यपारतंत्र्ये स्त्रीणामसमावेश उच्यते। न पारतंत्र्यवचनेन स्त्रीणां स्वधनविनियोगनिषेधः क्रियते। किंतर्ह्यस्थाने दानाधानविक्रयादि वार्यते। 'परतन्त्राः'—ताः स्थाने निरूपणीयेन हिताहितं स्वयं विवेक्तुमलम्—एष पात्रमर्हति भूमिहिरण्यादिप्रतिग्रहम्, अनेन कन्यासंबन्धं कुर्यात्, इदं द्रव्यमस्मात् क्रेतुं विक्रेतुं वाऽर्हतीत्येवमादितया ज्ञातव्यम्। अतो लेख्यादिकाले भर्त्राद्यनुमतिरुपयुज्यते। केवलया कृते कार्ये नाहं किंचिज्जानामि त्वया विप्रलब्धाऽस्मीति वचनस्यावसरत्वात्। भर्त्राद्यनुमतौ तु किं वक्ष्यति। तदुक्तम्—

"एतान्यपि प्रमाणानि भर्ता यद्यनुमन्यते।
पुत्रः पत्युरभावे वा राजाऽधिपतिपुत्रयोः॥"

अस्वातन्त्र्यमपि नियमितम्—

"अनुशिष्टा विसर्गे च विक्रये विस्वरा मता।"

अपि बुद्धिपूर्वे बालशिक्षिते स्वामिना पत्न्यादयो नियोज्या अनुबन्धादिना—नतु स्वाम्यविसर्गेऽपि।

"सा सद्यः संनिरोद्धव्या त्यजेद्वा कुलसंनिधौ" (मनु० ९।८३) इति स्त्रीणामेव

न पुंसः पारतन्त्र्यम्। पतितस्याप्याप्रायश्चित्तसमाप्तेः प्रतीक्षणोपदेशः। अतो न विक्रयोऽपि दासादीनां गरीयस्यामापदि कुत्रचिदस्ति। तेषु स्वामिन इत्येतदपेक्ष्य भार्याशिष्यदासीनां यथास्वं पारतन्त्र्यम्। धनसाधारण्यात्तु न भर्तुरनुज्ञां विना भार्याया यागादौ कचिदधिकार इति स्थितम्।

"यच्चेदम्—

"पुत्राणां भर्तरि प्रेते वशे तिष्ठेत्तु सा तथा।"

"जीवतोरस्वतन्त्रः स्याज्जरयाऽपि समन्वितः।"

"तयोरपि पिता श्रेयानभावे जननी मता" इति।

—अनेन पुत्राणां पारतन्त्र्यम्। ननु चान्योन्यव्याहतमिति।"

नास्ति व्याघातः। अनधिकारिणि पुत्रे बाले मातृपरतन्त्रता। मातुस्तु पुत्रे पारतन्त्र्यं मातृधनरक्षणं चोरादिदोषेभ्यः। पुत्रस्यापि यत्पितरि पारतन्त्र्यं तदपृथक्कृतस्य तद्गृहे निवसतः। यदा तु पितृविभक्तो धनं स्वयमर्जितवांस्तदा "ऊर्ध्वं तु षोडशाद्वर्षात्पुत्रं मित्रवदाचरेत्" इति स्वातन्त्र्यमेव।

बालोऽप्राप्तव्यवहारः षोडशवर्षात्प्राक्।

स्थविरो लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः। यद्यप्ययं कस्यांचिद्वेलायां प्रकृतिस्थोऽपि भवति तथापि न प्रमाणमप्रत्ययात्। यस्य तु भर्तुः स्त्री जानाना कार्यप्रबन्धेन वर्तते तथाऽनुज्ञातमेतद्भवति।

असंबद्धकृतः। परार्थमनियुक्तो यो व्यवहारयति—न भ्राता न पिता—'देवदत्ताय शतं धारयती'त्येवमादि वक्तुं न लभ्यते। ये तु भ्रातरः समानकार्याः सर्वे च तुल्यव्यवहारिणस्तेषामन्यतरेणापि गोपश्वादिविक्रयो गृहादिबन्धनप्रयोगादि च क्रियमाणं सिध्यति। संबन्धित्वात्।

व्यवहारशब्दः सर्वव्यवहारग्रहणार्थः। प्रकरणादृणव्यवहार एव स्यात्॥१६३॥

**सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता॥**

**बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्॥ १६४॥**

कस्यचिदनुष्ठेयस्यार्थस्य प्रतिपादकः शब्दो भाषा सामान्येन भवति। योऽर्थस्तया प्रतिपाद्यते सोऽनुष्ठेयः। किं सर्वापि भाषा न सत्या? नेत्याह बहिश्चेद्धर्मात्—धर्मबाह्यं यदुच्यते शास्त्राचारविरुद्धम्—पञ्चकादधिका वृद्धिः,

भार्यापत्यविक्रयादिः, अन्वयिनः सर्वस्वदानमित्येवमादि। यद्यपि स्यात्प्रतिष्ठिता पत्रलिखिता प्रतिभुवा वा दत्ता तथापि न सिध्यति। व्यावहारिको धर्म आचारनिरूढः। नियतोऽनादिर्नेदानींतनः। पूर्वशेषं चैतत। अस्वतन्त्राप्रकृतिस्थैः कृतं दानाद्यनिश्चितमिति न प्रमाणम्॥ १६४॥

योगाधमनविक्रीतं योगदानप्रतिग्रहम्॥
यत्र वाऽप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥ १६५॥

योगः छद्म। तेन यदा 'धमनं' बन्धकार्पणं कृतमिति। एतच्च ज्ञायते असत्यकार्येण कृतम्। तद्राजा विनिवर्तयेत्। कश्चिद्धनिकेनोपरुध्यमान आह 'न मे किंचिदस्तीति'—'ननु क्षेत्रं स्थण्डिलं वासोऽस्ति तदर्पये'त्यनया शङ्कया सुहृत्स्वजनाय कस्मैचिदसावाधानीकरोति। तत आह—'तदन्यस्य मया बन्धकीकृतमिति'। एतच्च ज्ञायते। सत्यपि प्रकाशलेख्ये तस्य आधातृतायोगात् यदि हि परमार्थतयाऽऽधित्वेन कृतं कथमाधातैव भुङ्क्त इति। एवंविधं योगाधमनमप्रमाणीकृत्य धनिने क्षेत्रादि दापयितव्योऽधमर्णः। यस्य चान्येनागमेन स्वाम्यं धनदानकाल आगमान्तरेण करणं करोति तदपि 'योगाधमनम्'। तत्राधमर्णो यस्य वानेनागमेन स्वाम्यं कल्पितः सत्यमागमं कारयितव्यः।

एवं विक्रयादि। योऽल्पेन मूल्येन महार्घमर्थं विक्रीणीते यो वा नैव मूल्यं क्रेतुरादत्ते यच्चाह 'विक्रीतं मया तवेदमिति'—स उत्तरकालं 'न विक्रीतं ममेदमिति' न लभते वक्तुम्। न चायं विक्रयानुशयो दशाहात्परेणापि निवर्तयेदिति, योवाऽऽन्नेन क्राययति। पूर्वोक्ते निमित्ते सति निमित्तान्तरे वा सति विक्रीणीते न च रूपकादिभिः क्रयोपहर्तव्यव्यवहारे न दृश्यते न च रूपकादिसंचयशील इत्यादिना योगविक्रयाधिगमः।

योगदानप्रतिग्रहम्। यद्यपि दानप्रतिग्रहक्रिययोरन्यतरोपादानेनैवेतराक्षेपः—अन्यथास्वरूपासिद्धेः—तथापि क्रियाद्वयोपादानं वृत्तपूरणार्थम्। अथवैकक्रियोपादाने तत्कारिण एव दण्डः स्यात् न द्वितीयस्य, सत्यपि तत्साधनत्वे शब्देनानुपादानात्। अतो दातुः प्रतिग्रहीतुर्द्वयोर्दण्डार्थं भेदेनोपादानम्।

"तथा सति योगाधमनविक्रीतमित्यत्रापि क्रयादिद्वितीयक्रियोपादानं कर्तव्यम्।"

न कर्तव्यम् । स्मृत्यन्तराद्वा सामान्यशास्त्राद्वाऽनुपादाने दण्डः स्यात् । यदुभयस्वामिकमन्यतरः प्रतिग्रहीत्रा सह संविदं कृत्वा दापयते एवमादि योगदानप्रतिग्रहम् । दानं च प्रतिग्रहश्चेति विगृह्य द्वन्द्वैकव्यवहारः ।

यत्र वाऽप्युपधिं पश्येदिति । उपधिः छद्म । अनेनैव अन्यत्राप्येताभ्यः क्रियाभ्यः उपधिर्निवर्त्यः । यथा कश्चिद्धनिनोक्तः—'यावदियद्भिरहोभिर्दातव्यमिति प्रतिभुवं न स्थापयसि तावत्त्वां न त्यक्ष्यामीति' तस्मिंस्तूष्णींभूते कश्चिदुत्तमर्णेन सह संविदं करोति 'मामस्य प्रतिभुवं गृहाण यावदेनमुपपीडयामि बह्वनेन ममापकृतं अहमस्य पीडार्थ एव प्रतिभूर्न मया किंचिद्दातव्यमिति' तत्रोत्तमर्णः प्रकाशमाह 'यद्यन्यस्ते प्रतिभूर्नास्ति कर्मादिकं च न प्रार्थयसे, नूनं जिहीर्षितं ते धनम्'—स पीडितः प्रत्याह 'नैतेन सह ममेदृशो व्यवहारः प्रवृत्तपूर्व इति' प्रतिभूः पुनराह 'भवानी तवाहं प्रतिभूः' सोऽनिच्छन्पीडोपरोधादाह 'यथेच्छसि तथा कुरु'—नास्य पूर्वक्रियास्वन्तर्भावः ।

एवं कृषिवाणिज्यशिल्पादिक्रियाः एतद्व्यतिरेकिण्यः प्रतिदर्शनीयाः । उदाहरणमात्रं दानाधमनविक्रयाः ।

तदेतद्योगकृतं कार्यं यावत्किंचन तत्सर्वं राजा निवर्तयेत्—राजा कृतमप्यकृतमादिशेत्—न प्रमाणीकुर्यात्—कर्तारं कारयितारं च दण्डयेत् ॥ १६५ ॥

**ग्रहीता यदि नष्टः स्यात्कुटुम्बे च कृतो व्ययः ॥**
**दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः ॥ १६६ ॥**

उक्तम्—येन गृहीतमृणं तेन प्रतिदातव्यम्—तदभावे पुत्रपौत्रैः—तदभावे तद्रिक्थहारिणा । न तद्व्यतिरेकेणान्यस्य दानं प्राप्तमिष्यते । अत्र क्वचिद्विषये तदर्थमिदमुच्यते । येन गृहीतं धनं स चेन्नष्टो मृतो देशान्तरं गतो वा—कुटुम्बे च कृतो व्ययः—दातव्यं बान्धवैस्तद् भ्रातृतत्पुत्रपितृव्यादिभिः—प्रविभक्तैर्विभक्तधनैरपि—स्वतः स्वधनादित्यर्थः । यावद्भ्रातरः सह वसन्ति तेषां यद्दणमुपजातं तद्गृहमध्यादेव दीयते । तच्छिष्टेऽस्य विभागः । यथोक्तम्—

"पितृव्येणाविभक्तेन भ्रात्रा वा यद्दणं कृतम् ।
मात्रा वा यत्कुटुम्बार्थं दद्युस्तत्सर्वमृक्थतः ॥" इति ।

अविभक्तानामन्यतमेन यत्कुटुम्बार्थमृणं कृतं तद्भ्रातृपितृव्यतत्पुत्रादयः सर्वे दद्युर्न त्वकुटुम्बार्थमित्यर्थः । अविभक्तग्रहणात्तेषामेव तथाविधमृणं संभवेत् प्रायः । न हि प्रविभक्ताः परकीयकुटुम्बभरणार्थमृणं गृह्णन्तो दृश्यन्ते—अतः प्रविभक्तैरपीत्याह ।

अपिशब्दादविभक्तैश्च । यदि कश्चिद्भ्राणांतु विभक्तानां स्वकुटुम्बभरणमकृत्वा प्रवसेदितरश्च महासत्त्वतया तदीयं कुटुम्बं बिभृयात्—तत्र विभक्तेनापि भ्रात्रा पितृव्येण वा यदृणं कृतं तदितरो दद्यादेव देशान्तरागतः ॥ १६६ ॥

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ॥
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥ १६७ ॥

तिष्ठन्तु तावद्भ्रात्रादयः । कुटुम्बार्थेऽध्यधीनोऽपि गृहभृत्योऽपि व्यवहारं गोपश्वादिविक्रयं क्षेत्रस्थण्डिलादिप्रयोगं कर्षणाय ऋणं व्यवहारं वा यमाचरेत्—स्वदेशे विदेशे वा सन्निहितस्य प्रोषितस्य वा—तं ज्यायान् गृहस्वामी न विचालयेत् अविचार्यैव साधु कृतमित्यनुमन्येत ।

अन्ये तु पूर्वशेषोऽयमर्थवादो न विधिरित्याहुः । तदयुक्तम् । न ह्यर्थवादतावीजं किंचिदस्ति विभज्यमानं साकांक्षं यत्तच्छब्दाभिसम्बद्धम् ।

अथ—'मत्तोन्मत्तार्त्ताध्यधीनैः' ( १६३ ) इत्यस्वातन्त्र्यादध्यधीनस्य न तत्कृतप्रमाणमिति ।

अकुटुम्बार्थं संनिहिते च स्वामिनि न युक्तं कल्पयितुम् । अन्यथा कुटुम्बावसादः स्यात् । अतस्तद्भरणात्मके व्यापारे प्रमाणीभवति दैवादध्यधीनः ॥१६७॥

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ॥
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ १६८ ॥

यथा न बालास्वतन्त्राप्रकृतिस्थोपधिकृतं प्रमाणं तद्वद्बलकृतमपि । सर्वान्बलकृतानर्थान्निवर्त्यानित्येव विधिः । भुक्तं दत्तं लेखितमित्युदाहरणमात्रम् ।

तत्र बलाद्दत्तं यदनुपयुज्यमानं क्षेत्रारामादिवाहनाय दीयते—वृद्धिकामो वा यद्धनं बलादारोपयति—भारवाहनमनिच्छताम्—गृहेषु मूल्यार्पणं पण्यमश्नुते ।

लेखितं पत्रकरणम् ।

सर्वानित्यन्यानप्येवंविधानर्थान्कार्याणीत्यर्थः ।

योगाधमनमित्यत्र निपुणं दर्शितमत्रापि श्लोके समस्य योगवलशक्ये प्रक्षेप्तुं पृथक् श्लोकद्वयकरणम् । विचित्रा श्लोकस्य कृतिर्मनोः । मत्तोन्मत्तार्ताध्यधीनैर्वा-लवृद्धैर्वा बलात्कृतः असंबद्धेन योगाच्च कृतो व्यवहारो न सिध्यति--इति न सिद्ध्यत्येव, न मानवद्भवति ।। १६८ ।।

त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ।।
चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः ।। १६९ ।।

परेणार्थ्यमाने साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणं च कर्तव्यं कुलादिभिर्न स्वयमुपेत्य हठात् । अतः स्वयं कुर्वन्तो न प्रमाणीभवन्ति ।

अथवा परस्यार्थं कुर्वन्तः क्लेशमाप्नुवन्ति, न ह्येषां स्वार्थगन्धोऽस्त्यतो वलान्न कारयितव्याः ।

परेण वाऽर्थ्यमाना विप्रादय उपचीयन्ते । अतो न हठादनिच्छन्विप्रः प्रतिग्राहयितव्यः ।

अथवा परसंवन्धिनोऽर्थायोपचयो विप्रस्य—अतः स्वार्था प्रवृत्तिर्न परार्थैव-तेन विप्रेण न वलात्तदनादाने प्रवर्तनीयम । हृतवलसाध्यं दानमिति लोकप्रवादो न दापयन्तं निषेधति । तदिच्छन्तं दापयेत् । याञ्चया तु वलम् ।

'एवमाढ्यः कुसीदवृत्तिर्धनवानिव न प्रयोजनीयः किमिति कुसीदं व्यवहारेऽन्यस्मै ददाति न मह्यमिति' ।

अथवा तेन वलवताऽन्यस्मिन्ननिच्छति व्ययं कुर्वति धनमारोपयितव्यम् । यतः परेणार्थ्यमान उपचीयते न वलात्प्रयुञ्जानः—शास्त्रनिषेधात् ।

एवं वणिक्कुसीदीव धनवृद्धिकाम एव व्यवहारयति । वणिक् पण्यजीवी । नृपो राजाऽपि प्रयुक्तराजदण्डमाददान उपचीयते—न तु वलादिप्रोत्साहनेन व्यव-हारयन् । तदुक्तं "नोत्साहयेत्स्वयं कार्यम्" इति ।

विप्रादीनां विधिरनुवादो राज्ञो दृष्टान्तार्थः । अथवा सर्वस्योदाहरणप्रपञ्चः । तथाऽग्रेतनोऽपि ।। १६९ ।।

अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः ।।
न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ।। १७० ।।

करदण्डशुल्कादि शास्त्रविहितं वर्जयित्वाऽन्यत्पौरधनमनादेयं राज्ञः क्षीण-

कोशस्यापि । यत्तु शास्त्रन्यायागतं रक्षानिवेशधनं तत्सूक्ष्मं कार्षापणमात्रमपि न त्यजेत् । तदुक्तं "वल्मीकपथवद्राजा कोशवृद्धिं तु कारयेत्" इति ॥ १७० ॥

अनादेयस्य चादानादादेयस्य च वर्जनात् ॥

दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥ १७१ ॥

अनादानार्हमनादेयम् । अर्हे कृत्यस्तच्च दर्शितम् । दौर्बल्यं ख्याप्यते प्रकृतिभिः—'अस्मान्दण्डयति स्तेनाटविकसामन्तादीन्न शक्तो विजेतुमिति'। परे स्वशक्तिं प्रथयन्ति राष्ट्रीयाः । अतस्तैरभिपेण्यमानो विरक्तप्रकृतिरिह नश्यति । आदानान् इह प्रेत्य च धर्मदण्डनात् ॥ १७१ ॥

स्वादानाद्वर्णसंसर्गात्त्ववलानां च रक्षणात् ॥

बलं संजायते राज्ञः स प्रेत्येह च वर्धते ॥ १७२॥

स्वस्य न्यायप्राप्तस्यादानम् । शोभनं वाऽऽदानम् । भव्यमेव शोभनम् । वर्णयोरेव संसर्गः समानजातीयैर्वर्णसंसर्गः । द्विष्ठत्वात्संसर्गस्य च संबन्धिनोरश्रुतत्वाद्वर्णानां प्रस्तुतत्वात्तत्रैवापेक्षा युक्ता । यस्तु वर्णानामवान्तरप्रभवैः संसर्गो नासौ वर्णानामेव संबन्धितया व्यपदेष्टुं शक्यते ।

कश्चित्तु नकारं पठति—'वर्णासंसर्गादिति'। सर्वथा वर्णसंकरप्रतिषेधानुवादोऽयम् । दुर्बलानां बलवद्भिर्द्वेषिभिरभिभूयमानानां तेभ्यस्त्राणाद्धेतोः ।

राज्ञो बलं संजायते । सम्यग्व्यवहारदर्शनं कर्तव्यमधर्मदण्डनं च न कर्तव्यमित्येतद्विशेषाःपठिष्यन्ते श्लोकानामर्थवादाः ॥ १७२ ॥

तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये ॥

वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥ १७३ ॥

तथा चैतदेव प्रपञ्चयति । अयं सेवक आत्मीयोऽतः प्रियः, अयं च केवलं राष्ट्रवासी यस्यैव राष्ट्रं तमेवोपतिष्ठतेऽतोऽप्रियः । तद् हित्वा तद्विदित्वा यमवत्प्रजासु तुल्यः परिपालने व्यवहारे च स्यात् । ईदृशी हि यमस्य वृत्तिर्दृष्टा । यस्येत्यणो बाधकं तत्रौपसंख्यानिकं यकारमिच्छन्ति । कः पुनर्यमतुल्यतां भजति । जितक्रोधो जितेन्द्रियः । रागद्वेषौ जयेत्—प्रत्यासन्नाख्यानेन ॥ १७३ ॥

यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ॥
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ १७४ ॥

अधर्मेण यः कार्याणि कुरुते स मोहादेवेह व्यामूढो धर्मं जह्यात् । तस्येदमधर्मजं फलम्—विरक्तप्रकृतितया वशे कुर्वन्ति शत्रवः । विरक्ता हि प्रकृतयः क्रुद्धलुब्धभीतावमानिताः परैरुपजप्येरंस्ततश्च वहुकृत्वो वशे कुर्वन्ति दण्डयन्ति बध्नन्ति घ्नन्ति राष्ट्रमपहरन्ति चेत्येप वशीकारः ॥ १७४ ॥

कामक्रोधौ तु संयम्य योऽर्थान्धर्मेण पश्यति ॥
प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥ १७५ ॥

सिन्धवो नद्यो यथा समुद्रमाश्रयन्त्याश्रिताश्चानुरागिण्यस्तन्मय्यो वसन्ति न ततो निवर्तन्ते एवं कामक्रोधजयाद्राजानं प्रजाः समयोगक्षेमास्तन्मय्यः संपद्यन्ते ॥ १७५ ॥

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ॥
स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥ १७६ ॥

छन्द इच्छा । तेन राजानमज्ञापयित्वा यदा प्रागुक्तैश्चतुर्भिरुपायैः स्वेछया धनमार्गेण प्रवृत्तं तथाभूतं वा राजपुरुषैराह्वानेनार्हतरप्रदेशेऽनुरुध्येदं हि धनमिति स च पृष्टो धारयामीति यत्प्रतिपद्यते स राज्ञा चतुर्थं भागं दण्डापयितव्यः । यावत्तस्मै धारयति तस्य । तत्र सर्वमृणं शतं चेद्धारयति पञ्चविंशतिर्दण्डनीयः शतं तस्य दाप्यः । न त्वियं भ्रान्तिः कर्त्तव्या—शतं राज्ञः पञ्चविंशति शिष्टं धनिकस्य । धनिको हि तथा दण्डितः स्यान्नर्णिकः ॥ १७६ ॥

कर्मणाऽपि समं कुर्याद्धनिकायाधमर्णिकः ॥
समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः ॥ १७७ ॥

निर्धनोऽधमर्णो निर्धनत्वान्न मुच्यते किन्तर्हि कर्म कारयितव्यः, प्रेष्यत्वं व्रजेत्—यावता धनेन तत्कर्म कर्मकरः करोति तत्तस्य प्रविष्टं संसद्यपि कर्तव्यम् । कर्म कुर्वतश्च सलाभधने प्रविष्टे दास्यान्मोक्षः । समं कुर्यात्—उत्तमर्णेन । अथ शुद्धे धने नोत्तमाधमव्यवहारः—एकोऽधमर्णोऽपर उत्तमर्ण इति । एतच्च कार्यते समः—समान जातीयः अवकृष्टजातिः—हीनजातीयः । श्रेयांस्तूत्तमजातीयो

गुणाधिको वा—शनैः क्रमेण यथोत्पादं दद्यात्। नारदे पठ्यते—'ब्राह्मणस्तु परिक्षीणो शनैर्दद्यादथादशमिति' ।। अतो राज्ञा धनिकधनसंशुद्ध्यर्थं परिक्षीणो ब्राह्मणो न पीडयितव्यः, उत्तमर्णश्च रक्षणीयः ।। १७७ ।।

अनेन विधिना राजा मिथो विवदतां नृणाम् ।।
साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत् ।। १७८ ।।

अनेनेति पूर्वोक्तप्रकारप्रत्यवमर्शः । विधिना प्रकारेण । साक्षिप्रत्ययसिद्धानि । सिद्धशब्दः प्रत्येकमभिसंबध्यते । साक्षिभिः सिद्धानि निर्णीतानि । 'प्रत्ययः' अनुमानं दैवी वा क्रिया । कार्याणि । न केवलमृणादानमन्यदपि । समतां नयेत् । अर्थिप्रत्यर्थिविप्रतिपत्तिमपाकुर्यादैक्यमन्यत उत्पादयेत् ।

उपसंहृतमृणादानम् । समाप्तो व्यवहारः । सर्वत्र जयपराजयप्रकाराणामेवंरूपत्वात् । न हि साक्ष्यादिभ्य ऋते किंचिदुत्तरेषु विवादेषु प्रतिपत्तिनिरासनिमित्तम् । केवलं दंडविशेषस्तत्स्वरूपं च वक्तव्यमित्युत्तरः प्रपञ्चः । कीदृशोऽस्वामिविक्रयः कीदृशोऽनुशय इति स्वरूपं व्यवस्थाप्यते ।। १७८ ।।

कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ।।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः । १७९ ।।

प्रख्याताभिजनः कुलजः । यस्य पितृपितामहा विद्वांसो धार्मिका महापरिग्रहाः स्वकुलांशनिगृहीता नाकार्ये प्रवर्तते । स हि स्वल्पामपि गर्हणां सोढुमसमर्थः नितरां च निन्दन्ति जनाः । वृत्तं शीलमाचारो जनापवादभीरुता स्वाभाविकम् । संपन्नः तद्युक्तः । धर्मज्ञस्तु स्मृतिपुराणेतिहासाभ्याससंजाततदर्थावबोधः । सत्यवादी बहुकृत्वः कार्येषु संभाव्यमानो वृत्ताभिधानः । महापक्षः सुहृत्स्वजनराजामात्याद्यनुगृहीतमहिमत्त्वेन दुष्टराजाधिकारिणां गम्यो न भवति । धनी स्वधनरक्षार्थमदृष्टभयाच्च न परद्रव्यापहरणे वर्तते—'अस्ति मे पर्याप्तं धनं किं परकीयेन, कथंचिज्ज्ञाते दण्ड्यः स्यामिति' । आर्यो धर्मानुष्ठायी ऋजुप्रकृतिर्वा ।

निक्षेपम् । निक्षिप्यमाणं सुवर्णादिद्रव्यं कर्मसाधनेन घञोच्यते । निक्षिपेद्रक्षार्थं स्थापयेद्बुधः । एवं निक्षिपन्प्राज्ञो भवति । अन्यथा मूर्खः संपद्यते ।

सुहृद्भूत्वोपदिशति दृष्टम् । नायमदृष्टार्थोऽष्टकादिवदुपदेशः । ईदृशि पुरुषे निक्षिप्तस्य न विप्रलयो भवति—एवंविधेन निक्षिप्तमनेनेति शङ्का न भवति । यस्तु

नग्नकितवपानशौण्डादिः स केनचिदाकृष्टोऽपि मत्पित्राऽस्य हस्ते निक्षिप्तं मया चेति न शङ्कास्पदम्—सुवर्णादेर्महतो धनस्य निक्षेपधारक इति। काकणी मात्रिकेऽभियुज्यमाने भवत्येव ॥ १७९ ॥

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ॥
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥ १८० ॥

यथेति—यादृशेन प्रकारेण समुद्रममुद्रं ससाक्षिकमसाक्षिकमित्येवमादि—स तथैवेति। सोऽर्थो निक्षिप्तस्तथैव ग्रहीतव्यः। यथा दायो दीयते निक्षिप्यते तथा गृह्यते। यत्रैतन्निश्चितं भवति सर्वकालमेवास्य हस्ते सोऽमुद्रयित्वा स्थापयति—तत्र विप्रतिपत्तावमुद्रिते लब्धे धारणको यदि ब्रवीति 'नैप मुद्रयति निक्षिप्य मे वलाद्गच्छति' तत्रैवं शङ्कास्पदं जीयते। प्रमाणान्तरात्प्रायशो मुद्रणम्। अन्यदा तु मुद्रानाशे कियदपहारितमिति परिमाणविशेषज्ञानाय प्रमाणान्तरं व्यापारणीयम् राज्ञा। अपह्नवादेव सामान्यदण्डेन दण्डनीयः। निक्षेपदण्डस्तु द्रव्यपरिमाणे निश्चिते द्वितीयः।

"ननु च सर्वापह्नव एव विभावितो जित एव युक्तः।"

सत्यम्। यत्राविनाभावसिद्धम्। यथा मुषिते ग्रामे देवदत्तोऽभियुज्यते 'त्वयाऽन्यैश्चोरैः सहामुष्मिन्नहनि स ग्रामो हत' इति—स आह 'नैव तस्मिन्नहनि तं ग्राममहमगमम्'—तत्र साक्षिभिरुक्तं 'दृष्टं तस्मिन्नहनि तत्र यन्मुष्टं तत्तु न दृष्टम्'—तत्र देवदत्तेन मोषोऽप्यपहनुतस्तदहर्ग्रामसन्निधानसिद्धेः। स्फुटे च कारणान्तरे सन्निधावनुपलभ्यमाने सन्निधानादेशदेशाच्चौरत्वमपि युक्तमनुमातुम्। इह तु प्रमादनष्टानां नराणां मुद्रितनिक्षिप्तममुद्रितमेव नीयते।

यथा दायस्तथा ग्रहः। को मेऽभियोगावसर इत्यनया बुद्ध्या संभवत्यपह्नवः। न हि शक्नोत्यनुमातुम्। यदापि कथंचिदनुमापयेत्परिमाणं तु न विना प्रमाणान्तरं निक्षिप्तवचनादेव सिध्यतीति युक्तो दिव्यादिना निश्चयः। सर्वथा य एकदेशान्तरेण न संभवति तत्रैवैकदेशपराजित इति निश्चयः ॥ १८० ॥

यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति ॥
स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥ १८१ ॥

साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ॥
अपदेशैश्च संन्यस्य हिरण्यं तस्य तत्त्वतः ॥ १८२ ॥

व्यत्यस्तक्रमोऽयं श्लोकः समाम्नाये पठ्यते। प्रथममस्यार्धश्लोकं पठित्वा साक्ष्यभाव इति पठितव्यं, ततः स याच्य इति। एवं पाठो युक्तः। तथा ह्यर्थसङ्गतिर्भवति।

साक्ष्यभावाद्दिव्येषु प्राप्तेषु वचनमिदम्। यथा चर्णादानादिषु साक्ष्यभावसमनन्तरमेव दिव्यानि दीयन्ते न तद्वदत्र। किं तर्हि चरैरस्य वृत्तमनुचारयेत्। तत्र यदि निपुणतश्चार्यमाणो न क्वचिद्वृत्ते स्खलति तदा न शपथैरर्दनीयः। अथाप्यत्र प्रमाद्यति तदा निक्षेपहरणसंभावनाऽपि युक्तैव। तदाऽयं दिव्यैः परिशोधनीयः। न पुनरेकनिक्षेपहरणेनापरनिक्षेपहरणं सिध्यति। कदाचिद्गरीयसा प्रयोजनेनैकमपहृत्य कृतप्रयोजन उत्पन्नानुशयो वाऽन्यस्य समर्पयति। अतोऽयं श्लोकसंघातो झटिति निक्षेपधारणकस्य शपथनिवृत्त्यर्थो न पुनः प्रमाणोपन्यासः। न च प्राड्विवाकनिक्षेपहरणे राजदण्डवदनिश्चितापरनिक्षेपहरणेऽपि प्रथमाभियोक्तुर्दापयितुं युक्तः। अनिश्चिते हि हरणे दाप्येत यदि शास्त्रेण तदा निर्णयार्थं व्यवहारशास्त्रं स्यात्। ततश्च हेतुभिर्निर्णयः कर्तव्य इति विकल्पितः। तस्मान्न शास्त्रीयोऽयमर्थो न च लौकिकी व्यवस्थेति। साक्ष्यभाव इत्याद्युक्तेन प्रकारेणान्यपरतया नेया।

पदार्थयोजनामिदानीमनुसरामः। स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसंनिधौ। येन निक्षेप्त्रा रहसि स्थापितम्। साक्षिष्वसत्सु तस्य याचमानस्य धारणको यद्यपह्नुते 'न त्वया किंचिन्निक्षिप्तमिति' ततो निक्षेप्त्रा राजा ज्ञापितो न निक्षेपधारिण आकारं दर्शयेत्। किं तर्हि कुर्यात्। प्रणिधिभिश्चारैर्हिरण्यमात्मीयं सुवर्णं रूप्यं वाऽन्यस्य संन्यस्य निक्षिप्य याचितव्योऽर्थनीयः द्वितीयं निक्षेपं प्राड्विवाकेन। प्राड्विवाकग्रहणं निर्णयाधिकृतपुरुषोपलक्षणार्थम्।

किं साक्षादेव याचितव्यो नेत्याह—प्रणिधीनां मुखेन। यैरेव न्यस्तं वयोरूपसमन्वितैः। वयसा समन्विता येन बाला न भवन्ति—तेषां हि परैः प्रेरितानां मद्वञ्चनार्थो न्यास इति संभाव्यते। परिणतवयोभ्यस्तु नाशङ्का भवति। एवं रूपसमन्वयो व्याख्येयः। रूपमेव कस्यचित्तादृशं भवति यस्य दर्शनादेव चापलं प्रतिभाति। तथा च रूपमेतद्व्याचष्टे "भगवन्वीतरागताम्" इति। तेनैतदुक्तं

भवति—तादृशाः प्रणिधयः कर्तव्या येषां मद्वञ्चनार्थोऽयमुपक्रम इति नाशङ्कते धारणकः ।

अपदेशैः सव्याजैर्निक्षेपकारणैः राज्ञोपद्रवग्रामगमनादिभिः—'अनेन हेतुना त्वयि संप्रति निक्षिपामीत्यनृतसंभवात्कारणकथनमपदेशः ।

एतच्च सर्वं प्राड्निक्षेप्तुरसंनिधौ कर्तव्यम् ॥ १८१—१८२ ॥

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम् ॥
न तत्र विद्यते किंचिद्यत्परैरभियुज्यते ॥ १८३ ॥

स यदि । निक्षेपधारी यदि प्रतिपद्येत—बाढमस्ति गृहाणेत्यंगीकृत्य दद्यात् । यथान्यस्तं तथा कृतं समुद्रं अमुद्रं—यथाकृतं वस्त्रादि संवर्तितममुद्रित-मन्यद्वा अलङ्काराद्यनुपभुक्तं परिमलशून्यं गृहमुद्रया स्वचिह्नेन स्थापितम्—तादृशमेव चेद्दद्यान्न तत्र विद्यते किंचिदसत्यं यत्परैः पूर्ववेदिकैरभियुज्येत—एतेनास्माकीनः साक्ष्यभावान्निक्षेपोऽपह्नूयत इति । यथान्यस्तं यथाकृतमिति गूढागूढचिह्न-कृतेन भेदः । अथवा ग्रहीतृनिक्षेप्तृव्यापारभेदेन भेदः । यथाकृतं यथागृहीतम्—निर्विकल्पमविलम्बं च गृहीतं तथैव प्रतिदातव्यं प्रतिदाने यत्र कालग्रहणं न क्रियत इत्यर्थः ॥ १८३ ॥

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ॥
स निगृह्योभयं दाप्य इति धर्मस्य धारणा ॥ १८४ ॥

तेषां प्राड्विवाकप्रयुक्तनिक्षेप्तृणां यदि द्रव्यं निक्षिप्तं न दद्यात् । यथा-विधीति यथाकृतपदेन व्याख्यातम् । स धारणकोऽवष्टभ्य राजपुरुषैरुभयमर्थिनो राजनिक्षेपं च दाप्यः । इति धर्मस्य धारणा व्यवस्था । तात्पर्यमत्र व्याख्या-तम् ॥ १८४ ॥

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे ॥
नश्यतो विनिपाते तावनिपाते त्वनाशिनौ ॥ १८५ ॥

प्रत्यनन्तर उच्यते निक्षेप्तुः पुत्रो भ्राता भार्या वा । यस्य निक्षेप्तुर्द्रव्ये स्वाम्य-मस्ति—भार्यायास्तावत्स्वाम्यमुक्तमेव—पुत्रस्यापि पैतामहे भ्रातुश्चैकधनस्य । तत्र तेषां कश्चिद्याचते क्षेप्तर्यसंनिहिते 'देहि नोऽस्माकीनमेतदिति' । तत्र कश्चिदनया

बुद्ध्या दद्यात् 'साधारणमेतदेकेन निक्षिप्तमपरेण नीतमिति को दोष इति'। अत उच्यते न देयौ निक्षेपोपनिधी प्रत्यनन्तरे।

अत्रैवार्थवादं हेतुसरूपमाह। नश्यतो विनिपाते तौ। विनिपातोऽन्यथात्वं—प्रत्यनन्तरस्य देशान्तरे गमनादि—तस्मिन् सति तौ हीयेते। यदि तेन नीत्वा निक्षेप्तुर्न दत्तं तदा तेन पर्यनुयुक्तस्य धारणकस्य किमुत्तरम्? 'त्वदीयेन भ्रात्रैतद्धनं साधारणस्वामिना नीतमिति' नैतदुत्तरम्। "यथा दायस्तथा ग्रह" इत्युक्तम्—येनैव निक्षिप्तं स्वामिनाऽस्वामिना वा तस्मा एव देयम्—तस्यैवायं प्रपञ्चः।

यदि तु प्रत्यनन्तरो विक्रियां न गच्छेत्तदा तद्दानेऽपि न दोषः। तदाह अनिपाते त्वनाशिनौ। तत्र ह्यस्त्युत्तरं माऽनशत्तस्मादर्पयामि।

प्रत्यनन्तरेण नीते विनिपाते च तस्य निक्षेप्त्रे याचमानाय स्वधनं दातव्यमिति श्लोकार्थः॥ १८५॥

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे॥
न स राज्ञाऽभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः॥ १८६॥

जीवतस्तस्मान्निक्षेप्तुः प्रत्यनन्तरदानं नास्तीत्युक्तम्। मृतस्य तु यस्तद्धनमस्तीत्यविजानते स्वयं दद्यान्न स व्यवहारलेखनादिक्लेशनीयोऽन्यदप्यस्ति न वेद वेति। यदि तस्याभविष्यदधिकमिदमिव तदप्यदास्यदिति न क्लिश्यते। अत्राप्याशङ्का यदि न निवर्तेत—'महाधनोऽसावभून्न चान्येन समं प्रयुज्यते'—प्रमाणान्तरं निश्चयाय विचारणीयम्, विषाग्न्यादिभिः शपथैर्नार्दनीयः। घटकोशसत्यतण्डुलास्तु न विरुध्यन्ते न हि ते अतिक्लेशकराः। साक्ष्यभाव इत्यत्र द्वितीयो न्यासः। यश्च तयोर्न्यासः स इहापि द्रष्टव्यः॥ १८६॥

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम्॥
विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥ १८७॥
निक्षेपेष्वेषु सर्वेषु विधिः स्यात्परिसाधने॥
समुद्रे नाप्नुयात्किंचिद्यदि तस्मान्न संहरेत्॥ १८८॥

निक्षेपेपूपचयमानेष्वनन्तरोक्तो विधिः 'साक्ष्यभाव' इत्यादिः परिसाधनार्थो विज्ञेयः। समुद्रे निक्षेपेऽन्यदप्यस्मिन्भाण्डे द्रव्यमभून्नाशितं कृमिभिरित्यादिकं पर्यनु-

योगं नाप्नुयान्निक्षेपधारी तत्र धारणकस्य। एवं मूषकादिनाशे द्रष्टव्यम्। यदि दारुमये भाण्डे वस्त्रादि स्थापितं तीक्ष्णदशनैर्मूषकैर्दारु भित्त्वा भक्ष्येत न निक्षेपधारिणो दोषः। तत्रापि वासनपरिवेष्टितः स्थूलपोट्टलको मुद्रितो यदि निक्षिप्येत यत्तदीये दारुभाण्डे नैव माति तदा बहिर्मूषकादिभक्षितेऽपि हि न दोषः। यदि चैतन्निक्षेप्तृज्ञानं भवति धारकेण परिभाषितं न मम भाण्डमन्यदस्ति, चरित्रज्ञो वाऽस्य निक्षेप्ता कदाचित्प्रत्यासन्नो भवति ॥ १८७-१८८ ॥

चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा ॥
न दद्याद्यदि तस्मात्स न संहरति किंचन ॥ १८९ ॥

चौरास्तु वेदिता अवेदिता वा सुरङ्गभिदादिना यदि मुष्णीयुः कृतरक्षासंविधाने धारणिके स्वामिन एव नाशः। जलेनोढमुदकेन देशान्तरं नीतम् ॥ १८९ ॥

निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च ॥
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥ १९० ॥

हरति यो निक्षिप्तमसाक्षिकं योऽप्यपनीय नीत्वा वा याचते तमन्विच्छेत्। 'अन्वेपणा' तत्त्वपरिज्ञाने यत्नः सर्वप्रमाणव्यापारेण। उपायाः प्रमाणानि सामादयो वा तेन चलितवृत्तस्याप्रतिपाद्यमानस्य ताडनबन्धनाद्यपि महति धने चौरवत्तत्त्वप्रतिपत्त्यर्थं प्रयोज्यम्। न तत्त्वानिश्चये निग्रहः। वैदिकग्रहणं स्तुत्यर्थम् ॥ १९० ॥

यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ॥
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ १९१ ॥

निक्षिप्तमपह्नुवानस्य अनिक्षिप्तं याचमानस्य च दण्डोऽयम्। यावति धने मिथ्या प्रवर्तते तावद्दण्ड्यते ॥ १९१ ॥

निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम् ॥
तथोपनिधिहर्त्तारमविशेषेण पार्थिवः ॥ १९२ ॥

चौरवच्छिष्टिः पूर्वेणोक्ता। तया च शरीरनिग्रहस्तत्समधनं वैकल्पिके। जाति-भेदेन ब्राह्मणादन्यत्र प्रदेश उक्तः। अनेन निवर्त्यते पुनर्विधानेन चौरवच्छिष्टिः। वाग्दण्डधिग्दण्डादिरूपैव समुच्चीयते धनदण्डेन नाङ्गच्छेदादिरूपा। न च ब्राह्मण-

स्यापि वैकल्पिके पूर्वेण शारीरदण्डे प्राप्ते तन्निवृत्त्यर्थं पुनर्वचनं युक्तम्, सामान्येन ब्राह्मणस्य शरीरदण्डप्रतिषेधात् "न जातु ब्राह्मणं हन्यात्" इति ( ३८१ )।

उपनिधिः प्रीत्या, यद्भुज्यते। अविशेषेण—द्रव्यं जातिं च नापेक्षेत।

अन्यैस्तूपनिधिः परिभाषितः। स तत्रैव नेह। परिभाषाया अकरणाल्लौकिकार्थं एव ग्रहीतुं न्याय्यः। वक्ष्यति च "प्रीत्योपनिहितस्य च" इति (१९६)॥ १९२॥

उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः॥
ससहायः स हंतव्यः प्रकाशं विविधैर्वधैः॥ १९३॥

उपधा व्याजः छद्मेत्यनर्थान्तरम्। ताश्चानेकविधाः। द्रव्यपरिवर्तः—कुंकुमं दर्शयित्वा कुसुंभादिदानं—तुलादिमानापचय इत्याद्याः। तत्र चान्यं विधिं वक्ष्यति "नान्यदन्येन संसृष्टम्" इत्यादि (२०३)। इह तु वित्रासनं राजत उपकारदर्शनं कन्यानुरागकथनमित्येवमाद्या गृह्यन्ते। चौरास्त्वां मुष्णन्ति यद्यहं त्वां न रक्षामि—राजा तवात्यन्तं कुपितो मया तु बहु समाहितं—राजतस्ते नगराधिकारं दापयामि मुख्यं वोपकारं करोमि—पुष्पमित्रदुहिता त्वय्यत्यन्तमनुरागिणी मद्धस्त इदमुपायनं प्रेषितवती—इत्येवमाद्यनृतमुक्त्वाऽऽत्मीयमुपायनमासज्य बहु प्रतिनयन्ति—तत्समक्षं च राजनि तत्समं वा कार्यान्तरमुपांशु निवेद्य कथयन्ति—त्वदीयं कार्यमुपक्रान्तम्—इत्येवमाद्याभिरुपधाभिः परद्रव्यं च भुञ्जते। तेषामयं राजमार्गे प्रकाशं विविधः कुठारशूलारोपणहस्तिपदमर्दनाद्यनेकोपायसाधनो वध उच्यते।

अन्ये तु प्रकरणान्निक्षेपविषयमेवेदमाहुः। तत्र हि प्रतिपद्यान्यत्र मया निहितं स च न सन्निहितः श्वःपरश्व आगच्छतीत्यसमर्पयन्हरतीति॥ १९३॥

निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ॥
तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हति॥ १९४॥

य इति निक्षिप्यमाणद्रव्यजातिनिर्देशः। यावानिति परिमाणस्य। य आह—सुवर्णमेतस्य हस्ते मया निक्षिप्तं कांस्यं ददाति—शतं च स्थापितमर्धं ददाति—स पृच्छ्यते—किं रहस्युत कस्यचित्समक्षमिति। स चेदाह कुलसंनिधौ। कुलं साक्षिणः। तत्र ते पृष्टा यदाहुस्तदेव सत्यम्। विब्रुवन्विरुद्धं ब्रुवाणो दण्ड्यते तत्रापि यदि ब्रूयात्साक्षिसमक्षं कथं तैर्विनाऽन्यत्स्थापितमिति—अस्त्यत्र प्रमाणान्तरव्यापारणावसरः।

अयमपि श्लोको नाधिकविध्यर्थः ।। १९४ ।।

मिथो दायः कृतो येन गृहीतो मिथ एव वा ।।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ।। १९५ ।।

यो यथा निक्षिपेदित्यनेन ( १८० ) निक्षिप्तविधिरयमुक्तः । अन्येषु कार्येष्वनेन प्रतिपाद्यते । ऋणादानोपनिधिविक्रयाद्यपि येन यादृशेन प्रकारेण कृतं तादृशेनैव प्रत्यर्पणीयम् । रहसि कृतस्य राजकुलेऽशमार्गणादिना प्रकाशनं न कर्तव्यम् । तेन स्वहस्तलेख्येन ऋणे गृहीते न राजकुलेऽशं दाप्यते । उत्तमर्णधनं क्षपणीयम् ।

अनेनैव निक्षेपेऽपि सिद्धे तत्र पुनर्वचनं नित्यार्थम् । तेन निक्षेपादन्यत्र रहसि कृतस्यापि विप्रतिपत्त्याशङ्कायां प्रकाशं प्रतिदानं कदाचिदस्ति । अथवेह्याप्रकाशकृतस्य प्रकाशीकरणं निषिध्यते । तत्र त्वन्योऽर्थः समुद्रोऽसमुद्र इत्यादि तेनापौनरुक्त्यम् ।

मिथःशब्दो रहसि विज्ञेयः । अथवा परस्परं मिथः । सर्वं कार्यं द्वाभ्यां साध्यं दानादि परस्परमेव क्रियत इति । पुनर्वचनं तृतीयप्रतिषेधार्थम् ।

दायशब्दः सामान्यशब्दो निक्षेपादन्यानपि विक्रयादीनाह ।। १९५ ।।

निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।।
राजा विनिर्णयं कुर्यादक्षिण्वन्न्यासधारिणम् ।। १९६ ।।

प्रकरणोपसंहारोऽनेन क्रियते । प्रीत्योपनिहितस्य । स्नेहेन किंचित्कालं भोगार्थं दत्तस्य न्यासो निक्षेपः । तस्य धारणको यथा न पीड्यते तथा निर्णयः कर्तव्य इति । अक्षिण्वन्नपीडयन् ।

द्वित्राः श्लोका निक्षेपकरणे विध्यर्थाः सर्वमन्यदन्यतः सिद्धं सौहार्देनोक्तम्।।१९६।।

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः ।।
न तं नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम् ।। १९७ ।।

अस्वामिविक्रयाख्यविवादपदमिदमनुक्रान्तम् ।

परस्य यद्द्रव्यादि स्वं तच्चेदस्वामी तत्पुत्रादिरन्यो वा विक्रीणीते स्वामिनाऽननुज्ञातस्तं स्तेनं चौरं विद्यात् । यद्यपि यस्तस्मात् क्रीणाति स तमस्तेनं मन्यते ।

न तं नयेत साक्ष्यं तु । तं पुरुषं न नयेत न प्रापयेत् साक्ष्यं न कारयेत्साक्षि-

करणे न नियोक्तव्य इत्यर्थः । यथा चौरस्तादृश एवासौ । स्तेनत्वाच्च न साक्षित्वम् । न साक्षित्व एव प्रतिषेधः । किं तर्हि ? सर्वासु साधुजनसाध्यासु क्रियासु । परस्वमननुज्ञातेन विक्रीतं क्रेतुर्न स्वं भवतीति सिद्धे साक्षिकर्मनिषेधद्वारेण प्रतिषेधो वैचित्र्यार्थः ॥ १९७ ॥

अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् ॥
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥ १९८ ॥

पूर्वेण साधुजनकर्तृकासु क्रियासु साक्ष्यादिष्वपि अस्वामिविक्रयकारिणमनर्हतोक्ता । अनेन षट्शतो दण्ड उच्यते । षट्कार्षापणशतानि अवहार्यो दापयितव्यो दण्ड्य इति यावत् । सान्वयः । अन्वयोऽनुगमनसंबन्धः—स यस्यास्ति पुत्रभ्रात्रादिः स्वामिनोऽनुगतः सान्वयः । स ह्यननुज्ञातोऽपि विक्रीणानो न स्फुटचोरो यतस्तस्येयं बुद्धिर्मदीयमेवैतद्यत्पितुरिति—तं प्रतीयमपि संभावना भवति तस्यैव विक्रीय मूल्यं ददाति । यस्त्वत्यन्तासंबन्धः स निरन्वयः । चौरकिल्बिषं निग्रहं निःसंशयं प्राप्तः । अनपसरः । यदि तद्गृहं तस्य नापसृतं भवति तदाऽनपसरश्चौरवद्दण्ड्यः । यदि तु तद्गृहादेव केनचिद्दत्तं विक्रीतं वा तस्य तेन वाऽज्ञत्वात् तत्प्रतिगृहीतं प्रकाशक्रयेण वा विक्रीतं तदा न चौरवद्दण्ड्यः । षट्शतमेव दाप्यः ।

अथवा अन्वयो विक्रीणाति तस्य विक्रेयद्रव्यस्याऽन्यतः क्रयः अपसरः क्रयादन्यः प्रतिग्रहादिरागमः । एतदुक्तं भवति । यदि तेन तन्न कुतश्चन क्रीतं नापि प्रतिग्रहादिना लब्धं तदा चौरः ॥ १९८ ॥

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ॥
अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥ १९९ ॥

न केवलमस्वामिसकाशाद्यत्क्रीतं तन्न सिध्यति, किं तर्हि, प्रतिगृहीतमपि । प्रतिग्रहेण प्रीत्या वा दानं दायः सोऽपि न सिध्यति । "विक्रीणीते परस्य" इत्यनेन (१९७) विक्रेतुः प्रतिग्रहीतुश्चास्वाम्यमुच्यते । "स्वामी रिक्थक्रये" त्यादिना (गौतम १० । ३९) स्वाम्याशङ्कायां प्राप्तोऽयं प्रतिषेधः । व्यवहार एषा स्थितिर्नातिक्रमणीया ॥ १९९ ॥

संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ॥
आगमः कारणं तत्र न संभोग इति स्थितिः ॥ २०० ॥

यस्मिन्वस्तुनि गोवस्तुहिरण्यक्षेत्रादावन्यस्य भोगो दृश्यते अन्यस्य च रिक्थप्रतिग्रहादिरागमः स्वाम्यापादकस्तत्रागमो बलवान्न भोगः। भोग एव संभोगः। कारणं स्वाम्ये । तत्रेति स्थितिः। एवमनादिव्यवस्था न भोगमात्रेण स्वत्वम्। यादृशेन च स्वत्वं तत्पुरस्ताद्व्याख्यातम् "यत्किंचिद्दशवर्षाणि" (१४७) इति वानेन विरोधस्तत्रैव परिहृतः ॥ २०० ॥

विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसन्निधौ ॥
क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥ २०१ ॥

यादृशेन क्रयेण स्वाम्यं भवति तं दर्शयति । विक्रीणतेऽस्मिन्व्यवहारिण इति 'विक्रयः' आपणभूमिस्ततो यो गृह्णीयाद्धनं गवादि क्रीयमाणं द्रव्यं मूल्यं वा स लभते न्यायतः क्रयेण। कुलसंनिधौ विशुद्धम्। न्यायतः क्रय उचितेन मूल्येन। असंभाव्यपापपुरुषाकुलस्यान्यव्यवहर्तृमेलककारपुरुपसमूहस्य समक्षं गृहीतं लभते नापहारयति। अन्यथा अस्वामिना विक्रये तु द्रव्यं प्रतिनीयते किन्तु मूल्यं लभते। तस्माद्यस्तस्य विक्रयी सोऽन्यायतः क्रये दण्ड्यते मूल्यं च हारयति। एतदुक्तं ( या० व्य० १७० )

"विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥"
एष एवार्थोऽनेन श्लोकेन प्रतिपाद्यते ॥ २०१ ॥

अथ मूलमनाहार्यं प्रकाशक्रयशोधितः ॥
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥ २०२ ॥

असंभाव्यपापात्पुरुषादित्यादि न्यायतः क्रय उक्तः। स चेद्विक्रेता शक्य आहर्तुं तदा पूर्वोक्तो विधिः—"स्वामी द्रव्यम्" इत्यादि। अथ स विक्रयी गतः, येन क्रीतं स्वामिना चिह्नीकृतं तेन च मूलं विक्रेता पुरुष आहर्तुं न शक्यते। प्रकाशं जनसमक्षं प्रसिद्धाया विक्रयभुवः क्रीतमत ईदृशेन क्रयेण शोधिते द्रव्ये 'शुद्धः' क्रेताऽदण्ड्यो मुच्यते। धनं तु नाष्टिकः स्वामी ज्ञापितस्वं वा लभते। नष्टमन्वेषते नाष्टिकः। नष्टमस्यास्तीत्येवं ठनि कृते प्रज्ञादित्वात्स्वार्थिकोऽण् कर्तव्यः। नष्टं प्रयोजनमस्येति वा। तेनायं संक्षेपः—प्रकाशक्रये तु दण्डो न स्याद्धननाशस्तु स्थित एव ॥ २०२ ॥

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ॥
न सावद्यं न च न्यूनं न दूरे न तिरोहितम् ॥ २०३ ॥

अस्वामिविक्रयप्रसङ्गेनान्योऽपि विक्रये धर्म उच्यते।

नान्यत् कुंकुमादिद्रव्यं कुद्रव्येण तदाभासेन कुसुंभादिना संसृष्टं विक्रेयम्। यच्च सावद्यं चिरकालं भांडेऽवस्थितत्वात् प्राप्तविभावं जीर्णमजीर्णाभासं वस्त्रादि। न च न्यूनं तुलामानादिना। दूरे-दूरस्थितं—ग्रामे मम विद्यन्ते वासांसि गुडादिवा द्रव्यम्। तिरोहितं स्थगितं वस्त्रादिनाऽन्तर्हितं—यस्य वा स्वरूपं केनचिद्द्रव्यरागेणान्तर्द्धीयते पुराणं नववत्प्रतिभाति तत्तिरोहितं न विक्रेतव्यम्। इदं द्रव्यमीदृशं च प्रदर्श्य विक्रयः कर्त्तव्यः। अन्यथाकृतस्तु न कृतो दशाहादूर्ध्वमपि प्रत्यर्पणे न दोषः।

अन्यस्य दण्डस्येहानाम्नातत्वात् 'उपधाभिरि' त्येष एव दण्डः। प्रकरणभेदेन पठितत्वादस्वामिविक्रयदण्ड इत्यन्ये ॥ २०३ ॥

अन्यां चेद्दर्शयित्वाऽन्या वोढुः कन्या प्रदीयते ॥
उभे त एकशुल्केन वहेदित्यब्रवीन्मनुः ॥ २०४ ॥

विक्रयप्रकारत्वाच्छुल्कादिना कन्यादानस्य अस्मिन् प्रकरणे धर्म उच्यते। शुल्ककाले रूपवतीं दर्शयित्वा गृहीतशुल्को यस्य रूपहीनां ददाति वयोहीनां गुणहीनां वा तस्योभे अपि शुल्कदेनैकेन शुल्केन हर्तव्ये। कन्यानामेवायं धर्मः। गवाश्वादिद्रव्याणां त्वस्मिन्व्यतिक्रमेऽन्यो विधिर्वक्ष्यते ॥ २०४ ॥

नोन्मत्ताया न कुष्ठिन्या न च या स्पृष्टमैथुना ॥
पूर्वं दोषानभिख्याप्य प्रदाता दण्डमर्हति ॥ २०५ ॥

उन्मत्तादिदोषान्कथयित्वा ददतो दण्डो नास्तीति प्रतिषेधद्वारेण कथयतो दण्डमाह। न केवलं शुल्के देया—या अन्यस्या अपि ब्राह्मादिविवाहेन विवाहयिष्यमाणायाः—दत्ताऽप्यदत्ता भवति, दण्डश्च प्राप्नुयाच्चौरकिल्विषमिति जानानस्य। अजानतः षट्शतम् प्रकृतत्वात्।

उन्मत्ताया कुष्ठिन्या ये कुष्ठोन्मादादयः। या च स्पृष्टमैथुना तस्याश्च यो दोषो मैथुनस्पर्शः। तान्दोषान्पूर्वं वाक्प्रदानेनाख्याप्य प्रकाश्यैतद्दोषा कन्येत्येवमुक्त्वा ददतो नास्ति दण्ड इति पदयोजना ॥ २०५ ॥

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ॥
तस्य कर्मानुरूपेण देयोंशः सहकर्तृभिः ॥ २०६ ॥

संभूयसमुत्थानस्य प्रक्रमोऽयम्। तत्र वैदिकं तावत्संभूयकार्यमुदाहरति। यज्ञो ज्योतिष्टोमादिः। तत्र यागरूपानेकांगकर्मनिर्वर्तनार्थमृत्विग्वृतः—'त्वया ममेदं हौत्रं कर्तव्यमाध्वर्यवमौद्गात्रं वेति' श्रौतेन विधिनाऽनुष्ठेयमित्युपगमश्च प्रवर्तितः। कथंचिदपाटवादिना सामिकृतं यत्परिहापयेत्त्यजेत्तदानीं तस्य देयो दक्षिणांशः कर्मानुरूपेण। यावती तस्मिन् क्रतौ दक्षिणा तां निरूप्य चतुर्थे भागे कर्मणः कृते चतुर्थतृतीय इत्येतदानुरूप्यम्। सहकर्तृभिः। कर्त्तारः पुरुषा प्रधानर्त्विजो होत्रुद्गात्रादीनां प्रस्तोतृमैत्रावरुणप्रभृतयः॥ २०६ ॥

दक्षिणासु च दत्तासु स्वकर्म परिहापयन् ॥
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥ २०७ ॥

माध्यन्दिने सवने दक्षिणा दीयन्त इति। तत उपरिष्टात्कर्म त्यजतामप्रत्याहरणीयां लभेत—दक्षिणामितिशेषः—न प्रतीपं त्याजयेदित्यर्थः। अन्यां भृतिं दत्वा अन्येन पुरुषेण यजमानस्तत्कर्म समापयेत्।

'ऋत्विग्भिः कर्म कर्त्तव्यं वरणाच्च ऋत्विजो भवन्ति—तच्च नियतकाले प्राक्कर्मण आरंभात्—अन्तःक्रतु क्रियमाणं विगुणं भवति—समाप्तिश्चापि कर्तव्येति—विगुणं चेत्समापनीयमंगान्येव तदन्यकर्तृकाणि करिष्यामीति'—बुद्धिनिवृत्त्यर्थमुक्तमन्येनैवेति। तावदेव विगुणं यदशक्यं—शक्यं तु सर्वं कर्तव्यम्।

केचित्कारयेदिति ऋत्विजोऽपि संबन्धमाहुः। गृहीत्वा दक्षिणां वाऽधिकां दद्यात्स्वयमशक्नुवन्। प्राग्दक्षिणाभ्यः शेषकर्मसमापने यजमान एवाऽधिक्रियते॥ २०७ ॥

यस्मिन्कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ॥
स एव ता आददीत भजेरन्सर्व एव वा ॥ २०८ ॥

इदमपरं प्रकृतोपयोगि वैदिकं कथ्यते। वैदिके कर्मणि सामस्त्येन दक्षिणा आम्नायंते न प्रतिपुरुषं विभागेन—'तस्य द्वादशशतं दक्षिणेति'। तच्चातिदेशेन क्रत्वन्तराणि तद्विकाराण्यनुगच्छन्ति राजसूयादीनि। तत्र च केषुचिदङ्गकर्मसु

प्रतिपदमन्या दक्षिणाऽऽम्नाता पुरुषविशेषसंयोगेन—'हिरण्मये प्रकाशवदध्वर्यवे' इत्यादि । ताः प्रत्यङ्गदक्षिणाः संपद्यन्ते । किमध्वर्योश्चातुर्विद्यावादिकवद्ददाति-संबन्धः—सर्वेषामृत्विजां दक्षिणा–अध्वर्युस्तु द्वारमात्रम्—उत तस्यैव सा—अन्येषां प्रकृतांशः इति संशयोपन्यासार्थः श्लोकः ।

प्रतिपदं पुरुषविशेषाश्रया अङ्गेषु दक्षिणाः प्रत्यङ्गदक्षिणाः । अथवा वीप्सायां प्रत्यङ्गशब्दः । अङ्गमङ्गमाश्रिताः प्रत्यङ्गाः । स एव ता आददीत । मुख्य एव पुरुषस्य ददातिना संयोग उत कर्तृत्वाविशेषादन्येऽपि भजेरँल्लभेरन्—प्रधानदक्षिणा इव इति कथयित्वा प्रश्नः । पुरुषविशेषमुक्तास्तदर्था एवेति निर्णयः । एवं ददाति-मुख्यार्थो भवति । पुरुषसंयोगश्च नादृष्टार्थः ॥ २०८ ॥

रथं हरेत चाध्वर्युर्ब्रह्माधाने च वाजिनम् ॥
होता वाऽपि हरेदश्वमुद्गाता चाप्यनः क्रये ॥ २०९ ॥

रथमध्वर्युराधाने हरेत् । ब्रह्मा च वाजिनं वेगवन्तमश्वम् । होता वा अश्वं वृषमन्यं वा । कासुचिच्छाखास्वाधान एता दक्षिणाः । अतः सोमक्रये यच्छकटं तदुद्गातुः । तत्र शकटेऽन्यतरोऽनड्वान्युक्तः स्यात् अन्यतरो वियुक्त इत्यपि पठ्यते । तेन च सोमः क्रीत उपाह्रियते ।

अन्ये त्वपूर्वमन आहुर्न सोमोपाहरणार्थम्, न हि क्रयेण शक्यते विशेषयितुम् ॥२०९॥

एवं तावत्पुरुषविशेषसंयोगिनीनामङ्गदक्षिणानां विधिरुक्तः । प्रधानदक्षिणानां सामान्यतः श्रुतानामिदानीं विभागमाह—

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ॥
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥ २१० ॥

सर्वेषामृत्विजां ये मुख्यास्तेऽर्धिनः । यावती तस्मिन्क्रतौ सामस्त्येन दक्षिणाऽऽम्नाता तस्यास्तेऽर्धिनोऽर्द्धहराः । सोमयागेषु हि षोडशर्त्विजस्तत्र चत्वारो मुख्या होताऽध्वर्युर्ब्रह्मोद्गातेति, तेषामर्धम् । 'तस्य द्वादशशतं दक्षिणेति' ततोऽर्धं षट्पञ्चाशत् । तदर्धेन अष्टाविंशत्याऽर्धिनस्तद्वन्तः—अपरे येषां ततोऽनन्तरं वरण-माम्नातं मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः । तृतीयिनः तृतीयांशाः । अंशशब्दोऽर्धशब्देन समानार्थोऽर्धशब्दश्च नावश्यं समप्रविभाग एव—किंचिन्न्यूने-

ऽधिकेऽपि सामीप्येन वर्तते। तेन तृतीयो भागः षट्पञ्चाशतः षोडश गृह्यन्ते। एकैकस्य चतस्रो भवन्ति। समस्ततृतीयं भागं प्रयच्छन्ति षट्पञ्चाशतस्तृतीयं च। होतुरच्छावाकोध्वर्योर्नेष्टा ब्रह्मणोग्निदुद्गातुः प्रतिहर्ता। ये च पादिनस्ते चतुर्थं भागं कर्मणः कुर्वन्तीति 'पादिनः'। चतुर्थे च स्थाने मैत्रावरुणस्थानान्ते। चतुर्थांशाः। द्वादशसमुदाये पूर्ववत्। एवं "तं शतेन दीक्षयन्ती" त्यत्रापि क्लृप्तिः कर्तव्या—'अर्धिनो दीक्षयति' 'पादिनो दीक्षयती' त्येवमादिभिः शब्दैः। तत्र द्वादशक्रमविधिरेव। अन्यत्र श्रुतो व्यवहार इहापि तयैव रीत्या कृत इति॥ २१०॥

संभूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः॥
अनेन विधियोगेन कर्तव्यांऽशप्रकल्पना॥ २११॥

यथा यज्ञे यो बहूनि कर्माणि कायक्लेशकरणे विद्वत्तातिशयसाध्ये च नियुक्तो भूयसीं दक्षिणां लभते न्यूनकर्मकारी तु न्यूनां तद्वल्लौकिकेषु गृहचैत्यादिकारिषु संभूय संहत्य वर्धकिस्थपतिसूत्रधारादिषु स्वसमयप्रसिद्धो यावानंशः सूत्रधारस्य यावान्स्थपतेस्तत्रानेन विधियोगेन। 'विधि' वैदिकोऽर्थः तत्प्रसिद्धा व्यवस्था 'विधियोगेन' वैदिक्या यज्ञगतया व्यवस्थयेत्यर्थः।

एवं नाटकादिप्रेक्षायां नर्तनगायनवादकेषु भागप्रक्लृप्तिः। यद्यपि सर्वे विद्वांसः सर्वकर्मानुष्ठानशक्ताश्च तथापि कर्मानुरूप्येण भागो न पुरुषानुरूप्येणेति संभूयसमुत्थानम्॥ २११॥

धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम्॥
पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत्॥ २१२॥

यः कश्चिदाह 'सान्तानिकोऽहं यियक्षुर्वा देहि मे किंचिदिति'—तस्मै यदि दत्तं भवेत्—स च न यजेत न विवाहकर्मणि प्रवर्तेत—तद्धनं द्यूतेन वेश्याभिर्वा क्षपयेदन्यत्र वा विनियुञ्जीत वृद्धिलाभकृष्यादौ—न देयं तस्य तद्दत्तस्य। दानप्रतिषेधो नोपपद्यते—अतः प्रत्याहरणीयमिति वाक्यार्थः।

अथवा दत्तान्तो गौणो व्याख्येयः—दत्तं प्रतिश्रुतं न देयम्। तथा च गौतमः (५। २१) "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्"।

किंपुनरत्र युक्तम्।

उभयमित्याह । दत्तस्य प्रत्याहरणं प्रतिश्रुतस्य वाऽदानम् । तथा च स्मृत्यन्तर-उभयं पठितम् । आह हि नारदः ( ८ । १०—११ ) "कर्त्ताहमेतत्कर्मेति" उपक्रम्य "यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम्" इति । प्रयोजनविशेषोद्देशेन यद्दत्तं तस्मिन्ननिर्वर्त्यमाने । व्यवस्थितमपि प्रतिग्रहीतुर्गृहादाहर्त्तव्यम् । दानस्योपक्रममात्रं तदानीं समर्पणं समाप्तिस्तु निर्वृत्तप्रयोजनेति नारदस्य मतम् ।। २१२।।

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ॥
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥ २१३ ॥

संसाधनं राजनिवेदनादिना ऋणवत्प्रतिश्रुतस्य मार्गणं—स्वीकृतस्य प्रतियाच्य-मानस्य राजनिवेदनं—अयं मह्यं दत्वा प्रतिजिहीर्षतीति सिद्धस्य दृढीकरणं—संसाधनमेतदेतत् ।

दर्पाल्लोभेनेति कारणानुवादः ।

एवं कुर्वतो दण्डः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिरिति । चौरदण्डमाशङ्कमानः सुवर्णं विधत्ते । अचौरशङ्कया च दत्तं किल तेन तस्मै न स्वयं हृतं कथमयं चौरः स्यादिति शङ्कां निवर्तयितुं स्तेयशब्दः प्रयुक्तः । सत्यपि चौरत्वे वाचनिकः सुवर्णदण्डोऽन्यासु क्रियासु चौरवद्व्यवहर्तव्यः ।। २१३ ।।

दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया ॥
अत ऊर्ध्वं प्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥ २१४ ॥

पूर्वणार्धेन पूर्वविवादोपसंहारः । उत्तरेण वक्ष्यमाणोपक्रमः । दत्तस्यैषाऽनप-क्रियोदिता । 'अपक्रिया' क्रियापायः । तस्य नञा प्रतिषेधः । दानमेवं न चलितं भवति—एषैव दाने स्थितिरिति यावत् । धर्मादनपेता धर्म्या ।

कथं प्रतिश्रुत्यादीयमाने धर्मो न नश्यतीति नैषा शङ्का कर्तव्या । एष एवात्र धर्मो यत्र दीयते दत्तं च प्रत्यादीयते । उदिता उक्ता । यथावच्छब्दसमुदाय एव याथातथ्ये वर्त्तते । सम्यङ्निरूपितेत्यर्थः । अथवा यथाशब्दो योग्यतायां वर्तते—तामर्हतीति वतिः कर्तव्यः ।

वेतनं भृतिः—तस्यानपक्रिया । वेतनेन स्वकर्म कुर्वतां यो धर्मः स इदानी-मुच्यत इति प्रतिज्ञा ।। २१४ ।।

भृतो ऽनार्त्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ॥
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ २१५ ॥

उद्दिष्टेन मूल्येनोद्दिष्टं कर्म करोति स इह भृतोऽभिप्रेतः, भृत्यकर्मविशेषेण स्वीकृतो भृत्य – देहि मे पञ्चरूपकाणीदं ते कर्म कर्ताऽस्मीयता कालेनेत्याभाष्य प्रविष्टः। स चेत्कर्म न समापयति—कृष्णलानि सौवर्णानि ताम्ररजतयोर्वा कर्मस्वरूपमनुबन्धादि च ज्ञात्वा दण्ड्यते। तानि च रूपकाणि वेतनार्थं कल्पितानि न लभेत। यश्चनार्तो दर्पान्न करोति यथोदितं कर्म। व्याध्यादिनाऽपीडितस्य दर्पादकुर्वतो भृतिहानिर्दण्डनं च। अतः स एवं वक्तुं न लभते—यावन्मया कर्मांशः कृतस्तदानुरूप्येण देहीति।

ऋत्विजामप्येव दण्डं केचिदिच्छन्ति स्वेच्छया त्यजताम्। तदयुक्तम्। अत्र हि महाननर्थो यजमानस्य सामिकृत्ये यजमानेऽतो दण्डो महानत्र युक्तः—यजमानस्य च यन्नष्टं तद्दापनीयाः- दीक्षोपसद्देवव्रतैः शरीरापचये समुत्थातव्यम्।

अन्यो यः शिल्पी कंचनकर्मणि प्रवर्तयति तडागखनने देवस्य गृहकरणे 'अहं ते समापयिता प्रवर्तस्वेति'—पश्चाच्चापसरेत्तेन स्वामिनः क्षयव्ययायासाः सर्वे संवोढव्या भाण्डवाहवणिग्न्यायेन। एष हि न्यायः कात्यायनेन सर्वत्रातिदिष्टः। भाण्डवाहकदोषेण वणिजो यदि द्रव्यं नश्येत्तद्भांडवाहको वहेत्। "यो वाऽन्यः कस्यचित्कर्मणि धनमावध्यार्धतो निवर्ततेति" कात्यायनीये सूत्रे धनमावध्याऽऽसज्य धनव्ययं कारयित्वा यश्चार्द्धकृते निवर्तेत सोऽपि तद्वहेदित्यनुपङ्गः। एवं योऽपि षाण्मास्यः सांवत्सरो वा यथोपपादककर्मकारी भक्तदासस्तस्याप्येष एव न्यायः। आह च नारदः ( ६।५ )

"कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्वा भृतिं वलात्।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणं भृतिमावहेत ॥
कालेऽपूर्णे त्यजन्कर्म भृतिनाशनमर्हति" ॥ २१५ ॥

अनार्त्तस्य दण्ड उक्तो भृतिहरणं च। आर्त्तस्येदानीमुच्यते—

आर्त्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ॥
स दीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥ २१६ ॥

आर्त्तो भृतोऽर्द्धकृतं कर्म यदि हित्वा गच्छेत्स स्वस्थः सन्पुनरागत्य यथोक्तमादौ तत्कुर्यात्। वहुनाऽपि कालेन पीडया मुक्तः प्रत्यागतः कृतकर्मशेषे लभेतैव वेतनम्॥ २१६॥

यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत्॥
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः॥ २१७॥

अथवा स्वामी न वारयति, येन च तत्कर्म कारितं स्यात्स्वां भृतिं दत्वा तदा तत्सममसौ स्वस्थः कारयितव्यः। अथापि स्वामी ब्रूयान्न मे किंचित्कर्तव्यमस्तीति—तत्रापि कृतानुरूपेण लभेतैव यथोक्तमात्राम्॥ २१७॥

एप धर्मोऽखिलेनोक्तो वेतनादानकर्मणः॥
अत ऊर्ध्वं प्रवक्ष्यामि धर्मं समयभेदिनाम्॥ २१८॥

वेतनादानकर्मण इति विवादपरस्यास्य नामधेयमेवमेतत्। तेन न चोद्यमेतत्-कथं वेतनस्यादानकर्मोक्तं यावता दानकर्माप्युक्तं "न लभेतैव वेतनम्" इति। नाम्नो हि येन केनचिदन्वितेन संवन्धिना नामता न विरुद्धा। न हि यावन्तः सूत्रार्थास्ते सर्वे प्रवर्तन्ते। तथा चाग्निहोत्रे यद्यप्यग्निप्रजापत्योर्होमस्तथाप्यग्निहोत्रमिति नाम प्रवर्तत एव। तदुक्तं तत्रैवं स्थूणादर्शे या च समा नीचा स्यादिति।

समयः संवित् सङ्केतः—इदं मया भवतामनुमते निश्चितं कर्तव्यमित्यभ्युपगमः। तं भिन्दन्ति व्यतिक्रामन्ति ते समयभेदिनः। "संविदश्चव्यतिकमः" (८।५) इति यदुद्दिष्टं तदिदानीमुच्यते।

पूर्वेणार्द्धेन पूर्वप्रकरणोपसंहारोऽपरेण यथोद्दिष्टप्रकरणांतरसूचनम्॥ २१८॥

यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम्॥
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥ २१९॥

शालासमुदायो ग्रामः। तन्निवासिनो मनुष्या गृह्यन्ते। तेषामेव संविदः। संभवात्। एवं ग्रामसमुदायो देशसंघ एकधर्मानुगतानां नानादेशवासिनां नानाजातीयानामपि प्राणिनां समूहः। यथा भिक्षूणां संघो वणिजां संघश्चातुर्विद्यानां संघ इति। ग्रामादीनां यत्कार्यं—यथा 'पारग्रामिकैर्ग्रामो नोऽपहृतप्रायः अस्माकीने गोप्रचारे गाश्चारयन्ति उदकं च भित्त्वा नयन्ति। तद्यदि वो मतं तदद्य एतदेषां

कर्तुं न दद्मः। एवं नः प्रतिबध्नतां यदि तैः सह दण्डादण्डिर्भवति राजकुले वा व्यवहारस्तत्र सर्वे वयमेककार्याः। नो चेदुपेक्षामहे'। तत्र ये संविदते—'बाढम्—किमिति प्राक्तनी ग्रामस्थितिस्तैर्व्यतिक्रम्यते' इत्येवं प्रोत्साह्य विसंवदेद्बलात्तैरेव सह सङ्गच्छेत स्वेषु वा नाभ्यन्तरः स्यात्—स राज्ञा स्वराष्ट्रान्निर्वासयितव्यो निष्कासयितव्यः। स्वविषयेऽस्य वस्तुं न देयम्।

एवं वणिङ्मठब्राह्मणादिकार्ये ईदृशे कृतसंवित्तेन नातिक्रमितव्यम्। यत्कार्यं ग्रामाद्युपकारकं शास्त्राचारप्रसिद्धं पुरराष्ट्राविरोधि तत्संविद्व्यतिक्रमे दण्डोऽयम्।

लोभादिति स्वेनोपकारगन्धेन परग्रामणीकृतेनास्वातन्त्र्यं 'लोभः'। अज्ञानात्तु विसंवदमानस्यान्यः कल्पः॥ २१९॥

निगृह्य दापयेच्चैनं समयव्यभिचारिणम्॥
चतुःसुवर्णान् षण्णिष्कांश्छतमानं च राजतम्॥ २२०॥

निगृह्यावष्टभ्य पीडयित्वा काललाभमकारयित्वा दण्ड्यः। चत्वारि सुवर्णानि येषां निष्काणां परिमाणं ते चतुःसुवर्णा निष्काः। यद्यपि चतुःसुवर्णिको निष्क इत्यत्रोक्तं (१३७) तथापि शास्त्रान्तरात् "साष्टंशतं सुवर्णानां निष्कमाहुर्महाधियः" इत्येवमादिपरिमाणान्तरं पश्यन् विशिनष्टि। "संज्ञाकारणसामर्थ्यादेव लभ्यत" इति चेत् पद्यग्रन्थत्वान्न दोषः।

अन्ये तु सहार्थे बहुव्रीहिं कृत्वा त्रीन् दण्डानाहुः। चतुर्भिः सुवर्णैः सह षण्णिष्कान् दण्डनीयः। दश निष्काः प्रतिपादिता भवन्ति।

बहुव्रीहिसिद्ध्यर्थं सहार्थे कथंचिन्मत्वर्थो योजितव्यः। न हि चित्राभिर्गोभिः सहितश्चित्रगुर्देवदत्त इति भवति। एते च त्रयो दण्डा यदि च त्रिभिरेक इति कार्यापेक्षया योजनम्।

निर्वासनदण्डेन विकल्प्यते दण्डोऽयम्॥ २२०॥

एतद्दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः॥
ग्रामजातिसमूहेषु समयव्यभिचारिणाम्॥ २२१॥

जातिसमूहेषु च नानाजातीयानां समानजातीयानां वा संघेषु तद्विषयो व्यभिचारो येषामित्यर्थः।

प्रकरणोपसंहारः॥ २२१॥

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ॥
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ॥ २२२ ॥

यद्द्रव्यं प्रचुरक्रयविक्रयं व्यवहारकाले न गच्छति न नश्यति मूल्यतश्च नापचीयते त्रपुताम्रभाण्डादि स्थिरार्घं तादृशस्यानुपभुक्तस्य दशाहमध्ये आदानप्रत्यर्पणे। यत्तु विरलक्रयविक्रयं देवयात्रोत्सवादौ विक्रयते अनियतार्थं च तस्य तदहरपरेद्युर्वा। फलकुसुमादौ तु तत्क्षण एवानुशयः। पश्चादपि—'क्रीत्वा यस्यानुशयो न ममैतदुपयुज्यते' स दशाहमध्ये दद्यात्। विक्रेता प्रतिगृह्णीयात्। विक्रेतुरनुशये—'न मया साधु कृतं यद्विक्रीतमिति'—क्रेता तस्मै प्रतिपादयितव्यः।

एकस्थानवासिनां चैष कालः। देशान्तरवासिनां तात्कालिकी प्रतिनिवृत्तिः। केचिद्गोभूम्यादिविषयं विधिमिममिच्छन्ति न वस्त्रादौ।

स्मृत्यन्तरे हि वणिक्पण्येऽन्यो विधिराम्नायते। एवं हि नारदः पठति (६। २-३)

"क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतमिति मन्यते।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम्"।
"द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्र्यंशांशमावहेत्।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत्॥" इति

विक्रयार्थं यद्द्रव्यं तत् 'पण्यं' यद्विक्रीय तदुत्पन्नेन द्रव्यान्तरक्रयादिना पुरुषो व्यवहरति जीविकाधनमर्जयितुं—तथा पणभूमौ प्रसारितमप्रसारितं च भवति वणिजाम्। तत्रेह पण्यग्रहणात्कश्चिद्विशेषो विवक्षितः। इतरथा क्रीत्वा मूल्येन इत्येतावदपेक्ष्यम्। कः पुनरसौ विशेषः? उच्यते। यत्क्रीतमपि पण्यत्वमजहद्वणिग्भिर्विक्रीयते तर्हि विक्रयार्थमेव क्रीणन्ति तेषां वणिजामितरेतरं क्रीणतां विक्रीणतां च नारदीयो विधिः, अन्येषां मानव इति केचित्। किं पुनरत्र युक्तम्। पण्यधर्मादेर्व्यवस्था वाऽनुसरणीया। तथा चाश्वानां वलसञ्चारो हस्तिनामङ्कुशारोहणं विक्रयविभावकमित्यादिना व्यवहारस्तेषु पण्येषु सिद्धो भवति। 'अविक्षत'मविनष्टमुपनिध्यादौ वस्त्रादेर्यावन्मात्र नाशस्तावतो मूल्यमुपनिधात्रे दीयते, द्रव्यं तु गृह्णाति। इह त्वीषन्नाशेऽपि सर्वं मूल्यं देयं क्रेतुः॥ २२२॥

परेण तु दशाहस्य न दद्यान्नापि दापयेत् ॥
आददानो ददच्चैव राज्ञा दण्ड्यौ शतानि षट् ॥ २२३ ॥

दशाहात्परतो न क्रीतानुशयः। जातानुशयश्चापि क्रेता विक्रेता वा यदि राजनि विवदतां तौ ततः षट् शतानि दण्ड्यौ ।

न दद्यादिति नायमदृष्टार्थः प्रतिषेधः । किं तर्हि ज्ञायते । स्थितिरीदृशी । अनिच्छन्क्रेता दशाहादूर्ध्वं न त्याजनीयो नापि विक्रेता ग्राहयितव्यः । अतश्च यदि साम्नोभयेच्छायां दानादाने स्यातां तत्र न कश्चिद्दोषः ॥ २२३ ॥

यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ॥

तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥ २२४ ॥

या कन्या दोषैर्युक्ता सा च दात्रा वराय नाख्यायते न प्रकाश्यत एवमेव दीयते तत्र दातुर्दण्डो विदिते राज्ञा कार्यः । स्वयंग्रहणमादरार्थम् । कन्यादोषाश्च धर्मप्रजासामर्थ्यविघातहेतवः क्षयो व्याधिर्मैथुनसंबन्धश्च ।

नोन्मत्ताया इत्येतत्प्रकरणोक्तो दण्डोऽयं वा ॥ २२४ ॥

अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ॥

स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ २२५ ॥

अकन्या वृत्तमैथुनसंबन्धेति यो वदेत्तं च दोषं न भावयेत्तदा शतं कार्षापणं दण्ड्यः

अन्ये मन्यन्तेऽल्पत्वाद्दण्डस्य महत्वाच्चाक्रोशस्येतिकरणस्य च पदार्थविपर्ययाशक्तत्वेन दर्शनादकन्येति शब्दस्वरूपं विवक्षितम् । अकन्येयमित्येतेनैव शब्देनाक्रोशे तस्य शतं दण्डः । कः पुनरत्र विशेषः ? उच्यते । स इदंवादी पृच्छ्यते—कथमियमकन्येति । स चेद्ब्रूयान्निर्लज्जा नृशंसाऽश्लीलवादिनी—नैष कन्यानां धर्मः । एतच्च न साधयेत्तदाऽयं दण्डः कन्यागुणनिषेध उक्ते सति । अथवा कन्याशब्दं प्रथमवयोवचनमाश्रित्य परोक्षे प्रार्थ्यमानस्य ब्रूयात्किंतावन्नासौ कन्या अतिस्वल्पा वृद्धा वा—तत्र कन्यादाता यदि राजानं ज्ञापयेदभिरूपतमा कन्या मदीया प्रार्थ्यमानाऽनेन तस्यामभिलाषः एवमुक्त्वाऽथ पराजितः, तत्र प्राप्तकालायां यद्येवमुक्तं तदा पराजितस्याऽयं दण्डः ॥ २२५ ॥

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ॥

नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥ २२६ ॥

'पाणिग्रहणं' विवाहो दारकर्म, मन्त्राणां तत्र विद्यमानत्वात्। तत्र विद्यमानत्वात्स चाग्निमयक्षतेत्येताभ्यां संबधेनासां विवाहे कर्तृत्वं दर्शयति। परमार्थतस्तु विवाहविधौ कन्यामुपयच्छेदिति विहितं,—तादृशमेवार्थं मन्त्रा अभिवदन्ति। न पुनर्मन्त्रेषु कन्याशब्दश्रवणात्कन्यानां विवाहः, मन्त्राणामविधायकत्वात्। एष एवार्थस्तद्विपरीतप्रतिषेधमुखेन दृढीक्रियते। न कन्यासु कचिन्नृणाम्। न कस्यांचिद्वेदशाखायां मनुष्याणामकन्याविषयो विवाहः श्रुतः। लुप्तक्रियाः—यासां धर्मेऽग्निहोत्रादावपत्योत्पादनविधौ चाधिकारो नास्त्यतस्ता न विवाह्याः।

अतः कन्यामकन्येति वदन्महता दण्डेन योजनीय इति पूर्वश्लोकादनन्तरमुच्यते अप्राप्तमैथुना स्त्री कन्योच्यते ॥ २२६ ॥

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ॥
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ २२७ ॥

दारा भार्या, तस्या लक्षणं निमित्तं विवाहमन्त्राः, तैस्तत्र प्रयुक्तैर्विवाहाख्यः संस्कारो निर्वर्तते। द्विजातीनां पुनर्मन्त्राः। न च शूद्रस्यादारप्रसङ्गः, न हि तस्य मन्त्राः सन्ति—मन्त्रवर्जं सर्वान्येतिकर्तव्यतास्ति। अतो विवाहाख्यसंकारोपलक्षणं मन्त्राः। तेषां मन्त्राणां निष्ठा समाप्तिः सप्तमे पदे विज्ञेया। लाजाहोममभिनिर्वर्त्य त्रिःप्रदक्षिणमग्निमावर्त्य सप्तपदानि स्त्री प्रकम्यते "एष एकपदी भव" इत्यादि यावत् "सखा सप्तपदी भवेति"। तस्मिन्प्रक्रान्ते कन्यायाः पदे कन्यापितुर्वोढुर्वानुशयो नास्ति। उन्मादवत्यपि भार्यैव। न त्याज्या।

मैथुनवत्यास्तु नैवासौ विवाहः। सत्यपि लाजाहोमादावितिकर्तव्यतास्वरूपे न भार्या सा। अतस्तत्र द्रव्यान्तरवदनुशयः। यथा च शूद्रकर्तृकेणाधानेनाहवनीयो न भवति—सपिण्डायाश्च कृतेऽप्यग्निसंस्कारे न विवाहस्वरूपत्वम्। तत्र तु प्रसिद्धम्—"संस्कारकरणादेकः प्रायश्चित्तीयते पुमान्"। कन्या चान्यस्याप्यविवाह्या वसिष्ठवचनात्।

"यदि प्रजनविघातरोगगृहीतामूढ्वा न त्यजति का तर्हि गतिः।"

'सत्यधिकारे अन्यामुद्वाहयिष्यति। 'सद्यस्त्वप्रियवादिनीति'वत् (६ । ८१)। कृते तु जातपुत्रायामाधाने यदि क्षयो व्याधिः स्यात्तथापि नैनामधिविन्देदधिवेदननिमित्तानां परिगणनात् (६ । ७७—८५)। तत्रापि यदि "कामतस्तु प्रवृत्तानाम्"

इत्येतत्प्रयोजकमिष्यते न निवारयामः।

तेनैव संक्षेपतः कन्यायां धर्मः। यथाऽन्येषां द्रव्याणां दशाहादूर्ध्वमपि साम्ना प्रत्यर्पणं, नैवं कन्यानां कृतविवाहानाम्। शुल्कदेयानामपि प्राग्विवाहाद्द्रव्यान्तरधर्मः। या तु धर्माय दीयते तस्या नैवानुशय इति वचनात्। तत्रापि "दत्तामपि हरेत्कन्यां ज्यायांश्चेद्वर आव्रजेत्" (याज्ञ० १ । ६५) इत्यस्यैवापहार आ सप्तमपदात्।

सप्तमे तु पदे दानानिवृत्तेर्गवादिद्रव्यदानवन्नास्त्यपहारः। अथैव केनचित्कस्मैचिद्गवि दत्तायां न तयोरन्योन्येच्छयाऽनुशयो दानादाने—दानस्य तदानीमेव निर्वृत्तत्वात्। प्रतिगृहीतं चेद्दात्रे पुनः प्रयच्छेत्तद्दानान्तरमेव तत्स्यात्, न पूर्वदाननिवृत्तिः। एवं सगुणयोः कन्यावरयोर्नान्योन्येच्छया त्यागोऽस्ति, प्रागपि विवाहात्। विवाहे तु कृते दोषवत्या अपि नास्ति त्यागः कन्यायाः। स्पृष्टमैथुना, या कन्यैव न भवति, अतोऽसौ त्यज्यते—कन्याया यतो विवाहो विहितः। विवाहश्चोपभोगस्थानीयः। यथा परिभुक्तं वस्त्रमन्तर्दशाहमपि नैव विक्रेत्रेऽर्प्यते तथैव कन्या कृतविवाहा।

पुनश्चायमर्थो निर्णेष्यते "सकृत्कन्या प्रदीयत" इत्यत्रान्तरे (९ । ४७) ॥ २२७ ॥

**यस्मिन्यस्मिन्कृते कार्ये यस्येहानुशयो भवेत् ॥**
**तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥ २२८ ॥**

न केवलं वणिजां पण्यधर्मोऽयं दशाहिकोऽनुशयः, किं तर्हि, वेतनसंविद्वृद्धिप्रयोगादिषु यस्मिन्यस्मिन्निति वीप्सयाऽशेषकार्यपरिग्रहः। अनेन विधानेन दाशाहिकेन विधिना। धर्मादनपेतो धर्म्यः। पन्था मार्गः। निवेशयेत्स्थापयेद्राजा। अतिदेशोऽयम्। कृते कार्य इति प्रक्रान्ते पुनः सर्वेण सर्वनिवृत्तेस्तत्रानुशयाभावः। वाचा निरूपिते स्थापिते वाऽन्तरेऽनुशय्य दशाहप्रतीक्षणम्। यत्र पुनर्वृद्ध्यर्थं धनं नीतमृत्विक् च वृतो वेतनं च दत्तं—कृतसमये विरोध आरब्धस्तत्र नायं धर्म इति केचित्। न हि कृतमकृतं भवति। एतच्च न कृतं 'कृतं, निर्वृत्तमुच्यते, न प्रक्रान्तम्। न ह्ययं "आदिकर्मणि क्तः"। न हि मुख्यार्थत्यागे कारणमस्ति। यत्तु कृतं नाकृतं भवतीति कृतमपि तत्साध्यकार्यप्रतिषेधादकृतमेव। यथा भुक्तं वांतमिति। लौकिकेष्वपि पदार्थेषु शास्त्रावसेयव्यवस्थाकेषु शास्त्रत एव निवृत्त्यनिवृत्ती विज्ञेये।

हे अथापि वृत्ताः पदार्थास्तथापि प्रत्याहरणं विधीयते । निष्पन्नेऽपि धनप्रयोगे स्वस्थाननीतेष्वपि रूपकेषु प्रत्यानयनं कर्तव्यमन्यतरानुशयात् । क्षयव्ययाः शास्त्रधर्मेण नीतेषु बोढव्याः । तथा च गृहीतमात्रेषु मासिकीं वृद्धिमिच्छन्ति । यत्रैवं बन्ध एष मोक्तव्य इयन्तं कालमित्येवमाद्यन्तर्दशाहमनुशये निवर्त्यते । ऋत्विजां तु वरणं विवाह इव कन्यानाम् । संविदे दशाहादूर्ध्वं प्रवर्तितव्यमन्यस्मिन् शास्त्रे सति ॥ २२८ ॥

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ॥
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥ २२९ ॥

गवादिपशुविषये व्यतिक्रमे स्वामिनां पालानां च गोपालादीनां यो विवादः—'गौस्त्वया मे नाशिता तां मे देहीति'—पालोऽपि विप्रतिपद्यते—'मदीयो दोषो नाभवत्'—इत्यत्र वादपदे यद्धर्मतत्त्वं यादृशी व्यवस्था तां यथावन्निपुणतो वक्ष्यामीत्यवधानार्थः पिण्डीकृतप्रकरणोपन्यासः ॥ २२९ ॥

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ॥
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥ २३० ॥

दिवा पशूनां योगक्षेमे दोष उत्पन्ने 'नष्टं विनष्टम्' इत्यादिके वक्ष्यमाणे—पाले वक्तव्यता कुत्सनीयता । तेन स दोषो निर्वोढव्यः । रात्रौ स्वामिनो दोष उद्बन्धनादिमृतानाम् । तद्गृहे स्वामिगृहे यदि पालेन प्रवेशिता भवन्ति । अन्यथा चेत्तु—यदि रात्रावपि पालेन न प्रवेशिता अरण्य एव वर्तंते तदा पालोदोषभाक् स्यात् । एतदुक्तं भवति । पालहस्तगता गावो यदा क्षेत्रे कस्यचित्सस्यं भक्षयन्ति केनचिद्वा हन्यन्ते तदा पालस्य, अथ पालेन समर्पितास्तदा स्वामिनः । अयोगक्षेमे योगक्षेमशब्दः प्रयुक्तो लक्षणया—यथाऽन्धे चक्षुष्मानिति ॥ २३० ॥

कोऽसौ योगक्षेमः । अतः प्रपञ्चयति—

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ॥
गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥ २३१ ॥

गाः पाति गोपः गोपालकः । स कदाचिद्भक्तादिना भ्रियते कदाचित्क्षीरेण । तत्र क्षीरभृतो दशभ्यो वराम् श्रेष्ठाम्, अवरां वा—संहितायामकारप्रश्लेषात् ।

रक्षायामनुरूपकता। यस्य नान्यदन्नं स एकस्या गोः क्षीरमादद्यात् दशतः। अनया कल्पनया न्यूनाधिकरक्षणे भृतिः कल्पयितव्या। एवं दोह्यादोह्यधेनुवत्सतरीदम्यवत्सकादिवारणे कचित्त्रिभागः क्षीरस्य कचिच्चतुर्भागः स्वामिभिः कल्पयितव्यः।

दिङ्मात्रप्रदर्शनार्थश्लोकोऽयम्। देशव्यवस्था त्वाश्रयणीया। भृतिं निरूपयिष्यामीति ग्रामगोपालेन यदि गावस्त्यक्ता भवन्ति न तेन स्वामिनमननुज्ञाप्य दशमी गौर्दोह्येति।

भक्तभृतोऽपि 'क्षीरेण विनिमयेयमिति' बुद्ध्या दुहीत—तन्निवृत्त्यर्थमुक्तं गोस्वाम्यनुमत इति। स्वामिनोऽनुमतिमन्तरेण प्रवर्त्तमानो दण्ड्यः।

सा—अनन्तरोक्ता। अभृते भक्तादिना—भृतिर्भवेत्। क्षीरभृतो वा एषा वृत्तिः।

'भृत्यो' भरणार्थं न धर्माय प्रवृत्ततो गोरक्षायाम्।

अथवा स्वेच्छया दशम्या गोः क्षीरमाददानश्चोरः स्यात्। अस्मिंस्त्वनुज्ञाते भृतिस्तस्येयमिति न दोषः।

अत्रापि स्वामिनोऽननुमत्या दोष एवेति चेत्सत्यम्—कल्प्या काचिद्दंडमात्रा न चौरो भवति। अस्मिंस्तु चौरो निक्षेपहारी वा स्यात्।

अयं श्लोक आदौ वक्तव्यः। अतोऽनंतरः कचित्पठ्यते ॥ २३१ ॥

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् ॥
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ २३२ ॥

नष्टं दृष्टिपथादपेतं न ज्ञायते क गतम्। विनष्टं कृमिभिः। आरोहकनामानः कृमयो गवां प्रजनवर्त्मनाऽनुप्रविश्य नाशयन्ति। श्वभिर्हतम्। प्रदर्शनार्थमेतत्। तेन गोमायुव्याघ्रादिहतानामेषैव स्थितिः। विषमे श्वभ्रदरीशिलादिसंकटादौ मृतम्। प्रदद्यात्पाल एव। हीनं पुरुषकारेण। 'पुरुषकारः' पुरुषव्यापारः। पालस्य तत्र संनिधानात् वृकनिवारणं च दण्डादिना प्रवृत्तिः। तेनापेतम्। यदि व्याप्रियमाणो व्याघ्रादेर्निवारणे नैव समर्थः—सहसैव वोत्पत्य कश्चित् पशुर्वेगेन श्वभ्रं गच्छेदनुगच्छताऽपि न शक्यः प्रत्यावर्तयितुं—न पाले दोषः ॥ २३२ ॥

विघुष्य तु हृतं चौरैर्न पाले दातुमर्हति ॥
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ २३३ ॥

विघुष्याऽऽघुष्य पटहान् चौरैर्हृतं पशुं पालो न दाप्यते। विघोषणं च पालस्याशक्त्युपलक्षणार्थम्। यदि बहवश्चोराः प्रसह्य च मुष्णन्ति तदा पालो मुच्यते। सोऽपि यदि प्राप्तकालं तस्यामेव वेलायां स्वामिनः कथयति। देशे यत्र स्वामी संनिहितः।

"कथं विज्ञातस्तत्र अथवा निवासदेशे स्वामिनः।" तत्र यद्यसावसंनिहितोऽपि भवति तथापि तत्स्थानीयो भवति—यो राजानमधिकारिणं वा ज्ञापयित्वा चौरानभिद्रवति।

स्वस्येति राजनिवृत्त्यर्थम्। स्वो हि स्वामी स्वद्रव्यमोक्षणे यत्नं कुरुते न तथा पालज्ञापितो राजा। दुष्करा च राजज्ञापना पालस्य। अथ मुषित्वा गतेषु ज्ञापये-द्दुष्येदेव ॥ २३३ ॥

**कर्णौ चर्म च वालांश्च बस्तिं स्नायुं च रोचनाम् ॥**
**पशुषु स्वामिनां दद्यान्मृतेष्वङ्कांश्च दर्शयेत् ॥ २३४ ॥**

आयुषः क्षयान्मृतेषु पशुषु स्वामिनः कर्णाद्यर्पणीयम्। गोरोचनां गवां शृङ्गेषु चूर्णं भवति। बस्तिरङ्गविशेषः। अङ्काः कर्णादयः, स्वामिविशेषज्ञानार्थं चिह्नानि। तानपि दर्शयेत्। एवं पालस्य शुद्धिः। अङ्कदर्शनेन हि प्रत्यभिज्ञा भवत्ययं स पशुरिति ॥ २३४ ॥

**अजाविके तु संरुद्धे वृकैः पाले त्वनायति ॥**
**यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥ २३५ ॥**

अजा चाविका चाजाविके। अविरेवाविकैडका। एते वृकैः शृगालप्रभृतिभिः संरुद्धे अवष्टब्धे न प्रथमपात एव हते। अस्मिंश्चान्तरे सत्यामोक्षणेऽहतत्वात्। न च पाल आयाति मोक्षयितुम्। अनायत्यनागच्छति पाले। यत् तत्र प्रसह्य बलेनाभिभूय वृको हन्यात्पालस्य स दोषः। स्वामिनो दापयितव्यः। प्रायश्चित्तं चरेत् गोर्महत्त्वाद्गोमायुना न शक्यते संरोद्धुमित्यजाविके इत्युच्यते, न पुनस्तद्रूपम्। अतश्च बालानां गोवत्सानामेष एव न्यायः ॥ २३५ ॥

**तासां चेदवरुद्धानां चरंतीनां मिथो वने ॥**
**यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥ २३६ ॥**

'अजाविके' पूर्वश्लोके जात्यपेक्षं द्विवचनम्। पशुशकुनिद्वन्द्वत्वाद्विभाषितैकवद्भावः। इह तु तासामिति व्यक्त्यपेक्षो बहुवचने परामर्शः।

अवरुद्धानां मिथ एकत्र प्रदेशे स्थापितानां संहतीभूतानां दिग्भ्यो विदिग्भ्यश्च निरुद्धगमनानां वने चरन्तीनां दृष्टिगोचराणां—यदि कुतश्चन कुतश्चन कुञ्जात्संचरणोत्पतनानुक्रमेण निष्क्रम्य वृको हन्यान्न पालो दोषभाक्। अशक्यं ह्यनेकवृक्षक्षुपशरवल्लीगहनं वनं निर्विवरीकर्तुम्, छिद्रानुसारिणश्च वृकाः।

मिथोग्रहणाच्चातिदूरविप्रकृष्टासु वधे दोष एव। पालहस्तगताः पशवस्तदुपेक्षायां यदि दोषमाप्नुयुः स पालेनैव समाधेय इति सिद्धे एष प्रपञ्चः सुखावबोधार्थः ॥ २३६ ॥

**धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः ॥**
**शम्यापातास्त्रयो वाऽपि त्रिगुणो नगरस्य तु ॥ २३७ ॥**

चतुर्हस्तं धनुस्तेषां शतम्। चत्वारि हस्तशतानि। समंततश्चतसृषु दिक्षु। ग्रामस्य परीहारः कर्तव्यः। अनुप्तसस्या भूमिः पशूनां सुखप्रचारार्था कर्तव्या।

शम्या दण्डयष्टिः। सा बाहुवेगेन प्रेरिता यत्र पतति ततः प्रदेशादुद्धृत्य पुनः पातयितव्या—यावत्त्रिस्तस्य परिमाणो वा शम्यापातः परीहारः।

त्रिगुणो नगरस्य। ग्रामनगरे प्रसिद्धे।

शम्यायाः पाताः प्रेरिताया वेगसंस्कारक्षयो भूमौ स्थानादि ॥ २३७ ॥

**तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ॥**
**न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥ २३८ ॥**

तत्र परीहारस्थाने क्षेत्रं न कर्तव्यम्। अथ कृतं कस्माद्वृतिर्न कृता। अतः क्षेत्रिण एवापराध्यन्ति, न पशुपालाः। न हि पाल एकैकं पशुं हस्तबन्धेन नेतुं शक्नोति। न च पशूनामन्यो निर्गमोऽस्ति ॥ २३८ ॥

**वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् ॥**
**छिद्रं च वारयेत्सर्वं श्वसूकरमुखानुगम् ॥ २३९ ॥**

कंटकशाखादीनां प्राकारविन्यासः पशुप्रवेशवारणार्थः क्षेत्रारामादीनां वृतिरुच्यते। या क्वचित्पर्णिकेति प्रसिद्धा—वारणाद् 'वृतिः'। तस्या उन्नतिरियती कर्तव्या ययोष्ट्रो नावलोकयति।

"किमियं द्वितीया तृतीयार्थे यामुष्ट्र इति"।

नेति ब्रूमः।

"कथं तर्हि वृतिमुष्ट्रो न पश्यति"।

महोत्सेधाया द्वितीयपार्श्वस्यादर्शनाददृष्टैव वृतिः। छिद्रं च विवरं वारयेत्सर्वम्। श्वसूकरमुखेन यदनुगम्यते—तन्मुखपरिमाणम्। तथा कुर्याद्यथा श्वमुखं न माति। तन्मुखादप्यल्पच्छिद्रमित्यर्थः ॥ २३९ ॥

तथा कृतायां वृतौ—

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः ॥
सपालः शतदण्डार्हो विपालान् वारयेत्पशून् ॥ २४० ॥

परिवृते पथि क्षेत्रे ग्रामसमीपवर्तिनि च परीहारमध्यगते। अन्तशब्दः समीपवचनः। यदि भक्षयेत्पशुः। सपालश्च स्यात्। सन्निहितः पालः शतदण्डार्हः पशोर्दण्डासंभवात्। पालेऽसन्निहितेऽपि गृहे यदा—नाप्यसौ पालः प्रसिद्धो न पुनस्तत्प्रेषितो वारिको रूपकमात्रवेतनः।

विपालाः पशवो वारयितव्या दण्डादिना—न तु दण्डनीयाः। विपालाश्चोत्सृष्टवृषादयः। अन्येषां तु विपालानां स्वामिनो दण्डः।

अथवा अपरिवृत इति प्रश्लेपः। क्षेत्रसंबंधाच्च गम्यमानः क्षेत्रस्वामी 'सपाल' इत्यन्यपदार्थतयाऽभिसंबध्यते—'सह पालेनेति'।

क्षेत्रे को दण्ड्यः। उभौ दण्ड्यौ। पालः क्षेत्रिकश्च। क्षेत्रिकस्तावत्किल किमिति पथि क्षेत्रे वृतिं न कृतवान्। पालेनापि वृतौ चासत्यां किं क्षेत्रं खादयितव्यम्। विपालं प्रमादाद्यूथच्युतं वारयेत्। तथा च गौतमः (१२।२१) "पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः" इति ॥ २४० ॥

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति ॥
सर्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा ॥ २४१ ॥

पथिक्षेत्रग्रामान्तीयेभ्योऽन्यानि क्षेत्राणि—तद्भक्षणे सपादपणो दण्डः।

"ननु चात्र स्वल्पेन दण्डेन भवितव्यं दूरक्षेत्रात्सन्निहिते क्षेत्रे। यत्तु पन्थानमतिक्रम्य क्षेत्रं बहिर्ग्रामं वा, तत्र महान् दण्डो युक्तः। किमिति गवां पालो गन्तुं तत्र ददाति"।

नैष दोषः । यद्यत्र महादण्डो नोच्येत तदा प्रत्यहं प्रवेशनिर्गमैर्गवां भक्षयन्तीनां ग्रामान्तरक्षेत्राण्युत्सीदेयुः । दण्डात्तुमहतो बिभ्यतो यत्नेन रक्षन्ति । अन्यत्र गास्तृणविशेषार्थं कथंचिन्नयतः स्वल्पो दण्डः ।

अत्रापि विपालानां वारणमेव ।

सर्वत्र क्षेत्रस्वामिनः सदफले देये, कुशलैः च ते परिमाणेन कल्पिते ।

क्षेत्रिकस्य । क्षेत्रमस्यास्तीति । व्रीह्यादित्वाट्ठक् ।

इति धारणैष निश्चय इत्यर्थः ।

सर्वत्रग्रहणाच्च विपालेऽपि पशौ क्षेत्रिकस्य सदलाभः ।

यद्यपि पशुशब्दः सामान्यशब्दो महिष्यजाव्युष्ट्रगर्दभादिषु वर्तते तथापि स्मृत्यन्तरदर्शनाद्गोष्वयं दण्ड इति मन्यते । तथा च गौतमः ( १२ । २४-२५ ) "अश्वमहिष्योर्दशअजाविषु द्वावित्यादि" अन्यत्र कल्पना ।। २४१ ।।

अत्रापवादः—

अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा ।।
सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत् ।। २४२ ।।

गोग्रहणान्महिष्यादिषु दोषः । वृषाः उक्षाणः । देवपशवो देवयागार्थं यजमानेन कल्पिताः प्रत्यासन्नयागाः । अथवेष्टकादिकूटस्थापिताः । हरिहरादीनां प्रतिकृतयो 'देवा' उच्यन्ते—तेषां 'पशवः'—तानुद्दिश्य केनचिदुत्सृष्टाः । तदा ह्यस्य देवानां पशूनां च स्वस्वामिसंबंधस्य संभवात् । देवायतनमण्डनानां चैष धर्मः । न तु तत्पालकैर्वाहदोहाद्यर्थं ये देवगृहेषु धार्यन्ते । यतः पालका एव तेषां देवानामर्थं विनियुञ्जते । अतस्तत्र पालका एव स्वामिनः । अतो युक्तः स्वामिवतामन्येषां यो धर्मः स तत्र । आयतनमण्डनास्त्वपरिगृहीता अव्यवधानेन देवपशुबुद्धिमुत्पादयन्ति ।

वृषोत्सर्गादिविधानोत्सृष्टा 'वृषाः' कैश्चित्परिगृह्यन्ते ।

ततः सपाला अथ वा परिगृहीतास्ततो विपालाः—उभयेषामदण्डः ।। २४२ ।।

क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।।
ततोऽर्धदण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ।। २४३ ।।

क्षेत्रस्वामिनः स्वक्षेत्रेऽत्ययोऽतिक्रमोऽपराधो यदि भवेत्स्वकृते—अकाले वापनं, निदानमयोग्यबीजवापः, स्वपशुभिर्भक्षणं गिरणं वा, विदितफलके प्राश इत्यादि—तदा राज्ञो यावान्भाग आगच्छति तं दशगु णंदण्डनीयः ।

अथ तस्याज्ञातमेतत् तत्प्रयुक्तैर्भृत्यैः क्षेत्रजागर्यानियुक्तैर्वा अपराद्धं तदाऽर्धदण्डः। भृत्यानामत्यये क्षेत्रिकस्य दण्ड इति संबन्धः।

क्षेत्रप्रसङ्गादत्रेदमुक्तम् ॥ २४३ ॥

**एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ॥**
**स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ॥ २४४ ॥**

सुबोधोऽयं श्लोकः ॥ २४४ ॥

**सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ॥**
**ज्येष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥ २४५ ॥**

सीमां प्रति विवादे—सीमानिमित्ते। लक्षणेत्थंभूतेति प्रतेः कर्मप्रवचनीयत्वाद् द्वितीयानिमित्तमपि लक्षणमिति शक्यते वक्तुम्। 'सीमा' मर्यादा—ग्रामादीनां विभागः परिमाणमियत्ता परिच्छेदनमिति यावत्। ज्येष्ठे मासि नयेन्निर्णयः कर्तव्यः। मासविशेषनिर्णये हेतुमाह— सुप्रकाशेषु सेतुषु। सेतवः सीमालिङ्गानि वक्ष्यमाणानि, लोष्टपाषाणादिविशिष्टजातीयसीमाग्राह्यतृणगुंजादीनि प्रागस्मात्कालादनुत्थितेषु तृणेषु लोष्टपाषाणयोरन्यस्याश्च भूमेर्न विशेषो लक्ष्यते। पाषाणलक्षितायां यदा तत्र तृणानि न ज्ञायन्ते तदा सा सीमेति निश्चीयते। एवं वल्लीस्थानादिष्वपि। प्राग्वसंताद्वासंतिके दाहे विशेषो न लक्ष्यते। हेत्वभिधानाच्च यस्मिन्देशे यदा व्यज्यंते ततो मासात्कालहरणं कर्तुं नादेयम्। अन्यदा तु लिङ्गज्ञानार्थं कालापेक्षाऽपि भवतीत्येतावत्फलं ज्येष्ठग्रहणे ॥ २४५ ॥

**सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ॥**
**शाल्मलीन्सालतालांश्च क्षीरिणश्चैव पादपान् ॥ २४६ ॥**

पादपा वृक्षाः। क्षीरिणोऽर्कोदुम्बरप्रभृतयः। एते च चिरस्थायित्वात्सीमादेश एव रोपयितव्या न ग्राममध्ये। सीमादेशादन्यत्र क्रियमाणा न निश्चायकाः स्युः ॥ २४६ ॥

**गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च ॥**
**शरान्कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥ २४७ ॥**

अश्मनोऽस्थीनि गोवालांस्तुपान्भस्मकपालिकाः ॥
करीषमिष्टकांगारांश्छर्करा वालुकास्तथा ॥ २४८ ॥
उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ॥
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥ २४९ ॥

संहतप्रकाण्डा वीरुधो गुल्माणि। वेणव आरग्वधादयः। वहुत्वाच्च विविधग्रहणम्। वल्ल्यो व्रततयः दीर्घाङ्कुरास्तृणजातयः। स्थलानि कृत्रिमा शाद्वलादिपिण्डिकाः। कुब्जकस्य गुल्मत्वात्पृथगुपदेश आदरार्थः।

करीषं शुष्कं गोमयम्। अङ्गारा अग्निदग्धाः काष्ठावयवाः। पाषाणकठिना मृदः शर्कराः। कपालिका कलशैकदेशः। अन्यानि उपच्छन्नानि कारयेद्राजा नवग्रामसंनिवेशे कृते निर्णयम्। एवं सीमा न कदाचिन्नश्यति। अन्यथा तं प्रदेशं कश्चित्कर्षणेन नाशयेत् ॥ २४७—२४९ ॥

तडागान्युदपानानि वाप्यः प्रस्रवणानि च ॥
सीमासन्धिषु कार्याणि देवतायतनानि च ॥ २५० ॥

महांभांसि तडागानि। वाप्यः पुष्करिण्यः। उदपानानि कूपप्रभृतीनि। प्रस्रवणान्युदकस्यन्दा ईषत्स्रवदुदका भूप्रदेशाः। देवतायतनानि यक्षगृहादीनि। एतानि प्रकाशानि। नह्येतानि स्वल्पेनायासेन नाशयितुं शक्यन्ते। नाश्यमानेषु च महान्प्रत्यवायो भवति। सर्वस्य चोदकार्थिनो देवतादर्शनार्थिनश्च तत्र संनिधानात्सुज्ञातश्च साक्षिणां सीमासन्धिर्भवति ॥ २५० ॥

यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ॥
तानि संधिषु सीमाया अप्रकाशानि कारयेत् ॥ २५१ ॥

गुल्मादीनामुपदेशः प्रदर्शनार्थो न परिसंख्यार्थः एवम्प्रकाराणि—खदिरसारकालाञ्जनाद्यानि शर्करादितुल्यानि।

"कंवंप्रकारता"—अत आह कालाद्भूमिर्न भक्षयेत्। भूमेर्भक्षणमुपमया स्वरूपोपादानम्। यथा भक्षितं भेदेन नोपलभ्यते तद्वद्भूमिसादापन्नमिव तादृशं कुर्यात् ॥ २५१ ॥

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ॥
पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥ २५२ ॥

उभयोर्ग्रामयोः शून्यत्वे लिङ्गैर्निर्णयः। वसतोः पूर्वभुक्त्या सततमविच्छिन्नयाऽस्मर्यमाणावधिकया—न हि त्रिपुरुषभोगेन। स ह्यत्र प्रतिषिद्धप्रामाण्य "आधिः सीमा" इत्यत्र ( ८ । ४६ ) संभवति हि तत्रोपेक्षा वहुसाधारण्यात्सी मायाः येतु तत्र सीमशब्दं न पठन्ति तेषां भुक्तेः सिद्धमेव प्रामाण्यम्। लिङ्गानां प्रामाण्यस्योक्तत्वात्प्रमाणान्तरनिवृत्तिराशङ्क्येतेति पुनरुच्यते।

"कोऽयमुदकागमः प्रामाण्येनोच्यते"।

यथाऽन्यानि लिङ्गानि नवसंनिवेशे क्रियन्ते तद्वदेवोदकप्रवाहोऽपि कर्तव्यः। अथवा ययोर्ग्रामयोः प्रदेशान्तरे स एवोदकागमो विभागहेतुः प्रदेशान्तरे च विप्रतिपत्तिस्तत्र स एव प्रमाणम्। अथवा महाग्रामविषयमेतत्। नद्या अपर एको वा वार एकग्रामस्तत्र न पारवारिणो वक्तव्यं 'अस्मदीया भूमिरत्रापि विद्यत' इति। यदि वा कुतश्चिद् ग्रामात्तादृशेन प्रवाहेणावच्छिन्नापि काचिद् भूस्तथापि स एव विभागहेतुः—स्वल्पेऽपहारे ॥ २५२ ॥

यदि संशय एव स्याल्लिङ्गानामपि दर्शने ॥
साक्षिप्रत्यय एव स्यात्सीमावादविनिश्चयः ॥ २५३ ॥

"कथं पुनर्लिङ्गेषु सत्सु संशयः"।

यानि तावत्प्रच्छन्नानि तानि यदि केनचित्कथंचिदागम्य प्रच्छन्नमन्यत्र नीयेरन्नैव निश्चयः स्यात्। येऽपि प्रकाशा न्यग्रोधादयस्तेऽपि न सीमायामेव रोहन्त्यन्यत्रापि जायन्ते ततः संदेह आभासत्वात्। यत्र पुनरियं संभावना नास्ति तत्र प्रमाणमेव लिङ्गानि।

साक्षिप्रत्ययः साक्षिहेतुकः। साक्षिणः प्रत्ययो यत्रेति। विनिश्चयः तत्त्वाधिगमः। संशयितलिङ्गे अलिङ्गे वा सीमाविवादे साक्षिहेतुको निर्णय इति तात्पर्यम् ॥ २५३ ॥

ग्रामेयककुलानां च समक्षं सीम्नि साक्षिणः ॥
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥ २५४ ॥

यद्यप्यसंख्यातपुरुषको ग्रामस्तथापि द्वौ विवादिनौ द्वयोर्ग्रामयोर्भवतस्तयोः समक्षमन्येषां च ग्रामेयककुलानां च ग्रामीणपुरुषसमूहानां समक्षं सीम्नि साक्षिणः प्रष्टव्याः। साक्षिप्रश्नकाले सर्वैर्ग्रामीणैर्दत्तव्यवहारकैरपि संनिहितैर्भवितव्यम्— नार्थिप्रत्यर्थिनोरन्यतरो वक्तुं लभते—'आवयोर्विशिष्टार्थं विवादे किमेते संनिधीयन्ते।' अथवा येऽन्ये सामन्तेभ्यो ग्रामेभ्यः केचिद्वृद्धतमाः साक्ष्ये समुद्दिष्टास्तद्ग्रामीणैरन्यैः संनिहितैर्भवितव्यम्। यतस्तैर्वृद्धेभ्यः श्रुतं भवति तत्समक्षं पृच्छ्यमाना न विपर्यन्ति वृद्धाः।

सीमालिङ्गानि। यत्र लिङ्गान्युभयथा तत्र वृद्धेभ्यो निश्चयः। असत्सु लिङ्गेषु सीम्न्येव साक्ष्यं पृच्छ्यते—काऽत्र सीमेति ॥ २५४ ॥

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् ॥
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥ २५५ ॥

ते साक्षिणो यथा यादृशं निश्चयं ब्रूयुः। समस्ताः सर्व एव। न पुनर्वाक्यभेदोक्तौ न्यायः "द्वैधे च बहूनामिति"। निबध्नीयात् पत्रके लिखेत्— साक्षिणश्च नाम—विभागेन ॥ २५५ ॥

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ॥
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसम् ॥ २५६ ॥

मूर्ध्नोर्वीं पृथ्वीं मृल्लोष्टकान्गृहीत्वा साक्षिणः स्रग्विणो यथासंभवं माल्यधरा रक्तवर्णकुसुमधरा रक्तवाससो लोहिताच्छादनाः। यद्यपि शुक्लस्य वर्णान्तरापादनेऽपि रञ्जिर्वर्तते भूयांस्तु लोहिते प्रयोगो रक्तो गौर्लोहित इति। भयसञ्जननार्थं चैतत्। लोहितवाससश्च शुद्धा भवन्ति। 'यदस्माकं सुकृतं किंचिदर्जितमस्ति तन्निष्फलमस्त्विति' वाच्यंते। स्वैः स्वैरिति वीप्सया विशेषनामभिः सुकृतं कथयेयुः— कस्यादानं तीर्थस्नानं चेत्यादि। समंजसं क्रियाविशेषणम्। सत्यादनपेतमृजुर्धार्मिको यो मार्गस्तेन नयेयुः। समंजसमृजु स्पष्टमित्येकोऽर्थः। सत्यव्यवहारश्च स्पष्ट इत्युक्तं समंजसमिति ॥ २५६ ॥

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ॥
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥ २५७ ॥

प्रमाणान्तरलिङ्गेभ्योऽन्यथासंभवद्भ्यः प्रत्ययितरपुरुषेभ्यो मिथ्यात्वेऽवधारिते—प्रत्येकं द्विशतो दण्डः । एकैकस्य साक्षित्वात्साक्षिणां च दण्ड्यत्वात् । नहिव्यासज्य वदन्ति साक्ष्यम् । सत्यप्रधानाः साक्षिणः सत्यसाक्षिणः । पूयन्ते अनृताभिधानेन पापेन न संबध्यन्त इति । यथोक्तेन याथातथ्येन । न हि शब्दात्मकस्य वचनस्याऽत्रावसरः । प्रमाणान्तरसंवादमात्रमनेन लक्ष्यते । अथवा यथाशास्त्रमुक्तेन सत्येनेति यावत् । शास्त्रे हि सत्यं वक्तव्यमित्येवमुक्तमतो यथोक्तेन सत्येनेत्युक्तं भवति ॥ २५७ ॥

साक्ष्यभावे तु चत्वारो ग्रामसीमान्तवासिनः ॥
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥ २५८ ॥

ग्रामसामन्ताः सीमान्तवासिनः प्रष्टव्याः । तेषां वचने निश्चयं कुर्यात् । प्रयताः—साक्षिधर्मेण शास्त्रान्तरेण । राजसंनिधाविति श्लोकपूरणम् । न तु सामन्ताः स्वेच्छया राजवन्निश्चिन्वन्ति ॥ २५८ ॥

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम् ॥
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥ २५९ ॥

सामन्तानां मौलानामिति विशेषणविशेष्यभावः स्तुत्यर्थः । ग्रामप्रतिष्ठानकाले भवा उत्पत्तिसहभुवो मौला उच्यन्ते । ते च सामन्ता नित्याः, नित्यसंनिहितत्वात् । तेषामप्यभावः कथंचिदुच्छिन्नत्वात् । तदा का गतिः । तदेमानपि वक्ष्यमाणान् पृच्छेत् ।

अथवा मौला अनुभाविनः—सामन्ता व्याख्याताः व्यवहर्तव्याः । मौलानां पूर्वोक्तानां अभावे सामन्ताः प्रमाणम् । तदभावे वनगोचरान्विनियुञ्जीत निपुणतः पृच्छेत् ॥ २५९ ॥

व्याधांश्छाकुनिकान्गोपान्कैवर्तान्मूलखानकान् ॥
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ॥ २६० ॥

एते वनानि भ्राम्यन्ति । ग्राममध्येन गच्छन्तः कदाचित्तद्वृत्तं विद्युः । ते हि तेन पथा गच्छन्तो विवादास्पदं प्रदेशं पूर्वं कांश्चित्पुरुषान्कृषतो दृष्ट्वा पृच्छेयुः 'कोऽयं ग्रामो यो भवद्भिः कृष्यत' इति । एवमादिना संभवति पूर्वानुभवः ।

व्याधा मृगयाजीविनः। तेषामपि वनाद्भ्रष्टमृगमनुधावतां भवति ग्रामसंबन्धः। एवं शाकुनिकाः शकुनिबन्धजीविनः। तदन्वेषणे ये सर्वान्ग्रामानागोचरयन्ति। गोपा गवां तृणविशेषज्ञानाय तत्र तत्र परिभ्राम्यन्ति। कैवर्ता दाशास्तडागखननादिजीविनस्तत्र तत्र गच्छन्ति क्वास्माकीनं कर्मोपयुज्यते। मूलखानका मूलं वृक्षादेः खनयन्ति स्थूलकाशादेः। व्यालग्रहाः सर्पग्राहिणः—जीविकार्थं तेऽपि सर्पांस्तं तं प्रदेशमन्विच्छन्ति। अतः तेषामपि पारिग्रामिकैर्बहुभिः संबन्धः। उञ्छवृत्तयोऽपि दरिद्रा अनेकग्रामपर्यटनेन पात्रमात्रं निर्वर्तयन्ति। अन्यांश्च फलकुसुमेन्धनार्थिनः ॥ २६० ॥

ते पृष्टास्तु यथाब्रूयुः सीमासन्धिषु लक्षणम् ॥
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥ २६१ ॥

ते धर्मेण पृष्टा इति योजना। सीमाश्च ताः सन्धयश्च सीमाससन्धयः। ग्रामद्वयसंयोगः 'सन्धिः'। स च सीमैव। लक्षणं ज्ञापकम् ॥ २६१ ॥

क्षेत्रकूपतडागानामारामस्य गृहस्य च ॥
सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः ॥ २६२ ॥

आराम उद्यानभूमिः शाकवाटश्च। सामन्तप्रमाणकस्तत्र निश्चयः। व्याधादिनिवृत्त्यर्थमिदमुच्यते। सीमासेतुः सीमाबन्धः। सीमाविभावनार्थं य आवध्यते स्थाप्यते ॥ २६२ ॥

सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ॥
सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥ २६३ ॥

पूर्वेभ्यः सामन्तानामधिको दण्डः। पृथक्पृथगित्यनुवादः उक्तत्वान्न्यायस्य। क्षेत्रादिप्रातिवेश्या अवश्यं ज्ञातारो भवन्ति। प्रत्यासन्नतरतः एषां दण्डमहत्त्वम्। सामन्तानां तु परकीयसीमावेदनं नावश्यमिति द्विशतो दमोऽनुवर्त्यः। तेन ग्रामसीमायां द्रष्टॄणां सामन्तानां च द्विशतः।

ये तु सामन्तशब्दमाश्रित्य ग्रामक्षेत्रादिसीमयोः सामन्तत्वात्तुल्यदण्डत्वमाहुस्ते न्यायविरोधादुपेक्षणीयाः ॥ २६३ ॥

गृहं तडागमारामं क्षेत्रं वा भीपया हरन् ॥
शतानि पञ्चदण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ २६४ ॥

क्षेत्रादिप्रसङ्गादिदमुच्यते । भीग्रहणं निमित्तोपलक्षणार्थम् । अस्यैवैतन्निश्चितमित्येवं जानतो हरतः पञ्चशतो दण्डः । मध्यमसाहसे प्रकृते पञ्चशतग्रहणं न्यूनाधिकदण्डार्थम् । पूर्वत्र वा संख्यानमविवक्षितं मन्यन्ते । 'व्यवहारं लेखयामि' 'राज्ञा दण्डयामि' 'चौरैर्दोषयामीति' भयप्रदर्शनेन हरति । तस्यां दण्डो निमित्तान्तरानुकल्पः ॥ २६४ ॥

सीमायामविषह्यायां स्वयं राजैव धर्मवित् ॥
प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥ २६५ ॥

अविषह्या निश्चेतुमशक्या—लिङ्गसाक्ष्यभावात् । राजैव स्वेच्छया भूमिं प्रदिशेद्दद्यात्-'इयं वो भूमिरियं व' इति । धर्मवित्—पक्षपातो नैव कस्यचित्कर्तव्य इति । एतदाह उपकारात् हेतोः । यया सीमया द्वावपि ग्रामौ समोपकारौ भवतः । तेन यदि न्यूनाऽपि कस्यचिद्भूमिः स्यात्क्षेत्रं चेत्सुगुणं बहूत्पत्तिकं तदपेक्षः प्रदेशः । ल्यब्लोपे पञ्चमी—उपकारमपेक्ष्य ।

अथवैकेषां प्रदिशेत्—परेषामनिश्चितामपहरेत् । यदि विवादिग्रामस्तां सीमां यावद्भोक्तुं न शक्नुयादितरे च शक्तास्तदान्येभ्यः प्रदिशेत् । एवमात्मनो बहूनां च ग्रामीणानामुपकृतं भवति ॥ २६५ ॥

एषोऽखिलेनाभिहितो धर्मः सीमाविनिर्णये ॥
अत ऊर्ध्वं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयम् ॥ २६६ ॥

पूर्वोपसंहारोऽपरसंक्षेपोपन्यासः श्लोकार्थः ।

'दण्डवाचिक' इत्युक्त्वा (६) क्रमभेदो लाघवाद्वाक्पारुष्यं स्यात्ततो दण्डव्यापारः । द्वन्द्वे चेतरेतरयोगाद्व्यस्तक्रमसमासार्थप्रतिपत्तेरेकैकस्योभयार्थप्रतिपादनाद्दण्डशब्देन वागर्थोऽप्युपात्त इति कः क्रमभेदः । तथा च यथासंख्यसूत्रारंभो ( पा० १ । ३ । १० ) महाभाष्यकारेण समर्थितः—एतदेव दर्शनमाश्रित्य संज्ञासमासनिर्देशादिति ॥ २६६ ॥

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ॥
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥२६७ ॥

परुषवचनमाक्रोशः । स च बहुधा नृशंसाश्लीलभाषणान्मर्मणि तोदः अभिशापः 'अकरणहन्ता वृषलभूयाः' । असत उपन्यसनं "कन्या ते गर्भिणीति" । पातकोपपातकैर्याजनमिति । तत्र द्वयोर्ब्राह्मणाक्रोशे क्षत्रियवैश्ययोरयं दण्डः । अन्यत्र "पतनीये कृते क्षेपे दण्डो मध्यमसाहसः" इत्यादि ( याज्ञ० व्यव० २१० ) स्मृत्यन्तरोक्तः । शूद्रस्य वधः ताडनजिह्वाछेदनमारणादिरूप आक्रोशभेदाद् वेदितव्यः ॥ २६७ ॥

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रिस्याभिशंसने ॥
वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ २६८ ॥

अभिशंसनं सर्वप्रकार आक्रोशः, पतनीयादन्यः—तत्र दण्डान्तरविधानात् । निमित्तसप्तमी चैषा । वैश्य इति विषयसप्तमी । ब्राह्मणस्याक्रोष्टुराक्रुश्यमानस्य च दण्ड उक्तः । क्षत्रियादीनां त्वितरेतरं स्मृत्यन्तरमन्वेषणीयम् । तथा च गौतमः ( १२।११ ) "ब्राह्मणराजन्यवत् क्षत्रियवैश्यौ" । परस्पराक्रोशे क्षत्रियश्चेद्वैश्यमाक्रोशेत्पञ्चाशतं दण्ड्यः वैश्यःक्षत्रियं शतम् । एवं क्षत्रियः शूद्रमाक्रोशेत्पञ्चविंशतिर्दण्ड्यः । वैश्यः पञ्चाशतम् । शूद्रस्य तु तदाक्रोशे गुणापेक्षिको दण्डो वक्ष्यते ॥ २६८ ॥

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे ॥
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥ ॥ २६९ ॥

द्विजातिग्रहणमतन्त्रम् । समवर्णे व्यतिक्रमे परस्पराक्रोशे द्वादश दण्डः । समत्वं च जातिवित्तबन्धुवयः कर्मविद्याभिः, विशेषानुपदेशात् तत्र समानजातीये वित्ताधिके द्विगुणं—तस्मिन्नेव बन्धुत्वाधिके त्रिगुणं—यावत्सर्वगुणे निर्गुणस्य षड्गुणम् । वादा आक्रोशा अवचनीया अत्यन्तनृशंसा मातृभगिनीभार्यादिगताः । तदेव द्विगुणं दण्डपरिमाणम् । नपुंसकलिङ्गात्सर्वशेषोऽयम् ।

न समवर्णविषयएव । अथवा तदेव शतमितियोजना । लिङ्गसामर्थ्याच्छतस्य च प्रथमश्लोके श्रुतत्वात् । अतोऽवचनीयेषु समवर्णेष्वपि द्विशतो दमः ॥ लिङ्गोपपत्त्यर्थं परिमाणपदमश्रुतमध्याहर्तव्यम् । शते तु व्यवहितकल्पना ज्यायसी ॥ २६९ ॥

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ॥
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ २७० ॥

एकजातिः शूद्रः । स त्रैवर्णिकान्क्षिपन्नाक्रोशन् दारुणया पातकादियोगिन्या वाचा नृशंसादिरूपया जिह्वाछेदं लभते । जघन्यप्रभव इति पादाभ्यां ब्रह्मण उत्पन्न इति हेत्वभिधानं प्रतिलोमानामपि ग्रहणार्थम् । तेऽपि जघन्यप्रभवा एव—"नास्ति पञ्चम" इति वर्णान्तरनिषेधात् ॥ २७० ॥

नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः ॥
निक्षेप्योऽयोमयः शंकुर्ज्वलन्नास्ये दशांगुलः ॥ २७१ ॥

अभिद्रोह आक्रोशः । कुत्साबुद्धिः—'ब्राह्मणक त्वं मा मया स्पर्धिष्ठाः' । एवन्नाम्न्यपि योज्यम् । ग्रहणं ग्रहः । निरुपपदं नाम गृह्णाति कुत्साप्रत्ययप्रयोगेन वा 'देवदत्तकेति' । अभिद्रोहेण क्रोधेन । अभिद्रोहः क्रोधः--न प्रणयेन । निःक्षेप्यः प्रक्षेप्यः शङ्कुः कीलकः । ज्वलन्नग्निना दीप्यमानोऽयोमयो लोहमयः ॥ २७१ ॥

धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः ॥
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥ २७२ ॥

'अयं ते स्वधर्म' 'इयं वाऽत्रेतिकर्तव्यता' 'मैवं कार्षीः छांदसोऽसीति'—एवमादि-व्याकरणलेशज्ञानतया ढुन्ढुकत्वेन दर्पवन्तः शूद्रा उपदिशन्ति । तेषामेष दण्डः । यस्तु प्रणयात् ब्राह्मणापाश्रयादेव व्युत्पन्नो विस्मृतं कथंचिद्देशकालविभागं स्मारयेत्—'पूर्वाह्णकालं नातिक्रामयेति', 'क्रियतां दैवं कर्म, देवांस्तर्पयोपवीती भव, मा प्राचीनावीतं कार्षीरिति' तस्य न दोषः । तप्तमग्निसंबन्धात्पीडाकरम् । आसेच-येत्क्षारयेत् ।

"युक्तं वक्त्रे, मुखेनोपदेशकत्वात् । श्रोत्रस्य कोऽपराधः ।"

"प्रागसत्तर्कादिश्रवणम् ॥ २७२ ॥

श्रुतं देशं च जातिं च कर्म शारीरमेव च ॥
वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥ २७३ ॥

सत्ये च श्रुते 'नैतदनेन सम्यक् श्रुतं' इत्याह—श्रुतमेव वाक्षिपति—'नैतत्सम्यक् यदनेन श्रुतमिति' । ब्रह्मावर्तीयमभिजनाभिमानिनं 'वाह्मकोऽय' मित्याह । एवं

जात्या ब्राह्मणं 'क्षत्रियोऽयमि'त्याह्—क्षत्रियं वा हेलया 'ब्राह्मण' इति । कर्म—ब्रह्मचारिणं 'स्नातक' इति । शरीरावयवः शारीरे—अभ्यङ्गं 'दुश्चर्मेति' । वितथेन वितथमनृतम् । 'प्रकृत्यादिभ्य' इति तृतीया । अथवाऽधर्मो 'वैतथ्यं'—तस्य वाच्यं प्रति कारणता युक्तैव । स्वगुणमदात्परावज्ञानं दर्पः । अज्ञानात्परिहासतो वा न दोषः ।

"कस्य पुनरयं दण्डः ।"

सर्वेषामिति ब्रूमः । शूद्राधिकाराच्छूद्रस्यैवेति परे । द्विजातिविषये वैतथ्ये ॥ २७३ ॥

**काणं वाऽप्यथ वा खञ्जमन्यं वाऽपि तथाविधम् ॥**
**तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम् ॥ २७४ ॥**

एकेनाक्ष्णा विकलः काणः । खञ्जः पादविकलः । तथाविधं कुणिचिपिटनासं—तथ्येन 'असत्येन' अपिशब्दाद्वितथेन—अकाणं काण इत्युक्ते । कार्षापणावरो दण्डः । अत्यन्ताल्पो यदि दण्डः कथंचिदनुग्राह्यतया, तदा कार्षापणो दण्डः । अन्यथा द्वौ त्रयः पञ्च वा । पुरुषविशेषापेक्षयाऽपि दण्ड्यः शूद्रः । सर्वं वा पूर्ववत् ॥ २७४ ॥

**मातरं पितरं जायां भ्रातरं तनयं गुरुम् ॥**
**आक्षारयञ्छतं दाप्यः पन्थानं चाददद्गुरोः ॥ २७५ ॥**

आक्षारणं भेदनं द्वेषजननमनृतेन । 'एषा ते माता न स्नेहवती द्वितीये पुत्रेऽत्यन्ततृष्णावती कनकमयमङ्गुलीयकं रहसि तस्मै दत्तवती' इत्येवमाद्युक्त्वा भेदयति । एवं पितापुत्रौ जायापती भ्रातॄन् गुरुशिष्यौ । तनयग्रहणं द्वितीयसंबन्धिप्रदर्शनार्थम् । अन्यथा मातरमित्युक्ते मातरं पुत्राद्भिन्दतो दण्डः स्यान्न पुत्रं मातुः । यद्यपि भेदनमुभयाधिष्ठानं तथापि यन्मुखेन क्रियते स एव भेदयितव्य-इति व्यवहारः । तत्रासति तनयग्रहणे प्रदर्शनार्थे यदैव मातरमाह—'न एष ते पुत्रो भक्तो दुःशीलश्च' इत्येवमादिना मातरमाक्षारयति तत्रैव स्यान्न तु पुत्रं यथा दर्शितम् ।

अन्ये तु चित्तकदर्थनोत्पादनम् 'आक्षारण'माहुः । प्रवक्ष्यामि धनं श्रुतं

वाऽर्जयितुं तीर्थाद्युपसेवितुं तत्प्रवासशङ्कया च मानसी तृष्णया पीडा भवतीति तथा न कर्तव्यम्।

यावद्गुरवस्ते जीवेयुस्तावन्नान्यं समाचरेन्न तैरननुज्ञात इति च। यत्तु विद्वेषणादिना चित्ते खेदोत्पादनं तत्र शता न मुच्यते, 'प्रतिरोद्धा गुरोरिति' महत्वाद्दोषस्य।

जायाया अनुकूलायाः पुत्रवत्याः 'करोत्यन्यं विवाहम्' इत्येतदाक्षारणम्। एवं गुणवतः पुत्रस्याकारणेऽन्यकरणम्।

गुरोः सर्वप्रकारं पन्थानमत्यजतः शतं दण्डः ॥ २७५ ॥

ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ॥
ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥ २७६ ॥

ब्राह्मणक्षत्रियाभ्यां परस्पराक्रोशे कृते तयोरयं दण्ड इत्येवमध्याहारेण योजना। तादर्थ्ये चतुर्थी वा। तद्विनयाय दण्डः कर्तव्यः। पातकस्याक्रोशे कृतेऽयं दण्डो दुःखोत्पादनरूपे ॥ २७६ ॥

विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः ॥
छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः ॥ २७७ ॥

एवमेव प्रथममध्यमौ साहसावित्यतिदिश्यते। तेनैव क्रमेण वैश्यस्य शूद्राक्रोशे प्रथमः शूद्रस्य वैश्याक्रोशे मध्यमः।

छेदवर्जं दण्डस्य प्रणयनमिति। 'एकजातिर्द्विजातिम्' (२७०) इत्यनेन जिह्वाछेदं प्राप्तं निवर्तयति।

स्वजातिं प्रतीति। नैवं मन्तव्यं समानजातीयं प्रतीति—किं तर्हि याऽत्र जातिरुपात्ता वैश्यशूद्राविति स्वग्रहणम्। श्लोकाभिप्रायः—परस्पराक्रोशे यावत् स्वजातिमिति पूर्वत्रापि संबन्धनीयम्।

प्रणयनं प्रवर्तनम्।

क्षत्रियस्य वैश्यशूद्राक्षारणे प्रथमार्द्धसाहसः। एवं ब्राह्मणस्य वैश्यशूद्रयोः कल्पः ॥ २७७ ॥

**एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः ॥**
**अत ऊर्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयम् ॥ २७८ ॥**

दण्डपारुष्यं दण्डेन दुःखोत्पादनम् । यथा कण्टकादेः पुरुषस्य स्पर्शः पीडाकर— एवं पीडाकरत्वसामान्यात्पारुष्यशब्दप्रयोगः । तत्र निर्णयो दण्डविशेषनिर्णयः । पूर्वप्रकरणोपसंहारोपन्यासार्थः श्लोकः ॥ २७८ ॥

**येनकेनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः ॥**
**छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥ २७९ ॥**

अन्त्यजः शूद्रश्चण्डालपर्यन्तः । श्रेष्ठः त्रैवर्णिकः । तं चेद्धिंस्यादङ्गेन केनचित् साक्षाद् दण्डखड्गादिप्रहरणव्यवधानेन वा—तदङ्गमस्य छेत्तव्यम् । 'हिंसा' च क्रोधेन प्रहरणं ताडनेच्छया हस्ताद्युद्यम्य वेगेन निपातनम्, न मारणमेव । तत्तदिति वीप्सा । अङ्गमिति छेत्तव्यमिति चैकत्वविवक्षा मा विज्ञायि । तेनानेकेनाङ्गेन प्रहरणेऽनेकस्यैव छेदः । अनुशासनमुपदेशः । मनुकृतैषा मर्यादा । अनुशासनग्रहणं कारुणिकस्य राज्ञः प्रवृत्त्यर्थः ॥ २७९ ॥

**पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ॥**
**पादेन प्रहरन् कोपात्पादच्छेदनमर्हति ॥ २८० ॥**

उद्यम्योत्क्षिप्यैव कोपात्ताडनेच्छोस्तदङ्गमनिपातयतोऽस्य पाणिः छेत्तव्यः । दण्डग्रहणं समानपीडाकरस्य हिंसासाधनस्योपलक्षणार्थम् । तेन मृदुशकलादावन्यो दण्डः । पादेन प्रहरन्निति । अत्राप्युद्यम्येत्यपेक्षितव्यम् । अवगुरतोऽन्येष एव ॥ २८० ॥

**सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ॥**
**कट्यां कृताङ्को निर्वास्यः स्फिचं वाऽस्यावकर्तयेत् ॥ २८१ ॥**

उत्कृष्टो ब्राह्मणो जातितो दौःशील्यादवकृष्टोऽपि । इतरे वर्णा औत्तराधर्येण परस्परापेक्षयोत्कृष्टाश्चावकृष्टाश्च । तत्र अवकृष्टज इति जनिना जन्मावकर्ष उपात्तः । तत्संनिधानादुत्कर्षोऽपि जन्मनैव । जन्मना च निरपेक्षोत्कर्षो ब्राह्मणस्य नापकर्षः । तेन शूद्रस्यायं ब्राह्मणेन सहैकमासनमारूढवतो दंडः । कटिः श्रोणी । तत्र कृतचिह्नः अङ्कविधौ च न सुधाकुंकुमादिना चिह्नकरणमात्रमपि तु दण्डस्याप-

नार्थम्—अतिक्रमाद् बिभियुरिति। तेन देशान्तरे यदनपायि तच्चिह्नमायसा लेखनादुपदिश्यते। तथा च वक्ष्यति "उद्वेजनकरैर्दण्डैश्चिह्नयित्वेति" (३५२)। राष्ट्राच्च निष्कास्यः। स्फिक् श्रोण्येकदेशः। सव्यो दक्षिणश्च। तं चाऽवकर्तयेत्। चिह्नेन विकल्पविधानात्तावन्मात्रच्छेदो न सर्वस्य स्फिजः। अभिप्रेप्सुरिति च नेच्छामात्रेण किंतर्हि प्राप्तवत एव। इच्छाया शक्यापह्नवत्वाद्दण्डस्य च महत्त्वात् ॥ २८१ ॥

अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ॥
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ॥ २८२ ॥

मूत्रेणावसिंचतोऽभिमुखं वा तदवमानार्थं क्षिपतोऽसत्यपि संस्पर्शेऽवमानयते मूत्रेणेति निष्कर्तव्यः। समानफलत्वाद्रेतस्यपि दण्डोऽयम्। 'निष्ठीवनं' नासिकास्यस्रावः। तस्य घ्राणेन क्षेपे नासापुटच्छेदः—"येनाङ्गेने"त्युक्तत्वात्। 'शर्धनं' कुत्सितो गुदशब्दः। दर्पान्नप्रमादात् ॥ २८२ ॥

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ॥
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥ २८३ ॥

दर्पादित्यनुवर्तते। परिभवबुद्ध्या केशेषु ब्राह्मणं गृह्णतः शूद्रस्य हस्तौ छेदयेत्। द्विवचनमेकेनापि द्वाभ्यां तुल्यपीडाकर उभयच्छेदो नैकस्यैव। दाढिका श्मश्रु। अन्यदपि यदङ्गं गृह्यमाणं ग्रीवादितुल्यपीडाकरं तत्र सर्वथाप्ययमेव दण्डः। अविचारयन्। पीडा कियत्यस्य गृहीतस्य संजाता महती स्वल्पा वेत्येतदनुबन्धश्लोकप्राप्तं विचारणं निवार्यते। ग्रहणमात्रे दण्डः ॥ २८३ ॥

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ॥
मांसभेत्ता तु षण्णिष्कान्प्रवास्यस्त्वस्थिभेदकः ॥ २८४ ॥

द्विजातीनामयं परस्परापराधे शूद्रस्य तु शूद्रापराधे उच्यते।

यः केवलामेव त्वचं भिन्द्याद्विदारयेन्न लोहितं दर्शयेत्तस्य शतं दण्डः। तावदेव लोहितदर्शने। यद्यपि त्वग्भेदमन्तरेण न लोहितं दृश्यते तथाप्यधिकापराधादधिक-

दण्डे प्राप्ते शतवचनं नियमार्थम्। अन्ये तु कर्णनासिकादेरपि स्रवति शोणितं बहिस्त्वग्भेदेऽपि तदर्थमुच्यत इत्याहुः। तदयुक्तम्। अन्तर्भेदे हि महत्त्वान्महादण्डो युक्तः। तस्माद्यत्रेपत्स्रवति शोणितं तत्र शतम्। शिरोभेदे तु मांसवत्।

निष्कशब्दः सुवर्णपरिमाणवाचीत्युक्तम्।

प्रवास्योऽस्थ्नां भेदकः तत्प्रयोजक इति। यञन्तेन समासं कृत्वा तं करोतीति पठितव्यः—अस्थिभेदकृदिति।

'प्रवासन'मर्थशास्त्रप्रवृत्त्या मारणम्, निर्वासनं वा। दण्डविधौ ह्यर्थशास्त्रश्रवणं दृश्यते। तथाहि 'दशबन्धमिति' वार्हस्पत्य औशनस्ये च प्रयोगः। निर्वासनं ब्राह्मणस्य नान्येषाम् ॥ २८४ ॥

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ॥
यथा तथा दमः कार्यो हिंसायामिति धारणा ॥ २८५ ॥

वनस्पतिग्रहणं सर्वस्थावरप्रदर्शनार्थम्। फलपुष्पपत्रच्छायादिना महोपभोग्यस्य वृक्षस्य हिंसायां दण्ड उत्तमसाहसः, मध्यमस्य मध्यमो निकृष्टस्य प्रथमः। तथा स्थानविशेषो द्रष्टव्यः—पत्रच्छेदः फलच्छेदः शाखाछेद इति। फलानामपि विशेषो महार्घता दुष्प्रापता। तथा स्थानविशेषोऽपि द्रष्टव्यः—सीम्नि चतुष्पथे तपोवन—इति ॥ २८५ ॥

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ॥
यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥ २८६ ॥

यदुक्तं त्वग्भेदक इति तस्य विशेषोऽयम्। असति मनुष्यग्रहणे प्राणिमात्रहिंसाविषयत्वेऽस्य श्लोकस्य महापशूनां क्षुद्राणां च पशुपक्षिमृगाणां तुल्यदण्डता मा भूदिति तदर्थमिदम्।

यथा यथा महद्दुःखमिति। स्वल्पे भेदने शोणिते च प्राणिनां महत्त्वादल्पत्वे प्रहारस्य। शतादूनोऽपि दण्डः। महति शतादभ्यधिकोऽपि।

अन्ये तु महद्ग्रहणान्महति दुःखे दण्डवृद्ध्यर्थं नाल्पेऽपचयार्थम्। यथाश्रुतमेव तत्र दुःखाय प्रहृते दुःखोत्पत्त्यर्थं प्रहारे। प्रमादतस्तु न वृद्धिः। "अनुबन्धं परिज्ञाय" इत्यस्यैव श्लोकद्वयमुदाहरणभङ्ग्या व्याख्येयम् ॥ २८६ ॥

अङ्गावपीडनायां च प्राणशोणितयोस्तथा ॥
समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥ २८७ ॥

अङ्गानामवपीडना दृढरज्ज्वादिग्रहणसन्धिविश्लेपणादिना। तत्र यावता धनेन पथ्यभिषगौषधादिमूल्येन प्रत्यापत्तिमायाति तावत् पीडितस्य दाप्यः। एवं प्राणशोणितयोरवपीडनानामिति समस्तमपि योज्यम्। अथवा प्राणशोणितयोः समुत्थानव्ययं दाप्य इति संबन्धः सामर्थ्यादपचितयोरिति लभ्यते। समुत्थानं प्रकृत्यापत्तिः। प्राणो वलम्। प्रहारेणास्वस्थस्य भोजनादृते कार्श्याद्युपपत्तौ वलमपचीयते। तत्राङ्गेऽनष्टे प्रत्यागते च यावद्वललाभस्तावत्तदुपयोगि यत्किंचिद् घृततैलादि दापनीयः। एवं शोणिताद्युत्पत्तौ तद्दुर्वलीभूतस्य व्याध्यन्तरं वा प्राप्तस्याप्रकृतशरीरावस्थाप्राप्तेः समुत्थानव्ययं दाप्यः।

न चेत्तद्गृह्णाति तदा तच्च दण्डं च परिपिण्ड्य सर्वं राज्ञे दद्यात्॥ २८७॥

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ॥
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥ २८८ ॥

द्रव्याणि गृहोपकरणाद्यन्यानि वाऽनुक्तदण्डविशेषाणि शूर्पोलूखलघटस्थालीपिठरादीनि। तेषां 'हिंसा' प्राग्रूपनाशः सत्यपि कार्यक्षमत्वे। ज्ञानतोऽज्ञानत इति प्रमादकृते वुद्धिपूर्वं चाविशेषेण हिंसनात् तस्य द्रव्यस्वामिनो जनयेत्परितोषं तद्रूपान्यदानेन मूल्येन प्रणयेन वा। राज्ञे तु द्रव्यमूल्यं द्रव्यं वा दद्यात् अस्य कचिदपवादः ॥ २८८ ॥

चर्मचार्मिकभाण्डेषु काष्ठलोष्ठमयेषु च ॥
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च ॥ २८९ ॥

चर्मचार्मिकयोर्द्वन्द्वं कृत्वा भाण्डपदेन विशेष्येण समासः। अथवा चार्मिकभाण्डयोर्विशेषणसमासं कृत्वा चर्मशब्देन द्वन्द्वः। चर्मविकाराश्चार्मिकाणि भाण्डानि कटिसूत्रवरत्रादीनि। चर्माण्यविकृतानि गवादीनाम्। अथवा चर्मभाण्डानि केवलचर्ममयानि, चर्मावनद्धानि चार्मिकाणि। काष्ठमयभाण्डान्युलूखलमुसलफलकादीनि। लोष्ठो मृद्विकारः पाषाणा कृतिः पिण्डीभूता मृत्। तन्मयानि स्वल्पपाकाधानादीनि तन्नाशने मूल्यात्पञ्चगुणो दण्डः। तुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव ॥ २८९ ॥

यानस्य चैव यातुश्च यानस्वामिन एव च ॥
दशातिवर्तनान्याहुः शेषे दण्डो विधीयते ॥ २९० ॥

सत्यामपि हिंसायां कचिद्दोषो नास्तीत्येतदनेन प्रकरणेन प्रदर्श्यते। यानं गन्त्र्यादि यदारुह्य यान्ति पन्थानम्। तच्च गन्त्र्यादि वलीवर्दगर्दभमहिषादिवाह्यम्। त एव वा गर्दभादयः पृष्ठारोह्या यानानि। याता तदारूढः सारथ्यादिः। यानस्वामी यस्य तत्स्वयानम्। तत्रैषां चक्रवेगादिभी रज्ज्वाकर्षणयुक्तैर्वाऽश्वादिभिः कस्यचिद्द्रव्यस्य नाशो वा मरणम्। तत्र पशुस्वामिपालव्यतिक्रमन्याये प्राप्ते कदाचिद्यातुर्दोषः कदाचित्स्वामिनः कदाचिदुभयोः कदाचिन्न कस्यचिदपीति यो विशेषस्तत्र नोक्त इहैवेष्यते—स उच्यते। अतिवर्तनानि—अतिक्रम्य हिंसादण्डं वर्तते, नात्र दण्डोऽस्ति, दण्डनिमित्तानि न भवन्तीति यावत्। शेषे दण्ड उक्तेभ्यो निमित्तेभ्योऽन्यत्र। तान्यपि वक्ष्यति ॥ २९० ॥

यत्र नास्ति दोषस्तानि तावदाह—

छिन्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ॥
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥ २९१ ॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ॥
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥ २९२ ॥

नासायां भवं नास्यम्। शरीरावयवाद्यत्। नासिकापुटसंयोगिनी वलीवर्दानां रज्जुरश्वानां खलीनं हस्तिनामङ्कुशः। तस्मिन् छिन्ने त्रुटिते। युगे च भग्ने। रथाङ्गकाष्ठं युगम्। छिन्नं नास्यमस्येति बहुव्रीहिणा रथ उच्यते पशुर्वा—उभयोरपि साक्षात्पारंपर्येण संबन्धात्। तिर्यक्प्रतिमुखागते याने। तिरश्चीनं वा प्रतीचीनं वा कथंचिद्भूवैषम्यात्पशुत्रासाद्वा यानं गच्छत् कंचिदपराध्येन्न दुष्येत्। प्राजको हि संमुखीनाञ्छक्तो रक्षितुं तिर्यक् प्रत्यगवस्थितौ त्वदृश्यमानस्य कथं रक्षतु। 'प्रतिमुखागतं' प्रत्यगावृत्तिः।

अन्ये तु तिर्यगागते हिंस्यमाने ऋजुगामिन्येव याने न दोषमाहुः—प्रतिमुखं चाभिमुखं मन्यन्ते। अभिमुखागतः किमिति चक्रिणं दृष्ट्वा पन्थानं न ददाति।

अक्षचक्रे रथाङ्गे प्रसिद्धे। यन्त्राणि चर्मबन्धनानि शकटकाष्ठानाम्। योक्त्र

पशुग्रीवाकाष्ठम् । रश्मिः प्रग्रहो हस्तग्रहणं युग्यानां संचरणनियमनार्थः । आक्रन्द उच्चैः शब्दोऽपेहीत्यपसरेत्यर्थः । इतिकरणो भाषाप्रसिद्धतदर्थशब्दोच्चारणार्थो, न त्वयमेव शब्दः प्रयोक्तव्यः । अविधेयेषु युग्येष्वपसरापसरेति क्रोशतः प्राजकस्य पथो नातिक्रामन्यदि हिंस्यान्न दोषः ॥ २९१—२९२ ॥

यत्राऽपवर्तते युग्यं वैगुण्यात्प्राजकस्य तु ॥
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥ २९३ ॥
प्राजकश्चेद् भवेदाप्तः प्राजको दण्डमर्हति ॥
युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम् ॥ २९४ ॥

प्राजको यानसारथिस्तस्य वैगुण्यमशिक्षितत्वं न तु प्रमादः । प्रमादे हि शिक्षितस्य स्वामिनो न दोषः । तस्माद्धेतोर्यदि युग्यं यानं सहसाऽपवर्तते स्पष्टं मार्गं हित्वा तिर्यक् पश्चाद्वा गच्छेत् किंचिन्नाशयेत्तत्र स्वामी दण्ड्याः । अशिक्षितः प्राजकः किमित्यारोपितः । "मनुष्यमारणे क्षिप्रम्" ( २९६ ) इत्यादिना वक्ष्यमाणेन प्राणिभेदेन द्रव्यभेदेन च दण्डान्तरविधानाद्द्विशतमित्यविवक्षितम् । दण्डनिमित्तमेतदित्येतावतैव वाक्यस्यार्थवत्वादुत्तरत्र न कश्चिदन्योऽर्थः श्रूयते येन वाक्यं तत्र संख्याविधायकमित्युच्येत ॥ २९३—२९४ ॥

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ॥
प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः ॥ २९५ ॥

उक्तो हिंसायां दमः । तत्र विशेषं वक्तुमिदमाह । स प्राजकः पथि संरुद्धोऽग्रे वनावसर्पिणा संरुद्धो निरुद्धगतिः पश्चात्स्थितेनासुशिक्षितत्वात्प्रमादाद्वा वेगेन धुर्याश्चोदिताः पुनः स्थिरयतश्चेन्निकटो रथस्तेन च तस्य वेगनिरोधे कृते यदि पुरोरथस्यावेगपातात्पशुभिः रथयुक्तैरश्वादिभिः । रथेन रथावयवैर्वा । प्राणिनो मनुष्यादीन्मारयेत् । ततो दण्डस्य विचारो नास्ति । स्थित एव दण्डः ।

अथवा जवोत्पतिता अश्वाः पथि संरोधकसंमुखीनरथदर्शनेन बलाद्विधार्यमाणास्तिर्यग्गतया गच्छेयुः पार्श्वकीयान् प्रत्यगवस्थितत्वात्तथा हन्युस्तत्र दण्डो विचारितो नास्ति—प्राजके दोषाभावात् ।

अथवा पथि स्थितो वर्तमानः संरुद्धो न विध्रियमाणः ।
अथवा विचारितो विशेषेण विहितो विशेषित इति यावत् ॥ २९५ ॥

**मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषं भवेत् ॥**
**प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥ २९६ ॥**

तादृशे प्राजके रथपशुभिर्मनुष्यश्चेन्मार्यते तदा चौरवत्तस्य किल्विषं दण्डः । यद्यपि चौरस्य वधः सर्वस्वहरणादयो दण्डास्तथापीह धनदण्ड एव गृह्यते न वधः । महत्स्वर्धमिति तत्रैवार्धसंभवात् । स चोत्तमसाहसः कैश्चिदभ्युपगतः । यतश्च क्षते क्षुद्रकपशूनां तृतीयस्थानप्राप्तानां द्विशतो दमोऽतः प्रथमस्थानां मुख्यानामुत्तमो युक्त इति । प्राणभृतः प्राणवन्तो मनुष्यतिर्यक्पक्ष्यादयः । महत्सु महत्त्वं गवां प्रभावतो हस्त्यादीनां प्रमाणतः । आदिग्रहणाद्गर्दभाश्वतरव्याघ्रादयश्च कथंचित्परिगृह्यन्ते ।

वयं तु ब्रूमः—'सहस्रम्' इत्येवमवक्ष्यत् यद्यन्ये चौरवद्दण्डा नाभिप्रेता अभविष्यन् । तस्मादर्धग्रहणाद्वधो मा भूद्धनदण्डास्तु सर्वस्वहरणादयः सर्वे चौरोक्ताः पुरुषापेक्षयातिदिश्यन्ते ।

ननु च मनुष्यमारणेऽन्यस्य चौरदण्डस्यातिदेशोऽयुक्तः । स प्रतिपदं मनुष्यहनने विहितः । स च 'पुरुषाणां कुलीनानामिति' ( ३३२ ) वध एव । तत्र किमिति वाक्यान्तरगतार्धशब्दानुरोधेनैत्रं व्याख्यायते । वरमर्धस्यैव गुणतः काचिद्वृत्तिराश्रीयताम् ।"

सत्यं—यदि धर्मशब्दो मारणेन संवध्यमानोऽन्यथोपपद्येत । न च चौरवदित्यस्यानुषङ्गागतस्यार्थान्तरवृत्तिः पूर्वापरवाक्ययोः शक्या ॥ २९६ ॥

**क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः ॥**
**पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥ २९७ ॥**

अपचितपरिमाणाः क्षुद्रकाः । ते च केचिद्वयस्तः, वत्सकिशोरककलभादयः । केचिज्जातिस्वभावतः, अजैडकादयः । तत्राजाविकानां पञ्च माषान्वक्ष्यति । परिशेषाणां गवादीनामेवायं दण्डोऽल्पपरिमाणानाम् । शुभा मृगाः पृषतादयः—आकारतो लक्षणतश्च । पक्षिणो हंसशुकसारिकादयः । अशुभाः काकोलूकशृगालादयः । पशुशब्दश्चतुष्पाज्जातिवचनः ।

हिंसामात्रेण दण्डमिममिच्छन्ति। न प्रकृतयानविधिहेतु ब्रुवते। 'तत्र दण्डो विचारित' (२९५) इत्यनेन यानप्रकरणं व्यवच्छिन्नम्। विचारितः समाप्तविचार इत्यर्थः। इदानीमेतत्प्रकरणनिरपेक्षमुच्यत इति। एवं तु "प्राणभृत्सु महत्स्वर्धमिति" हस्तादिच्छेदनं 'मारण' मित्यर्थशब्दो नेयः स्मृत्यन्तरात्॥ २९७॥

गर्दभाजाविकानां तु दण्डः स्यात्पाञ्चमाषिकः॥
माषिकस्तु भवेद्दण्डः श्वसूकरनिपातने॥ २९८॥

पञ्च माषाः परिमाणमस्येति पाञ्चमाषिकः। माषस्य च द्रव्यजातेरनुपपादनान्मध्यमकल्पनायाश्च न्याय्यत्वाद्रौप्यस्य निर्देशोऽयमित्याहुः। हिरण्यं तु युक्तम्। एवं तत्सममिति न बाधितं भवति। अनुबन्धाद्यपेक्षया तु द्रव्यजातिः कल्प्येति सिद्धान्तः॥ २९८॥

भार्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः॥
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥ २९९॥

प्राप्ता अपराधं प्राप्तापराधाः। 'अपराधो' व्यतिक्रमः नीतिभ्रंशः। स यदा तैः कृतो भवति तदा ताडयितव्याः। ताडनमपि हिंसेत्युक्तम्। सा च "न हिंस्याद्भूतानीति" प्रतिषिद्धाऽपराधे निमित्ते भार्यादीनां प्रतिप्रसूयते। संबन्धिशब्दाश्चैते। या यस्य भार्या यश्च यस्य दासः स तेनानुशासनीयः। मार्गस्थापनोपायविधिपरश्चायम्, न ताडनविधिरेव। तेन वाग्दण्डाद्यपि कर्तव्यम्। अपराधानुरूपेण कदाचित्ताडनम्। सोदरस्थाने कनीयान्पठितव्यः—भ्राता तथानुजः। स हि ज्येष्ठस्य पुत्रवत्ताडनार्हः वैमात्रेयोऽपि चेदपितृको गुणवज्ज्येष्ठतन्त्रश्च। सोऽप्युन्मार्गगामी ताडनादिपर्यन्तैरुपायैर्निवारणीयः। वेणुदलं वंशत्वक्। एतदप्युपलक्षणं—तथाविधानां मृदुपीडासाधनानां शिफादीनाम्॥ २९९॥

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन॥
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम्॥ ३००॥

उक्तताडनदेशसाधनाभ्यामन्येन प्रकारेण ब्रन्नक्ष्यादिषु लगुडादिभिर्वा चौरदण्डं प्राप्नोति। निन्दैषा। न त्वयमेव दण्डः। योऽन्यत्र हिंसायां दण्डः सोऽत्र भवतीत्युक्तं भवति॥ ३००॥

एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः ॥
स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णये ॥ ३०१ ॥

एष निःशेषेणोक्तो दण्डपारुष्यनिर्णयो दण्डव्यवस्था। दण्डशब्दो हि साधनोपलक्षकतया विवादपदेऽन्वितार्थः। नामधेये पूर्वपदम्। स्तेनस्य चौरस्य दण्डभेदानतःपरं वक्ष्यामीत्युपसंहारोपन्यासार्थः श्लोकः ॥ ३०१ ॥

परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः ॥
स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्धते ॥ ३०२ ॥

कश्चित्करुणावान् क्रूरं हिंसा कर्मेति मन्यमानो न प्रवर्तते। अतस्तत्प्रवृत्त्यर्थं स्तेननिग्रहस्तुत्यर्थवादः प्रक्रम्यते। नात्र हिंसादोषोऽस्ति। प्रत्युत दृष्टोपकारहेतुत्वात्स्तेनहिंसैव श्रेयस्करी। वेदतुल्यतां च ख्यापयितुमर्थवादा भूयांसः। तत्र हि प्रायेण सार्थवादका विध्युद्देशा इति। तत्प्रतीत्यनुसरणेन वैदिकोऽयमर्थ इति प्रसिद्धिः। भवन्ति चात्र केचित्प्रतिपत्तारो ये स्तुतिभिरतितरां प्रवर्तन्ते।

परमं यत्नं प्रकृष्टमतिशयवत्तात्पर्यमाश्रयेत्। चरैश्चारयेत् साक्षात्प्रकाशं चातिप्रयत्नतः। स्तेनाश्चौराः। निग्रहो नियमनवधवन्धनादि। एवंकृते यशः ख्यातिर्भवति। निरुपद्रवोऽस्य राज्ञो देशः स्तेना नाभिभवन्ति निशा दिवा तुल्या तत्रेति सर्वत्र स्थितं भवति। राष्ट्रं वर्धते। राष्ट्रं जनपदस्तस्मिन्निवासिनश्च पुरुषाश्चौरैरनुपद्रूयमाणा वर्धन्ते। श्रीभिः प्रमोदमाना वहु पर्यन्ते देशान्तरस्था अपि निरुपद्रवं राष्ट्रमाश्रयन्ते। ततो वर्धते ॥ ३०२ ॥

अभयस्य हि यो दाता स पूज्यः सततं नृपः ॥
सत्रं हि वर्धते तस्य सदैवाभयदक्षिणम् ॥ ३०३ ॥

अभयं चौरादिभ्योऽधिकृतेभ्यश्चासद्दण्डनिवारणेन यो ददाति स सर्वदैव पूज्यो भवति। स्वैरकथास्वपि राज्याच्च्युतो वनस्थोऽपि। सत्रं क्रतुविशेषो गवामयनादि। तदस्य वर्धते निष्पद्यते। सर्वाङ्गसमुत्पन्नमेवंगुणमित्येतद्वर्धत इत्यनेनाहरहः सत्रफलं प्राप्नोतीत्यर्थः। अभयं यत्र दक्षिणा। अन्येषु सत्रेषु दक्षिणा नास्ति। इदं तु सर्वेभ्योऽपि विशिष्टं यद्दक्षिणावत्। सा च गवाश्वादि—दक्षिणाविलक्षणेत्यर्थवान्सत्रव्यतिरेकः ॥ ३०३ ॥

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः ॥

अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥ ३०४ ॥

सर्वतः प्रकाशाद्यज्ञादेः, तथा ग्रामवासिभिः वनवासिभिश्च कृताद्धर्मषड्भागं राजा लभते। एवमधर्मादपि चौरैः प्रच्छन्नकृताद्राज्ञः षड्भागो भवति। न केवलं स्तेनैर्यैर्मुष्यन्ते तदरक्षातो राज्ञामधर्मो यावद्ये हरन्ति तेषामपि चौर्यभावेनाधर्मोदयस्तदंशेनापि राजानः संबध्यन्ते तानिगृह्णन्तः। अदृष्टदोषसंबन्धनिवारणमपि रक्ष्याणां रक्षैव। तत्राधिकृतस्य राज्ञस्तदकरणाद्युक्तः प्रत्यवायः। "ननु च भृतिपरिक्रीतत्वाद्धर्मषड्भागमयुक्तम्।" उक्तं दीनानाथप्रव्रजितादयः सन्त्यकरप्रदाः। परिपूर्णस्वधर्मपालने काऽनुपपत्तिः॥ ३०४ ॥

यदधीते यद्यजते यद्ददाति यदर्चति ॥

तस्य षड् भागभाग्राजा सम्यग्भवति रक्षणात् ॥ ३०५ ॥

यदुक्तं 'सर्वत' इति तस्य प्रपंचोऽयम्। अध्ययनादयो धर्मार्थतयाऽन्यत्र ज्ञापिताः प्रसिद्धरूपाश्च। 'अर्चनं' देवगुरुणां पूजनम्। तस्येति कर्मणोऽध्ययनादेः पदार्थस्येति योजनीयम्। क्रियायाः स्त्रीलिङ्गत्वात्। षड्भाग इति। न च कर्तुः पञ्चकर्मफलांशात् षष्ठो नृपतेः, समग्रकर्मफलभोक्तृत्वस्याधिकारतः कर्तुरेवगतत्वात्। अपि तु सम्यग्रक्षणात्स्वकर्मानुष्ठानात्तावन्मात्रं राज्ञः फलमुत्पद्यत इति। नान्यकृतस्य शुभस्याशुभस्य वा अन्यत्र गमनम्। नाकर्तुः फलमस्तीति स्थितम्॥ ३०५ ॥

रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् ॥

यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ ३०६ ॥

भूतानि स्थावरजङ्गमानि चौरेभ्यो रक्षन्। वध्याश्च शास्त्रतो वधार्हाः—तांश्च घातयन्। सहस्रशतदक्षिणानां पौण्डरीकादीनां क्रतूनां फलमन्वहं राजा प्राप्नोतीति स्तुतिः॥ ३०६ ॥

योऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः ॥

प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ॥ ३०७ ॥

बलिप्रभृतीनि राजग्राह्यकरनामानि देशभेदे सूपमाणवकवत्प्रसिद्धानि। तत्र बलिर्धान्यादेः षष्ठो भागः। करो द्रव्यादानम्। शुल्कं वणिक्प्राप्यभागः। प्रतिभागं फलभरणिकाद्युपायनम्। राजैतद्गृह्णाति चौरेभ्यश्च न रक्षति स सद्य आयुःक्षयान्नरकं गच्छेत्। गृहीत्वा राजभागं रक्षा कर्तव्या नरकायुःक्षयभयादिति श्लोकतात्पर्यम् ॥ ३०७ ॥

अरक्षितारमत्तारं बलिषड्भागहारिणम् ॥
तमाहुः सर्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥

पूर्वस्य शेषोऽयं निन्दार्थवादः। न रक्षति अत्ता। उपजीविता प्रजानां राजभागग्रहणेन। एतदेव स्पष्टयति। बलिषड्भागहारिणं तं तादृशं राजानमाहुः शिष्टाः सर्वलोकस्य सर्वस्याः प्रजायाः समग्रं मलं पापं तस्य हारकं स्वीकर्तारम्। सर्वेण प्रजापापेन दूष्यत इत्यर्थः ॥ ३०८ ॥

अनवेक्षितमर्यादं नास्तिकं विप्रलुंपकम् ॥
अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥ ३०९ ॥

मर्यादा शास्त्रशिष्टसमाचारनिरूढा धर्मव्यवस्था--साऽनवेक्षिताऽतिक्रान्ता येन। 'नास्ति परलोको नास्ति दत्तं नास्ति हुतमिति' नास्तिकः प्रथमो रागादिना त्यक्तधर्मः नास्ति वस्त्विति विपरीताभिनिवेशः। विलुम्पति हरति धनान्यसद्दण्डैः प्रजानाम्। तत्तुल्योऽरक्षिता। तमधोगतिं विद्यान्नरकपतितमधोगतं विद्यान्नरक-पतितमेवाचिरात्। पाठान्तरम्--'असत्यं च नृपं त्यजेत्'। अन्यदुक्त्वाऽन्यत्करोति यस्तं त्यजेत्तद्विषये नासीत ॥ ३०९ ॥

अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ॥
निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥

अर्थवादैर्दृढीकृत्य निग्रहविधिमिदानीं प्रस्तौति। अधार्मिकः प्रकरणाच्चौरः। तं त्रिभिर्नियमनप्रकारैर्निगृह्णीयान्नियच्छेत्। न्यायो नियामकः। निरोधनं राजदुर्गे बन्धनागारे धरणम्। बन्धस्तत्रैव रज्जुनिगडादिभिरस्वातन्त्र्योत्पादनम्। विविधो वधस्ताडनादारभ्य शरीरनाशनात् प्राणत्यागपर्यन्तः। निर्देशादेव त्रित्वे लब्धे

त्रिभिरिति वचनमन्येषामपि नियमनप्रकाराणां परिग्रहणार्थम् । तेन तप्ततैलसेकादयोऽपिपरिगृहीता भवन्ति ॥ ३१० ॥

निग्रहेण हि पापानां साधूनां संग्रहेण च ॥
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ ३११ ॥

पापयुक्ताः पुरुषाः पापाः । तेषां निग्रहः पूर्वोक्तः । यथाशास्त्रवर्तिनः साधवः । तेषां संग्रहोऽनुग्रहो यथाशक्त्युपकारः । तेन पूयन्ते विपाप्मानो भवन्ति प्रायश्चित्तेन वेत्यर्थवादः । अथवा पापानुत्पत्तिरेव पूतत्वम् ब्राह्मणा इव सततमिज्याभिः नित्यैर्महायज्ञादिभिः ॥ ३११ ॥

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ॥
बालवृद्धातुराणां च कुर्वता हितमात्मनः ॥ ३१२ ॥

कार्यिणोऽर्थिप्रत्यर्थिज्ञातिसुहृदः । कस्मिश्चिद्‌बध्यमाने यदि तत्पिता तन्माता वा राजानं क्षिपेत्कुत्सयेत् अभिशपेद्वा तदा क्षमा कार्या । बालादीनां कार्यिणामपि । एवमात्मने हितं कृतं भवति । क्षंतव्यमित्येतद्विधेः फलमेवात्महितम् ॥ ३१२ ॥

यः क्षिप्तो मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते ॥
यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ ३१३ ॥

आर्तैर्दण्ड्यमानतत्संबन्धिभिरधिक्षिप्त आक्रुष्टो यन्मर्षयति न क्रुध्यति तेन क्षमणेन स्वर्गे महीयते । कण्ड्वादित्वाद् यः । महत्त्वं प्राप्नोति स्वर्गे । अकोपेन तर्हि क्षमा कर्तव्या । अकामिनो यथाकामी अत आह । यत्तु प्रभुरहमित्यभिमानेन न सहते तेन नरकं प्राप्नोति । आर्त्तग्रहणं बालवृद्धयोरपि प्रदर्शनार्थं पूर्वशेषत्वादस्य ॥ ३१३ ॥

राजा स्तेनेन गंतव्यो मुक्तकेशेन धीमता ॥
आचक्षाणेन तत्स्तेयमेवंकर्माऽस्मि शाधि माम् ॥ ३१४ ॥

अविशेषोपादाने सुवर्णहारी स्तेनो द्रष्टव्यः । तस्यैव शास्त्रान्तरे गमनविधानात् । न चेदमागमनपरं विधिशास्त्रम्, दण्डविधित्वात् । उक्तं हि "स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णय" इति ( ३०१ ) । अतोऽनुवादो गमनस्यात्र । राजसकाशं सुवर्णचौरेण गन्तव्यम् । मुक्तकेशेन धीमता धैर्यवता ।

'धावतेति' पाठान्तरम्। आचक्षाणेन कथयता पथि तत्पातकमेवंकर्माऽस्मि--ब्राह्मणस्य मयेयत्सुवर्णं हृतमिति कुरु निग्रहं मे'॥ ३१४॥

स्कन्धेनादाय मुशलं लगुडं वाऽपि खादिरम्॥
शक्तिं चोभयतस्तीक्ष्णामायसं दण्डमेव वा॥ ३१५॥

वर्णानामनुक्रमेण मुशलादीनामुपदेशं मन्यन्ते। तदयुक्तम्। वाशब्दो न समर्थितः स्यात्। न च ब्राह्मणस्येदं प्रायश्चित्तमिच्छन्ति। तत्प्रायश्चित्तेषु निरूपयिष्यामः। खदिरजातिर्लगुड एव—न मुशलेनानुषक्तव्यः॥ ३१५॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते॥
अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम्॥३१६॥

शासनान्मुशलादिभिः प्रहरणात्क्षत्रियादिः पापान्मुच्यते। विमोक्षादुत्सर्गात्। गच्छ क्षान्तमिति। "ब्राह्मणस्तपसैवेति" वधतपसी विहिते ( मनु ११।१००)। तत्र वधस्तावद्ब्राह्मणस्य नास्ति। तपस्तु प्रायश्चित्तम्। न च तप इच्छातो राजाभिगमनमस्ति। तस्मात्क्षत्रियादीनामेष विमोक्षः। स च धनदण्डं गृहीत्वा। यत आह अशासित्वेत्यादि। न च विमोक्षणशुद्धौ सत्यां राज्ञस्तदशासनाद्दोषोपपत्तिः। न च "शासनमपि विहितं मोक्षोऽपि विहितः—तत्र यस्मिन्पक्षे शासनं तदपेक्षं दोषवचनम्।" पाक्षिकं हि तथा कल्पनम्। न च नित्यवच्छ्रुतस्य पाक्षिकत्वं युक्तं कल्पयितुम्। तथा च सामान्येन वसिष्ठादय आहुः—अधर्मेण स्वीयेन ऋच्छति राजानमुत्सृजन्तं सकिल्बिषन्तं चेद् घातयेद् राजा ब्रन्धर्मेण न दुष्यति'। नायं विकल्पो युक्तः। क्वचिदियं हिंसा प्रतिषिद्धा "न हिंस्याद्भूतानीति" रागादिना पुरुषार्थतया प्राप्ता। क्वचिद्विहिता--क्रत्वर्थत्वेन 'यो दीक्षितो यदग्नीषोमीयमिति'। इदं तु शासनविमोक्षणवचनं न नाम प्रतिषिद्धं सति विधौ। कथं न प्रतिषेधः। "न हिंस्याद्भू तानीति" सामान्यतः प्रतिषेधो विधिविशेषमन्तरेण न शक्यो बाधितुम्। अथोच्यते—नैवायं प्रतिषेधस्य विषयः, कर्मार्थत्वात्। कथं पुनरन्तरेण विधिं कर्मार्थता शक्याऽवगन्तुम्। लोकत इति चेल्लौकिकी प्रवृत्तिः। कथं तर्हि प्रतिषेधस्तत्रावतरेत्। ननु प्रधाने प्रवृत्तिर्निरूप्यताम्। यदि तावद्वैदिकी प्रवृत्तिस्ततस्तदङ्गे हिंसायामपि तत एव। एका हि प्रवृत्तिरङ्गप्रधानयोः। अथ लिप्सातोऽङ्गेऽपि तत्र

प्रवृत्तिः, सुतरां तर्हि हिंसेयं लौकिकी। जीविकार्थिनो हि प्रजापालनाधिकार-नियमो न वैधः। तेनेयमङ्गस्थापि हिंसा श्येनतुल्यत्वात्प्रतिषेधविषयः। न च लौकिकमस्या नियतमङ्गत्वम् । नो हिंसामन्तरेण प्रजापालनमशक्यम्, निरोधा-दिनाऽपि शक्यत्वात्। नैष नियमः। एकरूपाऽङ्गप्रधानयोः प्रवृत्तिरिति स्यान्नाग्नीषोमीययोरनेन विशेषः स्यात्। अतो लिप्सालक्षणेऽपि प्रधानेऽङ्गे विधिलक्षणमभ्युपेतव्यम्। न चैष हिंसाविधिलक्षणा शक्याऽभ्युपगन्तुं स्वरूपस्य कार्यस्य च लौकिकत्वात्पालनस्य हिंसायाश्च। अथ विधिलक्षणा षोडशिग्रहण-वद्विकल्पितुमर्हति शासनवचनेन प्रतिषिद्धा।

अन्ये तु मन्यन्ते। द्वे एते वाक्ये। शासनादिति स्तेनस्य शुद्धिरुच्यते, परेणार्धेन राज्ञस्तदशासने दोषः। तत्र यदि राजाऽशासनदोषमात्मन्यङ्गीकृत्य मुंचेन्मुच्ये-तैवैनसः। एवं ब्राह्मणस्यापि स्वयमागतस्य वधः शुद्धिहेतुः—'लक्ष्यं शस्त्रभृतामिति' वचनात् (मनु०११।७३)। "न शारीरो ब्राह्मणदण्डः" इति ( गौतम सू० १२।४६ ) राजा यदि प्रतिषेधातिक्रमेण हन्याद्ब्राह्मणः शुध्येदेव।

अशासित्वा मुशलादिभिरहत्वा। स्तेनस्य यत्पापं तेन युज्यते ॥ ३१६ ॥

**अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी ॥**
**गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥३१७॥**

अन्नमत्तीत्यन्नादः। भ्रूणहा ब्रह्महा। तदीयमन्नं यो भुङ्क्ते तस्मिंस्तद्ब्रह्म-हत्यापापं मार्ष्टि निरस्यति श्लेषयति। यथा मलिनं वस्त्रमुदके मृज्यते तन्मलं तत्र संक्रामत्येवम्। अर्थवादश्चायम्। तस्य तत्पापमुत्पद्यते। ब्रह्मणेऽश्लेषः। पत्यौ भर्त्तरि भार्यापचारिणी जारिणी—स चेत्क्षमते। अत्रापि भर्तुरुत्पद्यते पापं, तस्या अपैति। गुरौ शिष्यश्च याज्यश्च 'शिष्यः' सूर्याभ्युदितादिभिरपराध्य गुरौ क्षम-माणे तत्पापं प्रक्षिपति। एवं याज्यो याजके। सोऽपि गुरुरेवेत्यतो याजकग्रहणं न कृतम्। एवं चौरो राजनि—न चेद्राज्ञा निगृह्यते। याज्योऽपि कर्मणि प्रवृत्ते विधिमपक्रामति चेद्याजकवचने नावतिष्ठते तदा त्याज्यः, न पुनस्तस्य ताडनादि शिष्यवत्कर्तव्यम्। अन्नादादिषु सर्वेष्वन्यत्र विधिरस्तीति न बुद्धिः। अतोऽ र्थवादोऽयम् ॥ ३१७ ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ॥
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३१८ ॥

यदुक्तं पापकारिणो निग्रहेण कर्मकृतो रक्ष्यन्त इति तत्स्फुटयति। धृतो विनिपातितो दण्डो येषां राजभिस्ते कृत्वा पापानि कृतपापा राजनिग्रहेण निर्मला निरस्तपापा भवन्ति। अपगते च पापे यदेषां स्वर्गारोहकं कर्म तेन स्वर्गं प्राप्नुवन्ति महद्धि पापं शुद्धस्य कर्मणः फलस्य प्रतिबन्धकम्। सुकृतिनो नित्यं सुकृतकर्मकारिणः। यथा सन्तः धार्मिकास्तद्वत्। सतामधर्मो नैवोत्पद्यत एषामुत्पन्नो निग्रहणेन विनाशित इति प्राक्प्रध्वंसाभावयोर्विशेषः।

मानवग्रहणान्न प्रकरणाच्चोराणामेव।

दण्डशब्दस्तु शारीरनिग्रहविषयो न हि प्रकरणमतिक्रामति। धनदण्डो हि राजार्थः। वृत्तिर्हि सा राज्ञः। शारीरे तु दण्डे दण्ड्यमानार्थता न शक्यते निह्नोतुम्। त्वक्संस्कारो हि सा। अथेयं बुद्धिः—'पालनमेव हिंसामन्तरेण न निष्पाद्यते—तच्च राजार्थमिति कुतो मार्यमाणार्थता मारणस्य'—अथ किं पालनं न पाल्यमानार्थं दृष्टमेवापह्नूयते। न हि तद्दृष्टमुपादेयं राज्ञैव स्वरक्षार्थकरशुल्कादिभृत्या उपादीयन्ते। अतः सुतरां रक्षोपयोगित्वे हिंसायां न हिंस्यमानार्थतासिद्धिः। कथं वा हिंसया विना न रक्षानिर्वृत्तिर्यदि तावदेवमर्थं निगृह्यन्ते पुनरकार्यमावर्तयिष्यते तन्निरोधनादिनापि शक्यते नियन्तुम्। अथताननिगृहीतान्दृष्ट्वा भयादन्ये न प्रवर्तयिष्यन्त इति धनदण्डेनापि शक्यते दुःखयितुम्। हन्यमानेष्वपि सहस्रशः प्रवर्तन्ते। तस्मादियं हिंसा रक्षा सती हिंस्यमानसंस्कार इति मन्तव्यम्। अतश्च कारणादिच्छेदने नियमः। हस्त्यादिविधिश्च दंड्येष्वेवादृष्टमाधास्यति, न राजार्थो भविष्यति।

तस्माच्छरीरदण्डे पापान्मुक्तिर्न धनदण्ड इति स्थितम्।

तथाच महापातकिनां हृतसर्वस्वानामप्सु प्रवेशितदण्डानां संव्यवहारपरिहारार्थमङ्कनं वक्ष्यति। यदि च धनदण्डेन शुध्येयुः पुनरङ्कनमनर्थकं स्यात्।

अत्र च स्वयमागतस्य नानीतस्य विशेषो यः स्तेन एवं विशेषो भवतु। इदं तु सर्वं शारीरदण्डविषयम्॥ ३१८॥

यस्तु रज्जुं घटं कूपाद्धरेद्भिद्याच्च यः प्रपाम् ॥
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्समाहरेत् ॥ ३१९ ॥

प्रपिबन्त्यस्यामिति प्रपा। जलाधारस्थानं उद्धृतजलनिधानं वा। मापस्य जातिर्न निर्दिष्टा। सा मरुजाङ्गलानूपभेदाद् द्रष्टव्या। तच्च रज्ज्वादि समाहरेद्दद्यात्तस्मिन् स्थाने, न राजनि ॥ ३१९ ॥

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥ ३२० ॥

कुम्भशब्दः परिमाणविशेषे वर्तते न घटमात्रे। क्वचिद्विंशतिप्रस्थान्क्वचिद्द्वाविंशतिरिति देशभेदाद्व्यवस्था। दशभ्योऽधिकं हरतो वधविधिरुक्तार्थोऽनुबंधादिना नियम्यते। शेषेषु दशसु प्राकृत एकादशगुणो दण्डः। तस्य च तद्धनमिति सर्वत्र स्तेये योज्यम्। धान्यं व्रीहियवादिसप्तदशानीति स्मर्यते ॥ ३२० ॥

तथा धरिममेयानां शतादभ्यधिके वधः ॥
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥ ३२१ ॥

धरणं 'धरिमा' तुला। तेन मीयन्ते परिच्छिद्यन्ते तानि धरिममेयानि। घृतादीनां द्रवाणां प्रस्थादिमेयताऽस्तीति कठिनानां परिमेयता भवतीति तदर्थमाह। सुवर्णरजतादीनाम्। आदिग्रहणादेव रजते लब्धे पुनरुपादानात्तुल्यग्रहणार्थात्प्रवालादीनि गृह्यन्ते, न तु ताम्रलोहादीनि। तेषां शतादूर्ध्वं हरणे वधः।

किं पुनरेतच्छतं पलानामुत कर्षाणामेव कार्षापणानां वा।

केचिदाहुः पलानामिति। न त्वत्र विशेषे हेतुरस्ति। तस्माद्यस्मिन्देशे धरिममानकाले यया संख्यया व्यवहारः—'शतमिदं सुवर्णस्य' क्वचित्तोलके क्वचित्पलेषु—यथादेशं व्यवस्था।

उत्तमानां च वाससां कौशेयपट्टादीनामिति। शतादभ्यधिके वधः इत्यनुषंगः। अत्रापि शाटकयुगमेकमिति संख्यायते। पुष्पपटाद्युपबर्हणं त्वेकमेवेति।

"ननु च सुवर्णरजतादीनामित्येव सिद्धे परिमेयग्रहणमनर्थकम्।"

नानर्थकम्, कर्पूरागुरुकस्तूरिकादीनां महार्घाणां ग्रहणार्थम्।

आदिग्रहणाद्धि तैजसानि गृह्यन्ते, निष्कादिपरिमाणव्यपदेश्यानि वा। न हि

कर्पूरादीनां कर्षादिव्यपदेशोऽस्ति । यद्यपि सुवर्णवद्रजतेऽपि शतसंख्या तथापि प्रायश्चित्तभेदवद्दण्डभेदोऽपि युक्तो विषमसमीकरणस्यान्याय्यत्वात् । अतो यावत्सुवर्णगतस्य मूल्यं तावति रूप्ये गृहीते वधः । कर्पूरादीनां तु पलानामेव शतसंख्या ॥ ३२१ ॥

**पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ॥**
**शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥ ३२२ ॥**

सुबोधोऽयम् । मूल्यादिति । नापहृतमेव द्रव्यं देयम् । क्वचित्तज्जातीयं नैव प्राप्यते । अतो रूपकैर्धान्यादिना वा विनिमेयम् ॥ ३२२ ॥

**पुरुषाणां कुलीनानां नारीणां विशेषतः ॥**
**मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥ ३२३ ॥**

सत्कुले जाता विद्यादिगुणयोगिनः कुलीनाः । नारीणां च विशेषता गुणरूपसौभाग्यसंपन्नानामित्यर्थः । चशब्दात्कुलीनानामित्येव परस्परापेक्षाणि नारीणां विशेषणानि । मुख्यानि उत्तमानि रत्नानि वज्रवैडूर्यमरकतप्रभृतीनि ।

अत्रापि सुवर्णशततुल्यानीत्यपेक्ष्यम् । अन्यथोत्तमत्वमापेक्षिकमिति दण्डो न व्यवतिष्ठेत ।

वधमर्हति । अनुबन्धाद्यपेक्षया सर्वत्र वध्यर्थो योजनीयः ।

अकुलीनानामवशिष्टानाममुख्यानां च 'शेषे त्वेकादशगुण' इत्येव ॥ ३२३ ॥

**महापशूनां हरणे शस्त्राणामौषधस्य च ॥**
**कालमासाद्य कार्यं च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥**

महापशवो हस्त्यश्वादयः । तेषां हरणे कालकार्यापेक्षा दण्डप्रक्लृप्तिः ।

"ननु च सर्वत्रैव कालाद्यपेक्षोक्ता । तथा च कालदेशवयः शक्तीश्चिन्तयेद्दण्डकर्मणीति" ।

सत्यम् । विज्ञाते दण्डस्वरूपे न्यूनाधिकभावोऽनुबन्धाद्यपेक्षः । यथा वधविधौ ताडनमारणादिकल्पनाऽपेक्ष्या । इहात्यन्तविलक्षणो दण्डः । तथा हि विंशतिपणोऽपि खड्गः शत्रोरुद्यतशस्त्रस्य सन्निधौ यदि ह्रियते तेन कार्यातिशयेन तेन च कालेन मारणं दण्डः । अन्यदा द्विगुण एकादशगुणो वा । तथौषधमलभ्यत्वेन

महाप्रयोजनं तदुपयोगवेलायां ह्रियते—लभ्यमानमपि क्वाथाद्यपेक्षं कालातिक्रमणेन महदातुरस्य दुःखं जनयतीति—तत्र महान्दण्डः। अन्यदा तु स्वल्प इति। न तत्रान्तरामन्तरेणेदृशं वैषम्यं लभ्यते। अन्यथा स एवैकः श्लोको दण्डविधौ पठितव्यः स्यात्। तस्माद्वक्तव्यमिदम्। विग्रहकालेऽश्वादीनां राज्यापेक्षो दण्डः। शस्त्राणां राजोपयोगिनां कदाचित्क्षमा कदाचिन्महान्दण्डः। गोमहिष्यादीनां तु प्रजासंबन्धिनां न राज्ञा क्षन्तव्यम्। कार्यं च यदश्वादिभिः कर्तव्यं तदप्यपेक्ष्यम्। विग्रहोऽपि यदि पर्वतादौ भवति यत्र नातीवाश्वैः प्रयोजनं भवत्येव दण्डह्रासः।

कालमासाद्य ज्ञात्वा निरूप्य दण्डं कल्पयेत्। स एवात्र भवति न नः शास्त्रम् ॥ ३२४ ॥

**गोषु ब्राह्मणसंस्थासु खरिकायाश्च भेदने ॥**
**पशूनां हरणे चैव सद्यः कार्योऽर्धपादिकः ॥ ३२५ ॥**

ब्राह्मणसंस्था ब्राह्मणाश्रिता ब्राह्मणस्वामिकाः। तासां हरणे। षष्ठ्यर्थे सप्तमी। पशूनां चाजैडकादीनाम्। बहुवचनं सर्वत्राविवक्षितम्। सद्यस्तत्क्षणादविचार्य। पादस्यार्धमर्धपादम्, तदस्यास्तीत्यर्धपादिकः। तच्च संभवति यदि पादार्धं छिद्यते। तेनार्धपादच्छेदनं कर्तव्यमिति वाक्यार्थः।

खरिका यया गोरथक्षेत्रादौ वाह्यते बलीवर्दः। भेदने वाह्यमानायाः प्रतोदेन पीडोत्पादने।

'भेदनं' वाहानामुपलक्षणार्थं व्याचक्षते पूर्वे। अवश्यं वाहयन्दुःखयति। प्रतोदेन वाहने एवायं दण्ड इत्यन्ये पठन्ति।

अन्ये तु पादस्य पश्चाद्भागं चतुर्थं खरिकामाहुः। खरिकेति या प्रसिद्धा पलायनशीला यां पालोऽन्यो वा भिन्दन्नर्धपादिकः कार्यः।

अन्ये त्वधिकरणसप्तमीं मत्वा गोसंस्थदध्यादीन्यध्याहरन्ति। तदयुक्तम्। श्रुतपदसंबन्धसंभवे कुतोऽध्याहारः ॥ ३२५ ॥

**सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च ॥**
**दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥**
**वेणुवैदलभाण्डानां लवणानां तथैव च ॥**
**मृण्मयानां च हरणे मृदो भस्मन एव च ॥ ३२७ ॥**

मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ॥
मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवम् ॥ ३२८ ॥
अन्येषां चैवमादीनामद्यानामोदनस्य च ॥
पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥ ३२९ ॥

सूत्रमूर्णासनादि। लवणानि सैंधवविड्लवणादीनि। यच्चान्यत्पशुसंभवमामिषादि। अन्येषामपूपमोदकादीनाम्। आदिशब्दः प्रकारे। प्रकारः सादृश्यं तुल्यता सदृशकार्यकरणोपयोगादिरूपा। तथा च सर्पिर्मण्डेक्षुखण्डशर्कराकिलाटकूर्चिकाद्या अपूपा गृह्यन्ते। पशुसंभवं राङ्कवाजिनाद्यपीच्छन्ति केचित्। आदिग्रहणात्प्रकृतिर्विकृतिरपि। यच्चोभयोपादानं दध्नः क्षीरस्य चेति तदुदाहरणार्थम्। एवं सूत्रग्रहणेन सूत्रमयं वासोऽपि गृह्यते। नलिकादीनां सत्यपि सूत्रमयत्वे पशुसंभवत्व उत्तमत्वादुत्तमानां चेत्यस्यापवादविषयः।

प्रकृत्यन्तरे तैलशब्दः स्नेहवाची, न तिलविकार एव। तेनातसीप्रियङ्गुपञ्चाङ्गुलतैलादयोऽपि गृह्यन्ते ॥ ३२६-३२९ ॥

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ॥
अन्येष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥

नवमालिकादीनि पुष्पाणि। हरितं धान्यं क्षेत्रस्थं अपक्वम्। नगा वृक्षाः। अन्येष्वपरिपूतेषु। बहुवचनात्परिपवनस्य च धान्येष्वेव तुषपलालादिविमोक्षरूपस्य संभवादुत्तरश्लोके धान्यग्रहणमेवाकृष्यते। गुल्मादीनां हि सत्यपि पलाशे व्यामिश्रत्वे पुष्पाणां च परिपूतव्यवहारः।

सप्तमी हरणापेक्षा। तत्तु पूर्वस्मादनुवर्तते।

अत्र पञ्चकृष्णलो दण्डः। कृष्णला नानाद्रव्यजाः। अल्पत्वमहत्त्वप्रयोजनापेक्षाः। सुवर्णस्येति पूर्वं ॥ ३३० ॥

परिपूतेषु धान्येषु शाकमूलफलेषु च ॥
निरन्वये शतं दण्डः सान्वयेऽर्धशते दमः ॥ ३३१ ॥

मूलमिक्षुद्राक्षादि। निरन्वये द्रव्यहरणे। 'अन्वयो'ऽनुनयः, स्वामिनः प्रीत्या-

दिप्रयोगः—'यत्त्वदीयं तन्मदीयमेवेत्यनया बुद्ध्याऽहं प्रवृत्तः--न चेदेवं तद्गृहाणे' त्येवमादिवचनम् तद्यत्र न क्रियते तन्निरन्वयम्। साहसप्रकारत्वादधिको दण्डः। अन्वयेन सह सान्वयः।

अथवा निरन्वयो येन सह कश्चिदपि संबन्धो नास्त्येकग्रामवासादिः। ततः शतं दण्ड्यः। अथवा अनारक्षं निरन्वयम्। सति तु रक्षके उभयापराधादल्पो दण्डः। खलस्थेषु धान्येष्वयं दण्डः। तत्र हि परिपूयन्ते। गृहस्थेषु त्वेकादशगुणः प्रागुक्तः (३२०) ॥ ३३१ ॥

स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् ॥
निरन्वयं भवेत्स्तेयं हृत्वापव्ययते च यत् ॥ ३३२ ॥

परद्रव्यापहरणं स्तेयमुच्यते। धात्वर्थप्रसिद्ध्या चास्यैव कर्ता 'स्तेनः'। इह तु विशेषेणायं व्यवहार इष्यते तदर्थोऽयं श्लोकः। न परद्रव्यादानमात्रं स्तेयम्। ऋणादाननिक्षेपादिष्वपि स्तेयदण्डप्रसङ्गात्। संज्ञाभेदो दण्डभेदार्थः।

कर्म यत्कृतं परपीडाकं वस्त्रोत्पाटनाग्निदाहद्रव्यापहरणादि। अग्निदाहे यद्यपि द्रव्यापहरणं नास्ति तथापि चौर्यमेव रहसि करणादपह्नवाच्च मन्यन्ते। चौर्यं हि द्रव्यविशेषाश्रयो दण्डः। सोऽत्र न स्यात्। एवमर्थमेव स्तेयप्रकरणोत्कर्पणम्। प्रसभं कर्मेति कर्मग्रहणाद्द्रव्यापहारादन्यदप्येवं कृतमयुक्तं साहसमेव। "कस्तर्ह्यग्निदाहादावप्रसभं कृते दण्डः"। कंटकशुद्धौ वक्ष्यामः (९। २५६)। अत एव सन्धिच्छेदेऽसत्यपि द्रव्यापहरणे कण्टकशुद्धौ दण्डमामनन्ति। अन्यथा स्तेय एवावक्ष्यन्॥ ३३२॥

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः ॥
तं शतं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥ ३३३ ॥

एतानि सूत्रादीन्युपक्लृप्तानि प्रत्यासन्नदानोपभोगादिकार्यकालानि। अथवा संस्कृतानि कृतसामर्थ्याधानानि। यथा तदेव सूत्रं तन्तुवायहस्ते वायनार्थं दत्तं किंचिद्द्विगुणीक्रियते किंचित्परिवर्त्यते—एवं दधि मन्थनमरिचशर्करादि संस्कृतं क्षीरं घृतमित्यादिसंस्कारः। तत्र शतं दण्डः।

आद्यमिति पाठे प्रथमसाहसः।

अग्निगृहात् परिगृहीतं शालाग्निहोत्रेत्यादिकम्—हेमन्ते वा शीतार्दितानां दरिद्राणामप्रणीतमप्यग्नेरुपकल्पनं पाककालः शीतादिनिवृत्त्यर्थं वा तापनकालः। अविशेषेणायमग्नेर्दण्डः स्वल्पस्य बहोरुपक्लृप्तस्यानुपक्लृप्तस्य च।

सत्यपि सूत्रादिदण्डे आदिग्रहणे नाग्नेस्तन्मूल्यादि संभवति, क्रयविक्रयव्यवहाराप्रसिद्धेः। यावता वेन्धनेनाग्निरपहृतपरिमाण उत्पद्यते यावतीभिर्दक्षिणाभिस्तन्मूल्याद्द्विगुणो दण्डः संभवति शक्यते च व्यपदेष्टुम्। तुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव। अतस्त्रेताग्निहरणे यावत्पुनराधाने गच्छति प्रायश्चित्तेष्टौ च तावदग्निमते दातव्यः। अतोऽयमग्नेर्दण्डः शालाप्रणीताग्निविषय एव स्वल्पत्वात्। त्रेतायां तु तन्मूल्याद्द्विगुण इति। तथा च "सुलभेष्वधिकारनिवृत्तिमकुर्वत्सु यागाङ्गद्रव्येष्वपह्रियमाणेषु कुशाकरकाग्निहोत्रद्रव्याण्यपहरतोऽङ्गच्छेदः स्यात्" इति शङ्खः। अग्निषु तु हृतेष्वधिकार एव निवर्तते। तत्र कथं महान् दण्डो न स्यात् ॥ ३३३ ॥

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ॥
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥ ३३४ ॥

भूयोभूयः प्रवृत्तस्यायं दण्डः। यो धनेन दण्डितोऽपि न मार्गेऽवतिष्ठते तस्य त्रिचतुर्दण्डितस्यानवतिष्ठमानस्य द्रव्यजातिपरिमाणानपेक्षः सन्धिच्छेदाद्यनपेक्षश्चौर्यक्रियामात्राश्रितोऽङ्गच्छेदः। यस्य यस्याङ्गस्य वलमाश्रित्यावतिष्ठते स्तेनश्चौर्ये प्रवर्तते तत्तदस्य हरेच्छिन्द्यात्। यथा कश्चित्पादवलमाश्रित्यावष्टभ्य पलायते 'न मामनुगंतुं कश्चिदपि शक्नोतीति' तस्य पादच्छेदः। अन्यः 'संधिभेदज्ञोऽहं' तस्य हस्तच्छेदः। प्रत्यादेशाय प्रतिरूपफलदर्शनाय। स्वावष्टंभेन साभिमानं सक्रोधं सावज्ञं न्यक्करणं वा 'प्रत्यादेशः'—य एवं करोति तस्य तस्याहमेवं कर्तेति व्याख्यापनं 'प्रत्यादेशः' ॥ ३३४ ॥

पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ॥
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ ३३५ ॥

'भार्या पुत्रः स्वका तनुः' आत्मीयं शरीरं—कः पुनरात्मनो दण्डः। प्रायश्चित्ततपोधनदानादिविवक्षितम्। विचलितो धर्मात् स्वकात् यो यः स्वधर्मान्नानुतिष्ठति स सर्वो दण्ड्यः ॥ ३३५ ॥

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ॥
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥ ३३६ ॥

प्राकृतो जनः सामान्यपुरुषो यो नातिगुणसंयुक्तः । तस्य यत्र यस्मिन्नपराधे यावान् दण्डस्तत्सहस्रगुणो राज्ञः । कार्षापणग्रहणस्य दण्डपरिमाणोपलक्षणार्थत्वात् दृष्टार्थत्वात् दण्डस्य । तस्य चात्मानमनियम्य परो नियन्तुं न शक्यत इति युक्तं प्रत्यपराधे राज्ञो दण्डार्हत्वम् । महाधनत्वादल्पं दण्डं न विगणयेत् । राजाधिकृतानां मन्त्रिपुरोहितादीनामनयैव कल्पनया न्यूनाधिकभावः ।

धनदण्डश्च ब्राह्मणेभ्योऽप्सु प्रवेशनेन वरुणाय वा । यतो वक्ष्यति 'राज्ञां दण्डधरो हि सः' ( ६। २४५ ) ॥ ३३६ ॥

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् ॥
षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य च ॥ ३३७ ॥

ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् ॥
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥ ३३८ ॥

तद्दोषगुणविद्धि स इति हेत्वभिधानाद्विदुषां दण्डोऽयम् ।

यत्र खलजन एकं कार्षापणं दाप्यते तत्र विद्वान् शूद्रोऽष्टगुणम् । अष्टभिः आपाद्यते संवध्यते । यत्किल्विषं पापं तदेवमुच्यते । अष्टभिर्वाऽऽपाद्यत आहन्यते गुण्यत इति यावत् । उभयथाऽप्यष्टगुणस्य वाचकोऽष्टापाद्यशब्दः । एवं तदेव द्विगुणं वैश्यस्य । स हि साक्षादध्ययनज्ञानयोरधिकृतः शूद्रस्तु कथंचिद्ब्राह्मणापाश्रिततत्संगत्या कियदपि ज्ञास्यति । क्षत्रियस्तु रक्षाधिकारदोषेण समाने विद्वत्त्वे ततोऽपि द्विगुणं दण्ड्यते । ब्राह्मणे तु दण्डविधौ न तृप्यति । चतुःषष्टिशतमष्टविंशं वा शतमिति । तस्य हि प्रवचनमुपदेष्टृत्वं वाधिकं च—यतो रक्षा ततो भवेत् । प्राकृतजनस्य तिर्यक्प्रख्यस्य कोऽपराधः । अविद्वांसो गुणदोषानभिज्ञा अकार्ये प्रवर्तन्ते । विद्वानपि तथैव चेद्वर्तेत हन्त हतं जगत्, तृतीयस्य शिक्षितुरभावात् । तदुक्तं "द्वौ लोकविश्रुतौ राजा ब्राह्मणश्च वहुश्रुत" इति । राज्ञः पूर्वेण दण्डाधिक्यमनेन ब्राह्मणस्य ।

आधिक्यमात्राविधिश्चायं न यथाश्रुतसंख्याविधिः—ब्राह्मणदण्डेऽनवस्थाश्रव-

णादयं वार्यं वेति। न च विकल्पो युक्तो व्यवस्थाहेतुत्वाभावात्। तुल्यबलस्यैव विकल्पस्य परविषयाश्रयानुपपत्तेः। को हि राजा द्विजगुणमुत्सृज्य चतुःषष्टिं ग्रहीष्यति। यदि परमदृष्टार्थो दण्डो विकल्प उपपद्येत--न चादृष्टार्थोऽयमित्युक्तम्। तथा च गौतमः—(१२। १७) "विदुषोऽतिक्रमदण्डभूयस्त्वम्" इत्याह। तस्मादनवस्था विधित्वं व्याहन्ति। न च गुणापेक्षो विकल्पो युक्तो नष्टादिश्लोकेनैव सिद्धत्वात्। अर्थवत्त्वाच्चात्र विध्यवगतिः। स चाधिक्यविधौ लब्धालंबन इति न यथाश्रुतपरिकल्पने विकल्पने समर्थः॥ ३३७–३३८॥

वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च॥
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥ ३३९॥

वनस्पतय एव वानस्पत्यं वृक्षाः। स्वार्थे प्रत्ययः। ग्रासार्थं गृह्यमाणमस्तेयं वंशांकुरादि। मूलफलं वनस्पतीनामन्यद्विससस्यादि। सूत्रादिगणेऽग्रासार्थं मूलफलाहरणे दण्ड उक्तः।

अस्तेयवचनं ग्रासार्थमात्रार्थम्। अक्षीणवृत्तेरपि कथंचिज्जातलौल्यस्य स्मृत्यन्तरदर्शनाच्चापरिवृतेश्च दण्डः। तथा च गौतमः (१२। २८) "पुष्पाणि स्ववदाददीत फलानि चापरिवृत्तानाम्" इति।

दार्वग्न्यर्थम्—आहिताग्नेरसंनिहिते वनस्पतावुद्वात्यग्नौ तद्धारणार्थं काष्ठमदोषं पालाशीर्वा समिधो व्यादध्यात्। अप्रचुरपलाशे च ग्रामे कथं स्यादित्यादिति यदि गृह्णेरन्न दोषः।

तृणं च गोभ्यः। तादर्थ्ये चतुर्थी। गोग्रहणात्प्रस्तरार्थं दोष एव। ये तु ग्रासार्थपदेन गवामभिसंबन्धमिच्छन्ति तेषां गोभ्य इति नोपपद्यते। षष्ठी हि तत्र युक्ता॥ ३३९॥

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्॥
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥ ३४०॥

अतिदेशोऽयम्। यो ब्राह्मणश्चौरानुपजीवति स चौरवद्दण्ड्यः। याजनाध्यापनेनापि। अपिः क्रियान्तरसूचकः। तेन प्रतिग्रहप्रीत्यादायादि गृह्यते। क्षत्रियादीनामन्यथैव वृत्तिः वार्तादि। स्वकर्मणा चोरधनं गृह्णताम्। ब्राह्मणग्रहणं तु 'मया किल धर्मेणार्जितं याजयता' इत्यभिमाननिवृत्त्यर्थम्।

अदत्तमादत्ते गृह्णातीत्यदत्तादायी चोरः। लिप्सेत लब्धुमिच्छेत्। अगृहीतास्वपि दक्षिणासु तत्संबन्धादेव चौरनिग्रहः ॥ ३४० ॥

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ॥
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ ३४१ ॥

द्विजग्रहणं शूद्रप्रतिषेधार्थम्। अध्वगो नैकग्रामवासी। तत्रापि क्षीणवृत्तिः क्षीणपथ्योदनः। द्वाविक्षू दण्डौ। मूलके। प्रदर्शनार्थं चैतत्। परिमितहरीतकमुद्गादिशमीधान्यानाम्। तथा च "शमीत्रपुसयुग्यघासेषु च नाप्रतिषेध" इति स्मृत्यन्तरम्। परक्षेत्रात्परकीयस्थानादित्यर्थः—परिवृतादपि ॥ ३४१ ॥

असंदितानां संदाता संदितानां च मोक्षकः ॥
दासाश्वरथहर्ता च प्राप्तः स्याच्चोरकिल्बिषम् ॥ ३४२ ॥

पश्वादयो विमुक्तश्रृङ्खलादिबन्धना मुस्तादियवभूयिष्ठेषु विजनेषु वार्यन्ते। ततश्चेन्निद्रायति स्वामिनि पाले वा कश्चित्सन्दानवतः कुर्यात् खलीनकबन्धादिना—नूनं निनीषत्यसाविति शङ्कया—चौरवद्दण्ड्यः। यस्तु स्वामिगृहच्युतं यूथभ्रंशागतं वा रक्षितुमेव वा बध्नीयान्न तस्य दोषः। एवं गवादीनामपि गले दामादिसंजनने एष एव दमः। ये च संदिताः पादस्थश्रृङ्खलादिना तेषां मोक्षकः। दासांश्च रहसि प्रोत्साह्य भक्तदासादीनपहरति 'अहं ते बहु ददामि किमेतं भजसे' इति। कुलीनानां हरणे वध उक्तः 'पुरुषाणामित्यत्र' (३२३)। अनेन दासानामुच्यते। यथा तत्रैव कुलीनमुक्तमेवमत्रापि प्रोत्साह्य नयनं ग्रहणं न कर्तव्यम्—तत्र प्रबलादिना चौर्येण वेति। अश्वरथहर्तेति। अश्वानां रथानां च। महापशूनामित्यत्र ( ३२५ ) राजसंबंधिनोऽश्वाः, इमे तु जनपदानाम्। तत्र राजेच्छया दण्डः, इह तु नियतो वधः। यद्यपि बहवश्चोरदण्डास्तथापि स्मृत्यन्तरे

"बंदिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः। प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ॥" इति। इहापि सामान्यतो 'येन येने'त्युपक्रम्य' (३३४) 'तत्तदेव हरेदिति'। अन्ये त्वश्वयुक्तो रथ इति सामान्यं मन्यन्ते—प्रदर्शनाच्चाश्वगोरथादीनाम्। तत्र केवलानामश्वानां रथस्य च दण्डश्चिन्त्यः। स्मृत्यन्तरे केवलानामश्वानां चौरदण्डस्योक्तत्वात् रथयुक्तानामपि सिद्धः। ये तु प्रोत्साह्य नयनं

'हरणं' मन्यन्ते तेषामश्वरथशब्देन रथकारो लक्ष्यते—रथकर्तेति। तच्च सर्वशिल्प्यर्थम्। शिल्पिनां हरणे चौरदण्डः। अश्वानामपि प्रोत्साहनं वडवादर्शनेन ॥ ३४२ ॥

अनेन विधिना राजा कुर्वाणः स्तेननिग्रहम् ॥
यशोऽस्मिन्प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखम् ॥ ३४३ ॥

अनेनान्तरप्रक्रान्तेन मार्गेण चौरनिग्रहं कुर्वाणो यशः सकलजनसाधुवादो अस्मिल्लोके यावज्जीवम्—प्रेत्य मृतश्चानुत्तमं स्वर्गाख्यं सुखमश्नुत इति। प्रकरणोपसंहारोऽयम् ॥ ३४३ ॥

ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् ॥
नोपेक्षेत क्षणमपि राजा साहसिकं नरम् ॥ ३४४ ॥

'सहो' वलं, तेन वर्तते साहसिकः। दृष्टादृष्टदोषानपरिगणय्य वलमात्रमाश्रित्य स्तेयहिंसासंग्रहणादिपरपीडाकरेषु वर्तमानः प्रकाशं पुरुषः 'साहसिकः'। तदुक्तं "स्यात्साहसमिति" (३३२)। न स्तेयादिभ्यः पदार्थान्तरं साहसं, किन्तु प्रसह्यकारणात् तान्येव 'साहसानि' भवन्ति। यदप्यग्निदाहवस्त्रपाटनादि तदपि द्रव्यनाशात्मकत्वात्सिद्धमेवेति। तस्य निग्रहात् नोपेक्षेत न विलम्बेत क्षणमपि—यदा गृहीतस्तदैव निगृहीतव्यः। इन्द्रस्वामिकं स्थानं स्वर्गाख्यमैन्द्रं तदाभिमुख्येन प्राप्तुमिच्छन्। अथवा स्वमेव राज्यपदमैन्द्रमिवेच्छन्नविचालित्वसामान्यम्। निग्राह्यनिग्रहेण हि प्रतापानुग्रहाभ्यां प्रजा अनुप्रवर्तन्ते। तदुक्तं "समुद्रमिव सिन्धव" इति। यशोऽक्षयमव्ययं च। द्वे विशेष्ये द्वे विशेषणे—स्थानमव्ययं यशोऽक्षयमिति। अथोभयेनापि यशो विशिष्यते—क्षयो मात्रापचयः, व्ययो निरन्वयविनाशः। उभयमपि तन्नास्ति। न मलिनीभवति यशो न कदाचिद्विच्छिद्यते। भूतार्थवादस्तुतिरियम् ॥ ३४४ ॥

वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः ॥
साहसस्य नरः कर्ता विज्ञेयः पापकृत्तमः ॥ ३४५ ॥

अयमपरार्थवादो निग्रहविधिस्तुत्यर्थः। वाचा दुष्टो वाग्दुष्टस्तस्करश्चौरदण्डेनैव—दण्डपारुष्यकृत्। 'दण्डः' प्रहरणोपलक्षणार्थः। त्रिभ्य एतेभ्योऽनन्तरातिक्रान्तेभ्यः पापकारिभ्योऽयमतिशयेन पापकृत्तमः ॥ ३४५ ॥

साहसे वर्तमानं तु यो मर्षयति पार्थिवः ॥
स विनाशं व्रजत्याशु विद्वेषं चाधिगच्छति ॥ ३४६ ॥

अयमप्यर्थवादः । साहसे स्थितं पुरुषं यो मर्षयति । प्रकृत्यर्थेऽयं णिच् । यो मृष्यति क्षमते । स विनाशं प्राप्नोति द्वेष्यतां च प्रजासु प्राप्नोति द्वेष्यैश्चाभिभूयते ॥ ३४६ ॥

न मित्रकारणाद्राजा विपुलाद्वा धनागमात् ॥
समुत्सृजेत्साहसिकान्सर्वभूतभयावहान् ॥ ३४७ ॥

अत आह पार्श्वस्थस्य कस्यचित्स्नेहहेतोरमात्यादिना प्रार्थ्यमानो न मृष्येत् । अथवा स एवातिबहुधनं ददातीति नोपेक्षेत । सर्वेषां भूतानां भयमावहन्ति साहसिकाः । अयमप्यर्थवादः ॥ ३४७ ॥

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ॥
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥ ३४८ ॥
आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे ॥
स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥ ३४९ ॥

"वैणवीं धारयेद्यष्टिम्" इति (४।३६) विधानादनुमितशस्त्रग्रहणाः श्रोत्रियाः । स्वबलाविष्टं भवति च साहसिके बलातिशयधायि शस्त्रम् । अतः साहसिकत्वाशङ्कया शस्त्रग्रहणमप्राप्तं विधीयते । शस्त्रं द्विजातिभिर्ग्राह्यमिति । एतावता वाक्यं विच्छिद्यते । अवशिष्टं तु "घ्नन्धर्मेण" इत्यनेनाभिसंबध्यत इत्यतो द्वे एते वाक्ये ।

ये त्वेतेष्वेव निमित्तेषु ग्रहणमिच्छन्ति नान्यदेति तेषामतर्कितोपनताततायिमुखपतितस्याशस्त्रस्य का गतिः । न हि ते शस्त्रग्रहणं तस्य प्रतिपालयन्ति ।

अथैवं व्याख्यायते—"धर्मो यत्रोपरुद्ध्यते" "विप्लवे कालकारिते" राजनि व्यतिक्रान्तेऽसंस्थायां प्रवृत्तायां शस्त्रं ग्राह्यम् । अन्यदा तु सौराज्ये "राजैव रक्षतीति"—न हि प्रसार्य हस्तौ राजा प्रतिपुरुषमासितुं शक्नोति । भवन्ति केचिद्दुरात्मानो ये राजपुरुषानपि शूरतमाभियुक्तान्बाधन्ते शस्त्रवतस्तु बिभ्यतीति सार्वकालिकं शस्त्रधारणं युक्तम् ।

किं पुनर्ग्रहणमात्रं विभीषिकाजननमात्रम् ?

नेत्याह । नाधर्मेण न दुष्यतीति । हिंसापर्यन्तोऽयमुपदेशः । यत्त्वापस्तंबेनोक्तं ( १ । १० । ६ ) "न ब्राह्मणः परीक्षार्थमपि शस्त्रमाददीतेति"—असति यथाभिहिते निमित्त आकर्पणस्य प्रतिषेधो न ग्रहणस्य । विकोशा हि परीक्ष्यन्ते ।

धर्मस्योपरोधो यदा यज्ञादीनां विनाशः कैश्चित्क्रियते । वर्णानां विप्लवोऽव्यवस्थानं वर्णसंकरादि । कालकारिते राजमरणादौ । तत्र स्वधनकुटुम्बरक्षार्थं शस्त्रं ग्राह्यम् । अन्ये तु परार्थमप्यस्मिन्नवसरे । तथा च गौतमः ( २।१।१६ ) "दुर्बलहिंसायां च विमोचने शक्तश्चेदिति" ।

उक्तं यज्ञविनाशसङ्करनिवृत्त्यर्थं शस्त्रग्रहणम् । निमित्तान्तरमाह आत्मनश्च परित्राणे । परिः सर्वतोभावे शरीरभार्याधनपुत्ररक्षार्थं नाधर्मेण न दुष्यति ।

दक्षिणानां च संगरोऽवरोधः । यदि यज्ञार्थं कल्पिता दक्षिणाः कैश्चिदपह्रियेरंस्तदा तन्निमित्तं योद्धव्यम् । अन्ये त्वेवमभिसंवध्नन्ति—दक्षिणानां हेतोः संगरे—यद्युपरोधः प्रवृत्तो धर्मेऽप्रवृत्ते 'दक्षिणासंगर' इति ।

स्त्रीविप्राणामभ्यवपत्तिः परिभवः । यत्र स्त्रियः साध्व्यो हठात्केनचिदुपगम्यन्ते हन्यन्ते वा । एवं ब्राह्मणाः केनचिद्धन्यन्ते । तत्र नाखड्गादिना न दुष्यति। हिंसाप्रतिषेधातिक्रमो न कृतो भवतीत्यर्थः । असति प्रतिषेधे कामचारप्राप्तौ विध्यन्तरपर्यालोचनया गौतमवचनमनुध्यायमानेन "दुर्वलहिंसायां विमोचने शक्तश्चेत्" (२१।१६) इत्यवश्यं हनने प्रवर्तितव्यम् ।

अथ प्रतिहारशङ्का भवति तदा सर्वत एवात्मानं गोपायेदित्युपेक्षा ॥ ३४८-३४६ ॥

आत्मपरित्राणार्थमविचारेण योद्धव्यम् । तदनुदर्शयति

**गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ॥**
**आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ३५० ॥**

'आततायी' उच्यते यः शरीरधनदारपुत्रनाशे सर्वप्रकारमुद्यतः । तमविचारयन् हन्यात् । गुर्वादिग्रहणमर्थवादः । एतेऽपि हन्तव्याः किमुतान्य इति । एतेषां त्वाततायित्वेऽपि वधो नास्ति । "आचार्यं च प्रवक्तारम्" इत्यनेनापकारिणामपि वधो निषिद्धः (४।१६२) । "गुरुमाततायिनमिति" शक्यः संवन्धः ।

तथा सत्याततायिविशेषणमेतत् । ततो गुर्वादिव्यतिरिक्तस्याततायिनः प्रतिषेधः कुतः स्याद्—वाक्यान्तराभावात् । अथ "नाततायिवधे दोष" इत्येतद्वाक्यान्तरं सामान्येनाभ्यनुज्ञापकमिति—तदपि न, विधेरश्रवणात्, पूर्वशेषतया चार्थवादत्वे प्रकृतवचनत्वात् ।

इह भवन्तस्त्वाहुः—यद्यपि 'आततायिनमि'त्येव विधिः, अवशिष्टोऽर्थवादः, तथापि गुर्वादीनां वधानुज्ञानम् । यतोऽन्यदपकारित्वमन्यदाततायित्वम् । यो ह्यन्यां कांचन पीडां करोति न सर्वेण शरीरादिना सोऽपकारी, ततस्त्वन्य आततायी । तथा च पठ्यते—"उद्यतासिर्विषाग्निभ्यां शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजतः । भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिनः" ॥

"आयान्तमिति वचनादात्तशस्त्रो हन्तुमभिधावन्दारान्वा जिहीर्षन्हन्तव्यः । कृते तु दोषे किमन्यत्करिष्यतीत्युपेक्षा" इति ब्रुवते । तदयुक्तम् । यतः "प्रकाशमप्रकाशं वेति" वक्ष्यति (३५१) । समानौ ह्येतौ करिष्यन्कृतवांश्च । तस्मादायान्तमित्यनुवादः—कर्तुमागतं कृत्वा वा गतमिति । आततायित्वाच्चासौ हन्यते । न च कृतवत आततायित्वमपैति । नास्यात्मनो रक्षार्थ एव वध आत्मनश्च परित्राण इत्यनेनोक्तम् ॥ ३५० ॥

नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥ ३५१ ॥

न कश्चनेति । नाधर्मो न दण्डो न प्रायश्चित्तमिति । प्रकाशं जनसमक्षम् । अप्रकाशं विषादिदानेन येनकेनचिदुपायेन । मन्युः क्रोधाभिमानिदेवताऽसौ मन्युमृच्छति । नात्र हन्तृहन्तव्यभावोऽस्ति । पुरुषयोरर्थ आततायिक्रोध इतरेण हन्यत इत्यर्थवादोऽयम् । यथा प्रतिग्रहकामः "को मह्यं ददातु नाहं प्रतिग्रहीता न त्वं दाता ततश्च कुतः प्रतिग्रहदोषो मम"एवमत्रापि ।

इह साहसिके दण्डो नाम्नातः । स दण्डपारुष्ये द्रष्टव्यः । इह त्वधिकतरः, यत उक्तं 'विज्ञेयः पापकृत्तम' इति (३४५) ॥ ३५१ ॥

परदाराभिमर्शेषु प्रवृत्तान्नॄन्महीपतिः ॥
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ॥ ३५२ ॥

विवाहसंस्कृतायां स्त्रियां दारशब्दो वर्तते । आत्मनोऽन्यः परः । अभिमर्शः सम्भोग आलिङ्गनादिः । आलिङ्गनं जनद्वयसमवायः, भोगजन्यायाः प्रीतेः प्रवृत्तिः प्रारंभस्तन्निवृत्त्यर्थं दूतीसंप्रेषणादिना प्रोत्साहनम् । अथ च संग्रहणमभिमर्शनं प्रचक्षते । तेनायमर्थः—परभार्यागमने प्रवृत्तं पुरुषं ज्ञात्वोद्वेजनकरैस्तीक्ष्णाग्रैः शक्तिशूलादिभिरङ्कयित्वा नासाछेदादिभिर्विवासयेत् । सर्वत्राऽत्र विशेषदण्डस्योक्तत्वादस्य विषयभावो न सामान्यदण्डोऽयम् । किं तर्हि । पुनः पुनः प्रवृत्तौ । इदं तु युक्तम् । अलभमानस्य विषयान्तरं प्रवासस्य धनदण्डस्य च कार्यभेदात्समुच्चयः । तथा दर्शयिष्यामः ॥ ३५२ ॥

तत्समुत्थो हि लोकस्य जायते वर्णसंकरः ॥
येन मूलहरोऽधर्मः सर्वनाशाय कल्पते ॥ ३५३ ॥

समुत्थानमुत्पत्तिः । ततः परदारागमनात्संकरोऽवान्तरवर्णरूपो जायते । येन जातेनाधर्मो मूलस्य लोकस्य दिवः पतिता वृष्टिस्तां हरत्यधर्मः । धर्मे हि सति "आदित्याज्जायते वृष्टिः" । न च संकरे सत्यपि कारीरीयागो नापि पात्रे दानमतो दानयागहोमानां सस्योत्पत्तिहेतुभूतानामभावात्सर्वजगन्नाशसमर्थो भवति । तस्मात्पारदारिकान् 'अधर्ममूलं वर्णसंकरः स्यादिति' सस्यादिनिष्पत्तिमूलां वा वृष्टिं रक्षन्प्रवासयेत् ॥ ३५३ ॥

परस्य पत्न्या पुरुषः संभाषां योजयन् रहः ॥
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥ ३५४ ॥

संभाषः संभाषणं—तमालापं योजयन् कुर्वन्संग्रहणादिदोषैः तत्स्त्रीप्रार्थनादिभिः पूर्वमाक्षारितोऽभिशस्तः—'अयमेनामुपजपती' त्यमुत्र दृष्टदोषः शंक्यमानदोषो वा चपलः । रहः उद्घातादौ—निषिद्धसंभाषण इति केचित् । कारणादप्यन्यपत्न्या संभाषणं कुर्वन्प्रथमसाहसं दण्डं प्राप्नुयाद्दापयितव्य इत्यर्थः ॥ ३५४ ॥

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ॥
न दोषं प्राप्नुयात्किंचिन्न हि तस्य व्यतिक्रमः ॥ ३५५ ॥

पूर्वस्य प्रत्युदाहरणमेतत् । अनाक्षारितोऽप्यकारणात्संभाषयन्मिश्रयन्पूर्वदण्डभाक् ॥ ३५५ ॥

परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा ॥
नदीनां वाऽपि संभेदे स संग्रहणमाप्नुयात् ॥ ३५६ ॥

'परस्य पत्न्येति' प्रकृते पुनः परस्त्रीग्रहणं मातृभगिनीगुरुपत्न्यादीनामप्रतिषेधार्थम्। न हि ताः सत्यपि परसंबन्धित्वे परस्त्रीव्यपदेश्याः।

तीर्थमुच्यते येन मार्गेण नदीतडागादिभ्यो जलमानेतुमवतरन्ति। स हि विजनप्रायो भवति। नानुदकार्थेन तत्र संनिधीयते। संकेतस्थानं तादृशमत्र कल्पितायामवश्यमेव गन्तव्यमहमपि संनिधीयमानो नाशंक्यो भविष्यामीति उदकार्थी दिवा शौचाचारं वा करिष्यन्प्रतिपालयन्निति जना मंस्यन्ते। प्रदेशान्तरे तु किमत्रायं प्रतिपालयतीति शङ्का स्यात्। अतस्तीर्थे प्रतिषेधः। अरण्यं हि ग्रामाद्विजनो देशो गुल्मवृक्षलतादिगहनः। वने वृक्षसंततौ। नदीनां संभेदः समागमः। सोऽपि हि संकेतस्थानम्। स संग्रहणं प्राप्नुयात्। परस्त्रीकामत्वं 'संग्रहणम्'। अतश्च यस्तत्र दण्डः सोऽस्य स्यादित्युक्तं भवति। अनाक्षारितस्यापि सत्यपि कारणेऽयं प्रतिषेधः। यत्त्वापस्तंबेनोक्तं "नासंभाष्य स्त्रियमतिव्रजेदिति" तदन्येषु संनिहितेष्वेतच्छास्त्रज्ञेषु प्रकाश्ये--'भगिनि नमस्ते' इत्याद्यभिवादनमविलम्बमानेन कर्तव्यम् ॥ ३५६ ॥

उपकारक्रियाकेलिः स्पर्शो भूषणवाससाम् ॥
सह खट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥ ३५७ ॥

या न केनचित्संबन्धेन संबन्धिनी तस्या वस्त्रमाल्यादिदानेन उपकारकरणम्। तथा भोजनपानादिना। केलिः परिहासो वक्रभणितादिना। स्पर्शो भूषणवाससाम्। भूषणं हारकटकादि तदङ्गलग्नं—तदीयमेतद्वेति ज्ञात्वा विनाप्रयोजनेनान्यगृहीतमपि स्पृश्यते। एकस्यां खट्वायामसंसक्ताङ्गयोरपि सहासनम्। सर्वमेतत्तुल्यदण्डम् ॥ ३५७ ॥

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया ॥
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥ ३५८ ॥

अदेशस्पर्शस्य—यत्र विनैव तत्स्पर्शनं गमनागमनादि संसिध्यति। महाजनसंकुले न दोषः। तथा शरीरावयवोऽपि 'देशः'। तत्र हस्तस्कंधधृतभाण्डाव-

रोपणे तत्स्पर्शं न दोषः। ओष्ठचिबुकस्तनादिषु दोषः। तया वा स्तनादिस्पर्शेनोत्पीडितो यदि तत्सहते 'मा कार्षी' रित्यादिना न प्रतिषेधति। परस्परस्यानुमते मतिपूर्वमेतस्मिन्कृते दोषोऽयम्। न पुनः कर्मादौ। स्खलन्ती पुरुषं कण्ठेऽवलंबते—पुरुषो वा स्तनान्तरे स्त्रियं तद्धस्तगृहीतद्रव्यादानप्रवृत्तौ—शुष्के पतिष्यामीति-कर्दमे पततीतिवत्तावपि न दुष्येताम्॥ ३५८॥

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति॥
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा॥ ३५९॥

उक्तं संग्रहणस्वरूपम्। दण्ड इदानीमत्रोच्यते। अब्राह्मणः क्षत्रियादिः संग्रहणे कृते चतुर्णामपि वर्णानां हीनोत्तमजातिभेदमनपेक्ष्य प्राणान्तं प्राणत्याजने मारणे पर्यवसितं दण्डमर्हति।

कथं पुनर्ब्राह्मण्यां शूद्रायां च संगृहीतस्य समो दण्डः।

अत्र हेतुस्वरूपमर्थमाह दारा रक्ष्यतमाः सदा। सर्वस्य कस्यचिद्राज्ञा दारा धनशरीरेभ्योऽतिशयेन रक्ष्याः। तुल्ये हि सङ्करे शूद्रस्यापि कुलनाशः। एतदुक्तं भवति। वाचनिकोऽयमर्थोऽत्र हेतुर्वक्तव्यः, उक्तोऽसौ।

अत्र पूर्वे व्याचख्युः—न सर्वस्मिन्संग्रहणे प्रागुक्तदण्डोऽयम्, किं तर्हि मुख्ये स्पर्शविशेषे जन्यप्रीतिविशेषात्मके गमने। कथं हि तीर्थादिष्वभिवदनं गमनं च समदण्डावुपपद्येयाताम्। तस्माद्ब्राह्मणः शूद्रो द्विजातिस्त्रीगमने प्राणच्छेदार्हो नान्यः। न हि विषमसमीकरणं न्याय्यम्। अतश्च प्रागुक्तेषु संग्रहणेष्वनुबन्धाद्यपेक्षया दण्डः कल्प्यः। यत्रैवं निश्चितं गमनार्थ एवायमुपकारक्रियादिरुपक्रमस्तत्र मुख्यदण्ड एव युक्तः। न ह्यत्र वैषम्यमस्ति। दृष्टं चैतदुभयत्रापीति। यच्चेदमुक्तं—"यद्यत्रायं दण्डो मुख्ये संग्रहणे किं करिष्यतीति"—नैवान्यन्मुख्यसंग्रहणमस्ति। न ह्यस्य लौकिकः पदार्थोऽवधृतो येन परदारोपकारादौ प्रयुक्त इत्येवमस्यैव। यं च भवान् मुख्यं संग्रहणं मन्यते तत्र महान्दण्डः। प्रतिषिद्धं परस्त्रीगमनं शास्त्रं पर्यनुयोज्यमिति चेत् उपकारादावपि प्रतिषेधं विद्धि। प्रतिषेधवद्धि प्रायश्चित्तमपि। तुल्यं प्रसक्तमिति चेत्का नामेयमनिष्टापत्तिः। किन्तु प्रसज्येत यदा संग्रहणशब्देन तदुच्येत। सिक्ते हि रेतसि गमनाद्यभिधानम्। यत्र यादृशो दण्डस्तत्र तत्समानं दुःखं प्राप्तम्। अतोऽस्मिन्विपर्यये रेतः सेकनिमित्तं प्रायश्चित्तं

तच्छब्देनाभिधानात् उपकारादौ कल्प्यम्। यदि च संलापादौ स्वल्पो दण्डः स्यात्तदा प्रवर्तेरन्। ततश्च परस्त्रीसंलापादिभूतेनान्येनाभिभवता व्यादीपितमन्मथाः स्मरशराकृष्यमाणाः शरीरनिरपेक्षा राजनिग्रहं न गणयेयुः। आद्यायामेव तु प्रवृत्तौ गृह्यमाणेष्वप्रबन्धवृत्तौ रागे शक्यं निराकरणम्। तस्मात्परस्त्रीमुपजपतामेव महादण्डो युक्तः।

इह त्वन्तग्रहणादादिभूतेनान्येन दण्डेन भवितव्यम्। न ह्यसत्यादावन्तो भवन्ति। प्राणोऽन्तो यस्य प्राणान्तस्तावत्पातयितव्यो यावत्प्राणेषु पतति। तेन सर्वस्वग्रहणाङ्गच्छेदाद्यप्युक्तं भवति। एकैकस्य च दण्डत्वमन्यत्र ज्ञातं न समुदाये दंड्यते इति वहुदण्डेष्वाम्नातेषु स महान् यो द्विजातिस्त्रीसंग्रहणेऽब्राह्मणस्य। अतो युक्तैव मारणकल्पना सर्वत्र। तत्र कुलस्त्रीभिरनिच्छन्तीभिर्भर्तृमतीभिः संगृह्यमाणस्य प्राणापहरणं हीनजातीयाभिरपि ॥ ३५६ ॥

**भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा ॥**
**संभाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः ॥ ३६० ॥**

भिक्षुका भिक्षाजीविनो भिक्षायाचनारूपं संभाषणमवारिताः कुर्युर्यदि स्वामिना न निषिद्धाः। अथवा नैते वारयितव्याः। वन्दिनः स्तावकाः। दीक्षिता यज्ञे भृतिवचनार्थं संभाषेरन्। कारवः सूपकारादयः। एते तीर्थादिष्वपि न निवार्याः ॥ ३६० ॥

**न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ॥**
**निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥ ३६१ ॥**

केचिद्भिक्षुकादीनां निवारितानां संभाषणे दण्डोऽयमिति मन्यन्ते। तदसत्। नैव ते निवार्या इत्युक्तम्। कुतश्च भिक्षुकाणां सुवर्णो दण्डः। तस्मात्कोऽपि प्रकाशमनाक्षारितोऽपि कथंचिन्निषिद्धः स्वामिना समाचरन्सुवर्णं दण्ड्यः ॥ ३६१ ॥

**नैष चारणदारेषु विधिर्नात्मोपजीविषु ॥**
**सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥ ३६२ ॥**

यः संभाषणप्रतिषेध उपकारक्रियाप्रतिषेधश्च नैष चारणदारेषु स्यात्। चारणा नटगायनाद्याः प्रेक्षणकारिणः। तथा आत्मोपजीविषु वेषेण जीवत्सु ये दाराः। अथवा

ऽऽत्मजायैव "अर्धो ह् वा एष आत्मेति" तां य उपजीवन्ति उपपतिक्षमकाः। सञ्जयन्ति संश्लेषयन्ति ते चारणाः परपुरुषेण। निगूढाः प्रच्छन्नम्। आपणभूमौ न तिष्ठन्ति। गृहवेषत्वादेवः ताः प्रसिद्धवेश्याभ्यो भिद्यन्ते। चारयन्ति च ता मैथुनं प्रवर्तयन्ति नेत्रभ्रूविलासपरिहासादिभिः पुरुषानाकर्षयन्ति। तदनुज्ञानं 'सञ्जनं', 'चारणं' संप्रयोग एव। अथवा स्वा नारीः 'सञ्जयन्ति' योजयन्ति, अन्याश्च स्वस्त्रीभि-'श्चारयन्ति' प्रवर्तयन्ति वेश्यात्वं कुट्टनीत्वं च स्वदाराणां कारयन्तीत्यर्थः ॥ ३६२ ॥

किंचिदेव तु दाप्यः स्यात्संभाषां ताभिराचरन् ॥
प्रेष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥ ३६३ ॥

रहोऽप्रकाशं विजने देशे चारणनारीभिः संभाषां कुर्वन् किंचित्सुवर्णाद्यत्यन्ताल्पं सत्रिंशद्भागिकं जातिप्रतिष्ठाने अपेक्ष्य दण्ड्यः। यतो न परिपूर्णं तासु वेश्यात्वम्। भर्तृभिरनुज्ञाता हि ताः पत्न्यायन्ते। तत्र भर्तृविज्ञानार्थं दूतीमुखेन व्यवहर्तव्यम्। न तु साक्षात्ताभिरस्वतन्त्रत्वात्। प्रकाशं तु नृत्यन्तीनां गायन्तीनां वाऽभिनयतालादिनिरूपणावसरे कीदृशमेतदित्यादिप्रश्नद्वारं संभाषणमनिषिद्धम्।

प्रेष्या दास्यः सप्तभिर्दासयोनिभिरुपनताः। एकं भजन्ते एकभक्ता एकेनावरुद्धाः। तत्रान्योऽप्यस्ति दण्डलेशः।

"किंपुनरयं दासीशब्दः संबन्धिशब्दो य एव यस्याः स्वामी तस्यैव दासी—उत सूपकारादिशब्दवत् कर्ममूलकः"।

इह तावदाद्या एव स्थितिः। विशेषणोपादानेऽसामर्थ्यात्। या यस्य दासी वेश्यावच्चान्यैः संसृज्यते, राजदासीव दासी वा, सा निगृह्यते। सा चेन्नावरुद्धा न दोषः संग्रहणे। अवरुद्धायामनेन दण्ड उक्तः। रिक्थविभागे चैतन्निपुणं वक्ष्यामः। प्रव्रजिताः अरक्षकाः शीलमित्रादयः। ता हि कामुक इव लिङ्गप्रच्छन्नाः ॥ ३६३ ॥

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ॥
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥ ३६४ ॥

प्रासङ्गिकमिदम्। तुल्यः समानजातीयः। सोऽनिच्छन्तीं कुमारीं दूषयेत्कौमार्यादपच्यावयेत्स्त्रीपुरुषसंभोगेन—सद्यस्तस्मिन्नेवाहन्यविलंबं हन्तव्यः। सका-

माया दूषणे नास्ति वधप्राप्तिः । यच्चात्र भविष्यति तद्वक्ष्यामः । यद्यपि तुल्य इत्येवात्र श्रुतं वधोऽपि जात्यपेक्षायामवश्यंभाविन्यां प्रत्यासत्त्या संवध्यते ॥ ३६४ ॥

कन्यां भजन्तीमुत्कृष्टं न किंचिदपि दापयेत् ॥
जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥ ३६५ ॥

जातिधनशीलविद्यानामन्यतमेनापि पितृकुलादुत्कृष्टं भजन्तीं प्रवर्तितमैथुनां न किंचिद्दण्डयेत् । कन्यायाः स्वातन्त्र्याभावात्तद्रक्षाधिकृतानां पित्रादीनां दण्डे प्राप्ते प्रतिषेधः । जघन्यं जात्यादिभिर्हीनं सेवमानां मैथुनायोत्कलयन्तीं संयतां निवृत्तक्रीडाविहारां कञ्चुकिभिरधिष्ठितां पितृगृह एव वासयेद्यावन्निवृत्ताभिलाषा संजाता । अथ हीनजातीये निर्वृत्तप्रीतिविशेषा तदा आऽन्त्योच्छ्वासात्संयतैव तिष्ठेत् ॥ ३६५ ॥

उत्तमां सेवमानस्तु जघन्यो वधमर्हति ॥
शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि ॥ ३६६ ॥

अकामायाः कन्याया दूषणे ब्राह्मणवर्जमविशेषेण हीनोत्तमानां वध एव दण्ड इत्युक्तम् । सकामाया दूषणे त्विदमाहुः । उत्तमां रूपयौवनजात्यादिभिः । जघन्योऽत्यन्तनिकृष्टः । नातिसाम्येऽपि गुणैर्वध्यः । समां तु गच्छन्सकामां स शुल्कमासुर विवाह इव पित्रे दद्यात् । न चेदिच्छति पिता तदा राज्ञे दण्डं तावंतम् ।

"ननु च गान्धर्वोऽयं विवाह 'इच्छयाऽन्योन्यसंयोग' इति । तत्र न युक्तो दण्डः ।"

केनोक्तं गान्धर्वे नास्ति दण्डः । अत एव नायं सतीधर्मः, न चायं विवाहः, अग्निसंस्काराभावात् । यदपि शाकुन्तले व्यासवचनममन्त्रकमनग्निकमिति तद्दुष्यंतेन कामपीडितेनैवं कृतम् । न चेच्छासंयोगमात्रं विवाहः । स्वीकरणोपायभेदादष्टौ विवाहाः, न पुनर्विवाहभेदात् । वृत्तवरणं तत्र पुनः कर्तव्यमेवमिति । अथवा ऋतुदर्शनोत्तरकालं गान्धर्वः । प्रागृतोः शुल्को दण्डो वा ।

"अथ कन्यायाः का प्रतिपत्तिः ?" तस्मा एव देया । निवृत्ताभिलाषा चेत्काममन्यत्र प्रतिपाद्या । शुल्कग्रहणं चात्रापि सकृदुपभोगनिष्क्रत्यर्थमस्त्येव । वरश्चेन्निवृत्ताभिलाषो हठाद्ग्राहयितव्यः ॥ ३६६ ॥

अभिपद्य तु यः कन्यां कुर्याद्दर्पेण मानवः ॥
तस्याशु कर्त्ये अंगुल्यौ दण्डं चार्हति षट्शतम् ॥ ३६७ ॥

यद्यपि सकामा कन्या पित्रादयस्तु तस्याः सन्निहितास्तानिच्छतोऽभिषह्याभिभूय दर्पेण बलेन—कः किं कर्त्तुं मे शक्तः—कन्यानुरागमात्राश्रितः कन्यां कुर्याद्विकुर्याद्दूषयेत्। अनेकार्थः करोतिः। तस्याशु कर्त्याः छेत्तव्या अर्धाङ्गुलयः। षट्शतानि वा दण्ड्यः।

अन्ये तु योऽकामां दूषयेदित्यस्यैव वध्यर्थस्योपसंहारोऽयम्। ताडनात्प्रभृतिमारणं यावद्वध्यर्थः। तत्रेमां निकृष्टजातीयां च दूषयन्न मार्यतेऽपि त्वङ्गुली अस्य च्छिद्येत ॥ ३६७ ॥

सकमां दूषयंस्तुल्यो नांगुलिच्छेदमाप्नुयात् ॥
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥ ३६८ ॥

सकामामित्यनुवादः। पूर्वस्यापि सकामविषयात्। अभिपद्य करणे पूर्वं दण्डः, अप्रकाशं चौर्यवद्द्विशतोऽङ्गुलीच्छेदवर्जितः। अथ कस्मिंश्चित्पुरुषेऽनुरागवती कन्या तेन संयुज्यमाना कन्यात्वनिवृत्तौ सकामा येन विकृतीक्रियते तस्यायं दण्डः। अथवा हस्तस्पर्शमात्रमिह दूषणम्। प्रार्थनीयायाः कन्याया हस्तस्पर्शः—मया स्पृष्टां ज्ञात्वा नान्य एतामर्थयिष्यतेऽन्यस्मिन्ननुरागिणीं मन्यमानः ॥ ३६८ ॥

कन्यैव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः ॥
शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश ॥ ३६९ ॥

बालभावाद्रूपाद्विद्वेषाद्वा कन्यैव कन्यां नाशयेत्सा द्विशतं दाप्या। शुल्कश्च त्रिगुणः।

किंपुनः शुल्कस्य परिमाणम्।

एषामन्यतमरूपसौन्दर्याद्यपेक्षं सौभाग्यापेक्षं च।

शिफा रज्जुलताप्रहाराः ॥ ३६९ ॥

या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौण्ड्यमर्हति ॥
अङ्गुल्योरेव वा छेदं खरेणोद्वहनं तथा ॥ ३७० ॥

स्त्रियां कन्यानां कन्यालिङ्गं नाशयन्त्यां मौण्ड्यं केशवपनं दण्डोऽङ्गुलिच्छेदो वा । खरेणोद्वहनं केशच्छेदपक्षे । कन्याजात्यादिभेदान्निग्राह्य भेदात् त्रैवर्णिकस्त्रीणां ब्राह्मणादिक्रमेणेमं दण्डमिच्छन्ति मुद्राश्च कल्पयन्ति । ते प्रमाणाभावादुपेक्षणीयाः ॥ ३७० ॥

भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता ॥
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥ ३७१ ॥

'लङ्घनं' भर्त्तारमतिक्रम्यान्यत्र गमनम् । तच्चेत् स्त्री करोति । दर्पण—बह्वो मे ज्ञातयो बलिनो द्रविणसंपन्नाः । स्त्रीगुणो रूपसौभाग्यातिशयसंपत् । किमनेन शीलरूपेणेत्येव दर्पण । तां श्वभिः खादयेद्यावन्मृता । संस्थानं देशः । बहवः संस्थिता यत्र जनाश्चत्वरादौ ॥ ३७१ ॥

पुमांसं दाहयेत्पापं शयने तप्त आयसे ॥
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥ ३७२ ॥

योऽसौ पत्न्या जारः स आयसे लोहशयने तप्तेऽग्निसमे कृते दाहयितव्यः । तत्र च शयनस्थितस्य काष्ठानि वध्यघातिनोऽभ्यादध्युरुपरि क्षिपेयुः । यावत्काष्ठप्रहारैरग्निज्वालाभिः शयनतापेन च मृतः ॥ ३७२ ॥

संवत्सरेऽभिशस्तस्य दुष्टस्य द्विगुणो दमः ॥
व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥ ३७३ ॥

अभिशस्तस्तत्पापकारीत्यभिशब्दितः । यो यस्यां स्त्रियां संगृहीतः सोऽभिशस्तो दण्डितः । स चेत्संवत्सरं प्रतिपाल्यातीते संवत्सरे पुनस्तस्यामेव संगृह्यते तदा तस्यैकं वारमभिशस्तस्य संवत्सरे गते पुनर्दुष्टस्य द्विगुणो दण्डः ।

संवत्सराभिशस्तस्येति समासपाठे कथंचिद्योजना ।

व्रात्यया सह संवासे तावदेव । "किं यावदेव पुनर्दुष्टस्य" । नेति ब्रूमः । तत्राप्युत्तमाधममध्यमानामनेकविधो दण्डः । तत्र कोऽसाविह 'द्विगुण' इति न ज्ञायते । किं तर्हि चाण्डाल्या संवासे यावदेव तावदेव व्रात्ययेति । "सहस्रं त्वन्त्यजस्त्रियमिति" (३८५) । 'व्रातः' पूगः संघस्तेन चरन्ती पुंश्चलीति कथंचिद्व्यः कर्तव्यः । अथवा व्रातमर्हति व्रात्येत्यस्तु—यकारो दण्डादिः । "का च व्रातमर्हति ।"

याऽनेकपुरुषोपभोग्या पुंश्चली सा हि पुरुषव्रातमर्हति। अथवाऽनेकपुरुषस्वामिका ग्रामस्य दास्यश्च 'व्रात्याः'। ये तूद्वाहहीनां व्रात्यां मन्यन्ते—तेषां मतेन मुख्यः शब्दार्थः। अयं हि व्रात्यशब्दः स्मृतिकारैः सावित्रीपतितेषु प्रयुक्तः। न च स्त्रीणां तत्संभवः। अथ स्त्रीणां विवाहस्य तदापत्तिवचनादुपनयनं तद्धीनपुरुषवद्व्रात्या,—गौणस्तर्हि न मुख्यः। यदि नासोपनयनशब्दो ऽनुपनयने विवाहे प्रयुक्तस्तथाप्युपनयनहीनो व्रात्य इत्युक्तेन विवाहहीन इति प्रतीयते। यथाऽसिंहोऽयं देश इत्युक्ते न सिंहशब्दस्य माणवके प्रयुक्तस्यापि देशस्यामाणवकत्वं प्रतीयते। अस्ति तत्र मुख्य इहासंभव इति चेन्नासंभवमात्रनिबन्धना गौणी प्रतीतिः, किं तर्हि, संबन्धमपरमपेक्ष्य। भवेदुपनयनशब्दो विवाहे गौणः, व्रात्यशब्दस्तु गौण इति को हेतुः? गौणत्वेऽपि विवाहाभावनिबन्धन इति दुरुपपादम्। व्रात्यजापि—काकाज्जातः काकः श्येनाज्जातः श्येन इति—व्रात्येति शङ्क्यते। व्रात्यसंबन्धप्रत्यासत्त्या हि तत्र रूपातिदेशप्रतिपत्तिः। व्रात्यभार्या तु सत्यपि संबन्धे न व्रात्यशब्देन शक्याऽभिधातुम्। सोऽयमित्यभिसंबन्धे हि पुंयोगादाख्यायामिति (पा० ४।१।४८) तथा भवितव्यम्। तावतश्चायं भेदविवक्षायां तद्धितेनेति। तस्माद्यदि गौणो व्रात्यशब्दो गृहीतव्यस्तज्जाता प्रत्येया। अथशब्दार्थे व्रातमर्हतीति। विवाहभ्रष्टा तु न मुख्या न गौणीति। न च विवाहकालः स्त्रीणां नियतो यत्कालाद्भ्रष्टा व्रात्याः स्युः। यदपि प्रागृतोर्विवाह्याः तदपि स्वयंवरस्य ऋतुमत्या विना तत्परेणाभ्यनुज्ञात एव काममामरणं तिष्ठेद्गृहे कन्या ॥ ३७३ ॥

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ॥
अगुप्तमङ्गसर्वस्त्री गुप्तं सर्वेण हीयते ॥ ३७४ ॥

शूद्र आचाण्डालात्। गुप्तं वर्णं द्वैजातं द्विजातीनां स्त्रिय आवसन्मैथुनेन गच्छन् रक्षितां भर्त्रादिभिः नियमेन दण्ड्यः। को दण्ड इति चेत्—अगुप्तां चेद्गच्छत्यङ्गसर्वस्वी हीयते। अङ्गं च सर्वस्वं तद्वान्। केन हीयते। प्रकृतत्वात्ताभ्यामेवान्यस्यानिर्देशाद्विशेषस्यानुपादानात्। अपराध्येवाङ्गम्। गुप्तं चेद्गच्छति सर्वेण हीयते। नैकेनाङ्गेन यावच्छरीरेणापि। हान्युद्देशेनाङ्गच्छेदनसर्वस्वहरणमरणान्युपदिष्टानि भवन्ति। हानिरस्य कर्तव्येत्यर्थः। तथा च गौतमः ( १२। २-३ ) "आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणं च। गुप्तां चेत्" ॥ ३७४ ॥

वैश्यः सर्वस्वदण्डः स्यात्सम्वत्सर निरोधतः ॥
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥३७५॥

वैश्यस्य सर्वस्वदण्ड उक्तः। इह तु साहचर्यात्सत्यपि द्विजातित्वे न वैश्यस्य समानजातीयागमे दण्डोऽयं किंतर्हि ब्राह्मणक्षत्रिययोरेव। एवं क्षत्रियस्य ब्राह्मणीगमने सहस्रं मौण्ड्यं च मूत्रेण। उदकस्थाने गर्दभमूत्रं ग्रहीतव्यम्।

अन्ये व्याचक्षते—अन्यस्यानुपादानात्समानजातीय एव संवत्सरनिरोधनेन दण्डाधिक्यम्। यदि संवत्सरमवरुद्धं करोति ततोऽयं दण्डः।

आद्यमेव तु व्याख्यानं न्याय्यम्। न च समहीनोत्तमानां कथं समदण्डत्वमिति वाच्यम्। यत उक्तं "सर्वेषामेव वर्णानां दारा रक्ष्यतमाः सदा" इति ॥ ३७५ ॥

ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ ॥
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥ ३७६ ॥

अगुप्ता व्याख्याता। भ्रष्टशीलाऽनाथा च। तद्गमने वैश्यं पञ्चशतं कुर्यात्। करोतिः प्रकरणाद्दण्डने वर्तते। दण्डयेदित्यर्थः। पञ्च शतान्यस्येति पञ्चशतः। बहुव्रीहिर्मत्वर्थीयः। तथा कर्तव्यं यथा पञ्च शतान्यस्य भवन्ति। "किं यदधिकं तत्तस्यापहर्तव्यमित्यर्थः"। नेति ब्रूमः। तथा सति यस्य पञ्च वै शतानि धनं वा न्यूनं तस्य दण्डो न कश्चिदुक्तः स्यात्। कस्तर्ह्यर्थः पञ्चशतं कुर्यादिति। दण्डाधिकाराद् दण्डं पञ्चशतसंबन्धिनं कुर्यात्।

एवं सहस्रिणं क्षत्रियमिति। सहस्रमस्यास्ति दण्डो, न गृहे धनम्।

अङ्गसर्वस्वीति ( ३७४ ) व्याख्येयं—तथा कर्तव्यं यथाङ्गं सर्वस्वं च तस्य दण्डो भवति।

क्षत्रियस्याधिको दण्डो रक्षाधिकृतो रक्षति तत्पुनः स एवापराध्यति ॥३७६ ॥

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह ॥
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ ३७७ ॥

तावेव क्षत्रियवैश्यौ गुप्तया ब्राह्मण्या विप्लुतौ कृतमैथुनौ मैथुनप्रवृत्तावेव शूद्रवद्दण्ड्यौ—'गुप्तं सर्वेण हीयत' इति ( ३७४ ) दग्धव्यौ वा कटाग्निना। वा शब्दो वधप्रकारविकल्पे न वधविकल्पे। न हि शूद्रस्यागुप्ते वधादन्यो दण्ड आम्नातः ॥ ३७७ ॥

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् ॥
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥ ३७८ ॥

गुप्ता भ्रष्टशीलाऽपि यदि केनचिद्रक्ष्यते पित्रा भ्रात्रा बन्धुभिर्वा तां हठाद्गच्छन् सहस्रं ब्राह्मणो दाप्यः । गुप्ता शीलवती चेत्प्रवासनाङ्कनेऽधिके । अथापि शीलवत्यपि गुप्तशब्देनोच्यते—तथापि सहस्रमात्राद्ब्राह्मणो मुच्यते । अङ्कनप्रवासने सर्वत्र मुखीक्रियेते परदाराभिमर्शे ॥ ३७८ ॥

मौण्ड्यं प्राणान्तको दण्डो ब्राह्मणस्य विधीयते ॥
इतरेषां तु वर्णानां दण्डः प्राणान्तको भवेत् ॥३७९ ॥

यत्र क्षत्रियादीनां वध उक्तस्तत्र ब्राह्मणस्य मौण्ड्यम् । यथाऽब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति—तथा तु पुमांसं दाहयेदिति । प्राणानामन्तं गच्छति प्राणान्तं वा करोति प्राणान्तकः । "अन्येष्वपि दृश्यते" ( पा० सू० ३ । २ । १०१ ) इति ण्वुल् । अन्ये तु प्राणान्तिक इति पाठान्तरम् । प्राणान्ते भवः प्राणान्तिकः—अध्यात्मादित्वाठ्ठञ् ।

इतरेषां ब्राह्मणादन्येषां क्षत्रियादीनां वर्णानां प्राणान्तिक एव श्रुतं मारणादि पूर्वमेव । तदनन्तरमिदमुच्यते । उच्यमानं मौण्ड्यं तच्छेपतया सहस्रं दण्डो विधीयत इति मन्यन्ते । अन्यथा ब्राह्मणस्य प्राणान्तदण्डाविधानात्कः प्रसङ्गो ब्राह्मणस्य येनैवमुच्यते 'मौण्ड्यं प्राणान्तिक' इति । पुमांसं दाहयेदिति सामान्यविधानप्रसक्तमिति चेत्तत्रैव कर्तव्यं स्यात्तथा हि स्फुटं तद्विषयत्वं प्रतीयेत ॥ ३७८ ॥

न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ॥
राष्ट्रादेनं बहिःकुर्यात्समग्रधनमक्षतम् ॥ ३८० ॥

सर्वपापेष्विति प्रकरणविधौ न केवलं संग्रहणे ब्राह्मणो न हन्यते यावदन्येष्वप्यपराधेषु । अपिशब्दो युगपत्सर्वपापकार्यपि ब्राह्मणो न जातु कदाचिद्धन्तव्यः । किं तर्हि तस्य पापकारिणः कर्त्तव्यम् । राष्ट्रादेनं विषयाद्ब्राह्मणं बहिःकुर्यान्निर्वासयेत् । समग्रधनं सर्वस्वसहितम् । अक्षतमक्षतशरीरम् । धनमप्यस्य नापहर्तव्यम् । कथं तर्हि दण्डो ब्राह्मणस्य । केचिदाहुर्निर्वासने त्वाधीयमानं सधनं निर्वास्य धनदण्डं प्रतिषेधति । अन्ये तु समग्रधनं हृतसर्वस्वं कृत्वा निर्वास्यत इति मन्यन्ते ॥ ३८० ॥

न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि ॥
तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥ ३८१ ॥

पूर्वशेषोऽयमर्थवादः। न ब्राह्मणवधादन्यो वहुतरोऽधर्मो दुःखफलोऽस्ति। अन्यशब्दाध्याहारेण पञ्चमी। तस्माद्धेतोरस्य ब्राह्मणस्य राजा मारणमङ्गच्छेदं वा मनसाऽपि नेच्छेत् ॥ ३८१ ॥

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ॥
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ ३८२ ॥

अगुप्ताया ब्राह्मण्या गमने वैश्यं पञ्चशतं कुर्यात्क्षत्रियं सहस्रिणमिति (३७६)। तत्र वैश्यस्य पञ्चशतम्। य एव परिपालयति स एव चेन्नाशयति युक्तं तस्य दण्डमहत्त्वम् ॥ ३८२ ॥

सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्
शूद्राया क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥ ३८३ ॥

गुप्ते क्षत्रियावैश्ये गच्छन्ब्राह्मणः सहस्रं दण्ड्यः। प्रवासनाङ्कने स्थिते एव। शूद्राया गमने क्षत्रियवैश्ययोः साहस्रो दण्डः। सहस्रमेव साहस्रम्। स्वार्थिकोऽण्। सहस्रं वा यस्मिन् दण्डेऽस्ति साहस्रो दण्डोऽत्र पदार्थः। मत्वर्थीयोऽण् ॥ ३८३ ॥

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतं दमः ॥
मूत्रेण मौण्ड्यमृच्छेत्तु क्षत्रियो दण्डमेव वा ॥३८४ ॥

वैश्यस्य पञ्च शतानि दण्डः, अगुप्तां चेत् क्षत्रियां गच्छति। क्षत्रियस्य स एव। यदि वा मौण्ड्यं मुण्डनमृच्छेत्प्राप्नुयाद्गर्दभमूत्रेण। एष एव वैश्यागमनउभयोर्दण्डः ॥ ३८४ ॥

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ॥
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियम् ॥ ३८५॥

ब्राह्मणस्य क्षत्रियाद्यगुप्तास्त्रीगमन उभयोर्दण्डः। अन्त्यजश्चण्डालश्वपचादिः। तत्र सहस्रम्। तत्रायं सहस्रपणदण्डसंग्रहः। ब्राह्मणस्य चतुर्ष्वपि वर्णेषु गुप्तागमने सहस्रम्। श्रोत्रियदारेषु प्रवासनाङ्कने। अन्यत्र प्रवासनमेव। श्रोत्रियदारेषु प्रायश्चि-

त्तमहत्त्वादेव कल्प्यते। अगुप्तागमने पञ्चशतानि प्रवासनाङ्कने। यद्यप्यगुप्ता परदाराव्यपदेश्या भवति विवाहसंस्कारे सति—,तथापि स्वैरिणी भर्तृस्वतामतिक्रान्ता। अब्राह्मणस्य प्राणान्तो गुप्तागमने दण्डो वलात्। सकामागमने साहस्रो दण्डः प्रवासनाङ्कने च। गुप्तागमने 'वैश्यं पञ्चशतं कुर्यात्क्षत्रियं सहस्रिणमिति' (३७६) ॥ ३८५ ॥

**यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्॥**
**न साहसिकदण्डघ्नो स राजा शक्रलोकभाक्॥ ३८६ ॥**

यस्य राज्ञः पुरे देशे राष्ट्रे स्तेनश्चौरो नास्ति स शक्रस्येन्द्रस्य लोकं स्थानं भजते स्वर्गं प्राप्नोति। नान्यस्त्रीगमनम्—अन्यस्य या स्त्री भार्याऽवरुद्धा पुनर्भूर्वा। स्त्रीग्रहणमभार्याया अप्यसंबन्धिन्याः प्रतिषेधार्थम्। दुष्टवाक् त्रिविधस्याक्रोशस्य कर्ता। साहसिक उक्तः। दण्डेन हन्ति दण्डपारुष्यकृत्। शक्रलोकभागिति सर्वत्रानुषङ्गः। स्तेनादीनां स्त्रीसंग्रहशेषोऽयमर्थवादः ॥ ३८६ ॥

**एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके॥**
**साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः॥ ३८७**

साम्राज्यं परप्राणयिता। स्वातन्त्र्यम्। सजात्येषु। समानस्पर्द्धिनो राजानः 'सजात्या' अभिप्रेताः। तेषु मूर्द्धन्यधितिष्ठति, तस्याज्ञाकराः भवन्तीत्यर्थः। लोके च यशस्करः कीर्तिमुत्पादयति। उभयत्रापि निग्रह एव कर्त्ता हेतुत्वात्। जनमारकोऽयं क्रोधन इति वदन्त्यपि तु स्तुवन्ति ॥ ३८७ ॥

**ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि॥**
**शक्तं कर्मण्यदुष्टं च तयोर्दण्डःशतं शतम्॥ ३८८ ॥**

यज्ञे कर्मकर ऋत्विग् होतोद्गात्रादिः। यद्यपि वरणोत्तरकालमाप्रयोगसमाप्तेस्तद्व्यपदेशस्तथाप्यत्र प्रारब्धकर्मणोरितरेतरत्यागे न विधिरयं किं तर्हि प्राग्वरणात्। भूतपूर्वगत्या ऋत्विग्व्यवहारः। यः प्रयोगान्तरे वृतः स एव शक्तः प्रयोगान्तरेऽपि वरितव्यः। न केवलं पूर्ववृतस्यायमत्यागः किं तर्हि तत्पित्रादिभिरपि। तथाहि 'पूर्वो जुष्टः स्वयं वृत' इति नारदः। न चायमैकपुरुषिको नियमः। किं तर्हि कुलधर्मोऽयम्। तथा च महाभारते संवर्त्तमरुत्तीयेषु प्रपञ्चितम्। तेन यत्कुलाः पित्रादिभिर्ऋत्विजो वृतास्त एव वरीतव्याः।

याजनकानामप्येष एव विधिः। तैरपि ते याजनीयाः। ऋत्विजं कृतार्त्विज्यं तत्कुलीनं वाऽन्यं यो न वृणीत यियक्षुः, अपि त्वन्यं याजकमर्थयेत्। शक्तं कर्मणि यज्ञे प्रयोगज्ञमदुष्टमभिशंशनाङ्गवैकल्यादिभिर्दोषैरयुक्तम्। एवमीदृश एवर्त्विगर्थ्यमानो यदि नाङ्गीकुर्याद्याजकत्वं अदुष्टमेभिरेव दोषैरनाक्रान्तं याज्यं शक्तं विद्वत्तया च। तादृशे त्यागे तयोः शतं दण्डः। ऋत्विक् शतं दाप्यो याज्यं त्यजन्, याज्य-ऋत्विजम्।

न केवलमयमृत्विग्याजकधर्मः, शिष्याचार्ययोरपि। तथाच गोतमः—(१२।१२ १३) "अथायाजकावृत्विगाचार्यौ पतनीयसेवायां च हेयावन्यत्र हानात्पतति" इति। दातृसंप्रदानयोरपि प्रतिग्रहे केचिद्धर्ममिममिच्छन्ति ॥३८८॥

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ॥
त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ॥३८६ ॥

माता न त्यागमर्हति। न त्याज्या। 'त्यागः' स्वगृहान्निष्कासनं मातृवृत्तेः स्खलितायाः, उपकारस्योपक्रियायामुदितायामकारणे। एवं पित्रादीनामपि व्याख्येयम्। सम्बन्धसाहचर्यात्स्त्री भार्यैवाभिप्रेता। अपतितानामेषां त्यागो नास्ति। मातुस्तु "न माता पुत्रं प्रतिपततीत्येक इति" शातातपः। भार्यायाश्चापि 'त्यागः' असंभोगो गृहकार्यनिषेधः। भक्तवस्त्रादिदानं तु न निषिध्यते। "योषित्सु पतितास्वपि—वस्त्रान्नपानं देयं च वसेयुः स्वगृहान्तिके" इति पठ्यते ॥ ३८६ ॥

आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ॥
न विब्रूयान्नृपो धर्मं चिकीर्षन्हितमात्मनः ॥३६० ॥

वानप्रस्थादीनामरण्याश्रमवासिनामाश्रमेषु कार्ये धर्मे संकटरूपम्—अयं शास्त्रार्थो नायमिति—इतरेतरं विवदमानानां न धर्मव्यवस्थां सहसा विब्रूयात्प्रभुतया निर्णयमन्येषामिव न कुर्यात्। कथं तर्हि? वक्ष्यमाणेन प्रकारेण। एवमात्मने हितं कृतं भवति—शास्त्रार्थत्यागो न भवतीत्यर्थः। गृहस्थानां चाश्रमित्वेऽपि यथोक्त एव निर्णयप्रकारः। कार्ये धर्मसंशयात्मकविवादपदम्। आश्रमग्रहणाच्च विशिष्टविषयता व्याख्यायते ॥ ३६० ॥

यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ॥
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥३६१ ॥

यथा तत्कर्तव्यं तथेदानीमाह । यो यादृशीं पूजामर्हति गुणानुरूपेण तं तथैवाभ्यर्च्य ब्राह्मणैर्मन्त्रिपुरोहितादिभिः । अर्चायां साहित्यं धर्मप्रवचने वा । तदा च ब्राह्मणाः सत्या विज्ञेयाः । तैः सह स्वधर्मं न्याय्यमर्थं बोधयेत् । सिद्धे सहत्वे सभ्येभ्य उपदेशः प्राधान्यार्थः । तान्पुरस्कुर्यात् । तथाहि । न राज्ञः क्रुध्यन्ति शास्त्रेण । प्रीतिस्तुतिवचनैः प्रथमं प्रशमय्य व्यपनीतक्रोधान्कृत्वा ततो ब्रूयात् ॥ ३९१ ॥

प्रतिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ॥
अर्हावभोजयन्विप्रो दण्डमर्हति मापकम् ॥ ३९२ ॥

विशन्त्यस्मिन्निति 'वेशो' निवासः—तत्प्रतिगतः 'प्रतिवेशः' गृहाभिमुखं, तत्र भवः प्रतिवेश्यः । आदिदीर्घपाठे स्वार्थिकोऽण् । एवमनुवेश्यः पृष्ठतो वसन्नुच्यते । तौ चेन्नभोजयेत् । यदि स्वगृहमानीय कल्याणे विवाहाद्युत्सवे विंशतिमात्रा यत्र द्विजा अन्ये भोज्यन्ते । तदा माषकं सुवर्णं दण्डं दाप्यः । हिरण्यमित्युत्तरत्र विशेषणादिहापि विज्ञायते । अर्हौ—यदि तौ प्रतिवेश्यानुवेश्यौ योग्यौ भवतः, न द्विषन्तौ नात्यन्तनिर्गुणौ ॥ ३९२ ॥

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन् ॥
तदन्नं द्विगुणं दाप्यो हैरण्यं चैव मापकम् ॥ ३९३ ॥

अप्रातिवेश्यार्थोऽयमारंभः । सब्रह्मचारिणामयं नियमः । श्रोत्रियस्तादृशमेव श्रोत्रियं गुणवन्तं भूतिकृत्येषु । भूतिर्विभवस्तन्निमित्तेषु कार्येषु—विभवे धनसंपत्तौ सत्यां यानि क्रियन्ते गोष्ठीभोजनादीनि । अथवा भूतिग्रहणं कृत्यविशेषणम् । भूतिमन्ति यानि कृत्यानि प्राचुर्येण प्रभूततया विवाहादीनि क्रियन्ते—यत्र विंशतेरधिकनरा भोज्यन्ते । तादृशेपूत्सवेषु अभोजयंस्तदर्थमन्नं यावत् भूतिकृत्येषु भोक्तव्यं तावद्द्विगुणं तस्मै दापयेत् । राज्ञे वा दातव्यं हैरण्यं माषकम् ॥ ३९३ ॥

अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः ॥
श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित्करम् ॥ ३९४ ॥

सप्तत्या स्थविरः । प्रकृत्या विरूप इतिवत्तृतीया । सप्ततिर्वर्षाणि यस्य जातस्य स एवमुच्यते । श्रोत्रियेषु वेदाध्यायिषूपकुर्वन्पादशुश्रूषादिना कारुकर्मणा वा । एते

न केनचिद्'शिल्पिनो मासिमासीत्यादि' ( मनु ७।१३८ ) दाप्याः । क्षीणकोशेनापि न दाप्या इति केनचिद्ग्रहणम् ।। ३९४ ।।

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिंचनम् ।।
महाकुलीनमार्यं च राजा संपूजयेत्सदा ।। ३९५ ।।

संपूजनमनुग्रहः । अनेकार्थत्वाद्धातूनाम् । न हि बालादीनामन्या पूजोपपद्यते । श्रोत्रियोऽत्र ब्राह्मण एवेति स्मरन्ति । आर्त्तः प्रियवियोगादिना । अकिंचनो दुर्गतः । महाकुलीनः । ख्यातिधनविद्याशौर्यादिगुणे कुले जातो 'महाकुलीनः' । आर्य ऋजुप्रकृतिरवक्रः । एतेषां दानमानादिभिरनुग्रहः कर्तव्यः ।

केचिदकिंचनं महाकुलीनविशेषणं व्याचक्षते ।। ३९५ ।।

शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः ।।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ।। ३९६ ।।

शाल्मली नाम वृक्षस्तद्विकारे फलके । स हि प्रकृत्यव श्लक्ष्णो भवति । न च वाससोऽपि पातैरवयवा अस्य च्यवन्ते । ते हि च्युता वासः पाटयेयुः । न चायं जातिनियमोऽदृष्टाय । तेनान्यदपि यत्काष्ठमेवंस्वभावं तत्फलके न दोषः । श्लक्ष्णेऽपरुषे च । वासांस्यन्यदीयान्यन्यदीयैर्वासोभिर्न निर्हरेत् । बद्ध्वोपरिवेष्ट्य तीर्थे प्रक्षालयितुं न नयेत् । बन्धनाद्वाससां विनाशो माऽभूत् । अधिकं हि तानि पीडितानि भवन्ति । न च वासयेत् । अन्यदीयानि वासांस्यन्यस्मै न प्रयच्छेत् । मूल्येन वसनार्थं न दद्यात् । एतद्धि 'वासने'--वस्तेऽपरः, तं रजको वासयति । अश्रुतत्वाद्दण्डस्य प्रकृतमाषकयोजना कर्तव्या ।। ३९६ ।।

तन्तुवायो दशपलं दद्यादेकपलाधिकम् ।।
अतोऽन्यथा वर्तमानो दाप्यो द्वादशकं दमम् ।। ३९७ ।।

तन्तून्वयति तन्तुवायः कुविन्दः । शाटकादः पटस्य कर्ता । स सूत्रपलानि दश गृहीत्वा शाटकं वयन् एकपलाधिकं वस्त्रं दद्यात् । अनया वृद्ध्या सर्वं दद्यात् । स्थूलसूक्ष्मादिवाससां रोमवतां च कल्पना कर्तव्या । अन्यथा द्वादशपणो दण्डः । वृद्ध्यदानेऽयं दण्डः । मूलच्छेदे तु गणोक्तः । एवं विंशतिपलं यदि न ददाति वृद्धिं द्विगुणो दण्डः । एवं कल्पना कार्या—त्रिगुणश्चतुर्गुण इत्यादि । अन्ये तु दण्डं राजभागमित्याहुः ।। ३९७ ।।

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ॥
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥ ३९८ ॥

येषु प्रदेशेषु शुल्कमादीयते तानि शुल्कस्थानानि राजभिर्वणिग्भिः स्वप्रतिदेशनियतानि कल्पितानि। तेषु स्थानेषु ये कुशलाः शौल्किकाः—ये धूर्तैर्न शक्यन्ते वंचयितुं तथा सर्वेषां पण्यानामागमक्रयविक्रयक्षयव्ययसारासारादिविधिज्ञाविचक्षणाः। ते भाण्डस्यागतस्य देशान्तरान्नीयमानस्य वाऽर्घं कुर्युः। ततो विंशतिभागं राजा गृह्णीयात्। "किंपुनरर्घकरणेन। एतावदेव वक्तव्यं पण्यानां विंशतिभागमिति"। सत्यम्। यदा स्वरूपेण द्रव्यं राजा गृह्णाति। स्वरूपकान्युपयुज्यन्ते साटकादीनि—तत्र विंशतिभागः न पाटनमन्तरेणोपपद्यत इत्येवमर्थमर्घकरणम्। अविक्रेयाणामात्मोपयोगिनां नास्ति शुल्क इति ज्ञापितुं यथापण्यम्। एवं कालानुरूप्येण। न सर्वपण्यं सर्वदा विक्रियत एकरूपेणार्घेण। अतो देशकालापेक्षया पण्यानामर्घव्यवस्था, न नियतोऽर्घ इति ॥३९८॥

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ॥
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥ ३९९ ॥

राज्ञः संबन्धितया प्रख्यातानि यानि भाण्डानि राजोपयोगितया—यथा हस्तिनः, काश्मीरेषु कुंकुमम्, प्राच्येषु पट्टोर्णादीनि, प्रतीच्येष्वश्वाः, दाक्षिणात्येषु मणिमुक्तादीनि। यद्यस्य राज्ञो विषये सुलभमन्यत्र दुर्लभं तत्र तस्य 'प्रख्यापनं' भवति। तेन हि राजान इतरेतरं संदधते। प्रतिषिद्धानि यानि राज्ञा मदीयाद्देशान्नैतदन्यत्र नेयम् अत्रैव वा विक्रेयं यथा दुर्भिक्षे धान्यमित्येवमादीनि लोभान्निर्हरतो देशान्तरं नयतो विक्रीणानस्य वा सर्वहारं हरेत्सर्वहरणं 'सर्वहारः'। अयं धनलोभान्नयतो दण्डः। राजान्तरोपायनार्थं त्वधिकतरः शारीरोऽपि दुर्गावरोधादिः ॥ ३९९ ॥

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ॥
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥ ४०० ॥

क्रयविक्रयी वाणिजक उच्यते। शुल्कस्थानं परिहरन्नुत्पथेन गच्छन्। अकाले वा रात्रौ शुल्काध्यक्षेषु गतेषु। संख्याने मिथ्यावादी न्यूनं कथयति गणनायाम्। उपलक्षणं चैतत्संख्यानम्। तेन प्रच्छादनेऽप्येष एव विधिः। दाप्यो-

ऽष्टगुणमत्ययं दण्डः । यावदपह्नुते तावदष्टगुणम्, यावान्वा तस्यापह्नुतस्योचितः शुल्कस्तमष्टगुणं दाप्यः । आद्यमेव युक्तम् । 'अत्यय'शब्दो हि तत्र समंजसः तद्धेतुत्वाद्द्रव्ये ।

अन्ये त्वकाले क्रयविक्रयी इति संवन्धं कुर्वन्ति । अकालश्चागृहीते शुल्के रहसि वा प्रतिषेधोऽयम् ॥ ४०० ॥

आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ ॥
विचार्य सर्वपण्यानां कारयेत्क्रयविक्रयौ ॥ ४०१ ॥

आपणभूमौ ये विक्रेतारस्ते न स्वेच्छया मूल्यं कर्तुं लभेरन्नापि राजा क्रीणीयात् स्वरुचिकृतेन मूल्येन । कथं तर्हि । इदमिदं निरूप्यम् । आगमम्—किंप्रत्यागच्छति देशान्तरादुत न, तथेयतो दूरादागच्छति एवं निर्गमस्थाने । किं संप्रत्येव विक्रियत उत तिष्ठति । संप्रति निष्क्रामतो द्रव्यस्य स्वल्पोऽपि लाभो महाफलस्तदुत्थितेन मूल्येन द्रव्यान्तराविषयेण क्रयविक्रयेण पुनर्लाभः । स्थानात् वृद्धिक्षयौ । कियत्यस्य वृद्धिस्तिष्ठति कीदृशो वा क्षयः— इत्येतत्सर्वं परीक्ष्य स्वदेशे क्रयविक्रयौ कारयेत् । यथा न वणिजां पीडा भवति नापि क्रेतॄणां तथाऽर्घं व्यवस्थापयेत ॥४०१॥

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते ॥
कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः ॥ ४०२ ॥

आगमनिर्गमनादेर्द्रव्यस्यानित्यत्वादुपचयापचयावर्घस्यानेकरूपौ । ततोऽर्घसंस्थापनं पञ्चरात्रे पञ्चरात्रे प्रत्यक्षीकार्यं, न सकृत्कृतं मन्तव्यं, नापि वणिजो विश्वसितव्याः किंतर्हि स्वयं प्रतिजागरणीयम् । यद्द्रव्यं चिरेण निष्क्रामति तत्र पक्षेऽर्घगवेषणमन्यत्र पाञ्चरात्रिकम् ॥ ४०२ ॥

तुला मानं प्रतीमानं सर्वं च स्यात्सुलक्षितम् ॥
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत् ॥ ४०३ ॥

तुला प्रसिद्धा । मानं प्रस्थो द्रोण इत्यादि । प्रतीमानं सुवर्णादीनां परिच्छेदार्थं यत्क्रियते । सर्वतोभागे तत्सुलक्षितं राजचिह्नैरङ्कितं कार्यम् । स्वयं प्रत्यक्षेण परिच्छिद्य स्वमुद्रया । परीक्षयेत् षट्सु षट्सु मासेषु पुनः परीक्षां कारयेदाप्तैरधिकारिभिर्यथा न विचालयन्ति केचित् ॥ ४०३ ॥

पणं यानं तरे दाप्यं पौरुषोऽर्धपणं तरे ॥
पादं पशुश्च योषिच्च पदार्धं रिक्तकः पुमान् ॥ ४०४ ॥

नदीतीरे यानं गन्त्री शकटादि तरेण पणं दाप्यम्। भाण्डपूर्णानामुत्तरत्रोपदेशाद्रिक्तभाण्डानां यानानां यानद्रव्यानयनार्थमुत्तार्यमाणानामयं राजभागः पौरुषवाह्यो भारो द्रव्यानयनार्थमानीयमानोऽर्धपणं दाप्यः। पशुर्गोमहिष्यादिः पादम्। स्त्री च। रिक्तको न किंचित्। यो गृहीतवान्भारं स पुमान्पादार्धं दाप्यः। रिक्तस्य पुंसो नदीलङ्घनसामर्थ्यसंभावनया लाघवादल्पमादानम्। स्त्री अशक्तत्वात्स्वयं तरणे बहु दाप्यते। तरे तरनिमित्तम् ॥ ४०४ ॥

भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ॥
रिक्तभाण्डानि यत्किंचित्पुमांसश्चापरिच्छदाः ॥ ४०५ ॥

भाण्डं द्रव्यं वस्त्रव्रीह्यादि—तेन पूर्णानि यानानि सारतस्तार्यं तारार्थं दाप्यानि। यदि महार्घं वस्त्रादि तत्र बह्वारोपितं तदा बहु दाप्यानि, अथ व्रीह्यादिना नातिभारेण तदाल्पम्। एवं नद्याः सुतरदुस्तरत्वेन कल्पना कर्तव्या। रिक्तभाण्डानि यानानि यत्किंचित्—पणपादानि। भाण्डशब्दोऽत्र धनवचनः। ये चापरिच्छदाः ते न पादार्धमपि तु यत्किंचित्ततोऽधिकं न्यूनं वा। अत्र न शक्यो नियमोऽतः कल्पनैव शास्त्रार्थः ॥ ४०५ ॥

दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ॥
नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥ ४०६ ॥

पारावारोत्तारणे पूर्वं दानम्। अयं नावा ग्रामान्तरगमने। दीर्घाध्वनि योजनादिपरिमाणेन गन्तव्ये। यथादेशं—यस्मिन्देशे यत्तरिदानं नाविकैः स्थापितं तदेव। यथाकालं—कालो वर्षादिर्बहूदकस्तत्रान्यन्मूल्यम्। स्वल्पोदकायां सरिति चिरेण ग्रामप्राप्तौ नाविकानामधिकतरायासवतामधिकमूल्यम्। तरमूल्ये कारणे कार्यशब्दस्तरो भवेदिति। यावद्यावद्दीर्घो देशस्तावत्तावत्तरपणो वर्धते। एतच्च नदीतीरेषु विद्यात्। समुद्रे सागरे नास्ति तरलक्षणम्। न शक्यते लक्षयितुं कति योजनानि नौर्व्यूढा येन तदनुसारेण मूल्यं कल्प्यते। नदनदीषु शक्यते ज्ञातुमयं पन्था योजनमात्रो द्वियोजन इति। तत्र हि तत्र ग्रामाः परिमाणचिह्नम्। तत्रैकयोजनेऽध्वनि

यन्मूल्यं द्विगुणं तद्द्वियोजने । समुद्रे तु बहुवाह्या नौः, न च सुष्ठु शक्यते योजनादिपरिच्छेदः कर्तुम् । अत एवोक्तं समुद्रे नास्ति लक्षणमिति ॥ ४०६ ॥

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ॥
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥ ४०७॥

द्वाभ्यां मासाभ्यामृतुदर्शनस्य व्यक्तगर्भा स्त्री भवति तस्या अनुग्राह्यत्वात्तरपणो न ग्राह्यः । प्रव्रजितश्चतुर्थाश्रमी । मुनिस्तापसः । ब्राह्मणा लिङ्गिनो ब्रह्मचारिणः । ब्राह्मणग्रहणं विशेषणम् । तेन वाह्यप्रव्रज्यालिङ्गधारिणां नैष विधिः । तरप्रयोजनं तारिका पणादितरनिमित्तं न दाप्याः । वृत्तानुरोधात् तारिकमिति सिद्धे तरग्रहणम् ॥ ४०७ ॥

यन्नावि किंचिद्दाशानां विशीर्येतापराधतः ॥
तद्दाशैरेव दातव्यं समागम्य स्वतोंऽशतः ॥ ४०८ ॥

नाव्यारोपितभाण्डं तरणिकायां यदि दाशानां नाविकानामपराधादावर्तमानजलेन प्रदेशेन नयतां वा तत्स्थानं ज्ञात्वा दृढवन्धेन जलप्रवेशमकुर्वतां वध्र्यादिनद्धीभिरयोमयोभिश्चर्मवन्धैः सूत्रवन्धैर्वा शिथिलीकृतवतां—यदि भाण्डं विशीर्येत विनश्येत तदा तैरेव दातव्यं स्वतोंऽशतः स्वभागाद्भाण्डस्वामिने । समागम्य यावन्तो नाव्यारूढा दाशाः ॥ ४०८ ॥

एष नौयायिनामुक्तो व्यवहारस्य निर्णयः ।
दाशापराधतस्तोये दैविके नास्ति निग्रहः ॥ ४०९ ॥

नौभिर्यान्ति तच्छीला नौयायिनस्तेषामेष विधिरुक्तो यथा दाशापराधाद्यद्भ्रष्टमुदके तद्दद्युः । दैविके दोष उत्पाते वातादिना नौभङ्गे नास्ति नाविकानां द्रव्यनाशे निग्रहः ।

एष स्थले भाण्डवाहकानां भारिकाणां वा न्यायः । यद्यप्रमादेन प्रक्रामति भारिको गृहीतदण्डावलम्बनो दृढवन्धोपरिभागोऽकस्माद् वृष्ट्या पथि कर्दमीकृते पतितस्य भाण्डं नश्येन्न भारिकस्य दोषः स्यात् ॥ ४०९ ॥

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च ॥
पशूनां रक्षणं चैव दास्यं शूद्रं द्विजन्मनाम् ॥ ४१०॥

इह केचिद्व्याचक्षते—अनिच्छन्तावपि वैश्यशूद्रौ वलादेव तानि कर्माणि कारयितव्यौ यतः एतयोः स्वधर्मोऽयम् । सत्यपि दृष्टार्थत्वेऽदृष्टार्थता विद्यते नियमविधित्वात् । एवं च सति ब्राह्मणोऽपि हठात्प्रतिग्राहयितव्य इत्यापतति । पक्ष एव दोषत्वेनायमुक्त इति चेदत्राप्येप एव पक्षः ।

तदयुक्तम् । सत्यां धनार्थितायां शास्त्रतो नियमः । न तु विधिनिवन्धनैव प्रवृत्तिः । यत्र स्वयं प्रयोजकमस्ति तत्र न विधेः प्रयोक्तृत्वम् । नियमांशे तु विधेर्व्यापारः । स चेदृशो नियमः । वैश्यमेव कारयेद्वाणिज्यम्—अन्यं कुर्वाणमसत्यामापदि दण्डयेत् । एवं ब्राह्मणमेव प्रतिग्रहम् । तथा च प्रतिग्रहसमर्थोऽपि सन्तोपपरश्च यदपि श्रूयते—'अनिच्छतोऽपीति' (४१२) सोऽर्थवादः । शूद्रमेव दास्यमित्येवं सर्वत्र नियमरूपता द्रष्टव्या ॥ ४१० ॥

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
विभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ॥ ४११ ॥

वृत्त्या कर्शितौ ब्राह्मणो विभृयाद्भक्तदानादिना क्षत्रियवैश्ययोर्भरणं कुर्यात् । आनृशंस्येनानुकम्पया स्वानि कर्माणि कारयेत् । ब्राह्मणस्व यानि स्वानि समित्कुशोदकुंभाहरणादीनि । अथवा क्षत्रिवैश्ययोर्यानि स्वानि । क्षत्रियो ग्रामरक्षादौ नियोक्तव्यो वैश्यः स्वकृपिपशुपाल्यादौ । महाधनो यो ब्राह्मणो महापरिच्छदश्च सामर्थ्यात्तस्यैप विधिः । स्वानि कर्माणीति वचनात् दास्यं न कारयितव्यौ गर्हितोच्छिष्टमार्जनादि ॥ ४११ ॥

दास्यं तु कारयंल्लोभाद्ब्राह्मणः संस्कृतान्द्विजान् ।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि पट् ॥ ४१२ ॥

संस्कृता उपनीताः । यद्यपि द्विजग्रहणादेवैतल्लभ्यते तथापि त्रैवर्णिकजात्युपलक्षणार्थं न विज्ञायीति । यो ब्राह्मणः समानजातीयान्दास्यं पादधावनोच्छिष्टावकरणसंमार्जनादिरूपमनिच्छतः । प्रभवतो वाचः प्राभवत्यं प्रभुत्वम् । शक्यतिशययोगतो वलादिना यः कारयति स पट्शतानि दण्ड्यः । लोभादेतद्, द्वेषादिभिस्त्वधिको दण्ड्यः । शत्रन्तस्य भवतेर्भावप्रत्यये प्राभवत्यादिति रूपम् । प्रभुत्वेनेति वचनाद्गुरोर्न दोपः । अनिच्छत इति वचनादिच्छतामल्पो दण्डः ॥ ४१२ ॥

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयंभुवा ॥ ४१३ ॥

क्रीतमक्रीतं भक्ताद्युपनतम् । वक्ष्यमाणस्य विधेरनुवादोऽयम् । दास्यायैवेत्यर्थवादः ॥ ४१३ ॥

न स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते ।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति ॥ ४१४ ॥

यमाश्रितः सप्तभिर्दासयोनिभिस्तेन निसृष्टोऽपि तन्मुक्तोऽपि । न स्वामिना निसृष्टोऽपि दास्याद् विमुच्यते । किन्तु निसर्गजं सहजं जातिसहभाविकः, तस्माच्छूद्राद् तत् दास्यमपोहत्यपनयति । यथा शूद्रजातिर्न तस्यापनेतुं शक्यैवं दास्यमपि । अर्थवादोऽयम् । यतो वक्ष्यति निमित्तविशेषे शूद्रस्य दास्यान्मोक्षम् ॥ ४१४ ॥

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥ ४१५ ॥

ध्वजग्रहणं वाहनोपलक्षणार्थम् । ध्वजिनी सेनोच्यते । तत आहृतः । संग्रामे जितः सन्दासीकृतः । "किंपुनरिदं क्षत्रियस्य वचनम्—युद्धे जितः क्षत्रियो दासीभवति ।" नेति ब्रूमः । शूद्रस्यैव प्रकृतत्वात् । "दास्यायैव हि सृष्टोऽसौ" इति । स्वामिनं जित्वा तदीयो दास आहृतः । आहर्तुर्दास्यं प्रतिपद्यते । "ननु शूद्रस्याविशेषेणैव दास्यमुक्तं 'निसर्गजं तत्तस्य' इति ।"

नैवम् । तथा सत्यव्यवस्था स्यात्—कस्यासौ दास इति न विज्ञायेत । सर्वे हि त्रैवर्णिकास्तस्य दास्याः । स्वधर्ममनुवृत्तस्य चानियमोऽविधित्वात् ।

अन्ये तु'सर्वं चोत्तरोत्तरं परिचरेयुरिति क्षत्रियादीनामपि दास्यमस्ति' (गौतम० १०।६६ ) ।

तदसत् । अन्यद् 'दास्यम्' अन्या 'परिचर्या' । निकृष्टकर्मकारित्वमप्यज्ञातस्य 'दास्यम्', सर्वस्य प्रेपितस्याप्रतिबन्धः । 'परिचर्या' तु शरीरसंवाहनमर्थदारादिरक्षाधिकारः । नारदेन चैतत्प्रपञ्चितम् ।

भक्तलाभार्थं दास्यं प्रतिपन्नो भक्तदासः

गृहे जातो गृहजः । दास्यामुत्पन्नो गर्भदासः ।

क्रीतो मूल्येन स्वामिनः सकाशात् ।

दत्रिमः प्रीत्याऽदृष्टार्थं वा दत्तः ।

क्रमागतः पैत्रिकः ।

"अथ गृहजस्यास्य च को विशेषः"

गृहजस्तदीयायामेव दास्यां जात इतरस्तु क्रमागतः ।

दण्डदासो राज्ञे दण्डं दातुमशक्ता दासीक्रियते । "कर्मणाऽपि समं कुर्यात्" इत्यन्यवर्णस्यापि दास्यमिच्छन्ति । तदयुक्तम् । अन्यद्दास्यमन्यच्च तत्कर्मकारित्वम् । न चायं दण्डो येनान्तर्भवेत् । न च दासयोनिपुरुषधारणमुक्तं, केवलं कर्मणापीति । तथा दासकर्माऽप्यस्ति ।

"ननु च धर्मोपनतोऽपि शूद्रो दास इष्यते । तत्र कथं सप्त दासयोनयः" ।

नैष दोषः । न तस्यौत्पत्तिकं दासत्वम् । इच्छाधीनत्वाद्धर्मार्थिनः । न हि तस्य दानाधानक्रिया युज्यते--क्रीतगृहजादिदासवत् । एवं ह्युक्तं—'यथायथा हि सद्वृत्तमिति' ( १० । १२८ ) । तेनैवं ब्रुवतैतत्प्रदर्शितं भवति—न तस्य नित्यं दास्यं किं तर्हि फलविशेषार्थिनः । ततश्चानिच्छतो न दास्यमस्ति । अतो यदि शूद्रो विद्यमानधनः स्वातन्त्र्येण जीवेद्ब्राह्मणाद्यनपाश्रितो न जातु दुष्येत् ॥ ४१५ ॥

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ॥
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ४१६ ॥

एते त्रयोऽर्जितधना अप्यधनाः । स्वामिनो धनम् । यत्किंचित्ते धनमर्जयन्ति तद्धनं तस्य स्वं यस्य ते स्वत्वमापन्नाः । भार्याधनं भर्तुः, पितुः पुत्रस्य, स्वामिनो दासस्य ।

"ननु च यद्येते निर्धनाः कथमेषां कर्मभिरधिकारः । तत्रेदं नोपपद्यते—'पुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता दद्यात्तेभ्यः पुत्र' इति । दम्पत्योरपि सहधर्मश्चरितव्यः । "धर्मे चार्थे च कामे च नातिचरितव्या त्वयेति" । यदि च निर्धनाः कोऽन्योर्थेऽनतिचारः । शूद्रस्यापि 'पाकयज्ञैः स्वयं यजेतेति' निर्धनत्वे विरुध्यते । स्वच्छन्दशूद्रविषयत्वेन विरोधो न भवेत् । अस्ति तावद्दासानां स्वधने स्वाम्यं, यदा स्वधनमिति व्यपदिश्यते । न ह्यसति संबन्धे व्यपदेशः । अर्जनं च स्वत्वं

नापादयंतीति विप्रतिपिद्धम् । तस्माद्विरुद्धमिदं यत्ते समधिगच्छन्ति न तत्तेषां स्वमिति । यथा कश्चिद् ब्रूयाद्यस्या अहं पुत्रः सा न मम जननीति तादृगेतत् । असति वा स्त्रीणां स्वाम्ये पत्न्यै वा तदनुमतं क्रियते । "पत्नी वै पारिणाह्यस्येष्टे" इत्यादि श्रुतयो निरालम्बनाः स्युः" ।

अत्रोच्यते । पारतन्त्र्यविधानमेतत् । असत्यां भर्तुरनुज्ञायां न स्त्रीभिः स्वातन्त्र्येण यत्रक्वचिद्धनं विनियोक्तव्यम् । एवं पुत्रदासयोरपि द्रष्टव्यम् ।

अन्ये तु मन्यन्ते—भार्यापुत्रग्रहणं दासार्थम् । तस्य चैतद्वचनमुत्तरार्थम् । आपदि तेषां धनग्रहणे न विचिकित्सितव्यं—भर्तुरेव हि तत्स्वम् ॥ ४१६ ॥ तथा हि—

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ॥
न हि तस्यास्ति किंचित्स्वं भर्तृहार्यधनो हि सः ॥ ४१७ ॥

अत्र कश्चिदाह—"धर्मोपगतशूद्रविषयमिदम्" । तदयुक्तं, विशेषे प्रमाणाभावात् । तस्मात्सर्वस्य दासः शूद्रस्तस्यैव प्रतिग्राह्यत्वमुच्यते ।

विस्रब्धं निःशङ्कम् । शूद्रधनं कथं प्रतिगृह्णीयात्प्रतिपिद्धं हि तदित्येषा शङ्का न कर्तव्या । यतो न तस्य किंचिदर्थो यस्य निचयः स्यादित्युक्तं भवति । स्वामी न ह्रियते धनस्य एतदेवार्जने तस्य प्रयोजनं स्वामी हीयते । अतो विश्रब्धं द्रव्योपदानं द्रव्यग्रहणं कुर्यात् । तेनोपनीयमानमपि स्वगृहस्थमिव विनियुञ्जीत । सति प्रयोजन एतदुक्तं भवति—अविद्यमानधनस्य दासाच्छूद्रात्प्रतिगृह्णतो न दोषः ॥ ४१७ ॥

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ॥
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत् ॥ ४१८ ॥

कर्म व्यतिक्रामन्तः क्षोभयेयुराकुलीकुर्युर्जगत् । अतस्ते प्रयत्नेन स्वकर्मभ्यश्च्यावयितुं न लभेरन् । अनल्प एवातिक्रामे भूयसा दण्डेन योजनीया वैश्या अपि । बन्धनं नास्त्यपि, धनशक्यः स्वधर्मः ॥ ४१८ ॥

अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च ॥
आयव्ययौ च नियतावाकरान्कोशमेव च ॥ ४१९ ॥

राजधर्माणामनुसन्धानार्थम् । कर्मान्ताः कृषिशुल्कस्थानादयः । वाहनम् हस्त्यादि । आयव्ययौ—इदमस्य प्रविष्टमिदं निर्यातमित्येव सततं गवेषणीयम् ।

आकरा धातवः सुवर्णाद्युत्पादे भवन्ति भूमयः । कोशो द्रव्यनिचयस्थानम् ॥ ४१९॥

एवं सर्वानिमान्राजा व्यवहारान्समापयन् ॥
व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमां गतिम् ॥ ४२० ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां राजधर्मे व्यवहारनिर्णये सामान्यव्यवहारो नामाष्टमोऽध्यायः ॥ ८ ॥

उक्तेन प्रकारेण व्यवहारानृणादीन्समापयन्निर्णयावसानं कुर्वन्यत्किञ्चित्तत्सर्वमविज्ञातदोषं तत्सर्वं व्यपोह्यापनुद्य पापं—परमां गतिमभिप्रेतां स्वर्गापवर्गभूमिं प्राप्नोति लभते ॥ ४२० ॥

इति श्री भट्टमेधातिथिविरचिते मनुभाष्येऽष्टमोऽध्यायः ॥

---

## अथ नवमोध्यायः ९ ।

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ॥
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥ १ ॥

स्त्रीसंग्रहणानंतरं विवादपदनिर्देशः "स्त्रीपुंधर्मो विभागश्चेति" । (८-७) तदिदानीमुच्यते अत्यन्त + + + + + + + + + + + + + + + + + + + + द्युपसृष्टेन भर्त्रा कथंचिदपि वाध्यमानया तेन सह राजनि विवदितव्यमिति + + + + + + + + + + + + + + + + + + + + विध एव न्यायानुवर्तिनि न द्वेषमत्सरादिमतिभार्यायां तथा च विशील + + + + + + + + + + + + + + + + + + + + ति तथाविधस्य पत्युरुप-

चर्योक्ता। न भार्यां प्रति प्रभुत्वम्। उपचारश्च भृत्यच्छुश्रूषा पादसंवाहनादि + + + + + + + + + + + + स्त्रीपुरुषशब्दौ च यद्यपि लिङ्गविशेषावच्छिन्नमनुष्यजातिवचनौ तथापीह सम्बन्धिनि जायापत्या + + + + + + + + + "अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशमिति" (श्लो० २) स्वग्रहणेन संबन्धितां लक्षयति। वर्तमानप्रतिज्ञावचन + प्रयोजन + + + + + + भर्तुः स्त्रियाश्च जायायाः संयोगे एकत्र संनिधाने तथा विप्रयोगे प्रवासप्रयाणे + + + + धर्मे या वृत्तिः प्रसाधनं शरीररक्षा हि + + + + + + + + + + + + + + + + + + + + + + + + + + + तान्वक्ष्यामि। शाश्वतग्रहणं स्तुतिः। धर्म्ये वर्त्मनि तिष्ठतोः—अनुवादोऽयम्। न्याय्यो धर्मशास्त्राचारनिरूढो मार्गः ॥ १ ॥

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ॥
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ २ ॥

स्वेच्छया स्त्रीणां धर्मार्थकामेषु व्यवहर्तुं न देयम्। यत्किंचन धनं धर्मादौ विनियुज्यते तत्र यथावयः स्वपुरुषाः पत्यादयोऽनुज्ञापनीयाः। 'स्वपुरुषाः' रक्षाधिगताः "पिता रक्षती" त्यादिनिर्दिष्टाः। विषयेषु हि गीतादिषु सज्जन्त्यः प्रसङ्गं कुर्वन्त्य आत्मनो वशे स्थाप्याः ततो निवारणीयाः। यद्यप्यस्वतन्त्रा इत्यनेनैव सर्वक्रियाविषया स्वातन्त्र्यनिवृत्तिरुपदिष्टा भवति तथापि पुनर्विषयव्यावृत्तिवचनं यत्नतः परिहारार्थम्। मा विज्ञायि यत्तेभ्य एव परपुरुषसंपर्कादिभ्यो निवारणीयाः गृहावस्थितास्तु मद्यपानादिसक्ता न दुष्यन्ति।

चशब्देन तावदयं धर्मः पुरुषाणामुक्तः—स्वातन्त्र्यं स्त्रीणां तावन्न देयम्, अर्थात्तु ताभिरपि स्वतन्त्राभिर्न भवितव्यमित्युक्तं भवति। एवं च "पुरुषस्य स्त्रियाश्चैवेति" चशब्द इतरेतरविषययोर्ये स्त्रीपुंसयोर्धर्मास्त एवोच्यन्ते। न तु यागादय इति समन्वयो भवति ॥ २ ॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥

'रक्षा' नामानर्थप्रतीघातः। अनर्थस्त्वनाचारवृत्तातिक्रमेणाप्रवृत्तिपरेण चान्यायतो धनहरणादिना परिभवः। तस्य प्रतीघातो निवारणम्। तत्पित्रादिभिः

कर्तव्यम्। रक्षतीति भवन्तिर्लिङर्थे छान्दसत्वात्। ततो रक्षेदिति विधेयप्रत्ययः। वयोविभागश्रवणं चाधिकतरदोषार्थम्। सर्व एव तु सर्वदा रक्षार्थमधिक्रियन्ते। कौमारग्रहणं दानात्पूर्वकालोपलक्षणार्थम्। एवं यौवनं जीवद्भर्तृकायाः प्रदर्शनम्। अतश्च नित्यानुवाद एवायम्। यदा यदा यदधीना तदा तदा तेनावश्यं रक्षितव्या। तथा च जीवत्यपि भर्तरि पितुः पुत्रस्य चाधिकारः। तथा दर्शितं मानवे। सर्व एते सर्वदा तत्संरक्षणं कुर्युः। कथ्यमानं तु ग्रन्थगौरवं करोति।

"ननु च 'बालया वा युवत्या वे'त्यनेनोक्तमेवैतत्"।

मैवम्। अन्यदेवास्वातन्त्र्यमन्या च रक्षा। तत्र चास्वातन्त्र्यमुपदिष्टम्, इह तु रक्षोच्यते। अन्यतन्त्राया अपि शक्योऽनर्थः प्रतिहन्तुम्।

"ननु चेहापि पठ्यते 'न स्त्री स्वातन्त्र्यमर्हतीति'।"

उच्यते। नानेन सर्वक्रियाविषयमस्वातन्त्र्यं विधीयते, किंतर्हि, नास्वतन्त्राऽन्यमनस्का स्वात्मसंरक्षणाय प्रभवति शक्तिविकलत्वात्स्वतः। पञ्चमे तु वचनमस्वातन्त्र्यार्थमर्थान्तरस्य तत्रोक्तत्वात्॥ ३॥

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः॥
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता॥ ४॥

दानकाले प्राप्ते यदि पिता न ददाति + + + + + + + + + + यः। कः पुनः कन्याया दानकालः। 'अष्टमाद्वर्षात्प्रभृति प्रागृतोरिति' स्मर्यते। इहापि लिङ्गमस्ति + + + + + + + + + + + + + + + + + तिः। अनुपयन्नगच्छन्नरमयन्भार्याभिर्निघ्नः। उपगमने कालश्च ऋतुः सद्व्रतस्य पर्ववर्ज्यमित्युक्तः॥ ४॥

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रिया रक्ष्या विशेषतः॥
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥ ५॥

प्रसङ्गः कुसंपर्कः। यया कदाचिदविज्ञातशीलया + + + + + + + + + ण बालेन वा गृहद्वारावस्थानादिनोज्ज्वलवेषपुरुषदर्शनशीलयेत्येवमादय उच्यन्ते। अर्थाच्चित्तचलने + + + + + + + + + क्ष्यत्वं चैषाम्। नैते किल साक्षाद्दोषरूपाः। न हि साक्षात्स्त्रीसंपर्कः स्त्रियो दोषरूपाः + + + + + + + + + + + + सूक्ष्मादित्युच्यते। ततो रक्ष्याः निवारणीयाः। विशेषतः प्रयत्नेन निवारणे दारदः + + + + + + + + + + + + + + + + +

तश्च । सर्वैस्तत्कुलीनैर्भ्रातृपितृव्यदेवराद्यै रक्षितव्या इति सिद्धं भवति । न तत्रा + + + + + + + + + + + + + + ॥ ५ ॥

इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ॥
यतन्ते रक्षितुं भार्यां भर्तारो दुर्वला अपि ॥ ६ ॥

चातुर्वर्ण्यस्य एष उत्तमो + + + + + + × × × × × × × × × × × पश्यन्तो जानानाः दुर्वला अपि भर्तारो भार्यां रक्षितुं यतेरन्प्रयत्नं कुर्युः । लिङर्थे भवन्ती । यत × × × × × + × × × × × × × + × वस्त्वनिजगुप्तीतमत-रेयत्तत्र मणापरिवृत्तं वहिराविरोद्धिजातं वधूवपुरहोरतयेऽतिरागात् । अ × × × × × × × × × × क्षाभाय कियंचिन्नियमेनवतिद्युमानाराजकुलमाश्रयादिना रक्षितव्या ॥ ६ ॥

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ॥
स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति ॥ ७ ॥

न केवलं शास्त्रोपदेशादेव स्त्रीरक्षा कर्तव्या, यावदिमानि वहूनि प्रयोजनानि प्रसूतिरपत्यं पुत्रदुहितृलक्षणम् । संकरो न भवतीत्यर्थः । चरित्रं शिष्टसमाचारः । कुलं पूर्वोक्तम् । कस्यापि सत्कुलस्य भ्रष्टशीलायां भार्यायां दोषः सर्वं कुलमुपतिष्ठतीति— न साध्व्यः स्त्रिय एतेषामिति । अथवा पितृपितामहादीनां संततिशुद्ध्यभावादौर्ध्वं-दैहिकस्यानिवृत्ते रक्षा स्यात् । आत्मानम् । प्रसिद्धमुपपतिनाऽवश्यं हन्यते भार्ययैव वा विषादिना । स्वं च धर्मम् । व्यभिचारिण्या धर्मानधिकारात् । अतो जायां रक्षिता सर्वमेतद्रक्षति ॥ ७ ॥

पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ८ ॥

अर्थवादोऽयम् । न च पत्या पत्न्या उदरे प्रवेशदर्शनम् । अतः शरीरसारभूत-शुक्रद्वारेण गुणवादतः प्रवेशाऽयमुच्यते । "आत्मा वै पुत्रनामासीति"—एतदेव जायाशब्दस्य भार्यावचनत्वे प्रवृत्तिनिमित्तम् । यतोऽस्यां पतिर्जायते । अपत्य-जन्मनिमित्ते जायाशब्दे जारस्यापि जायोच्यते ॥ ८ ॥

यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥ ९ ॥

"स्वां प्रसूतिमिति" ( श्लो० ७ ) यदुक्तं तद्दर्शयति । न चैवं मन्तव्यं—यादृशं 'द्वितीयं पुरुषं सेवेत सुतं सूते पुत्रं जनयति तथाविधजातीयम्' । नापि गुणसादृश्यमभिप्रेतम् । यतः शूद्रादिजातस्य चण्डालादिजातित्वम् । समानजातीयजातस्यापि नैव तज्जातीयत्वं--"पत्नीष्वक्षतयोनिष्विति" वचनात् । गुणसादृश्येऽपि विशीलदरिद्रपतिकाया उत्कृष्टपुरुषगमनमनुज्ञातं स्यात् । यदा त्वयमर्थवादस्तदा यादृशं तथाविधमित्यकुलानुरूपमिति नीयते ॥ ९ ॥

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ॥
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ १० ॥

वक्ष्यमाणोपायप्रशंसार्थः श्लोकः । प्रसह्य वलेनावष्टभ्य शुद्धान्तावरोधादिना परपुरुषादिनिष्कासनादिना न शक्या रक्षितुम् । किंत्वेतैरुपाययोगैः शक्याः । 'योगाः' प्रयोगाः । 'उपायैः' प्रयुज्यमानैरित्यर्थः ॥ १० ॥

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ॥
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥ ११ ॥

अर्थो धनम् । तस्य संग्रहः संख्यादिना परिच्छिद्य रक्षार्थं वेश्मनि निधानं रज्ज्वायसबन्धादिना संयम्य स्थापनं मुद्राङ्कमित्येवमादि । व्ययो विसर्गस्तस्यैष—इदमेतावद्भक्तार्थमिदं च सूपार्थमेतावच्छाकार्थमिति । शौचं दर्विपिठरादिशुद्धिर्भूमिलेपनादिश्च । धर्म आचमनोदकतर्पणादिदानं स्त्रीवासगृहकादौ वलिकुसुमविकारैर्देवार्चनम् । अन्नपक्तिः प्रसिद्धा । पारिणाह्यं विस्यासंदीखट्वादि । तत्प्रत्यवेक्षणे नियोक्तव्या ॥ ११ ॥

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ॥
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२ ॥

आप्तं प्राप्तं काले तं कुर्वन्त्याप्तकारिणोऽवधानवन्त उच्यन्ते शुद्धान्ताधिकारिणः । कञ्चुकिनः । तैः स्वे गृहे रुद्धाश्चास्वतन्त्रीकृता यथेष्टविहारनिषेधेन रक्ष्यमाणा न रक्षिता भवन्ति । किंत्वात्मनाऽऽत्मानं रक्षन्ति । "ताः कथं रक्षन्ति" यद्येतेषु कार्येषु नियुज्यन्ते ।

उक्तोपायप्रशंसा नोपायान्तरनिषेधः ॥ १२ ॥

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ॥
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥ १३ ॥

अटनमापणभूमिषु अन्नशाकादिक्रयार्थम् । देवतायतनेषु च । ज्ञातिकुले बहूनि दिनान्यवस्थानम् अन्यगेहवासः । नारीसंदूषणानि । स्त्रीणामेते चित्तसंक्षोभहेतवः । एता हि श्वशुरादिभयं जनापवादभयं च त्यजन्ति ॥ १३ ॥

नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ॥
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ १४ ॥

नायमभिमानो वोढव्यः—सुभगः स्वाकृतिस्तरुणोऽहं मां हित्वा कथमन्यं कामयिष्यते । यतो नैता दर्शनीयोऽयं शूराकृतिरयमित्येव विचारयन्ति । पुमानयमित्येतावतैव भुञ्जते संयुज्यन्ते तेन ॥ १४ ॥

पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ॥
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥ १५ ॥

यस्मिन्कस्मिश्च पुंसि दृष्टे धैर्याच्चलनं—कथमनेन संप्रयुज्येयेति—चेतसो विकारः स्त्रीणां—तत्पौंश्चल्यम् । अन्यत्रापि धर्मादौ कार्येऽस्थिरता चलचित्तत्वम् । य एव द्वेष्यः स एव स्पृह्यत इति भ्रातृपुत्रादिर्यो दृष्टस्तस्मा एव कामुकत्वेन स्पृहयन्ति । स्नेहो रागस्तृष्णा च भर्तरि पुत्रादौ मानविरुद्धहृदया भवन्ति ।

एतैर्दोषैर्योगाद्विकुर्वते विक्रियां भर्तृषु गच्छन्ति ॥ १५ ॥ तस्मात्—

एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ॥
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥ १६ ॥

प्रजापतिर्हिरण्यगर्भः तदीये निसर्गे सृष्टिकाले जातम् । शिष्टं स्पष्टम् ॥ १६ ॥

शय्यासनमलङ्कारं कामं क्रोधमनार्यताम् ॥
द्रोग्धृभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥ १७ ॥

शय्या शयनं स्वप्नशीलत्वम् । आसनमनभ्युत्थानशीलता । अलङ्कारः शरीरमण्डनम् । कामं पुरुषोपभोगस्पृहा । क्रोधो द्वेषः । अनार्यता स्निग्धेऽपि द्वेषो द्विष्टेऽपि स्नेहः, आकारसंवरणं, निर्द्धर्मता । द्रोग्धृभावः । द्रोग्धृत्वं भर्तृपित्रादेः ।

द्रुहेः कर्त्तरि तृचा भावशब्देन समासः। कुचर्या नीचपुरुषसेवनम्।

एष स्वभावः स्त्रीणां मनुना सर्गादौ कल्पितः। शय्यासनालङ्कारा द्रोहकुचर्ययोर्दृष्टान्तत्वेनोपादीयन्ते। यथैते पदार्थाः स्वभावभूता अविचालिता एवं कुचर्यादयोऽपि ॥ १७॥

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मे व्यवस्थितिः॥
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥ १८॥

केचिदेवं मन्यन्ते—'सत्यपि प्रमदाव्यभिचारे वैदिकेन जापेन रहस्यप्रायश्चित्तादिना शुद्धिमाप्स्यन्ति ततो नास्ति दोष इति'। तन्न। न हि स्त्रीणां मन्त्रैः क्रिया जपोऽप्यस्ति। येन वृत्तव्यतिक्रमेऽप्रख्यातैः स्वत एव वैदुष्याच्छुद्धिमाप्नुवन्ति। तस्माद्यत्नतो रक्ष्या इत्येतच्छेषमेवैतत्। अतो ये केचिदविशेषेण मन्त्रप्रतिषेधोऽयमिति वर्णयन्ति—ततश्च प्रतिषेधं मन्यमाना यत्किञ्चित् स्त्रीसम्बंधि कर्म येन केनचित् क्रियते तत्र सर्वत्र यत्र स्त्रियः कर्तृतया संबध्यन्ते सायंबलिहरणादौ तथा संस्कार्यतया चूडादिषु सम्प्रदानतया श्राद्धादौ,—तत्र सर्वत्र मन्त्रप्रतिषेधादमन्त्रकं स्त्रीणां श्राद्धादि कार्यमिति—तेऽयुक्तवादिनोऽन्यपरत्वादस्य। अर्थवादतया यदस्ति तदालम्बनं न्यायेन विहितप्रतिषेधमन्त्रसंबन्धमन्त्रचूडासंस्कारापेक्षं व्याख्येयमेतत्। अध्ययनाभावाच्च प्रायश्चित्तमन्त्रजपाभावः।

निरिन्द्रियाः। 'इन्द्रियं' वीर्यं धैर्यप्रज्ञाबलादि तासां नास्त्यतोऽनिच्छन्त्योऽपि कदाचित्पापाचारैर्बलेनाक्रम्यन्ते। ततो रक्षितुं युक्ताः। स्त्रियोऽनृतमिति। शीलस्नेहयोरस्थिरत्वादनृतवचनेन निन्द्यन्ते॥ १८॥

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि॥
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः॥ १९॥

स्वभावतोऽशुद्धहृदयाः स्त्रिय इत्यस्मिन्नर्थे वैदिकानि मन्त्रार्थवादरूपाणि वाक्यानि साक्षित्वेनोपन्यस्यति। तथा च यथा मयोक्तं 'स्त्रियोऽनृतम्' इति तथैव निगमेषु वेदेषु श्रुतयः सन्ति। निगमशब्दो वेदपर्यायो दृष्टप्रयोगश्च। निगमो वेदार्थव्याख्यानाङ्गवचनोऽप्यस्ति—'निगमनिरुक्तव्याकरणान्यङ्गानीति' निरुक्ते हि प्रयोगो—'निगमा इमे भवन्तीति'। तस्येह श्रुतिग्रहणाद्वा वक्ष्यमाणोदाहरणाच्चासंभवः। अतो वेदवचनो निगमशब्द इह गृह्यते। समुदायावयवभेदाच्चाधारा-

धेयभावः । तेषु निगमेषु श्रुतय एकदेशभूतानि वाक्यानि निगीता अधीताः संशब्दिताः पठ्यन्त इति यावत् । नित्यप्रवृत्ते च कालाविभागादि निरुक्तम् ।

पाठान्तरम् 'निगदा' इति । 'निगदा' मन्त्रविशेषाः । श्रुतयो ब्राह्मणवाक्यानि । मन्त्रेषु ब्राह्मणेषु चायमर्थो दर्शितो यदनृता स्त्रिय इति । बह्व्यस्ताः संतीत्यस्मिन्पक्षेऽध्याहारः । तासां श्रुतीनां या या निष्कृतिरूपा व्यभिचारप्रायश्चित्तभूतास्ताः शृणुत । किमर्थमुदाह्रियन्त इति चेत्स्वालक्षण्यपरीक्षार्थम् । 'स्वलक्षणं' नित्यसंनिहितस्वभावस्तत्प्रतिपादनार्थम् । अङ्गदकुण्डलादि यत् लक्षणं तत्परिभूतमिदं 'स्वलक्षणं' स्वभाव इत्यर्थः । एतदासां 'स्वलक्षणं' यदव्यभिचारात्मकम् ॥ १९ ॥

यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ॥
तन्मे रेतः पिता वृंक्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥

इतिकरणान्तेन पादत्रयेण मन्त्रैकदेशोऽनुकृतः ।

यन्मे माता अपतिव्रता—'पत्युरन्यपुरुषे न कामश्चेतसापीति' यस्या 'व्रतं' नियमः सा 'पतिव्रता' । तद्विपरीताऽपतिव्रता । विचरन्ती परगृहान्गच्छन्ती । तत्रोज्ज्वलवेषं दृष्ट्वा प्रलुलुभे । लोभं स्पृहामन्यपुरुषं प्रति कृतवती । तत्पापं ममोत्पत्त्या मत्पितुः संबन्धि यद्रेतः शुक्रं तद्वृङ्क्तामपनुदतु । तद्रेतसा स दोषोऽपमृज्यताम् । पितेति षष्ठी स्थाने प्रथमा व्यत्ययेन । अथवा रेत एव पितृत्वेन परिकल्प्यते । अपरित्यक्तस्वलिङ्ग एव रेतसा सामानाधिकरण्यमनुभवति । "द्यौर्मे पितेति" ( ऋग्वेदे २ । ३ । २० ) यथा । अथवा मातृबीजमप्युच्यते 'रेतः' । तद्रेतः पिता जनको वृङ्क्तां शोधयताम् । पितृजबीजप्रभावेन मातृदोषोऽपनुद्यतामित्यर्थः ।

अस्य व्यभिचारात्मकस्यैतन्निदर्शनं दृष्टान्तः । सर्वे जपमाना एतं मन्त्रमुच्चारयन्ति । यदि च सर्वाः स्त्रियो दुष्टस्वभावास्ततो मन्त्रस्य नित्यवत्प्रयोगोपपत्तिः । इतरथा पाक्षिकः स्यात् । चातुर्मास्येष्वयं मन्त्री विनियुक्तः ( आपस्तम्ब श्रौत० १ । ६६ ) पाद्यानुमन्त्रणे च श्राद्धे (शांखायन गृह्य० ३ । १३ । ५) ॥ २० ॥

ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा ॥
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥

पाणिग्राहो भर्त्ता । तस्य चेतसा यदनिष्टमप्रियं परपुरुषसंपर्कादिकं स्त्री चिन्तयति तस्य मानसस्य व्यभिचारस्य निह्नवः शुद्धिरनेन मन्त्रेण कर्मणि नियुक्ते-

नोच्यते। प्रसङ्गान्मन्त्रप्रयोजनं दर्शितम्। यद्यपि कर्मगुणतैव कर्माङ्गमन्त्रप्रयोजनं तथापि जपादौ विनियोगान्मानसव्यभिचारनिवृत्त्यर्थताऽप्युच्यते ॥ २१ ॥

याद्दग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ॥
ताद्दग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥

भार्यासंरक्षणकामेन दौःशील्यादात्मा रक्षितव्यः। नाप्येतयैव केवलया। यतो दुःशीलस्य भार्याऽपि तथाविधैव भवति, गुणवतः शीलवती। यथा समुद्रेण निम्नगा नदी संयुज्यमाना क्षारोदका भवति मधुररसापि सती ॥ २२ ॥

अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा ॥
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥

हीनजातीयाऽप्यक्षमाला वसिष्ठभार्या तत्संयोगादभ्यर्हणीयतां प्राप्ता। शारङ्गी तिर्यग्जातिः चटका मन्दपालेन मुनिना संयुक्ता तथैव पूज्या। अतो हीनजातीयाः कनीयस्योऽपि भूयो भर्तृवत्पूज्याः। तथा चोक्तं "वयसि स्त्रिय" इति ॥ २३ ॥

एताश्चान्याश्च लोकेऽस्मिन्नवकृष्टप्रसूतयः ॥
उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥ २४ ॥

अवकृष्टा निकृष्टा प्रसूतिरुत्पत्तिर्यासां ता अवकृष्टप्रसूतयः। अन्याश्च गङ्गा-कालीप्रभृतयः। द्वयोः प्रकृतत्वादेता इति वहुवचनं चशब्देन तृतीयामाक्षिप्य। द्विर्वचनं वा 'एते च' ॥ २४ ॥

एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ॥
प्रेत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥ २५ ॥

लोकयात्रा लोकवृत्तं लोकाचारः। लोकसिद्धमेतत्। नायं विधिलक्षणोऽर्थो यदेवं शक्यते रक्षितुं नान्यथेति—अपरिरक्षिताभिश्च ताभिः प्रसूत्यादिदोषो भवतीति।

इदानीं प्रजाधर्मान्निबोधत। कस्य प्रजा वीजिनो वा क्षेत्रिणो वेति।

उदर्क आगामीकालः—स सुखो येषाम्। सर्वे हि वस्त्ववसाने विरमन्ते—ते तु नैवमिति प्रशंसा ॥ २५ ॥

"ननु च का सुखोदर्कता प्रजाधर्मस्य। या च प्रजाऽस्याधीना स्त्रियश्च बहुभिर्दो-

षैरावृतत्वत्यागार्हाः को हि गृहे सर्वान्त्रिभृयात्"—इत्येतन्निवृत्त्यर्थमाह—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ॥
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ २६ ॥

शक्यप्रतिविधानत्वाद्दोषाणां पूजार्हाः । यदेतद्दोषप्रपञ्चनं तन्नावज्ञानार्थं परिवर्जनार्थं वाऽभिशस्तपतितादिवत् । किं तर्हि—रक्षार्थं दोषाणाम् । न हि भिक्षुकाः सन्तीति स्थाली नाधिश्रियते । न च मृगाः सन्तीति यवा नोप्यन्त इति ।

प्रजनं गर्भग्रहणात्प्रभृत्यपत्यपरिपोषणपर्यन्तो व्यापारोऽभिप्रेतः । तथा च वक्ष्यति "उत्पादनमपत्यस्य जातस्य परिपालनम्" इति (२७) । गृहे दीप्तय इव । न हि गृहे सेवा स्त्रीभिर्विना काचिदस्तीति सुप्रसिद्धमेतत् । सत्यपि श्रीविभवे भार्यायामसत्यां सुहृत्स्वजनादिष्वागतेषु न गृहस्थाः प्रतिपुरुषं भोजनादिभिरावर्जयितुं समर्थाः । यथा दरिद्रे न भवति शक्तिः अतः स्त्रियः श्रियश्च न विशेषो गेहेष्विति ॥ २६ ॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ॥
प्रत्यर्थं लोकयात्रायाः प्रत्यक्षं स्त्री निबन्धनम् ॥ २७ ॥

स्त्री निबन्धनम् निमित्तम् । अपत्योत्पादनादौ प्रत्यक्षमेतत् । लोकयात्रा गृहागतानामन्नादिदानेनावर्जनमामन्त्रणनिमन्त्रणादि । अस्य प्रत्यर्थं सर्वस्मिन्नर्थे स्त्री निबन्धनम् ।

प्रत्यहमिति पाठः ।

प्रत्यक्षशब्दोऽन्तरङ्गवचनः । अन्तरङ्गमित्यर्थः ॥ २७ ॥

अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ॥
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥ २८ ॥

प्राग्दर्शितार्थोऽयं श्लोकः ॥ २८ ॥

पतिं या नाभिचरति मनोवाग्देहसंयता ॥
सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥ २९ ॥

व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ॥
शृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥ ३० ॥

पञ्चमे श्लोकाविमौ व्याख्यातौ ( ५ । १६४—१६५ ) ॥ २९-३० ॥

पुत्रं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः ॥
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥ ३१ ॥

उपन्यासो विचार्यवस्तुप्रक्षेपः । विचारो वा । तं निबोधत । पुत्रं प्रति पुत्रमधिकृत्योदितमुक्तम् । सद्भिर्विद्वद्भिर्महर्षिभिश्च । विश्वजन्यं सर्वेभ्यो जनेभ्यो हितम् । पुण्यं कल्याणकरम् ।

स्त्रीस्तुत्या व्यवधानात् 'प्रजाधर्मं निबोधत' इत्यस्यार्थस्यापि पुनरादरार्थमुपन्यासः उपन्यासं निबोधतेति ॥ ३१ ॥

भर्तुः पुत्रं विजानन्ति श्रुतिद्वैधं तु कर्तरि ॥
आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः ॥ ३२ ॥

भर्ता उद्वोढा । विवाहसंस्कारेण संस्कृता येन या नारी तस्यां यस्तस्मादेव जातस्तं पुत्रं तस्य विजानन्त्यभ्युपगच्छन्ति सर्व एव विद्वांसः । नात्र विप्रतिपत्तिः । सिद्धान्तोऽयम् ।

श्रुतिद्वैधं तु कर्तरि । यः कर्तैव केवलमुत्पादयिताऽन्यदीयक्षेत्रे न तूद्वोढा—तत्र श्रुतिद्वैधं मतभेदः, तं दर्शयति । आहुरुत्पादकमपत्यवन्तं केचित् । अपरे क्षेत्रिणम्—यस्य सा भार्या तस्यामनुत्पादकमपि ।

एवमाचार्यविप्रतिपत्तेः संशयमुपन्यस्य कारणकथनेन तमेव समर्थयते ॥ ३२ ॥

क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान् ॥
क्षेत्रबीजसमायोगात्संभवः सर्वदेहिनाम् ॥ ३३ ॥

क्षेत्रमिव क्षेत्रभूता नारी । व्रीह्यादेरुत्पत्तिस्थानं भूमिभागः क्षेत्रं, तत्तुल्या नारी । यथा क्षेत्रे बीजमुप्तं तत्र विध्रियमाणं जायते एवं नार्यामपि निषिक्तं रेतः । बीजभूत एव पुमान् । अत्रापि भूतशब्द उपमायाम् । तदीयं रेतो 'बीजं' न साक्षात्पुमान्—तदधिकरणत्वात्तु तथावद्व्यपदिश्यते । समायोगः संबन्ध आधाराधेयलक्षणः । ततः संभव उत्पत्तिः सर्वदेहिनां शरीरिणाम् । चतुर्विधस्य भूतग्रामस्य । स्वेदजानामप्याकाशः क्षेत्रं, बीजं स्वेदः । अतो युक्तः संशयः । उभयमन्तरेण संभवानुपपत्तेः । अपत्योत्पत्तौ उभयोर्व्यापारः । विनिगमनाय च

हेत्वभावात्कस्य तत्—उभयोः अथान्यतरस्येति संदेहः ।

सर्वस्य च प्रकरणस्यायमर्थो नानुमानपरिच्छेद्योऽपत्यापत्यवद्भावः । तथा च विभागश्लोके वक्ष्यामः ॥ ३३ ॥

विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित् ॥
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते ॥ ३४ ॥

बीजस्य वैशिष्टयं व्यासऋष्यशृङ्गादीनां महर्षीणां दृष्टम् । स्त्रीयोनिस्त्वेव क्षेत्रजादिपुत्रेषु धृतराष्ट्रादिषु । ब्राह्मणाज्जाता अपि मातृजातयः क्षत्रियास्ते । उभयं तु समं एकस्वामिकमेकजातीयं समम् । सा प्रसूतिः प्रशस्यते विप्रतिपत्त्यभावात् तदुक्तमेतत्—"भर्तुः पुत्रं विजानन्तीति" ॥ ३४ ॥

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ॥
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ ३५ ॥

एवमुपपादिते संशये बीजप्राधान्यपक्षं पूर्वं परिगृह्णाति । तत्प्राधान्याद्यस्य बीजं तस्यापत्यम् । तस्य च प्राधान्यं व्रीह्यादेर्द्रव्यस्य क्षित्याद्यनेककारणत्वेऽपि तद्धर्मानुविधानदर्शनात् । अतश्च स्फुटमदृष्टबीजानुविधानस्यापत्यस्य कार्यत्वाद् व्रीह्यादीनामिव तद्धर्मानुविधायित्वं युक्तमभ्यपगंतुम् । तथाहि सर्वत्र कार्यं ऐक्यरूप्यं न त्यक्तं भवति । तथा च बीजे प्राधान्यं तद्दर्शयति सर्वभूतप्रसूतिर्हि । सर्वेषां भूतानां प्रसूतिरुत्पत्तिर्बीजलक्षणलक्षिता । बीजस्य यल्लक्षणं रूपवर्णसंस्थानादि तेन लक्षिता चिह्निता त पानुविधायिनीति यावत् ॥ ३५ ॥

यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते ॥
तादृग्रोहति तत्तस्मिन्बीजं स्वैर्व्यञ्जितं गुणैः ॥ ३६ ॥

अनन्तरस्यैवार्थविस्तरत्वेन श्लोकोऽयं वक्रान्वयप्रदर्शनेन । यादृशं शब्दस्यार्थं व्याख्यास्यति (३९) 'व्रीहयः शालय' इत्यादिना । कालोपपादिते—काले वर्षादौ वपनकाले उपपादिते कृष्टसमीकरणादिना संस्कृते । तादृग्रोहति जायते । स्वैर्गुणैर्वर्णसंस्थानरसवीर्यादिभिर्गुणैः व्यञ्जितं परिदृश्यरूपम् ॥ ३६ ॥

इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ॥
न च योनिगुणान्कांश्चिद्बीजं पुष्यति पुष्टिषु ॥ ३७ ॥

बीजगुणानुवृत्तिः पूर्वेणोक्ता। अनेन क्षेत्रगुणानामभावमाह्। एषा भूमिर्भूतानां स्थावराणामोषधीतृणगुल्मलतानां योनिः क्षेत्रमुच्यते। न च तद्गुणास्तेषु भूतेषु केचन दृश्यन्ते। न मृदः पांसवो वा तत्रोपलभ्यन्ते।

बीजं पुष्यति पुष्टिषु। बीजशब्दोऽत्राङ्कुरनिर्गतव्रीह्यादिवचनो न मूलवचनः। तदपि हि पुनरुपभुक्तशेषमुप्यमानमपरस्मिन्वत्सरे भवत्येव बीजम्। तन्न पुष्यति नानुवर्तते। पुष्ट्यङ्गभूतायामनुवृत्तौ पुष्यतिर्वर्तमानः। सकर्मकत्वं द्वितीयानिमित्तम्। योनिगुणान्प्राप्नोति वा भजते। पुष्टिषु तदवयवेषु। यदि पुष्ट्यंगाऽनुवृत्तिराख्यातेनोच्यते पुष्टिष्वित्यनर्थकम्। तस्मादनेकार्थत्वाद्धातूनामन्यवचनमात्र एवाख्यातेनानुव्याख्येयः।

श्लोकपूरणार्थं वा पुष्टिष्विति। कथंचित्पौनरुक्त्यं परिहार्यम्। सामान्यविशेषभावेन वाऽन्वयो वक्तव्यः। 'स्वपोषं पुष्ट' इति यथा ॥ ३७ ॥

भूमावप्येककेदारे कालोप्तानि कृषीवलैः ॥
नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥ ३८ ॥

अनन्तरोक्तोऽर्थ उदाहरणेन व्याक्रियते। एककेदारे—'अपि' रत्र योजनीयः। एकस्मिन्नपि क्षेत्रे भूमेः। काले। यस्य बीजस्य यो वैकः कालस्तस्मिन् उप्तानि कर्षकैः भिन्नरूपाणि जायन्ते बीजानि स्वभावानुविधानादित्यर्थः। यदि च क्षेत्रे प्राधान्यं स्यात्क्षेत्रस्यैकत्वात्सर्वाण्येकरूपाणि स्युः ॥ ३८ ॥

व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः ॥
यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥

तानि नानारूपत्वेन बीजानि दर्शयति। यथाबीजम् बीजस्वभावाभिपत्त्या। सर्वत्र जात्याख्यायां बहुवचनम् ॥ ३९ ॥

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ॥
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ४० ॥

एष एवार्थः शब्दान्तरेण निगम्यते। मुद्गेषूप्तेषु व्रीहयो जायन्त इत्येतन्नास्ति। प्रतिषेधमुखेनोक्तस्य विधिमुखेन पुनः प्रतिपादनमुच्यते यद्धि यद्बीजम् ॥ ४० ॥

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ॥
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥ ४१ ॥

एवं पूर्वपक्षे सिद्धान्तमाह। क्षेत्रप्राधान्यमनेनोच्यते।

"ननु च नात्र क्षेत्रप्राधान्याभिधायकं किंचित्पदमस्ति केवलं परक्षेत्रोपगमननिषेधः श्रूयते वप्तव्यं न जातु परस्योपितीति—परदारेषु वीजनिषेको न कर्तव्य इत्यस्यार्थः। न पुनर्यस्य क्षेत्रं तस्यापत्यमित्यनेनोक्तं भवति"।

सत्यम्। "तथा नश्यति वै क्षिप्तं वीजं परपरिग्रहे" इत्यनेनैकवाक्यत्वात् दृष्टापत्यापहारलक्षणदोषनिमित्तोऽयं प्रतिषेधः—नादृष्टार्थ उपगमनप्रतिषेधः। स हि चतुर्थे विहित एव—"न हीदृशमनायुष्यम्" इत्यादिना (४।१३४)। तस्मादन्यशेषतया प्रतिषेधश्रुतेरनन्तरेणकवाक्यत्वादसति स्वातन्त्र्ये युक्ता क्षेत्रप्राधान्यप्रतिपादनपरता।

प्राज्ञेन सहजया प्रज्ञया। विनीतेन पित्रादिभिरनुशिष्टेन। ज्ञानविज्ञानवेदिना करणसाधनौ ज्ञानविज्ञानशब्दौ। 'ज्ञानं' वेदांगशास्त्राणि। 'विज्ञानं' तर्ककलादिविषयम्। एतदुक्तं भवति। यस्य काचिद्बुद्धिर्विद्यते तेनैवं न कर्तव्यं—यतः सर्वशास्त्रेष्वेषा स्थितिः। यस्तु मूर्खस्तिर्यक्प्रख्यः सोऽत्र नाधिकृत एवेत्यनुवादोऽयम्।

आयुष्कामेनेति चातुर्थिकस्य प्रतिषेधस्य प्रत्यभिज्ञानार्थमेतत्। ततश्च पृथक्प्रतिषेधशङ्का निरस्ता भवति ॥ ४१ ॥

अत्र गाथा वायुगीताः कीर्तयन्ति पुराविदः ॥
यथा वीजं न वप्तव्यं पुंसा परपरिग्रहे ॥ ४२ ॥

गाथाशब्दो वृत्तविशेषवचनः। यथोक्तं पिङ्गलेन "अत्रासिद्धं गाथेति"। अविगीताः परंपरागताः श्लोका अप्युच्यन्ते। 'तदेषापि विज्ञगाथा गीयत' इत्युक्त्वा 'गाथाः श्लोका उत्तरत्र वेदे पठ्यन्ते—यदस्य पूर्वमपरं तदस्येति'।

वायुना गीताः पठिता वायुप्रोक्ताः।

पुराविदः पुराणकल्पान्तरवेदिनः।

परपरिग्रहे परक्षेत्रे ॥ ४२ ॥

नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः ॥
तथा नश्यति वै क्षिप्तं वीजं परपरिग्रहे ॥ ४३ ॥

ता इदानीं गाथा दर्शयति। इषुः वरः। स नश्यति। खे छिद्रे। अन्येनेष्वासेन विद्धं मृगमनुविध्यतः पूर्वस्य वेधकस्यात्र स्वाम्यम्।

अथवाऽऽकाशे खे शरः क्षिप्तो लक्ष्यमन्तरेण—नश्यति निष्फलो भवति—विद्धं चानुविध्यतः—एवं परस्त्रियां तेजो निःक्षिप्तं तस्य वीजिनः। क्षेत्रस्वामिनोऽपत्यं भवति॥ ४३॥

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः॥
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम्॥ ४४॥

ईदृशोऽयं पुराणकृतो जायापतिलक्षणसम्वन्धो यद्भिन्नावपि तावेकीकृताविव दर्शयति। तथाहि अनेकवर्षसहस्रातीतपृथुसम्वन्धा मही तेनैव व्यपदिश्यते पृथिवीति। तस्मादन्याऽपि स्त्री यस्य भार्या तस्य पुत्रोऽन्येनापि जातः।

स्थाणुच्छेदस्य केदारं स्वमाहुः—सम्वन्धान्तरस्याभावात् स्वस्वामिसम्वन्धं षष्ठी प्रतिपादयति। 'स्थाणु'गुच्छगुल्मलतादिप्ररूढो यत्र भवति तच्छिनत्ति यः स 'स्थाणुच्छेदः'। तस्य तत्क्षेत्रं येन प्ररूढगुल्मलतावीरुधः छित्त्वा भूमिः क्षेत्रीकृता। तत्र कर्षणवपनजातं फलं तस्यैव।

शल्यवतो मृगमाहुरित्यनुषज्यते। वहूनां मृगमनुधावतामाखेटकार्थं यस्यैव सम्वन्धि शरशल्यं मृगे दृश्यते तस्य तमाहुः। यत् प्रथमवेद्धुश्च स भवतीत्युक्तं "नश्यतीषुः" इत्यत्र॥ ४४॥

एतावानेव पुरुषो यज्जायात्मा प्रजेति ह॥
विप्राः प्राहुस्तथा चैतद्यो भर्ता सा स्मृताङ्गना॥ ४५॥

युक्तं च यस्य भार्या तस्यापत्यं यस्माद्भार्याया भर्तुश्चैकत्वमेव—प्रजाऽप्यात्मभूतैव। कथं वाऽन्यस्यात्मा सोऽन्यस्य भवेत्। एवं तावद्दृष्टमेतल्लोके। शास्त्रज्ञा अप्येवमेव विप्राः प्राहुरिति॥ ४५॥

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते॥
एवं धर्मं विजानीमः प्राक्प्रजापतिनिर्मितम्॥ ४६॥

अथ मन्येत—'धनादिदानेन क्रीत्वा स्वीयाः करिष्यन्ते, परभार्यायां ततो विनिवृत्ते दुःस्वाम्ये तज्जातो जनयितुः पुत्रो भवतीति'—एतन्न। यतो न शक्या भार्यात्वेन निष्कसहस्रैरप्यन्यदीयाः स्वत्वमानेतुम्। नापि भर्त्रा त्यक्ता प्रहीणद्रव्य-

तया प्रतिग्रहीतुः स्वत्वमापद्यते। यत "उद्वहेतेति" (मनु० ३।४) कर्त्रभिप्रायक्रिया-फलविषयादात्मनेपदाल्लिङ्गान्नान्येन संस्कृताऽन्यस्य भार्या भवति। यथा नाहवनी-यादय आधातुरन्यस्य क्रयादिनाऽऽहवनीयादिव्यपदेश्याः।

निष्क्रयो विक्रयो विनिमयश्च। विसर्गस्त्यागः। ताभ्यां न विमुच्यते। न भार्यात्वमस्या अपैति ॥ ४६ ॥

**सकृदंशो निपतति सकृत्कन्या प्रदीयते ॥**
**सकृदाह ददामीति त्रीण्येतानि सतां सकृत् ॥ ४७ ॥**

अयमनुशयविधावष्टमे व्याख्यातः (८।२२७) विभागकाले हि समविषमांशभाग्भिः समविषमांशभागेषु परिकल्प्य विभागः कर्तव्यः। तत्र कृते यो विप्रतिद्येत तस्य प्रतिषेधार्थमिदम्। तत्रापि यद्यादावेव यथार्थतां कस्यचिदंशस्य प्रज्ञापयेत्तदा स्यादेव पुनर्विभागः। अथ बहुना कालेनायथाकृततां ब्रूयाद्यावदितरैः स्वेषु स्वेषु भागेष्व-न्यनिवेशशीर्णप्रतिसंस्कारादि कृतं भवेद्—वस्त्रहिरण्यादि चोपयुक्तं स्यात्—तदा समतामात्रकरणे प्रभवति, न पुनः सर्वं समवायविभागम्।

अन्ये तु क्लीवादीनामनर्हितविभागकानां पश्चाद्भागहरत्वनिमित्तक्लीबत्वादि-परिज्ञानान्नास्ति भागापहार इति सकृन्निपातप्रयोजनं वदन्ति।

एवं द्वित्रिचतुर्भागहराणां यदृच्छया ये समतां प्रकल्पयेयुः पश्चादनुशयनाः प्राक्तनं व्यवस्थानमतिक्रम्यापहर्तुं न लभेरन्। पतितस्य तु लब्धभागस्याप्यपहारं वक्ष्यामि।

सकृत्कन्या प्रदीयते। यद्यपि चानेन वाग्दानोत्तरकालं प्रागपि विवाहाद्भर्तुः स्वतोच्यते। तथापि "दत्तामपि हरेत्कन्यां" (याज्ञ० १।६५) "तेषां तु निष्ठा विज्ञेया विद्वद्भिः सप्तमे पदे" (मनु ८।२२७) इत्यादिपर्यालोचनया विशिष्टविषयतैव। सा च व्याख्याता।

सकृदाह ददामीति गवादयो हि येनैव रूपेणात्मनः स्वं तेनेवान्यस्मा आप-द्यन्ते। कन्या तु दुहितृत्वेन स्वं सती भार्यात्वेनानिवृत्तस्वसम्बन्धा दीयत इति पृथगुपन्यासः।

"ननु चानिवर्तमाने पितुः स्वसम्बन्धे कथं कन्यादानं प्रवर्तते। एतद्धि दानस्य रूपं यदेकस्य सम्बन्धो निवर्ततेऽन्यस्योपजायत इति"।

नैष दोषः। द्वावत्र सम्बन्धौ—अपत्यापत्यवद्भावः स्वस्वामिसम्बन्धश्च। तत्रापत्यापत्यवद्भावो न निवर्तते, इतरस्तु निवर्तते। तथा च "बाल्ये पितुर्वशे तिष्ठेत्" इति ( मनु० ५।१८८ ) पितुश्चात्र स्वाम्यनिवृत्तिमाह "पाणिग्राहस्येति" भर्तुस्तदुत्पत्तिम् ॥ ॥ ४७ ॥

यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च ॥
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥ ४८ ॥
येऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ॥
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥ ४९ ॥

प्रसिद्धमेवैतत्। अक्षेत्रिणो बीजवन्तो व्रीह्यादिबीजस्वामिनः सस्यस्य मुद्गमाषादेर्जातस्य न लभन्ते फलं—परक्षेत्रे चेदुत्पत्तिः ॥ ४८-४९ ॥

यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ॥
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ॥ ५० ॥

पूर्वेण स्थावरेषु धर्मः प्रसिद्धवदुदितो ज्ञापितो वा। अनेन तिर्यक्षु परिगृहीतेषु गवादिषु निदर्श्यते। अन्यदीयो वृषभो यद्यप्यन्यगवीषु वत्सान्बहूनपि जनयेन्न वृषभस्वाम्येकमपि वत्सं लभेत—सर्व एव ते वत्सा गोमिनां गोस्वामिनाम्। आर्षभमृषभसम्बन्धिस्कन्दितं बीजनिषेको मोघं वृथा निष्फलम् ॥ ५० ॥

तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ॥
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥ ५१ ॥

पूर्वस्य निर्देशोऽयम्। यथा गवादिषु स्थावरेषु चैवं मनुष्येष्वपि कुर्वन्ति। क्षेत्रस्वामिनामर्थं प्रयोजनं बीजकार्यं सम्पादयन्ति ॥ ५१ ॥

फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा ॥
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥ ५२ ॥

अविशेषेणोक्तं क्षेत्रिणां फलं न बीजिनः। तस्यावशिष्टविषयत्वमाह अनभिसंधायेति। अभिसंधानं बीजक्षेत्रिणोरितरेतरसंविद्व्यवस्थापनम्—'नष्टाश्वदग्धरथवदुभयोरावयोः फलमस्त्विति'—यत्र वचनव्यवस्था न भवति तत्र क्षेत्रिण एव प्रत्यक्षोऽर्थो

निश्चितं फलम्। प्रत्यक्षशब्देन निःसंदिग्धतामाह। यतो बीजाद्योनिर्बलीयसी। क्षेत्रमधिकबलम्॥ ५२॥

सत्यां तु संविदि—

क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते॥
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च॥ ५३॥

अनभिसंधाय क्षेत्रिणः फलमुक्तम्। अभिसंधाने किं बीजिन उतोभयोरिति संशय उभयोरित्याह। क्रियाया अभ्युपगमोऽङ्गीकरणमेवमेवैतदिति संविल्लक्षणः यो निश्चयः सा 'क्रिया'ऽभिप्रेता तामभ्युपगमय्य बीजार्थं बीजकार्यफलनिष्पत्त्यर्थं यत्प्रदीयते—सामर्थ्याद्बीजमिति गम्यते। तस्येह द्वावपि भागिनौ॥ ५३॥

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति॥
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम्॥ ५४॥

परक्षेत्रे वप्तुर्बीजनाश उक्तः। तत्र मन्येत—"पुरुषापराधात्तस्य युक्तोपहारो नूनमसौ क्षेत्रं जिहीर्षति—नो चेत्किमिति परक्षेत्रे वपतीति। येन तु स्वक्षेत्रे व्युप्तमोघवाताभ्यामन्यत्रानीतं तस्य कोऽपराधो यदि स्वं द्रव्यं हारयति"—तदर्थमाह। ओघवाताहृतं बीजम्। ओघो जलनिषेकः, तेन वायुना चाहृतं नीतं यस्य क्षेत्रे प्ररोहति तस्यैव तद्भवति। एतेनैव सिद्धे विस्पष्टार्थं न बीजी लभते फलमिति। सर्वत्र क्षेत्रप्राधान्यमित्यर्थः॥ ५४॥

एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च॥
विहङ्गमहिषीणां च विज्ञेयः प्रसवं प्रति॥ ५५॥

अपत्याधिकारात्तद्विषयतैव माविज्ञायीति गवाश्वादिग्रहणम्। यदि वा बीजफलव्यवहारः सस्यादिविषयतया प्रसिद्धतरस्तन्निवृत्त्यर्थमाह। द्विपदां चतुष्पदां पक्षिणां स्थावराणां च सर्वत्रैष धर्मः। एष इति द्वयं प्रत्यवमृश्यते। अनभिसंधाने यस्य क्षेत्रं तस्य फलमभिसंधाने चोभयोः। उदाहरणार्थत्वाच्च गवाश्वादिग्रहणस्य श्वमार्जारादिष्वप्ययमेव न्यायः।

तर्हि किमर्थं "यद्यन्यगोषु" इति।

प्रायेण गावः पुरुषाणां भवन्ति, न तथा विहङ्गमादय इति प्रसिद्धेरनुवादोऽसौ। दास्यः सप्तभिर्दासयोनिभिरुपगताः। प्रसवः कायजन्म। तं प्रति तत्रेत्यर्थः॥ ५५॥

एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्तितम् ॥
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि ॥ ५६ ॥

सारं प्रधानम्। फल्ग्वसारम्। उपसंहारः पूर्वप्रकरणस्य। उत्तरार्धेन वक्ष्यमाणसूचनम्।

आपत् जीवनस्थितिहेतुभूतभोजनाच्छादनाभावः, सन्तानविच्छेदश्च ॥ ५६ ॥

भ्रातुर्ज्येष्ठस्य भार्या या गुरुपत्न्यनुजस्य सा ॥
यवीयसस्तु या भार्या स्नुषा ज्येष्ठस्य सा स्मृता ॥ ५७ ॥

श्लोकद्वयेन प्राकृतव्यवस्थामनुवदत्यापदि नियोगं विधातुम्। ज्येष्ठोऽग्रे जातः। अनुजः पश्चाज्जातः कनीयान्। यवीयाननुज एव ॥ ५७ ॥

ज्येष्ठो यवीयसो भार्यां यवीयान्वाऽग्रजस्त्रियम् ॥
पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ ५८ ॥

इतरेतरभार्यागमने ज्येष्ठानुजयोः पातित्यमनापदि सत्यपि नियोगे ॥ ५८ ॥

देवराद्वा सपिंडाद्वा स्त्रिया सम्यङ्नियुक्तया ॥
प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये ॥ ५९ ॥

सर्वविशेषेण विशिष्टोऽनेन नियोगो विधीयते। संतानस्य परिक्षये नियुक्तया देवरादिभ्यः सम्यक् प्रजोत्पादयितव्येति। यदुक्तं "योषितां धर्ममापदि" इति सेयमापत् "संतानस्य परिक्षयः"। संतानशब्देन पुत्र उच्यते दुहिता च पुत्रिका। सा हि पितृवंशं संतनोति नान्या। तस्य परिक्षयोऽनुत्पत्तिरुत्पन्ननाशो वा पुत्रिकायाश्चाकरणम्। न हि स्त्रियाः केवलायाः पुत्रिकायामन्यस्मिन्वा पुत्रप्रतिनिधावधिकार इति वक्ष्यामः। नियुक्तोत्पादयेदनुज्ञाता गुरुभिः

"कुतः पुनः गुरुभिरिति"।

स्मृत्यन्तरनिदर्शनात्। अथवा नियोगशब्दादेव। नियोगो हि गुरुसम्बन्धी लोकेऽप्युच्यते। न हि शिष्येण नियुक्तोऽध्यापयतीत्युच्यते। आचार्येण नियुक्तः करोत्येव वदति। 'गुरवश्च' श्वश्रूश्वशुरदेवरादयो भर्तृसगोत्रा द्रष्टव्याः, न पित्रादयः। एतेनापत्येनापत्यवन्तस्ते उच्यन्ते येषां चोपकारस्तत्कृत और्ध्वदेहिको भवति।

"यद्येवं मातामहस्यापि दौहित्रोपकारोऽस्ति। ततः पित्रा दुहिता नियोक्तव्येत्यापन्नम्।"

उक्तं—येनापत्यवन्त उच्यते। देवरसपिण्डग्रहणेन तद्गोत्रा एव हृदयमागच्छन्ति। महाभारते च तत्र तत्र नियोक्तृभावो भर्तृपक्षिणामेव दर्शितः। अत एव भ्रातृपुत्रे सति न नियोगः कर्तव्यः।

"ये हि नियुक्तास्तेषामेव सन्तानोपकारः। पुत्रजनिते स्नेहेऽपत्योपकारमर्थयमाना अधिक्रियन्ते। न मृतस्याधिकारोऽस्ति। कथं तर्हि तस्यापत्यमिति व्यपदिश्यते"।

कथंचित्पिण्डदाने स उपकरोति। वचनादिति च ब्रूमः। न ह्यपत्यमुत्पादयितव्यमित्येष विधिस्तेनानुष्ठित इति—तथापि तदीये क्षेत्रे नियोगविधिजातेन पिण्डदानादि कर्तव्यमिति शास्त्रार्थः ततश्च तस्योपकारकमवगतम्। यथा चैतत्तथा पुरस्तान्निपुणं वक्ष्यामः।

देवरः पतिभ्राता। सपिण्डः पत्यन्वयः। स्मृत्यन्तरे जातिमात्राच्चेत्युक्तं भवति। सम्यगिति घृताक्तादिनियमं वक्ष्यमाणमनुवदति। प्रजेप्सिताधिगन्तव्या विधौ कृत्ये। ईप्सितशब्देन कार्यक्षमतामाह। ततो दुहितर्यन्धबधिरादौ च जाते पुनर्नियोगोऽनुष्ठेयः॥ ५६॥

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि॥
एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन॥ ६०॥

विधवाग्रहणमतन्त्रम्। क्लीबादिरूपे पत्यौ जीवत्यप्येष एव विधिः। यतो वक्ष्यति "नियुक्तौ यौ विधिं हित्वेति" (६३)। एतदेव तस्य प्रयोजनम्। नियमोऽत्र विषयाणाम्, न नियमानामन्यथा विज्ञाते प्रकृतत्वाद्विधवाया एव स्युः। निशि। प्रदीपाद्यालोकनिवृत्त्यर्थमेतत्। वचनान्तरेण दिवोपगमनप्रतिषेधात्। अन्ये त्वाहुः—पुरुषार्थोऽसौ प्रतिषेधः कर्मार्थस्त्वयम्। तेनाह्नि गमनेन न क्षेत्रजमुत्पादयेत्।

एकमुत्पादयेत्पुत्रं न द्वितीयम्॥ ६०॥

अस्य प्रतिप्रसवः—

द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः॥
अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्मतस्तयोः॥ ६१॥

द्वितीयः पुत्र इत्येकेषां मतम्। तद्विदः क्षेत्रजोत्पत्तिविधिज्ञाः। अनिर्वृत्तं नियोगार्थं पश्यन्तः। नियुक्तया प्रजोत्पादयितव्येत्यस्य विधेरेकस्योत्पादनेनासंपत्ति मन्यन्ते।

"कस्तेषामभिप्रायः ॥"

एकवचनमविवक्षितं मन्यन्ते। द्रव्यप्रधानत्वात् कर्मणो गुणभावादविवक्षा—ग्रहैकत्ववत्।

ननु चानुपात्तोपदेशे सत्यपि द्वितीयया द्रव्यप्राधान्यावगमे संख्यादिविशेषेण विवक्षा स्थितैव। "उद्वहेत द्विजो भार्याम्" इति लिंगादपत्यविधावेकत्वसंख्यातिक्रमो "दशास्यां पुत्रानाधेहीति" ( ऋग्वेदे ६।१०।८ )। यद्येवं न द्वित्व एवावस्थानम्।

अस्यामेवाशङ्कायां द्वितीयमिति वचनं अन्यनिवृत्त्यर्थम्। अर्थवत्ता तस्याप्ययमभिप्रायः। औरसे लिङ्गम्—विवाहप्रकरणे मन्त्रपाठात्। इह त्वेकत्वातिक्रमः। 'अपुत्र एकपुत्र' इति शिष्टप्रवादात्। अथवाऽस्या एव स्मृतेर्द्वितीयपुत्रस्तुतिकल्पनात्।

धर्मतः शिष्टाचारतः ॥ ६१ ॥

विधवायां नियोगार्थे निवृत्ते तु यथाविधि ॥
गुरुवच्च स्नुषावच्च वर्तेयातां परस्परम् ॥ ६२ ॥

इह तु नियोगविषयो यत्र नियुज्यते। स च सम्प्रयोगाभिमर्दपर्यवसान उपगमनलक्षणः तस्मिन्निवृत्ते पूर्वैव वृत्तिः। गुरुवत्स्नुषावत्। ज्येष्ठस्य भार्यायां गुरुवद्यवीयसः स्नुषावत्। परस्परग्रहणात् स्नुषावद्वर्तेत स्त्री पुरुषे ज्येष्ठे, देवरे गुरुवत् ॥ ६२ ॥

नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः ॥
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥ ६३ ॥

विधिः "घृताक्त" इत्यादिः। तदतिक्रमे पातित्यम्। नियुक्तो ज्येष्ठः, स्नुषागः पुमान्, गुरुतल्पगः कनीयान् ॥ ६३ ॥

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ॥
अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ ६४ ॥

पूर्वेण विहितस्य नियोगस्य प्रतिषेधोऽयम्

तत्र केचित्—'विधवाग्रहणान्मृतभर्तृकायाः प्रतिषेधः; क्लीबेन तु पत्या नियोक्तव्येति विधिप्रतिषेधौ विभक्तविषयाविति' प्रतिपन्नाः ।

अन्ये तु—विधिवाक्ये सन्तानविच्छेदस्य निमित्तश्रवणात्तस्य च क्लीबव्याधितयोर्मृतस्याप्युपपत्तिः । तथा च विधिवत् प्रतिषेधोऽप्यविशिष्ट एव । अपेतधवसम्बन्धा विधवेत्युच्यते । तत्तुल्यमुभयत्रापि ।

अवश्यं चैतदेवं विज्ञेयम् । इतरथा घृताभ्यक्तादिनियमोऽपि क्लीबेन नियुज्यमानाया न स्यात् । तत्रापि ह्यामनन्ति "विधवायां नियुक्तश्च घृताक्त" इति । तस्माद्विहितस्याविशेषेण प्रतिषेधोऽप्यविशिष्टः । अतश्च विषयसमत्वे विधिनिषेधयोर्विकल्पः अयं च नित्योऽपत्योत्पादनविधिर्विकल्पः एव कल्पते ग्रहणाग्रहणवत् । यदा तु "पुत्रेण जयति" इत्येवमादिफलोत्पादनविधिस्तदाऽसत्यपत्ये तत्कार्यस्यौर्ध्वदेहिकस्योपकारस्याभावाद्भिन्नफलयोः कुतो विकल्पः । समानविषयौ विधिनिषेधावेकार्थे विकल्प्येते । षोडशीग्रहणाग्रहणयोरिति केचित् ।

उक्तमङ्गभूयस्त्वे फलभूयस्त्वम् । प्रधानकार्यसिद्धौ त्वविशेषः । तस्मादस्मिन्पक्षे पुत्रोपकाराभावमाह । उपकारविशेषार्थेनास्य प्रवृत्तौ प्रतिषेधातिक्रमेण श्येनतुल्यता ।

इदं त्वत्र निरूप्यम् । योऽसौ नियुज्यते स किमिति प्रवर्तते । न हि तस्य विधिरस्ति । 'नियुक्तेन गन्तव्यम्' इति । स्त्रिया पुनर्विद्यते "सम्यक् स्त्रिया नियुक्तयेति" । न च—"देवरादिषु प्रवर्तमानेषु स्त्रिया नियोगसिद्धिरित्यर्थः । तेषामपि प्रवृत्तिस्तद्विधिना । क्षेत्रज ईप्सित" इति वाच्यम् । यतो रागतः प्रवृत्तिरुपपद्यते । "घृताक्तादिनियमविधानमनर्थकमिति" चेन्नानर्थकम् । तथानियमैरुत्पन्ने क्षेत्रजव्यपदेशो नान्य इति ।

यदपि गुरुवचनं कर्तव्यमिति केचित्प्रवृत्तिनिबन्धनमाहुः,—एवं सति सुरापानादिष्वपि गुर्विच्छया प्रवृत्तिः प्राप्नोति । न चासौ गुरुरकार्ये यः प्रवर्तयति ।

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयत ॥" इति स्मरणात् । परित्यागश्च गुरुकार्यान्निवृत्तिः ।

एतेनैतदपि प्रत्युक्तं—"यन्नियमातिक्रमपातित्यवचनं नियमपूर्विकां वृत्तिमनुजानाति—'तावुभौ पतितौ स्याताम्' इति । इतरथा सर्वप्रकारं गच्छतः पातित्यमिति विशेषपातित्यमनुपपन्नम्" ॥ यतस्तन्न केवलस्य पुंसः श्रूयते किं तर्हि स्त्रिया इति ।

तस्याश्च पुत्रार्थिन्या नियोगो विहितः । तदपेक्षं हि व्यतिक्रमे पतितवचनं "तावुभौ पतितौ स्यातामिति" । असति व्यतिक्रम एकः पतितः पुमानेव, अतिक्रमे तु द्वावपीत्येवमपि लिङ्गान्निर्गच्छत्येव । तस्माद्देवरादिविधिलक्षणा प्रवृत्तिः कथमिति वक्तव्यम् ।

उच्यते । व्यासादिदर्शनेनापत्यपिण्डदान इव क्षेत्रजोत्पत्त्यर्थं सपिण्डानां गुरुनियोगापेक्षा । तदा नोपगमने च्युतिरस्तीत्यनुमन्तव्यम् । न हि महात्मनां रागलक्षणप्रवृत्तिरभ्युपगन्तुं न्याय्या । यच्चोक्तं नियमातिक्रमे पतितत्ववचनं लिङ्गमिति—तदयुक्तम् । यतः पुंसः पतितत्वे पतितोत्पन्नस्याधिकाराभावादुत्पादनमनर्थकम् । तस्मादस्ति देवरादिविधेराभासोऽयम् ।। ६४ ।।

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।।
न विवाहविधावुक्तं विधवावेदनं पुनः ।। ६५ ।।

उद्वाहनं कर्म—तत्र ये मन्त्राः प्रयुज्यन्ते "अर्यमणं नु देवं कन्या अग्निमयक्षत" इत्यादयः । तथान्येऽपि तत्संबन्धाः "मया पत्या जरदष्टिः" इति, "मया पत्या प्रजावतीति"—तत्र सर्वत्र वोढुर्वरयितुः स्वापत्यं भवतीत्याहुः । न तत्र श्रूयते 'मया यत्र नियुज्यसे ततो जनयेति' ।

मन्त्रग्रहणेनैतद्दर्शयति मन्त्रार्थवादा अपि नैवंविधाः सन्ति । दूरत एव तद्दर्शयति न विवाहविधावुक्तं विधवावेदनं पुनः । 'आवेदनं' गमनमभिप्रेतमत्र । अथ—"विवाह एवेयं वा संयुज्यते । विवाहयिष्यति देवरो भ्रातृजायाम् । ततोऽयं नियोगो विवाहो विहित एव ।" न त्वत्र विवाहविधिरिति पूर्वशेषोऽयमर्थवादः ।। ६५ ।।

अयं द्विजैरविद्वद्भिः पशुधर्मो विगर्हितः ।।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ।। ६६ ।।

अयमप्यर्थवाद एव नियोगप्रतिषेधशेषः । येऽविद्वांसः सम्यक् शास्त्रं न जानते तत्र व्यवहारिणो लिंगाद्यन्यपरत्वं च न जानते तैरयं पशुधर्मः—स चात्यन्तगर्हितो मनुष्याणामपि प्रोक्तः प्रवर्तितः । स चेदानींतनो न, आदि वेने राज्ञि प्रशासति राष्ट्रं पालयति ।

"ननु च लिंगानि नैव सन्तीत्युक्तम् ।"

नैवम् । उद्वाहकेषु मन्त्रेषु न सन्तीत्युक्तम् । अन्यत्र तु दृश्यते । "को वा स पुत्रो विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ" इत्यादि । यथा विधवा स्त्री देवरपतिं मनुष्यं कुरुते समानशयन एवं को वा मनस्विनौ कुरुते येन नागच्छतः । को विशेषो विवाहमन्त्रेषु । स किलापत्योत्पत्तिविध्यनुक्रमरूप इत्यभिप्रायः ।

अन्यैर्विद्वद्भिरिति पठितम् । गर्हितो मनुष्याणां प्रोक्तः । पशूनामेष धर्मो भ्रातृस्त्रीगमनं नाम । स च प्रवृत्तो वेनस्य राज्ये ॥ ६६ ॥

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ॥
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ६७ ॥

भुञ्जन्पालयन् । "कथं पुनर्वर्णसङ्करं प्रवर्तयन् राजर्षीणां प्रवर इत्युक्तम् ।" महीमखिलां भुनक्ति यः महाराजत्वात् । कामेन रागादिलक्षणेनोपहता नाशिता चेतना चित्तस्थैर्यं यस्य सः ॥ ६७ ॥

ततःप्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ॥
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥ ६८ ॥

स्पष्टार्थोऽर्थवादः ॥ ६८ ॥

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ॥
तामनेन विधानेन निजो विन्देत देवरः ॥ ६९ ॥

नियोगरूपत्वात्कन्यागतोऽयं धर्म उच्यते । वाचा सत्ये कृते वाग्दाने निवृत्ते एकेन दत्ताऽपरेण प्रतिगृहीता । तामनेन वक्ष्यमाणेन विधानेन निजः सोदरो देवरः विन्देत विवाहयेत् ॥ ६९ ॥

यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ॥
मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥ ७० ॥

यथाविधि यथाशास्त्रं वैवाह्यो विधिस्तथा विवाह्य । वाचनिकोऽयं विवाहः । पुनर्भूश्च तथोच्यते । नवा व्यूढाऽपि सती भार्या भवति । केवलं परार्थोऽस्या वाचनिको विवाहः । तथा च दर्शयति (७१) "न दत्वा कस्यचित्कन्यां पुनरन्यस्य दीयत" इति । नासौ देवराय दीयत इत्यर्थः । अदत्ता चास्वभूता कथमिव भार्या भवेत् ।

शुक्लवस्त्राम् । नियमो गमने । अन्यस्मिन्नपि नियोगे धर्मोऽयमिष्यते ॥७०॥

न दत्वा कस्य चित्कन्यां पुनर्दद्याद्विचक्षणः ॥
दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥ ७१ ॥

"तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पद" इति ( ८।२२७ ) प्राग्विवाहान्मृते वरे दत्तायामपि पुनर्दानाशङ्कायां प्रतिषेधोऽयम् । विशिष्टे तु पुनर्वचनम्—तथाविधा पुनर्भूरुक्ता । नान्यस्मै दत्वा तस्मिन्मृतेऽन्यस्मै दद्यात् । तथा कुर्वन्प्राप्नोति पुरुषानृतम् । मनुष्यहरणे यत्पापं तत् तस्य भवति ॥ ७१ ॥

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ॥
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥ ७२ ॥

विधिः शास्त्रं तदर्हतीति विधिवत् । यादृशः शास्त्रेण विधिरुक्तः "अद्भिरेव द्विजाग्र्याणाम्" इति ( ३।३५ ) । स च कैश्चिदुदकाधिकारः कन्याविषये स्मर्यते । तेन प्रतिगृह्यापि त्यजेत्कन्यां प्राग्विवाहात् । विगर्हितां दुर्लक्षणाम् । पूर्वं प्रतिगृहीतामक्षतयोनिमपि । तथा निर्लज्जां बहुपुरुषभाषिणीम् । व्याधितां क्षयव्याधिगृहीताम् । विप्रदुष्टां रोगिण्यादिशब्दितामन्यगतभावां च त्यजेत् ।

अन्ये क्षतयोनिं विप्रदुष्टां व्याचक्षते ।

न ते सम्यङ्मन्यन्ते । यदि तावत्पुरुषानुपभुक्ता स्त्रीकन्यादिविकृता तदा नैव दुष्यति । अथ पुरुषसंयुक्ता तदा कन्यैव न भवति । तत्र "त्यजेत्कन्यामिति" सामानाधिकरण्यानुपपत्तिः । उक्तश्च तस्यास्त्यागः । छद्मना चोपपादिताम् । न्यूनाधिकांगीम् । यतो हेतुरुक्तोऽकथितेषु स्वल्पेष्वपि दोषेषु कृतवरणाऽपि त्याज्यैव ॥ ७२ ॥

यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् ॥
तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥

कन्यादोषा उक्ताः ।ताननाख्यायानुक्त्वा प्रयच्छति ददाति तस्य तद्दानं वितथं निष्फलं कुर्यात्प्रत्यर्पणेन । उक्त एवायमर्थः पूर्वश्लोकेनातिस्पष्टीकृतः ॥ ७३ ॥

विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ॥
अवृत्तिकर्शिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥ ७४ ॥

यदा प्रवसेत्तदा भार्याया वृत्तं विधाय प्रवसेदिति विधिं विधायेत्येवमर्थं द्रष्टव्यम्—प्रवसन्भार्याया वृत्तिं विदधीतेति। तथा कुर्याद्यथाऽस्या यावत्प्रवासं वृत्तिर्भवति। शरीरस्थितिहेतुभोजनाच्छादनगृह्योपकरणादि। तां विधाय प्रवसेत्स्वदेशाद्देशान्तरं गच्छेत्। कार्यवान् कार्यं पुरुषार्थो दृष्टोऽदृष्टश्च। अदृष्टो धर्मो दृष्टावर्थकामौ। तथा वक्ष्यति (७६) "प्रोषितो धर्मकार्यार्थम्" इत्यादिना। अन्तरेणैतानि निमित्तानि भार्यां हित्वा प्रवासो निषिध्यते। अवृत्तिकर्शिता हि। दृष्टदोषप्रदर्शनमर्थवादः। अवृत्त्या दारिद्र्येण कर्शिता पीडिता प्रदुष्येत् पुरुषान्तरसम्पर्कादिना। स्थितिमत्यपि स्थितिः कुलाचारस्तत्संपन्ना क्षुधावसरे दीना दोषमवाप्नुयादन्यं भर्तारमाश्रित्य जीवतीति सम्भाव्यत एतत्। सम्भावनायां लिङ् ॥७४॥

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ॥
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥ ७५ ॥

'नियमो' यथा सन्निहिते भर्तरि परगृहप्रयाणादिनिषेध एवं प्रोषितेऽपि आस्थिता आश्रिता गृहीतवती। अकृत्वा तु वृत्तिं प्रोषिते शिल्पैर्जीवेदिति। कर्तनजालिकाकरणादिना। गर्हितानि वस्तूनि विजनादीनि। एष एव विधवादीनां निजश्रमजन्यो वृत्त्युपायः ॥ ७५ ॥

प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः ॥
विद्यार्थं षड्यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥ ७६ ॥

यदुक्तं कार्यवान्प्रवसेदिति तानि कार्याणि दर्शयति। तद्विशेषेण प्रतीक्षाकालभेदः। परतस्त्विदं तया कर्तव्यमिति नोक्तम्।

तत्र केचिदाहुः—प्रकरणादगर्हितैर्जीवेदिति।

तदयुक्तम्। प्रागस्मात्कालादगर्हितैरितीयं किं म्रियताम्। न ह्यस्या आत्मत्याग इष्यते। पुंस इव प्रतिषिद्धत्वात्। तस्मात्प्रागप्यस्मात्प्रतीक्षणविधेरगर्हितैः शिल्पैरजीवन्ती गर्हितैर्जीवेत्।

अन्ये व्यभिचारमिच्छन्ति। तथा च स्मृत्यन्तरे ( नारद० १२ । ९७ ) "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥"

अन्येऽप्याहुः। नास्या ज्ञानेन ब्रह्मचर्यमपनेतुं शक्यते। स्त्रीधर्मेषु हि तदस्या

विहितं मनुनाऽपि—"न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु" इति (५।१५८)। मृते भर्तरि नास्ति व्यभिचारः, किमंगप्रोषिते। पतिशब्दो हि पालनक्रियानिमित्तकः—ग्रामपतिः सेनायाः पतिरिति। अतश्चास्माद्वचनान्नैषा भर्तृपरतन्त्रा स्यात्। अपि त्वात्मनो जीवनार्थं सैरंध्रीकरणादिकर्मभिरन्यमाश्रयेत। तत्र यदा षण्मासभृत्या संवत्सरभृत्या वा कस्मिंश्चिदाश्रिते भर्ता यद्यागच्छेत्तदानीं तां चेद्वशीकर्तुं शक्नुयात्—'त्यज त्वं भार्यामिति' यावद्भवति कालो न पूर्णः प्राक् पत्युरेव सा। पञ्चमे चर्वितमन्यत् (५।१५६)।

अन्येऽप्यर्थमिममाहुः।

पूर्वं तु पुनर्भूवृत्तमिच्छन्ति। या पत्या वा परित्यक्ता भवति, यस्याः किल पतिरियन्तं कालं विहितवृत्तिको नागच्छति, सा तेन त्यक्तैव भवति। ततश्च यदि सा पुनर्भूधर्मेणान्येनोढा भवेत्तदा भर्ताऽभ्यागतो न किंचिद्ब्रूयात् पुनर्भवस्येयं भार्येति।

तदयुक्तम्। 'न निष्क्रयविसर्गाभ्याम्' इति (९।४६) तस्य श्लोकस्यार्थवत्त्वं दर्शयिष्यामः।

धर्मश्च तत्कार्यं च 'धर्मकार्यम्'। सोऽर्थः प्रयोजनं प्रवासस्येति धर्मकार्यार्थम्।

"कुतः ? न गृहस्थस्य धर्मार्थो दीर्घकालः प्रवासः। अवश्यं ह्यग्नयस्तेन परिचरणीयाः पाञ्चयाज्ञिकमनुष्ठेयम्। कुतो गन्तव्यम्। "वसन्ते वसन्ते ज्योतिषा यष्टव्यमिति"। तीर्थस्नानादीन्यपि स्मार्तानि च श्रौताविरोधीन्यनुष्ठेयानि। संविधाय प्रोषितस्य वा भवतीति न च येनोच्येत संविधायापि प्रवास आपर्वणः। स्वयं पर्वणि जुहुयादृत्विजामेकतरकालमित्युक्तम्। अनाहिताग्नेस्तीर्थयात्रायां पाञ्चयाज्ञिकस्य तुल्यत्वेऽपि स्मार्तत्वे भार्यासहितस्योपपत्तेः न तत्त्यागे तीर्थगमनं युक्तम्।" उच्यते। गुरुवचनेन। यं गुरवो धर्मार्जने राजोपसेवायां वा स्वकार्याय प्रेषयन्ति स 'धर्मार्थं' प्रवासः। प्रायश्चित्तं वा—तपोवनदेशभ्रमणेन। अथवाऽर्थार्जनार्थमेव धर्मकार्यार्थमभिप्रेतम्। दरिद्रोऽहं कुतश्चिद्धनमर्जयिष्ये।

विद्यार्थम्। "ननु स्नातस्य च भार्याधिगमः। कृतविद्यस्य च स्नानम्। तत्र कुतः कृतविवाहस्य विद्यार्थिता।"

दर्शितमेतत्। ईषदवगतवेदार्थो विवाहेऽधिक्रियते। निश्चिते स्नानादौ।

"नैतद्युक्तम् । कृतायां धर्मजिज्ञासायां स्नानं—जिज्ञासा च विचारपूर्वकसंशयच्छेदेन निश्चितार्था ।"

सत्यम् । नायं विधिर्विद्यार्थितायाः। तथा च सति धर्मकार्यार्थमित्यनेनैवावगता स्यात् । उत्पन्नेऽप्यधिकारोपयोगिन्यवगमेऽभ्यासातिशयार्थं विशेषार्थं चान्यासु विद्यासु ।

क्षिप्रं शौर्ययशःख्यापनार्थं ब्रहिः सविशेषविद्वत्वख्यापनार्थं देशान्तरप्रवसने यशोहेतुः प्रवासः ।

कामार्थं रूपाजीवानुगमोऽभिप्रेततरां भार्यामुद्वोढुम् ।

स्मृत्यन्तरे प्रसूताभेदेन च कालभेदः स्मर्यते । तथा च विष्णुः—"अष्टौ विप्रसूताः षट् राजन्याः चतुरो वैश्या द्विगुणं प्रसूतेति । न शूद्रायः कालनियमः स्यात् । संवत्सरमित्येक" इति ॥ ७६ ॥

संवत्सरं प्रतीक्षेत द्विषाणां योषितं पतिः ॥
ऊर्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ॥ ७७ ॥

द्वेष्यः पतिर्यस्यास्तां द्विषाणाम् । एतेन तु न निष्कासनं कुर्यात् । सम्पूर्वस्य वसेरेनामिति च द्वितीयानुपपत्तेः । वासयेदिति निर्भर्त्सयेत् । पातकेऽपि तस्या निष्कासनं नास्ति "निरुन्ध्यादेकवेश्मनि" इति वचनात् । प्रायश्चित्तेऽप्यस्मिन्निमित्ते विनयाधानार्थोऽपहार इष्यते । न सर्वेण सर्व आत्यन्तिक आच्छेदः ॥ ७७ ॥

अतिक्रामेत्प्रमत्तं या मत्तं रोगार्त्तमेव वा ॥
सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा ॥ ७८ ॥

अतिक्रमस्तदुपचर्याऽवज्ञानं पथ्यौषधादिष्वतत्परता—न पुरुषान्तरसञ्चारः । मासत्रयं परित्यागश्च सम्भोगस्यैव, पूर्वस्मादेव हेतोः । हारकटकादिभूषणैर्वियुक्ता कर्तव्या । परिच्छदपरिग्रहेण भाण्डकुण्डादिना दासीदासेन च ॥ ७८ ॥

उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् ॥
न त्यागोऽस्ति द्विषंत्याश्च न च दायापवर्तनम् ॥ ७९ ॥

क्लीबाबीजशब्दौ नपुंसकमाहतुः । भेदस्तु एको वातरेता, अप्रवृत्तेन्द्रियोऽपरः । तादृशं या द्वेष्टि तस्या नास्ति निग्रहः पूर्वोक्तः ।

अपवर्तनमपहारः। प्रोषितप्रतिषिद्धान्नादयः स्मृत्यन्तरनिषिद्धाः ॥ ७९ ॥

**मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ॥**
**व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥ ८० ॥**

मद्यपाऽसौ मद्यपानरता। पक्तिसंस्कारगृहकार्यानुष्ठानासमर्था। तत्परिरक्षणाय सा परिवेदनमर्हति। या तु गुरुभिः प्रतिषिद्धमद्यपाना। तस्या दण्डं वक्ष्यति "प्रतिषेधे पिबेदिति" ( ८४ )। स्वयं नियमस्य त्वन्यनियमव्यतिक्रमवत्प्रायश्चित्तेन प्रत्यापत्तिर्युक्ता, पुनरधिवेदनं च।

तथा च धर्मानुष्ठानप्रजोत्पत्तिगृहकार्योपघातनिमित्तान्यधिवेदननिमित्तानि पठ्यन्ते—"प्रतिकूला व्याधितार्थघ्नीति"।

ब्राह्मण्यास्तु शास्त्रेण प्रतिषिद्धमद्यायास्तत्पानप्रायश्चित्तमेव भूयोऽप्रवृत्तौ। पातित्यं तु—भ्रूणहनि हीनसेवायां स्त्री पततीति परिसंख्यानान्न मद्यपाने पातित्यमिति। तदेकादशे वक्ष्यामः। उक्तं च पञ्चमे (५। ६०)।

असत्यवृत्ताऽसाध्वाचारा—भृत्येष्वसत्परुषवाक्, बलिकर्मणां प्रागेव भुङ्क्ते, दैवपित्र्ययोर्ब्राह्मणभोजनादौ न श्रद्धावती। अर्थघ्नी अतिव्ययशीला भाण्डोपस्करणं न परिरक्षति अनल्पमूल्येन क्रीणाति। हिंस्रा नाकुलशङ्कयास्यादेवातिताडनशीला। अन्वाहिकस्य व्ययस्यापहन्त्री।

अधिवेदनं तस्या उपर्यन्याविवाहः ॥ ८० ॥

अन्यासामप्यधिवेदनमाह।

**वन्ध्याष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ॥**
**एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ८१ ॥**

तत्र वन्ध्याऽष्टमेऽब्देऽधिवेद्या दशमे तु मृतप्रजा। नाधिवेदनेऽपत्योत्पत्त्यभावाद्धि वन्ध्याया अनुष्ठानपरिपातनं स्यात् अपत्योत्पत्तिविधेराधानविधेश्च। नापुत्रे ह्याधानं श्रूयते। एवं मृतप्रजायाः स्त्रीजनन्याः। अप्रियवादिन्यास्तु दोषाभावेन नाधिवेदनेन सत्यां क्षमायां श्रमनियमः (?) ॥ ८१ ॥

**या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ॥**
**साऽनुज्ञाप्याऽधिवेत्तव्या नावमान्या च कर्हिचित् ॥ ८२ ॥**

भर्त्रहिता परिचर्यापरा। अनुज्ञापनाअवमानयोरिह विधानम्, पूर्वासामेतद्भावात्।

रोगिणीग्रहणं वन्ध्यास्त्रीजनन्यावपि लक्षयति। प्रकृतत्वाविशेषादवमाननिमित्ताभावाच्च कर्हिचित्कदाचिदवमाननं शिष्टचर्थं परिभाषितम्॥ ८२॥

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्॥
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ॥ ८३॥

क्रोधेनाधिवेदनहेतुना निर्गतायास्त्यागसंनिरोधौ विकल्पतो विधीयेते। न तु यथोपपन्नहेतुना भोजनाच्छादनादिना तत्र प्रीत्या क्रोधावमार्जनं श्वश्रूभिः श्वशुरादिभिर्वा परिभाषणम्। संनिरोधो रक्षिपुरुषाधिष्ठानम्। त्यागो व्याख्यातः—असंभोगः सहशय्यावर्जनम्। कुलं ज्ञातयः—तत्पितृपक्षाः स्वपक्षाश्च॥ ८३॥

प्रतिषेधे पिबेद्या तु मद्यमभ्युदयेष्वपि॥
प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट्॥ ८४॥

प्रतिषेधे गुरुसम्बन्धिभिः। अयं दण्डः क्षत्रियादिस्त्रीणाम्। न शास्त्रीयो ब्राह्मणीनाम्। न हि तत्र दण्डमात्रेण मोक्षः। किं तर्हि महता। न च तत्राभ्युदयेषु पानाशङ्का। अप्रतिषिद्धमद्यानां तु नियमेनोत्सवसमागतानामादरवती प्रवृत्तिर्दृश्यते।

यां सम्यङ्निषेधत्यभ्युदयेष्वपीति। दण्डश्चायं भर्त्रा दीयते। सत्यपि राजवृत्तित्वे "स्त्रीणां भर्ता प्रभुः" इति विज्ञायते। अन्येषामपि परिग्रहवतां भृत्यादिविषये कियति दण्डे स्वातन्त्र्यम्।

अभ्युदयः पुत्रजन्मविवाहादय उत्सवाः। प्रेक्षा नटादिदर्शनम्। समाजो नितान्तमपि जनसमूहः। तत्र कुतूहलिन्या अयं दण्डः॥ ८४॥

यदि स्वाश्चापराश्चैव विन्देरन्योषितो द्विजाः॥
तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च॥ ८५॥

कामतः प्रवृत्ता यदि समानजातीया असमानजातीयाश्च विन्देरन्विवाहयेयुस्तासां वर्णक्रमेण जात्यनुरूपं ज्यैष्ठ्यं—न वयस्तो न च विवाहक्रमतः। फले हि दाननिमित्ते पूजा। प्रथमं ब्राह्मण्यास्ततः क्षत्रियावैश्ययोरित्येष वर्णक्रमः। वेश्म प्रधानं गृहम्। तद्ब्राह्मण्याः सवर्णानां विवाहक्रमो निश्चयः स्मृतः॥ ८५॥

भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ॥
स्वा स्वैव कुर्यात्सर्वेषां नास्वजातिः कथंचन ॥ ८६ ॥

शरीरशुश्रूषा भर्तरुपयोगिपाकादिलक्षणा दानभोजनप्रतिजागरणं स्वा स्वैव कुर्यात् । पृष्ठपादसंवाहननिर्णेजनादौ त्वनियमः । युगपत्संनिधौ तु शरीरावयवक्रमो वर्णक्रमेण । नैत्यकं धर्मकार्यं "सायं त्वन्नस्येत्यादि" अग्निशरणोपलेपनाचमनोदकतर्पणदानादि ॥ ८६ ॥

अस्या निन्दार्थवादः—

यस्तु तत्कारयेन्मोहात्सजात्या स्थितयाऽन्यया ॥
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥ ८७ ॥

यस्त्वेतत्कर्माऽन्ययाऽसमानजातीयया कारयेत्सजातीयायां स्थितायां ब्राह्मण एव स चण्डालः पूर्वस्माद्दृष्टः ॥ ८७ ॥

उत्कृष्टायाभिरूपाय वराय सदृशाय च ॥
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥ ८८ ॥

उत्कृष्टायाभिरूपायेति विशेषणविशेष्यभावः । उत्कृष्टायाभिरूपतराय इत्यर्थः । अथवोत्कृष्टाय जात्यादिभिरभिरूपायेति पृथग्विशेषणम् । रूपमाकृतिमाभिमुख्येन प्राप्तोऽ'भिरूपः' । स्वभाववचनो वा । सुस्वभावो विद्वानप्यभिरूप उच्यते । सदृशाय जात्यादिभिः । वरो वोढा जामाता । अप्राप्तामप्ययोग्यामपि कामावशत्वेन वालामप्राप्तां कौमारं वयः । स्मृत्यन्तरे नग्निकेत्युच्यते । कामः स्पृहा यस्या नोत्पन्ना सा चाष्टवर्षा षड्वर्षा वा, न त्वत्यन्तबालैव । तथाहि लिङ्गम् "अष्टवर्षामिति" ।

इदमेव लिङ्गं धर्मप्रयुक्ततायामपि विवाहस्येति । अन्यथा रागस्यैव प्रयोजकत्वे कुतोऽप्राप्ताया विवाह इत्याहुः ।

तदयुक्तम् । धनार्थिनोऽपि वालां विवाहयन्ति । न शास्त्रीयैव सर्वा प्रयुक्तिस्तृतीये निरूपिता ॥ ८८ ॥

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ॥
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९ ॥

प्रागृतोः कन्याया दानम् । ऋतुदर्शनेऽपि न दद्याद्यावद्गुणवान्वरो न प्राप्तः। गुणो विद्याशौर्यातिशयः शोभनाकृतिर्वयोमहत्वोपेतता लोकशास्त्रनिषिद्धपरिवर्जनं कन्यायामनुराग इत्यादिः ।। ८९ ।।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ॥
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९० ॥

रेतोऽृतुकालं—तद्वत्यपि त्रीणि वर्षाणि तद्गृहे आसीत । अतः परममुत्कृष्टाभावे सदृशं समानजातीयं स्वयं वृणुयात् ।। ९० ।।

अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ॥
नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति ॥ ९१ ॥

वर्षत्रयादूर्ध्वमदीयमाना यं भर्तारं वृणुते तस्य दोषो न। कन्यायाः पूर्वेणैव दोषाभाव उक्ते व्रियमाणस्य दोषार्थमिदम् ।

ऋतुदर्शनं च द्वादशवर्षाणामिति स्मर्यते ।। ९१ ।।

अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ॥
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥ ९२ ॥

भ्रात्रादिभिर्यदादौ दत्तं स्वयंवरणाभिप्रायं तस्या अजानद्भिस्तदलङ्करणं तेषामेव प्रत्यर्पयेत्। यदि तु तथाविधाया एव ददाति तदा न त्यागः। तेनास्मै न वयमेनां दास्याम इत्येवमभिप्रायं यद्भूषणं न तस्मिन्नन्यथात्वमापन्ने युक्तम्।

"स्तेनः स्यादिति" पुँल्लिङ्गेन पाठान्तरम्। वरस्य चौरत्वमाहुः। तस्मात्तेनाऽलङ्कारस्त्याजयितव्यः ।। ९२ ।।

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ॥
स च स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ ९३ ॥

शुल्कदेयाया ऋतुमत्याः शुल्कनिषेधोऽयम्। तत्र हेतुः—स च स्वाम्यादतिक्रामेत्। "बाल्ये पितुर्वशे तिष्ठेत्" इत्युक्तम्। वयोन्तरप्राप्तौ चाददतः पितुः स्वाम्यं नास्ति। शुल्कादेयाया अपि हेतोः समानत्वात्पितुः स्वाम्यनिवृत्तिः। 'अपक्रमणं' निवृत्तिः। प्रतिरोधनं प्रतिरोधोऽपत्योत्पत्तिकार्ये।

केचिदाहुः अमानवोऽयं श्लोकः ।। ९३ ।।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ॥
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ ९४ ॥

इयता कालेन यवीयसी कन्या वोढव्या न पुनरेतावद्वयस एव विवाह इत्युपदेशार्थः। अथापि न यथाश्रुतवर्षसंख्यैव। किं तर्हि। बहुना कालेन यवीयसी वोढव्या। न ह्येतद्विवाहप्रकरणे श्रुतम्। येन संस्कार्यविशेषणत्वेन तदङ्गं कालो दशादिवर्षां पञ्चविंशत्यादिवर्षं च निवर्तयेत्। "ननु च वाक्यान्तरस्थस्याप्यङ्गविधिर्भवत्येव"। सत्यमिह प्रकरणोत्कर्षेण पाठादाचार्यस्याभिप्रायान्तरमनुमीयते। तथा शिष्टसमाचारः। सुतस्य च पुनर्दारक्रियायां नैष कालः संभवतीति "पुनर्दारक्रियां कुर्यात्" इति नोपपद्यते ॥ ९४ ॥

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ॥
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ ९५ ॥

साध्वी भार्या प्रातिकूल्याप्रियवादादिदोषयुक्ताऽपि भर्त्रा न त्याज्येति श्लोकार्थः। अवशिष्टा प्रशंसा। यत् तु 'निरुध्यादेकवेश्मनी' त्यसाध्व्या अपि विहितं तत्सकृद्व्यभिचारे। अभ्यासे तु त्याग एव। नान्यथा तां साध्वीं बिभृयादित्यनेन किंचित्कृतं स्यात्।

यदपि "हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥" ( याज्ञ० १ । ७० )—तच्च सत्यां शक्तौ पत्युरिच्छा सा। अनिच्छायां तु त्याग एव।

यच्चेदं पतितास्वपि 'वस्त्रान्नदानं देयं चे' त्यादि वक्ष्यति तद्ब्रह्महत्यादिषु प्रायश्चित्तेषु भैक्ष्यभोजनारम्भे निर्वासप्राप्तौ प्रतिषेधवचनमिति वक्ष्यामः। सर्वथा तु पुनर्व्यभिचारिण्या भरणं नास्ति। न चात्र त्यागः श्रुतो येन संभोगविषयतया कल्प्येत।

"सोमोऽददत्" इत्यादिमन्त्रार्थवादेभ्यो ( ऋग्वेद १० । ८५ । ४१ ) देवतानां दातृत्वं प्रतीयते।

अथवा विवाहे देवताया भार्या भवत्यत उच्यते—देवदत्तामिति।

विन्देत—नात्मन इच्छया। यथान्यद्व्रीहिरण्याद्यापणभूमौ लभ्यते तथा नेयं भार्या। अत उच्यते नेच्छयात्मन इति।

देवानां प्रियं देवेभ्यो हितं—त्यक्तायां भार्यायां वैश्वदेवादिक्रियानिमित्ते नास्ति देवहितम्। अतस्तां द्विषन्तोऽपि बिभृयात्। पातित्ये तामनधिकारप्राप्तां पतिरधिविन्देत ॥ ९५ ॥

प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः ॥
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥ ९६ ॥

प्रजनं गर्भग्रहणम्। सन्तानो गर्भाधानम्। तस्माद्धेतोरपत्योत्पत्तेरुभयाधीनत्वाद्वेदे स्त्रिपुंसयोः साधारणो धर्मः पत्न्या सह पुंस उक्तः। अतः केवलस्याधिकाराभावात् स्त्रियो द्वेष्या अपि न त्याज्याः ॥ ९६ ॥

कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ॥
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥ ९७ ॥

यस्याः पित्रादिभिर्गृहीतं शुल्कं, न च दत्ता, केवलवचनेन देयत्वेन व्यवस्थिता,—अत्रान्तरे स चेन्म्रियेत तदा—"अन्यद्रव्यवद्देवरेषु प्राप्ता सर्वेषु वा युधिष्ठिरादिवत्, तदभावे सपिण्डेषु"—अतो विशेषार्थमिदमुच्यते-देवराय प्रदातव्येति—न सर्वेभ्यो भर्तृभ्रातृभ्यो नापि सपिण्डेभ्यः, किं तर्ह्येकस्मै देवरायैव। तत्रापि कन्याया अनुमतौ सत्याम्। "अथासत्यां कन्यायाः शुल्कस्य च का प्रतिपत्तिः"। यदि कन्यायै रोचते ब्रह्मचर्यं तदा शुल्कं कन्यापितृपक्षाणामेव। अथ पत्यन्तरमर्थयते तदा प्राग्गृहीतं शुल्कं त्यक्त्वाऽन्यस्मादादाय दीयते ॥ ९७ ॥

आददीत न शूद्रोऽपि शुल्कं दुहितरं ददन् ॥
शुल्कं हि गृह्णन्कुरुते छन्नं दुहितृविक्रयम् ॥ ९८ ॥

इच्छातः शुल्कग्रहणे पूर्वेण विधिरुक्तः। कस्यचित्तत एवाशङ्का स्यात्—'अदोषं शुल्कग्रहणं शास्त्रे गृहीतशुल्काया विशेष उक्तो यतः'—अत इमामाशङ्कामपनेतुमाह। आददीत न शूद्रोऽपि शुल्कमिति। इच्छातः प्रवृत्तौ शास्त्रीयो नियमो न तु शास्त्रेण पदार्थस्यैव कर्तव्यतोक्ता। यथा मद्यपीतस्य प्रायश्चित्तविधानेन न मद्यपानं शास्त्रेणानुज्ञातं भवति। शुल्कसंज्ञेन यदेवोक्तं "गृह्णन्हि शुल्कं लोभेन" इति। येन तु विशेषेण पुनः पाठोऽसौ प्रदर्शित एव ॥ ९८ ॥

एतत्तु न परे चक्रुर्नापरे जातु साधवः ॥
यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥ ९९ ॥

यदुक्तं गृहीते शुल्के कन्येच्छायां सत्यां मृते तु शुल्कदेऽस्या अन्यत्र दानमिति' तन्निषेधति। यदन्यस्य शुल्कदस्य प्रतिज्ञाय पुनरन्यस्मै दीयते पुनः शुल्कं गृहीत्वेति वरं स्वयंवरं तु कारयेत्कन्याम्—एष एवार्थः ॥ ९९ ॥

नानुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु ॥
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥ १०० ॥

न कुतश्चिदस्माभिः श्रुतम्। पूर्वेषु जन्मसु कल्पान्तरेष्वित्यर्थः ॥ १०० ॥

अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः ॥
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥ १०१ ॥

अविशेषेण वचनक्रिया सर्वक्रियास्वव्यभिचारः। तथा चापस्तम्बः "धर्मे चार्थे च कामे च नाभिचरितव्या" इति। एतावच्च श्रेयो धर्मोऽर्थः कामः। तथा चोक्तम्—"त्रिवर्ग इति तु स्थितिः" इति।

यच्चाहुः—"अपरित्यागोऽत्राव्यभिचारः, इतरथा स्त्रीवत्पुरुषस्यानेकाभार्यापरिणयनं न स्यात्"—तदयुक्तम्। अस्ति पुरुषे वचनं "कामतस्तु प्रवृत्तानाम्", तथा "वन्ध्याष्टमेऽधिवेत्तव्या" इति। न तु स्त्रियाः। तथा च लिङ्गान्तरं स्यात् "एकस्य बह्व्यो जाया भवन्ति नैकस्या बह्वः सह पतय" इति ( ऐतरेयब्राह्मणे ३ । ३ )। आमरणान्ते भव आमरणान्तिकः। अन्यतरमरणेऽपि तस्यान्तोऽस्तीत्यर्थः। एष संक्षेपेण स्त्रीपुंसयोः प्रकृष्टो धर्मो वेदितव्यः ॥ १०१ ॥

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ।
यथा नातिचरेतां तौ वियुक्तावितरेतरम् ॥ १०२ ॥

यतेयातां प्रयत्नवन्तौ तथा स्यातां यथेतरेतरं परस्परं नातिचरेताम्। 'अतिचारो'ऽतिक्रमः, धर्मार्थकामेष्वसहभावः। कृतक्रियौ कृतविवाहादिसंस्कारौ नियुक्तौ। ततः परोपसंहारश्लोकोऽयं नानुक्तार्थोपदेशकः ॥ १०२ ॥

पूर्वोक्तप्रकरणयोः सम्बन्धश्लोकोऽयम।

एष स्त्रीपुंसयोरुक्तो धर्मो रतिसंहितः ॥
आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधत ॥ १०३ ॥

उक्तेषु स्त्रीपुंसयोश्चापत्योत्पत्तौ च दायधर्मस्य विभागस्यावसरः ॥ १०३ ॥

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ॥
भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ १०४ ॥

भजेरन्निति प्राप्तकालतायां लिङ्। [ तथा पञ्चमे प्रपञ्चितम्। अथवा यस्मिन् शयने संक्रामति ] ॥ १०४ ॥

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ॥
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ १०५ ॥
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ॥
पितृणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ १०६ ॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ॥
स एव धर्मजः पुत्रः कामजानितरान्विदुः ॥ १०७ ॥

इतरानित्यर्थवादोऽयम्। यथाश्रुततात्पर्यग्रहणाद्धि कनीयसामभागार्हतैव स्यात्। ततश्च वक्ष्यमाणविरोधः ॥ १०७ ॥

पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन्यवीयसः ॥
पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥ १०८ ॥

पुत्रवत्पालनीया न तु बाला इति धनादिना गर्हणीयाः। तैरप्ययं पितेति भावनीयम्। तदाह—पुत्रवच्चापि वर्तेरन्निति ॥ १०८ ॥

अपरा प्रशंसा।

ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ॥
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥ १०९ ॥

य एवंगुणो ज्येष्ठः स वर्धयति कुलम्। अयमेव निर्गुणस्तत्कुलं विनाशयति। शीलवति ज्येष्ठे कनीयांसोऽपि तथा वर्तन्ते। तेऽपि गुणहीनेन विवदन्ते ॥ १०९ ॥

योो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ॥
अज्येष्ठवृत्तिर्यस्तु स्यात्स संपूज्यस्तु बन्धुवत् ॥ ११० ॥

ज्येष्ठस्य वृत्तिः पुत्रे इव स्नेहः, पालनं, शरीरधनेषु तदीयेषु स्ववदनुपेक्षा, अकार्येभ्यो निवर्तनम्। यस्त्वन्यथा वर्तते तत्र बन्धुवत्प्रत्युत्थानाभिवादनैः मातुलपितृव्यवत्संपूजा कर्तव्या। अन्यथाकरणे विधेयतानिवृत्तिः ॥ ११० ॥

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ॥
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥ १११ ॥

स्वेच्छानियोज्यत्वाभावान्निरपेक्षस्तद्द्रव्यसाध्येषु ज्योतिष्टोमादिष्वसंभवात्तत्सिद्ध्यर्थोऽयं न्यायप्राप्तो विभाग उच्यते पृथग्वा धर्मकाम्ययेति—न पुनरविभागादधर्मो विभाग एवाग्निहोत्रादिवद्धर्मः। "ननु च धर्मानुष्ठानप्रतिबन्धहेतुत्वादधर्मतैवाविभागस्य"। नैष दोषः। अधिकृतस्याननुष्ठाने प्रत्यवायः। न चाविभक्तधनस्याधिकारोऽग्निमत्त्वाभावात्। विभागकाल एवाग्निपरिग्रहस्य विहितत्वात्। यस्तु जीवत्येव पितरि कृतविवाहस्तदैव च परिगृहीताग्निस्तस्याधिकृतत्वान्नैवाविभागः। सोऽपि यदि विच्युतः परिग्रहादन्यतो वा विहितानुष्ठानपर्याप्तधनस्तदा नैव सह वसन्प्रत्यवेयात्। न हि विभागाविभागयोर्धर्माधर्मत्वं स्वरूपेणास्तीत्युक्तम् "ननु च 'भ्रातृणामविभक्तानामेको धर्मः प्रवर्तत' इति वचनाद्दम्पत्योरिव सहानुष्ठाने प्राग्विभागादस्त्येव धर्मव्यक्तिः—साधारण्याद्द्रव्यस्य सर्वैः संभूय कर्तव्यमिति।" नैतदग्निहोत्रादौ। आहवनीयादिषु ह्यग्निहोत्रादयः। संस्कारनिमित्ताश्चाहवनीयादय आत्मनेपददर्शनादन्यतरस्य संबन्धितां न प्रतिपद्यन्ते। परकीये वाऽग्नौ जुह्वतः प्रतिषेधदर्शनमस्ति—'नान्यस्याग्निषु यजेतेति'। न स्मार्ते ह्यपि गृह्येऽग्नौ विधानम्। गृहशब्दस्य विशिष्टोपादानादग्निवचनत्वादेष एव न्यायः। अतिथ्यादिभोजनदाने महायज्ञमध्ये पाठात् "वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ॥ पञ्चयज्ञविधानं च". इति गृह्यत एवाधिकारः। तेनैतद्वचनमेको धर्म इति श्राद्धपूर्तान्नादिमात्रं विज्ञेयम् ॥ १११ ॥

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ॥
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥ ११२ ॥

"इयमुद्धारनियोगस्मृतिरतिक्रान्तकालविषया, न त्वद्यत्वेऽनुष्ठेया, नियतकालत्वात्स्मृतीनामिति' केचित् । अनुष्ठेयत्वव्यपदेशो दीर्घसत्रवज्ज्ञानादभ्युदयो यथा स्यादिति । न हि दीर्घसत्रमद्यत्वे केचिदाहरमाणा दृश्यन्ते । अधीयते तु तदुपदेशं ब्राह्मणाः । तथाच 'अन्ये कलियुगे धर्मा' इत्युक्तम् । (१ । ८५) तेन देशनियमवत्कालनियमोऽपि धर्माणां द्रष्टव्यः । न ह्युपदिष्टो धर्मः सर्वत्र देशेऽनुष्ठीयते । तथाहि देशधर्मा नियतदेशव्यवस्थिता उच्यन्ते । अन्यथा सर्वानुष्ठाने न देशव्यपदेश्यता धर्माणाम् । तथा च पठति (९ । ६६) 'अयं द्विजैर्हि विद्वद्भिः' इत्यादि । तस्मादुद्धारनियोगगोवधस्मृतय उपदिष्टा नानुष्ठेयाः ।

तदेतदपेशलम् । न ह्येवंविधः कालनियमः क्वचिदपि श्रूयते सायंप्रातःपर्वादिनियमादन्यत्र । यच्च 'अन्ये कृतयुगे धर्मा' इति तत्प्रथम एव व्याख्यातम् । न हीदं युगभेदेन धर्मव्यवस्थाहेतुः । देशनियमोऽपि प्राचीनप्रवणादिव्यतिरेकेण मध्यदेशपूर्वदेशकृतो नैवास्तीत्युक्तम्—(८ । ४१) 'जातिजानपदान् धर्मान्सद्भिराचरितान्' इत्यत्र । दीर्घसत्रेष्वद्यत्वेऽप्यनुष्ठानसंभवः । संवत्सरशब्दस्त्वहःसु प्रथम एव दर्शितः । यत्तु नाद्यत्वे केचिदनुतिष्ठन्तो दृश्यन्त इति—उपदिष्टार्थस्य नित्यवदाम्नातस्यापि वहुभिः प्रकारैरनुष्ठानसाधनाशक्त्या फलानिच्छया वा नास्तिकतया वा । यत्तु 'वेने राज्यं प्रशासति' (९ । ६६) तदाप्रभृतिकं महापौर्वकालिकमनुष्ठानं दर्शयतीत्यर्थवादोऽसौ न कालोपदेशः ।

ज्येष्ठस्य विंशः । ज्येष्ठस्य सर्वद्रव्याद् विंशतितमो भाग उद्धृत्य दातव्य एव । मध्यमस्य तदर्धं चत्वारिंशत्तमो भागः । एवं कनिष्ठस्य तुरीयो ज्येष्ठापेक्षयाऽशीतितमो भागः । एवमुद्धृते परिशिष्टं त्रिधा कर्तव्यम् । तत्र सर्वेभ्यो द्रव्येभ्यो यद्वरं श्रेष्ठं तज्ज्येष्ठस्यैव । अथवा "द्रव्येष्वपि परं वरम्" इति पाठः । उत्तमाधममध्यमानि यानि द्रव्यादीनि सन्ति ततस्तस्माद्यदेकं श्रेष्ठं तत्तस्यैव तदुक्तं भवति । यत्र गावोऽश्वा वा सन्ति एकः श्रेष्ठो ज्येष्ठस्य दातव्यो न द्रव्यान्तरेण मूल्येन वा स्वीकर्तव्यः । त्रयाणां सर्वेषां गुणिनामयमुद्धारविधिः । गुणवतामुद्धारदर्शनात् ॥ ११२ ॥

ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् ॥
येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम् ॥ ११३ ॥

त्रिभ्योऽधिकपुत्रस्य ज्येष्ठकनिष्ठयोर्गुणवतोर्यथोक्तमुद्धृत्य बहूनामपि मध्यमानां गुणवतो मध्यमस्य यश्चत्वारिंशत्तमो भाग उक्तोऽनन्तरश्लोके बहुभिरपि मध्यमैः स विभजनीयः। समगुणानां तु मध्यमानां सर्वेषामेकैकस्य पूर्ववचनाच्चत्वारिंशत्तमो भाग उक्त उद्धार्यः। तेषां स्यान्मध्यमं धनमिति उभयथा वचनं व्यज्यते। मध्यमधनं यदनन्तरश्लोके निर्दिष्टं तत्सर्वेषां समवायेन दातव्यम्। यदि वा प्रत्येकमेव ज्येष्ठकनिष्ठतामपेक्ष्य। तत्र प्रथमपक्षो निर्गुणेषु युक्तः। ते नं बहुधनार्हाः। द्वितीयो गुणवत्स्वेव ॥ ११३ ॥

सर्वेषां धनजातानामाददीताग्र्यमग्रजः ॥
यच्च सातिशयं किंचिद्दशतश्चाप्नुयाद्वरम् ॥ ११४ ॥

आद्येनार्धश्लोकेन "सर्वद्रव्याच्च यद्वरम्" इत्युक्तमनुवदति। जातशब्दो जातिपर्यायः प्रकारवचनो वा। अग्रजो ज्येष्ठः। अग्र्यं श्रेष्ठम्। यच्च सातिशयमेकमपि वस्त्रमलङ्कारं वा। दशतो दशावयवाद्वा वरमेकमाददीत। यदि दशगावोऽश्वा वा सन्ति तदा एकं श्रेष्ठमाददीत। अर्वाग्दशावयवाद्वा न लभते। वर्गे दशशब्दः। अन्ये तु स्वार्थे तसिं चाचक्षते। "दशैव दशतो वरान्" इति बहुवचनं पठन्ति। दशवरानाददीत। अन्यस्तद्विशिष्टान्स्मरति "दशतः पशूनामेकशफद्विपदानाम्" इति ॥ ११४ ॥

उद्धारो न दशस्वस्ति संपन्नानां स्वकर्मसु ॥
यत्किंचिदेव देयं तु ज्यायसे मानवर्धनम् ॥ ११५ ॥

दशसु पशुषु यः पूर्वत्रोद्धार उक्तः स नास्ति। ये भ्रातरः स्वकर्मसु श्रुताध्ययनादिषु संपन्ना विशेषवन्तो दशस्विति चोपलक्षणं व्याख्यानयन्ति। दशसु यत्र श्लोक उद्धार उक्तः स सर्व एव नास्ति। कर्मसंबन्धात्। किंतु तैरपि यत्किंचिदेवाधिकमुपायनविधं मानवर्धनं पूजाकरं ज्येष्ठाय देयम्॥ ११५ ॥

एवं समुद्धृतोद्धारे समानंशान्प्रकल्पयेत् ॥
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ॥ ११६ ॥

समुद्धृते पृथक्कृत उद्धारेऽधिके भागेऽवशिष्टे धने समानंशान्प्रकल्पयेत्। अनुद्धृते वक्ष्यमाणा भागकल्पना ॥ ११६ ॥

एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥ ११७ ॥

एकेनांशेनाधिकं स्वांशं हरेत्स्वीकुर्यात् द्वावंशौ प्रतिपद्येतेत्यर्थः ।

ततोऽनुजस्तदनन्तरमध्यर्धमर्धद्वितीयम् । यवीयांसस्तस्मादर्वाग्जाताः सर्वे सममंशं नाधिकं किंचिन्नाल्पमित्यर्थः ॥ ११७ ॥

स्वाभ्यः स्वाभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ॥
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥ ११८ ॥

कन्याशब्दः प्रायोऽनूढासु प्रयुज्यते । 'कानीनपुत्रः' । स्मृत्यन्तरे चो-'पात्तानामि' ति पठ्यते । अतोऽनूढायामयं भाग उच्यते ।

स्वाभ्यः स्वजात्यपेक्षया स्वाभ्यो भ्रातरः कन्याभ्यश्चतुर्भागमंशं दद्युः स्वादंशात् । यत्र बह्व्यः कन्याः सन्ति तत्र समानजातीयभ्रात्रपेक्षया चतुर्थांशकल्पना कर्तव्या । तथा चायमर्थः । त्रीनंशान्पुत्र आददीत चतुर्थं कन्येति ।

यदपि कैश्चिदुक्तं—"महानुपकारः पितृकरणं कन्यानामदत्तानां, येन जीवति पितरि तदिच्छयाऽमूल्येनापि धनेन संस्क्रियन्ते मृते त्वंशहरा इति" तत्पुत्रेऽपि तुल्यम् । वाचनिके चार्थे केयं नोदना । अथाभिप्रायः "समाचार उद्वाहमात्रप्रयोजनं दानमि" त्याचारो दुर्बलः स्मृतेरिति । न चैकान्तिकः । अनैकान्तिकत्वे च स्मृतितोऽयं नियमो युक्तः ।

यदपीदं केनचिदुक्त "मुद्वाहमात्रप्रयोजनं देयं, न चतुर्थो भागो यथाश्रुतमिति ।" स इदं वाच्यो नोद्वाहेऽपरिमितधनदानमस्ति । तस्य द्वादशशतं दक्षिणेतिवत् केवलमाच्छाद्यालंकृतां विवाहयेत् । सौदायिकं वाऽस्या दद्यादिति' श्रूयते । अलङ्कारस्तु सुवर्णमणिमुक्ताप्रवालादिरनेकधा भिन्न इति । तत्र न ज्ञायते कियद्दातव्यं धनं कीदृशो वाऽलङ्कार इत्यतश्च परिमाणार्थमेवेदं युक्तं स्वादंशाच्चतुर्भागमिति । न चास्मिन्नर्थे शास्त्रविरोधो युक्तिविरोधो वा ।

स्मृत्यन्तराण्येवमेव पक्षमुपोद्वलयन्ति । "असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम्" ॥ इति (या० व० स्मृ० २-१२४) । तथा "आ संस्काराद्धरेद्भागं परतो विभृयात्पतिः" इति ।

अस्यायमर्थः—यत्र स्वल्पं धनमस्ति भ्रातुर्भगिन्याश्च न चतुर्भागे कन्याया भरणं

भवति तत्र समभागं कन्या हरेत् आसंस्कारात्। परतस्तु स्मृत्यन्तराच्चतुर्भागं गृह्णीयात्स्वल्पमपि। कथं तर्हि भरणमात्रं कुर्यादत उक्तं—"परतो विभृयात्पतिः" इति।

भ्रातृग्रहणं सोदर्यार्थं व्याचक्षते। कोऽभिप्रायः। भ्रातृशब्दो निरुपपदसोदर्य-एव मुख्यया वृत्त्या वर्तते। 'पृथक्' वचनं च लिङ्गम्।

यस्यास्तु हि सोदर्यो नास्ति तस्या अदायः सौदायिकस्य प्राप्नोति। "वैमात्रेयो दास्यतीति" चेन्नासति वचनान्तरे ददात्ययम्। भ्रातृशब्दा एकात्ममातृकाश्च गृह्यन्ते। पैतृष्वस्रेयादिषु तूपचाराद्वर्तत इति युक्तम्। एवमेकशब्दस्यानेकार्थत्वं नाभ्युपगतं भवति। स्मृत्यन्तरसमाचारश्चेति श्रेयान्। तत्र हि पठ्यते "यच्छिष्टं पितृदायेभ्यः प्रदानिकम्" इति। नात्र भगिनीशब्दो भ्रातृशब्दो वा श्रूयते यत इयमाशङ्का स्यात्।

यत्तु पृथगिति तदेकैकस्यैव समूहः भागः सर्वाभ्य इत्येवमपि युज्यते।

इदमप्युच्यते। अददतां प्रत्यवायो न तु हठाद्दाप्यन्ते। यत उच्यते पतिताः स्युरदित्सव इति। यो हि यत्र यावत्यंशे स्वामी स 'हरेदि' त्युच्यते। न पुन 'रनेनास्मै दातव्यमिति'। यथा नोच्यते भ्राता भ्रात्रे दद्यादिति। यच्चोच्यते तत् पुनरस्वामिभ्यः॥ ११८॥

**अजाविकं चैकशफं न जातु विषमं भजेत्॥**
**अजाविकं तु विषमं ज्येष्ठस्यैव विधीयते॥ ११९॥**

एकशफमश्वाश्वतरगर्दभादयः विभागकाले समसंख्यया यद्विभक्तुमजाविकं न शक्यते ज्येष्ठस्यैव स्यान्न तदन्यद्रव्यांशपातेन समतां नयेद्विक्रीतं वा ततस्तन्मूल्यं दापयेत्।

अजाविकमिति पशुद्वन्द्वविधावेकवद्भावः॥ ११९॥

**यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि॥**
**समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः॥ १२०॥**

ज्येष्ठस्य नियोगधर्मेण पितृवत्सोदरेऽतिदेशे प्राप्ते तन्निवृत्त्यर्थमुच्यते। समस्तत्र विभागः स्यात्। न चोद्धारं न चै"वाधिकं हरेज्ज्येष्ठ" इति। नापि यत्किंचिदेव देयमिति।

समः स्यात् । केन । उत्पादकेन पितृव्यकेण कनीयसा । अनियुक्तासुतस्य त्वभागार्हतैव वक्ष्यते । इदं च लिङ्गं भ्रातरि सहिते । सत्यपि भ्रातृशब्दे भ्रातृपुत्रेणाप्यसति भ्रातरि सह विभागः कर्तव्यः ॥ १२० ॥

**उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ॥**
**पिता प्रधानं प्रजने तस्माद्धर्मेण तं भजेत् ॥ १२१ ॥**

उपसर्जनमप्रधानं क्षेत्रजः । प्रधानस्यौरसस्य तुल्य इत्येतदध्याहृत्य । तद्धर्मतः शास्त्रतो न युज्यते । औरसः किल पितृवज्ज्येष्ठांशं कृत्स्नं लभते । अयं तु क्षेत्रजोऽप्रधानम् ।

तस्माद्धर्मेण तं भजेत् । 'धर्मः' पूर्वोक्ता भागकल्पना ।

"ननु चायमपि ज्येष्ठः पुत्रो भवति किमित्यौरसवन्न लभते" ।

अत आह पिता प्रधानं प्रजने । 'पिता' जनकोऽत्राभिप्रेतः । स प्रधानमपत्योत्पादने । अयं चाप्रधानः, कनीयसा जनितः । 'उपसर्जनं प्रधानस्य सम' मित्येवाध्याहृत्य श्लोको गम्यते । अर्थवादोऽयं पूर्वस्य ज्येष्ठांशनिषेधस्य । अर्थवादत्वाच्च प्रधानोपसर्जनशब्दयोर्यत्किंचिदालम्बनमाश्रित्य व्याख्या कर्तव्या ।

अन्ये पठन्ति "तस्माद्धमण तं त्यजेत्" इति । तदयुक्तं, सर्वत्र समभागस्योक्तत्वात् । अर्थवादत्वाच्चास्य न विकल्पाशङ्का कार्या ॥ १२१ ॥

**पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः ॥**
**कथं तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥ १२२ ॥**

ज्येष्ठा प्रथमोढा । पश्चादूढा कनिष्ठा । तयोर्जातानां किं मातुरुद्वाहक्रमेण ज्यैष्ठ्यं स्यात्स्वजन्मक्रमेण वेति संशयमुपन्यस्योत्तरत्र निर्णेष्यते संप्रतिपत्तुम् ॥१२२॥

**एकं वृषभमुद्धारं संहरेत स पूर्वजः ॥**
**ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥ १२३ ॥**

पूर्वस्यां जातः पूर्वजः । कनीयान् वृषभस्योक्तो भागवान् ।

ततो वृषादन्ये ये वृषभा अज्येष्ठास्ते वहूनामेकशः कृत्वा देयाः ।

अतश्च ज्यैष्ठिने यस्यैतावदुक्तमधिकं यच्छ्रेष्ठो वृषो गुणमात्रेणाधिक्यं न संख्यया तदूनानां तस्मात्पूर्वजादूनानाम् । कियतामित्याह । स्वमातृतः पुनर्मुख्यतोढत्वात्तेनात्र मातृज्यैष्ठमाश्रितं भवति न जन्मतः ॥ १२३ ॥

ज्येष्ठस्तु जातोऽज्येष्ठायां हरेद्वृषभषोडशाः ॥
ततः स्वमातृतः शेषा भजेरन्निति धारणा ॥ १२४ ॥

उद्धारान्तरं वैकल्पिकमेषामुच्यते। अज्येष्ठायां ज्येष्ठो जातः पंचदश गा हरेत्। षोडशो वृषभो वृषभसंबन्धाद्गावो लभ्यन्ते। यथास्य गोर्द्वितीयेनार्थ इति।

अन्ये शेषा गा हरेरन्स्वमातृतः यथैवैषां माता गरीयसी स गरीयसीं यस्य कनीयसी स कनीयसीमाहरेत्।

अथवा ज्यैष्ठिने यस्यायमुद्धारोऽधिक उच्यते पूर्वस्तु स्थित एव। नात्रानडुत्प्रश्लेषः। शेषाः कनीयांसः स्वमातृतो हरेरन्। स्वमातृत इति विविच्यते।

श्लोकद्वयस्यार्थवादत्वान्न विवेके यत्नः। उपक्रममात्रमेतत्। सिद्धान्तस्त्वयमुच्यते ॥ १२४ ॥

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ॥
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥ १२५ ॥

सदृशः समानजातीयः ॥ १२५ ॥

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ॥
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ १२६ ॥

अर्थवादोऽयं जन्मज्येष्ठतामभ्युपगमयति। सुब्रह्मण्या नाम मंत्रो ज्योतिष्टोमे छन्दोगैः प्रयुज्यत "इन्द्राह्वनाय सुब्रह्मण्यो ३३ इन्द्र आगच्छे" त्यादिप्रयोगे—बहुत्वाद्बहुवचनम्। तत्रेदमुच्यते। प्रथमपुत्रेण पितरं व्यपदिश्य हूयते। 'देवदत्तस्य पिता यजते'। जन्मनो ज्यैष्ठ्यं मुख्यम्। अन्यत् तु मातृविवाहसंबंधाद्गौणम्। यमयोर्गर्भे एककालनिषिक्तयोरपि जन्मतो ज्यैष्ठ्यम् ॥ १२६ ॥

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ॥
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥ १२७ ॥

यदपत्यमस्यां जायेत तन्मे मह्यं स्वधाकरम्। और्ध्वदेहिकस्य श्राद्धादिपुत्रकार्यस्योपलक्षणार्थः स्वधाशब्दो न त्वयमेवोच्चार्यः। तथा च गौतमः—'पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्य' 'अभिसंबन्धमात्रा-

त्पुत्रिकेत्येषाम्' ( गौ० २८-१६ ) इति मन्त्रादियोगेन विनाऽपि भवति पुत्रिका ।

"ननु संवादाभावेन यद्यप्यभिसंबन्धो हृदयात्कृत इत्युच्यते पुनर्वचनेन यावन्न ज्ञापितस्तावज्जामाता विप्रतिपद्येत"। कुर्वीत पुत्रिकामेष तस्या व्यपदेशः ॥१२७॥

**अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः ॥**
**विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥ १२८ ॥**

प्रजोत्पादनविधिज्ञः प्रजापतिर्दक्षः स एवोदाह्रियते। अर्थवादोऽयं परिकृतिर्नाम ॥ १२८ ॥

**ददौ स दश धर्माय कश्यपाय त्रयोदश ॥**
**सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ १२९ ॥**

सत्कृत्येति। एतदत्र विधीयते। दशेत्यादिलिङ्गादनेकपुत्रिकाकरणमपीच्छन्ति ॥ १२९ ॥

**यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ॥**
**तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ १३० ॥**

"यदपत्यं भवेदस्यां तन्मम स्यात्" इत्युक्तम्। अपत्यं च ऋक्थभाक्। अतः पितरि मृते पुत्रिकाया अनुत्पन्नपुत्राया धनहर्त्त्वमप्राप्तं विधीयतेऽर्थवादेन। तस्यामात्मनि पुत्रनिमित्ते तिष्ठन्त्यामेव धनं न पुत्रोत्पत्तिस्तदीयाय युज्यते। अथवा तस्यामात्मभूतायां पितृरूपायामिति।

पुत्रेण दुहिता समेति सामान्यवचनो दुहितृशब्दः प्रकरणात्पुत्रिकाविषयो विज्ञेयः ॥ १३० ॥

**मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः ॥**
**दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥ १३१ ॥**

यौतकशब्दः पृथग्भावेन च स्त्रीधने। तत्र हि तस्या एव केवलायाः स्वाम्यम्। अन्ये तु सौदायिकमेव न सवन्धस्त्रीधनम्। तत्र हि तस्याः स्वातन्त्र्यम्।

"सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते"।

इतरे तु भक्तभूषाद्युपयोगिनः आन्वाहिकाद्भर्तृदत्ताद्धनादुपयुक्तशेषमेव। युवत्या स्वीकृतं यौतकमाहुः।

कुमारीभाग एव कुमारी ग्रहणादूढा नास्ति। एवकारस्य च प्रसिद्धानुवादक-त्वात्प्रकरणबाधकत्वमतश्च पुत्रिकाकुमारीविषयमपि यौतकम्। एवं च गौतमः—(२८। २४) "स्त्रीधनं तदपत्यानाम्" इत्युक्त्वाऽऽह "दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति"। तत्रा 'प्रतिष्ठिता' या ऊढा अनपत्या निर्धना भर्तृगृहे याभिः प्रतिष्ठा न लब्धा।

दौहित्र एव च हरेदपुत्रस्यानौरसपुत्रस्याखिलं धनं हरेत्। सति त्वौरसे यावानंशस्तं वक्ष्यति। अत्रापि पुत्रिकापुत्र एव 'दौहित्रो' न सर्वत्र, पूर्ववत्प्रकरणत्यागस्य यौतकविषयत्व एव प्रमाणसंभवात्॥ १३१॥

**दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्॥**
**स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च॥ १३२॥**

अपुत्रमातामहप्रमातामहाय।

पूर्वेणैव पौत्रिकेयदौहित्रस्याखिलं रिक्थहरत्वमुक्तम्। अतोऽयं श्लोकस्तदनुवादेन पिण्डदानविधानार्थ इति कैश्चिद्व्याख्यातम्। 'हरेद्यदी' ति च ते पठन्ति। यस्मिन्पक्षे सर्वं हरेत्तस्मिन्नेव पक्षे दद्यात्। यदा तु "समस्तत्र विभागः स्यात्" इति पक्षस्तदा न दद्यात्। अन्यथा "यो यत आददीत स तस्मै दद्यात्" इत्यनेनैव पिण्डदाने सिद्धे पुनर्वचनमनर्थकम्। अखिलरिक्थग्रहणानुवादश्चानर्थक एव।

तदयुक्तम्। "अपुत्रस्य पितुर्हरेत्" इत्ययमेवार्थोऽवगीतश्चिरन्तनपाठः। पितृशब्दश्च जनके प्रसिद्धतरो न मातामहे। अतश्च पुत्रिकाया भर्ता यदि तदन्य भार्यायामपुत्रः पुत्रिका च पुत्रवती। तदाऽनेनैव पुत्रेण जातेन पिता मातामहश्चोभावपि पुत्रवन्तौ वेदितव्यौ। यदा तु वीजीतरासु जातपुत्रस्तदा पुत्रिकापुत्रः समानजातीयायामूढायां जातोऽपि नैव वीजिनो रिक्थं हरेन्नापि पिण्डं दद्यात्। अन्यो हि जन्यजनकभावोऽन्यश्चापत्यापत्यवत्संबन्धः। अजनका अपि क्षेत्रजादिभिरपत्यवन्तो जनकाश्च विक्रीतापविद्धादिपितरो नैवाजीगर्तादयः पुत्रवन्तः। तथा चौरसलक्षणे 'स्वक्षेत्र' (मनु ९। १६६) इति स्वग्रहणम्। क्षेत्रं च पुत्रिकापितुरेव। भर्ता हि तस्य चानुविधेयवर इति मातृकुले स्वामी। तस्मादेवं तद्वक्तव्यम्। यस्मिन्पक्षेऽविद्यमानान्यपुत्रं पुत्रिकाभर्ता पुत्रिकापुत्रश्चाखिलद्रव्यहारी। तस्मिन्पक्षे येन कार्यमतः पिण्डदानम्। यदा तु वीजी स पुत्रः संपद्यते तदा स पुत्रिकापुत्रो

नैव वीजिने पिण्डं दद्यात् । स तु दौहित्र इत्युच्यते । पौत्रिकेय इत्यर्थः । यथा मातामहपक्षे पितुरपि यो हरेत्तत्रापि स च दद्यादिति श्रूयते । न पुनः पक्षान्तरेऽपि पक्षान्तरेषु दद्यात् । न च सर्वग्रहणपक्षे दद्यादिति नोदना पक्षान्तरेऽपि निषेधमनुमापयति । पित्रे पितामहाय चेत्युभयोरप्राप्तत्वात् । द्योतनं । परिसङ्ख्येति अनूद्यमाने द्योतनमन्यस्मा एव दद्यात्तद्युगपद्‌भाभ्यामनेनायमनुवादः । यथैव पित्रे मातामहाय च एवं पितामहाय प्रमातामहाय च । तथैव च ततः पराभ्यां द्वाभ्याम् ॥ १३२ ॥

पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ॥
तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ १३३ ॥

पूर्वशेषोऽयमर्थवादः ।

कथमविशेषस्तयोर्हि मातापितराविति ॥ १३३ ॥

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ॥
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥ १३४ ॥

समस्तत्र तुल्यो विभागो जातेन पुत्रेण ज्येष्ठांशनिषेधः । ज्येष्ठता नास्ति हि स्त्रियाः रिक्थभाग एव ज्येष्ठता निषिध्यते न त्वस्यां गुरुवृत्तौ ॥ १३४ ॥

अपुत्रायां मृतायां तु पुत्रिकायां कथंचन ॥
धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥ १३५ ॥

अस्वामिन्यास्तु पुत्रिकाया भर्तुरप्राप्तधनसंवन्ध उच्यते ।

अथ किं पुत्रिकाविवाहेन संस्क्रियते । उताहो न किंचन । यदि संस्क्रियते भार्यैवासौ भवति । भार्याकरणो हि विवाहः । ततश्च तद्धनं..... न संस्तूयते । कन्यागमनं प्राप्नोति 'स्वदारनिरतः सदा' इति नियमातिक्रमश्च । यथेच्छसि तथास्तु । ......

ननु चास्मिन्पक्षे श्लोकोऽयमनर्थकः ।

नैष दोषः । अपरिपूर्णत्वायार्थवत्वस्य । यथैतदयमपत्यं न भर्तुस्तेन वेत्याशङ्कानिवृत्त्यर्थो युक्त एव श्लोकारम्भः । वह्वश्चार्थवादिनो मानवाः श्लोकाः ।

अथवा पुनरस्तु न संस्क्रियत इति । न तु चास्मिन्पक्षे कन्यागमनं प्राप्नोति । किं

कृतम् । तथाविधायां जातो मातामहस्य पुत्र इतःसाध्यं गंतुर्विध्यर्थातिक्रमनिरूपणेन प्राकरणिकम् । न च तानि नामानि न पतनीयानि । .. ...

किं पुनर्भवां कन्याशब्दार्थं मत्वा चोदयति कन्यागमनं प्राप्नोतीति । त्रिधा हि कन्या—एका तावदप्रवृत्तपुंप्रयोगा । तथा..... देवहिता प्रथमे वयसि वर्तमाना च । तत्र यदि तावत्पुंसाऽसंप्रयुक्ता रूढाया अपि प्राथमिकात्संप्रयोगादनपगतमेवानुषज्येत । प्रायेण ह्यत्र शास्त्रे कन्याशब्दः पुंसाऽसंप्रयोगमाचष्टे ।

अथसंस्काररहीनेति तदपि न । यतः प्रथममेव वचनमेवं स्मरणाभिप्रायेण तत्र संभवि । प्रमाणान्तरवशाल्लक्षणया 'हिता' इत्यत्र प्रतीयते । यथोक्तं—"पाणिग्रहणिकामन्त्राः कन्यास्वेव प्रतिष्ठिताः । नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः॥" ( मनु ८।२२६ ) इति । अत्र धर्मलोपवचनलिङ्गात्पुरुषोपभुक्ताऽकन्येत्युच्यते । तद्विपर्ययेणानुपभुक्ता कन्येति सर्वत्रैव मुख्यार्थमनुरुध्य क्रियमाणा धर्मा लक्ष्यन्ते । ते च न सर्वे, किं तर्हि । यावतां प्रमाणमस्ति । तथा हि कानीन इति पितुः स्वता, संस्काराभावश्च प्रतीयते । केवले हि संस्काराभावे चोढास्वैरिणीपुत्राः कानीनाः । केवलायां च पितृस्वतालक्षणायां पुत्रिकापुत्रोऽपि कानीन इति व्यपदिश्यते ।

यच्चोक्तं "स्वदारतस्तु नियमातिक्रमः प्राप्नोती" ति । न ह्यस्यायमर्थः स्वदारेभ्योऽन्या गन्तव्येति । परस्त्रियं च न कामयते न चापरां दाराम्' । तथा सत्यनेनैव गतत्वात्परदारप्रतिषेधोऽनर्थकः स्यात् । किंतर्हि स्वदारेषु रतिर्धारयितव्या रतिभावनयाऽऽभ्यासात्प्रीत्यतिशयोत्पत्तेः । 'स्त्रियं च न कामयते न चापरान्दारांस्तथा सति धर्मभ्यो न हीयत' इत्यनुवादोऽयम् । अथवा स्वदारनिरतोऽपि पर्ववर्जनमेनां व्रजेयुः । असौ सुपुप्त्यैवमपत्यशेष एव । परदाराप्रतिषेधोऽपि नास्ति । अनूढत्वात्केनचिद्दारव्यपदेशाभावात् ।

किं पुनरपुत्रयुक्तम् । अविवाह्येति । अष्टौ हि विवाहाः । ते च स्वीकारभेदेन ब्राह्मादिव्यपदेशभेदं प्रतिपद्यन्ते । न चास्याः स्वकरणं भर्तुरस्ति । पितुरेव स्वत्वानतिवृत्तेः । अभ्रातृकायां च विवाहप्रतिषेधः पुत्रिकामविवाह्यां दर्शयति । यथा 'नाभ्रातृकामुपयच्छेत तोकं ह्यस्य तद्भवतीति' । प्राकरणिकश्चायं प्रतिषेधस्तदतिक्रमे विवाहस्य संस्कारतैव नास्ति शूद्राद्याधानस्येवाहवनीयाद्यर्हता [ रनिगिन्या ? ]-दिप्रतिषेधेपूपलभ्यमानमूलत्वात्प्रकरणाधीनोऽपि न संस्कारत्वमपनुदति । तथा च शिष्टां दर्शनीयकन्याभावे कपिलादिरूपामुपयच्छन्ति, तया च सहधर्मानुष्ठानमा-

चरन्ति । [ क्षतयोन्यन्यपूर्वाभागोऽत्र ] । समानप्रवरादिकयोढयापि कथंचिन्न पत्नीकार्यं कुर्वन्ति । एतदर्थमेव केश्चि 'न्नोद्वहेत्कपिलामि' (३-८) त्यत्र दृष्टदोषोपवर्णनं, प्राकरणिकत्वेऽपि सपिण्डादिप्रतिषेधस्य चैकल्प्यं मा विज्ञायीति ।

"कथं पुनः स्पृष्टिप्रतिषेधो भ्रातृकामुपयच्छते तस्मिन्नोद्वाहशङ्का" ।

उच्यते । अस्य प्रतिषेधस्य वाक्यशेषः श्रूयतेऽ'पत्यं ह्यस्य तद्भवती'ति अनेन । ततश्चापत्योत्पत्तावेव पुत्रिका न भार्या । धर्मार्थमर्थकामयोस्त्वेव सहाधिकार-इति ।

भवत्वयं, परिहारस्तु स्वकरणाभावादविवाहः ।

ननु तस्मिन्पक्षे कानीन एव पुत्रिकापुत्रः स्यात् । न ह्यसौ पितुः 'स्वं' स्यादसंस्कृतयोश्चापत्यमिति । संस्कारपक्षे तु पितृस्वतासंस्कारभावोभयलक्षणवान् प्रत्यक्षादन्यतरधर्माभावे तु कानीनाद्भिद्यत इति युक्तम् ।

अत्रोच्यते । न वयं पुत्रिकापुत्रस्य कानीनस्य लक्षणं तदस्य नास्तीति ब्रूमः । इदं हि तस्य लक्षणम्—

"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥" ( मनु ९ । १७२ ) इति । अस्य चार्थः । य एवंलक्षणः स इह शास्त्रे कानीनग्रहणेषु ग्रहीतव्यः । स च कस्यापत्यमित्यपेक्षायां 'वोढुः कन्यासमुद्भवम्' इति द्वितीयं वाक्यम् । अथवा नेह पदार्थो लक्ष्यते । किं तर्हि ? संबन्धिता नियम्यते । य एवंविधः कानीनस्तं वोढुः संबन्धिनं वदेदित्येकवाक्यतैव । संबन्धिता च पदार्थभेदे चाप्युपाधिभेदाद्भिद्यत एव । रहः प्रकाशभेदेन । ( चैव मातामहस्य । अन्ये चाहुरिति पदार्थस्तु ) तदा कानीनशब्दस्य शब्दार्थसंबंधोऽबाधित एवावगन्तव्यः । तेन चापत्यमात्रो कानीनो भवति । भवतु पैतृके कानीने व्यवहारः ।

अन्ये तु स्मृतिमेव विशेषनिष्ठामाहुः । न हि कन्यापत्यमात्रे सर्वत्र कानीनशब्दः प्रयुज्यते । किं तर्हि, मानवस्मृतिलक्षिते ।

एतदप्यनुमन्यामहे ( निश्चिते प्रयोगाभावेऽवशेषस्मरणेऽपि पुण्यसिद्ध्यादितद्विशेषावगतिः प्रयोगतो न्याय्यैव ॥ १३५ ॥

अकृता वा कृता वाऽपि यं विंदेत्सदृशात्सुतम् ॥
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ १३६ ॥

अधस्तनोपरितनवाक्यपर्यालोचनया पुत्रिकापुत्रविषय एवायमतिशयोक्त्या प्रतीयते।

अकृताया अपि दुहितुः पुत्रो मातामहधनभागित्युक्तम्। किं पुनः कृताया इत्येवम्। अन्यशेषत्वात्पुत्रिकाया विधिष्वानर्थक्यप्रसङ्गान्न दौहित्रस्य रिक्थप्राप्त्यर्थः।

ननु च स्मृत्यन्तरे दौहित्रमात्रस्य पिण्डदानाधिकारः श्रूयते "मातामहानामप्येवमिति" (या० १। २२८)। इहापि प्रकरणं हित्वा श्रुतिवाक्यसामर्थ्येन दौहित्रमात्रविषयतैव प्रतिपत्तुं न्याय्या। दद्यात्पिण्डं हरेद्धनमिति। तथापरमुक्तं "दौहित्रो ह्यखिलं रिक्थम्" ( मनु० ९। १३२ ) इत्यादि।

अत्रोच्यते। यदुक्तं मातामहानामिति तद्बहुवचनं किं व्यक्त्यपेक्ष्यमुत लक्षणया प्रमातामहाद्यभिप्रायेण। व्यक्तिपक्ष एकस्यैव मातामहस्य पिण्डदानं प्राप्नोति श्राद्धादिवत्। तच्च सपिण्डीकरणे कृते विरुद्धम्। एवं ह्याहुः 'अत ऊर्ध्वं त्रिभ्यो दद्यात्' इति। अथापि "पितुरन्यस्य सपिण्डीकरणमेव न करिष्यत" इत्युच्यते, तदपि न, निषेधाभावात्। लक्षणायाः सन्निकर्षो विशेषाभावाल्लक्षणविशेषपरिज्ञानेऽनवगमत्वमेव श्रुत्यादिबलेन च प्रकरणत्यागस्येति विरोधप्रसङ्गस्तं निवेशो हि पदार्थः प्रकरणादुत्कृष्यते। द्वादशोपसदो हीनस्येतिवत्। अकृता वेत्यस्य चान्यपरत्वमुक्तम्। तस्मात्पौत्रिकेयविषयमेतत् ॥ १३६ ॥

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ॥
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ १३७ ॥

पुत्रेण जातेन तत्कृतेनोपकारेण लोकान्स्वर्गादीन्दश विशोकान् जयति प्राप्नोति। तत्रोत्पद्यत इति यावत्।

एवं पौत्रेणानन्त्यं तेष्वेव चिरन्तनकालमवस्थानं लभते।

पौत्रस्य पुत्रेण ब्रध्नस्य विष्टपमादित्यलोकं प्राप्नोति। प्राकाश्यमश्नुते न केनचित्तमसा व्रियते ॥ १३७ ॥

पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः ॥
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ १३८ ॥

अपत्योत्पादनविधिशेषोऽयमर्थवादः ।

पुंनामनरकं चतुर्विधभूतोत्पत्तिः पृथिव्यां व्यपदिश्यते । ततस्त्रायते पुत्रो जातः देवयोनौ जायत इत्यर्थः ।

तस्माद्धेतो पुत्र इति व्यपदिश्यते ॥ १३८ ॥

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रवत् ॥ १३६ ॥

अत्रापि दौहित्रः पुत्रिकापुत्र एव विज्ञेयः ।

दौहित्रोऽपि ह्यमुत्रैनं संतारयति पौत्रवत् । अयमप्यर्थवाद एव । विहितत्वादर्थस्य ।

एतयोर्विशेषो नास्ति । एकस्य माताऽन्यकुलीनाऽपरस्य पिता । तस्माद्दौहित्रोऽप्यमुत्र लोक एनं प्रेतं सन्तं सततं संतारयति नरकात्पूर्वस्मात् ॥ १३६ ॥

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ॥
द्वितीयं तु पितुस्तस्यास्तृतीयं तत्पितुः पितुः ॥ १४० ॥

'स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च' ( मनु ६ । १३२ ) इत्यत्र पुत्रिकापुत्रपिण्डदानं मातामहप्रक्रममुक्तम् । तस्मादयमपरः क्रमः पुत्रिकापुत्रपिण्डदानस्य । मातुः प्रथमतः पिण्डं निर्वपेदित्येवमादि । द्वितीयं तु तस्या एव पितुरित्यनुमन्तव्यम् ।

ये तु पठन्ति 'पितुस्तस्येति' तत्प्रथमं पुत्रिकायै निरुप्य जनकाय निर्वपन्ति । तत्पितुः पितुरिति च जनकस्यैव पित्रे तृतीयम् । अस्मिंस्तु पक्षे मातामहाय पिण्डदानं नो स्यात् ॥ १४० ॥

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः ॥
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥ १४१ ॥

"न भ्रातरो न पितरः पुत्रा रिक्थहरा पितुः" ( मनु ६। १८५ ) इति सर्वपुत्राणां रिक्थहरत्वमुक्तम् । सति त्वौरसे प्रजीवनमात्रभाक्त्वं क्षेत्रजादीनाम् ।

"एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति" ॥ ( मनु ९ । १६३ )। अतोऽस्ति सिद्धमेव दत्रिमस्य रिक्थहरत्वम्। इदं तु वचनं सत्येवौरसे प्राप्त्यर्थमन्यथा न किंचिदनेन क्रियते।

कियांस्तु तस्य भाग इति। विशेषादेशाभावात्सम औरसेनेति केचित्।

तदयुक्तम्। साम्ये ह्यभिधीयमाने यथैव पुत्रिकाप्रकरणे पठितमेवमत्राप्यपठिष्यत् "समस्तत्र विभागः स्यात्" ( मनु ९ । १३४ ) इति। तस्मात्क्षेत्रजवत्षष्ठपंचमादिभागकल्पना कार्येत्युच्यते।

अत्राप्यस्ति वक्तव्यम्। यथैव भागविशेष उक्तः क्षेत्रजस्य "षष्ठं तु क्षेत्रजस्यांशम्" ( मनु ९ । १६४ ) इति तथैव दत्रिमे वक्ष्यति। तस्मात्पुनर्वचने प्रयोजनं चिन्त्यम्।

उपाध्यायस्त्वाह—पुनर्वचनाद्विशेषनिर्देशाभावाच्च क्षेत्रजान्न्यूना कल्पना युक्ता, न त्वभागता, नापि समभागता, न क्षेत्रजतुल्यतेति ॥ १४१ ॥

**गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः क्वचित् ॥**

**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ १४२ ॥**

इतश्च भागहरत्वं दत्रिमस्य तूक्तम्। यतो जनयितुः सकाशाद्गोत्रं धनं च न हरति, वंशादपेतत्वात्। गोत्ररिक्थग्रहणाभावे च पिण्डमपि जनयित्रे न ददाति। गोत्ररिक्थानुगो हि पिण्डो गोत्ररिक्थेऽनुगच्छति। यदीये गोत्ररिक्थे गृह्येते तस्मै पिण्डोदकदानाद्यौर्ध्वदेहिकं क्रियते।

व्यपैति तस्मान्निवर्तते। स्वधाकरसाधनं पिण्डश्राद्धादि लक्ष्यते। तदेतत् योऽन्यस्मै स्वपुत्रं ददाति तस्यान्निवर्तते। न तस्य कर्तव्यमित्यर्थः। एष एव न्यायः कृत्रिमादीनां सहोढापविद्धद्व्यामुष्यायणानामुभयोपकारकत्वम्।

अन्ये तु न हरेन्न हारयेदित्यन्तर्भावितण्यर्थं व्याचक्षते। तेनोभयस्यापि द्व्यामुष्यायणवदुपकर्तव्यमित्याहुः।

उत्तरस्तूपकारोपक्रमः। तमेवं गमयन्ति। यदि गोत्ररिक्थे न हरेत्पुत्रस्तदा तु व्याख्येयम्। न चैतद्युक्तम्। न ह्यर्थान्तरभावे प्रमाणं वक्तव्यम् ॥ १४२ ॥

**अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ॥**

**उभौ तौ नार्हतो भागं जारजातककामजौ ॥ १४३ ॥**

अपुत्रे भर्तरि मृते पुत्रोत्पादने स्त्रिया गुरुनियोगोऽपेक्षितव्य इत्युक्तम् । तस्यैवायमनुवादः ।

या गुरुभिरनियुक्ता पुत्रार्थिनी पुत्रमुत्पादयेत्—'क्षेत्रं किलाहं भर्तुः, क्षेत्रजश्च पुत्रस्तदर्थहर' इत्यनया भ्रान्त्या—स तस्यां समुत्पन्नो न रिक्थहरः । यतः क्षेत्रजादिविशिष्टेन विधिनोत्पन्नस्य शास्त्रे क्षेत्रजव्यपदेशात् । तेनैव चास्य क्षेत्रजस्य रिक्थहरत्वमत्र वार्यते । पिण्डदानं तु न निषिध्यते । यद्यपि पतितोत्पन्नो भवति ।

नारदस्तु विशेषं स्मरति—

"जाता ये त्वनियुक्तायामेकेन वहुभिस्तथा । अरिक्थभाजस्ते सर्वे वीजिनामेव ते सुताः ॥

"दद्युस्ते वीजिने पिण्डं माता चेच्छुल्कतो हृता । अशुल्कोपनतायां तु पिण्डदा वोढुरेव ते" ( अ० १३ श्लो० १९-२० ) ॥ इति

सुतवचनात्कृत्रिमादिवदुत्पत्तिविध्यभावात्पुत्रमध्ये चापरिगणितत्वात् त्रैवर्णिकानां च वीजजाः प्रजीवनमात्रभागा, न रिक्थहराः । यतोऽविशेषेण सर्वपुत्राणां भर्तरि प्रेते स्मर्यते—'ऊर्ध्वमपि पितुः' पुत्रोपकर्तव्यशिष्टस्य धनस्य विभाज्यत्वाङ्गैरन्नेव प्रजीवनम् । एवमेवौरसादिपुत्रस्य सपिण्डवीजकाः प्रजीवनमात्रभागाः कर्तव्याः । रिक्थहरत्वं तु नास्ति । परिगणितपुत्रविशेषोद्देशेन रिक्थहरत्वस्य श्रवणात् । उक्तं चैतत् उक्तानां "यद्येकरिक्थिनौ स्यातामिति" ( मनु ९।१६२ ) ।

अत्रानेन च दर्शनेनानियुक्तासुतादय इतरत्रानंशत्वाद्वीजिनो रिक्थं लभेरन्निति । रिक्थं प्रजीवनपर्याप्तमेतद्विज्ञेयम् । उक्तत्वादस्या भागार्थ एव दासीव भण्यते । या "सप्तैता दासयोनय" ( मनु ८।४१५) इति निरूपिता यासां प्रयोगार्थमवगन्तव्यं क्रियते । तस्यां जातो न दासः सुतव्यपदेशाभावः शूद्रस्यापि तज्जा व्राह्मणादिवत्प्रजीवनभाजः ।

अन्यस्त्वाह—नियतकर्मकरा अपि दासा भवन्ति । यथा; स्नापकः प्रसाधकः पाचक इति । एवं कामतोऽप्यवरुद्धा भक्ताच्छादनेन पोष्यमाणा दास्यो भवन्ति । एवं पुत्रिण्याविद्यमाने पुत्रे आप्तो देवरान्नियुक्तयाऽपि । कथं पुनः पुत्रवत्या नियोगः । देवर एव कामार्थं नियुक्तः । पुत्रोत्पादनव्यपदेशेनेत्यभिप्रायः ।

'जारजातकत्व' मुभयोः, 'कामजत्वं' तु पुत्रवत्यां जातस्य । आद्यार्थायां पुत्रार्थैव प्रवृत्तिर्न कामतो लोभेन ॥ १४३ ॥

नियुक्तायामपि पुमान्नार्याञ्जातोऽविधानतः ॥
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः ॥ १४४ ॥

अविधानतः शुक्लवस्त्रादिनियमत्यागो 'विधानाभावः'। स नार्हति रिक्थं, नासौ क्षेत्रज इत्यर्थः। नियमत्यागेन देवरभ्रातृजाययोः पुत्रोत्पादने प्रवर्तमानयोर्युक्तं पतितत्वम्। शास्त्रेण नियमितयोर्गमनानुज्ञानात् ॥ १४४ ॥

हरेत्तत्र नियुक्तायाञ्जातः पुत्रो यथोरसः ॥
क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः ॥ १४५ ॥

यथौरस इत्येतदत्र विधीयते ज्येष्ठांशप्राप्त्यर्थमन्यदा नोच्यते। अनेन विधानेन ज्येष्ठांश उद्धारः क्षेत्रजस्य प्राप्यते ज्येष्ठभार्याजातस्य। अतश्च यत्पुत्रसमांशभाक्त्व 'मुपसर्जनं प्रधानस्ये' त्यनेन तस्यायमपवादः। उभयस्य च प्रामाण्यात् विकल्पितस्य च गुणापेक्षया व्यवस्था। न ह्यन्यदस्य श्लोकस्य प्रयोजनमस्ति, प्रागुक्तत्वात् सर्वस्य।

क्षेत्रिकस्य क्षेत्रस्वामिनस्तद्बीजं तत्कार्यकरत्वात् प्रशंसयैवमुच्यते। अत एवाह धर्मतः धर्मेण शास्त्रीयया व्यवस्थया। तत्र प्रमाणान्तरं दृश्येन रूपेण प्रसवः अपत्यम्। अर्थवादः श्लोकः ॥ १४५ ॥

धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च ॥
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥ १४६ ॥

विभक्तधनस्य भ्रातुरभावे विधिरयमुच्यते। पूर्वस्तु सह वसतः। एतावान्पूर्वोत्तरयोर्विध्योर्विशेषः।

सोऽपत्यं भ्रातुरुत्पाद्य नियोगधर्मेणेति व्याख्येयम्। दद्यात्तस्यैव न पुनस्तदीयायै च मात्रे। अनेनैव च दर्शनेन स्त्रियो भरणार्हाः। न तु पतिधनैश्वर्य इति। अन्यथैव रक्ष्यमाणत्वात्। तस्य तद्धनम्। 'तस्य' विभक्तधनस्य 'धनं' दद्यादिति ॥ १४६ ॥

याऽनियुक्ताऽन्यतः पुत्रं देवराद्वाऽप्यवाप्नुयात् ॥
तं कामजमरिक्थीयं मिथ्योत्पन्नं प्रचक्षते ॥ १४७ ॥

अनियुक्तेति प्रश्लेषो द्रष्टव्यः। पूर्वोक्तेन च विरोधो यतः तथा सत्यनर्थक इति

चेदुक्तः पौनरुक्त्यपरिहारः तत्र तत्र । पूर्वं तु न तमिच्छन्ति । ततश्चेयं व्याख्या । नियुक्तायामपि जातः पैतृकं रिक्थं नार्हति । कामजमिति ।

यत्तु उत्तर उच्यते । यद्यपि नियोगात्प्रवर्तते न कामात्तथापि तत्र कामोऽवश्यभावी अत उच्यते । तं कामजमिति । मिथ्योत्पन्नं यदर्थमुत्पादितस्तत्कार्यानर्हत्वादेवमुच्यते । एवं च पूर्वोक्तस्य भागार्हत्वस्य प्रतिषेधोऽयमतश्च विकल्पितम् । अनियुक्तेति पाठे पुनः पाठान्न संगच्छेतेतरामित्युपाध्यायः ॥ १४७ ॥

एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु ॥
बह्वीषु चैकजातानां नानास्त्रीषु निबोधत ॥ १४८ ॥

एकयोनिषु एकजातीयजानां सर्वहरत्वमेव ।

नानास्त्रीषु नानाजातीयास्विदानीं व्याचक्षते । बह्वाष्वित्यनुवादः ।

अन्ये तु विवक्षितं मन्यन्ते । नानाजातीयासु बह्वीषु जातानां वक्ष्यमाण 'चतुरोंऽशान्हरेदि' ( मनु ९ । १५३ ) त्यादि भागव्यवस्था । एकस्यां तु विजातीयायां कदापि न प्रयुज्यते तस्येहासम्भवादग्रहणम् ॥ १४८ ॥

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः ॥
तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः ॥ १४९ ॥

अनुपूर्वग्रहणं तृतीये दर्शितस्य क्रमस्यानुवादः । अयमपि वक्ष्यमाणसंक्षेपप्रतिज्ञानार्थः ॥ १४९ ॥

कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च ॥
विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः ॥ १५० ॥

कीनाशो वाहः । तथा च मन्त्रः "इन्द्र आसीत्सीरपतिः, कीनाशा आसन्मरुतः, यथा सुतं कीनाशा अभियंतु वाहैरिति" । यानं गन्त्र्यादिः । अलङ्कारः पितृधृताङ्गुलीयकादिः वेश्म प्रधानम् । एकांशश्च यावन्तोंऽशास्तत एकः प्रधानभूतस्तस्य दातव्यः । ज्येष्ठस्य एतन्मध्यकादुद्धृत्य शिष्टं वक्ष्यमाणकल्पनया विभजनीयम् ॥ १५० ॥

त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ॥
वैश्याजः सार्धमेवांशमंशं शूद्रासुतो हरेत् ॥ १

सत्यप्येकत्वश्रवणो द्विबहुष्वपि समांशेष्वेपैव कल्पना दर्शिता। विषमसंख्येषु तु कल्पना ॥ १५१ ॥

सर्वं वा रिक्थजातं तद्दशधा परिकल्प्य च ॥
धर्म्यं विभागं कुर्वीत विधिनाऽनेन धर्मवित् ॥ १५२ ॥

रिक्थजातं धनरूपम्। धर्मप्रवचनाद्धर्म्यम्। पूर्वोक्तं नानुमन्यते, वक्ष्यमाणप्रतिज्ञाश्लोकात् ॥ १५२ ॥

चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ॥
वैश्यापुत्रो हरेद् द्व्यंशमंशं शूद्रासुतो हरेत् ॥ १५३ ॥

इह विशेषेणापि क्षत्रियादिपुत्राणां भागश्रवणे स्मृत्यन्तरे विशिष्टयोरागमयोरन्यो भागविशेषः श्रूयते—

"न प्रतिग्रहभूर्देया क्षत्रियायाः सुताय वै। यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्" ( बृहस्पतिस्मृतिः ) ॥ इति। प्रतिग्रहोपात्ता 'प्रतिग्रहभूः'। क्रयाद्युपात्ताया न निषेधः। तथाऽन्यत्र पठ्यते—"शूद्रायां तु द्विजाज्जातो न भूमेर्भागमर्हति" इति भूमिमात्रस्य शूद्रापुत्रे निषेधः।

एतच्च यत्रान्यद्धनमस्ति तद्विषयं द्रष्टव्यम्। अन्यथा दशमांशवचनमुपतिष्ठेत। धनान्तराभावे च जीविकैव न स्यात्।

अहं तु ब्रुवे भागदानं तु निषिध्यते, प्रजीवनार्थत्वं चोपकल्पनमनिवारितमेव।

को विशेष इति चेत्-- भागपक्षे सर्वेण सर्वत्र स्वत्वोत्पत्तौ दानविक्रयादिष्वपि युज्यते। इतरत्र तूपजीवनं तदुत्पन्नस्य। व्रीह्योदनं च प्रजीवनं ब्राह्मणीपुत्रादेव शूद्रो लभते, किं भूमिभागकल्पनया। तथा चोक्तं—"लभते तद्वृत्तिमूलमंतेवासिविधिनेति" ( गौ० २८।३६)।

सत्यम्। पितृधननिमित्तं तु तस्य प्रजीवनं कल्पयितव्यम्। भागकाले च यदि न कल्प्येत, तदा द्विजातयो भ्रातरः कदाचिदसद्वृत्तयो निमित्तान्तरतो वा दानविक्रयादिनाऽपहरेयुः। उच्छिद्येत तदाऽस्य जीवनम्। विकल्पिते तु तदीयामनुज्ञामन्तरेण न लभन्तेऽन्यत्र नियोक्तुम् ॥ १५३ ॥

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत् ॥
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥ १५४ ॥

सत्पुत्रो विद्यमानपुत्रः । ब्राह्मणीपुत्र एव वा विद्यमानो विवक्षितो, न द्विजातिपुत्रमात्रम् । अतश्चासति ब्राह्मणपुत्रे क्षत्रियवैश्ययोः सतोरप्यष्टमांशं लभते, केवले च वैश्यपुत्रे तृतीयम् ।

अन्ये त्वविशेषेण द्विजातिपुत्राभावोऽपुत्रपदेनोक्त इत्याहुः ।

अस्मिन्पक्षे सपिण्डगामि दशमांशशेषधनं शूद्रो लभते ।

इयं त्वदुष्टा व्यवस्था । यदा वहुधनं क्षेमे तदा दशमांशं हरेच्छौद्रः । अथ कतिपयजनजीवनपर्याप्तं तदा शूद्रपुत्रस्यैव ।

क्षत्रियादीनां समानासमानजातीयास्त्रीजातानां स्मृत्यन्तरे ( याज्ञ० २।१२५ ) विधिर्दर्शितः—"क्षत्रजास्त्रिद्व्येकभागा विड्जाः स्युर्द्व्येकभागिनः" । क्षत्रियाजाताः स्वजातीयविजातीयासु शूद्रपर्यन्तासु वर्णक्रमेण त्र्यादिभागहराः । तदा तेन स्वधनं क्षत्रियस्य शूद्राः षष्ठमंशं लभन्ते, विशश्च तृतीयम् ।

अन्ये त्वस्य श्लोकस्य सामर्थ्यमाहुः । शूद्रपुत्राय यदा ददाति तदाऽनेन धनं सङ्कलय्य दशोंऽशो दातव्यो न तदधिकः सत्यपि स्वातन्त्र्ये । यथा वक्ष्यति—"यदेवास्य पिता दद्यात्" ( ९।१५५ ) इति ।

अस्मिन्पक्षे 'स पुत्रो दद्यादि'ति समानाधिकरणे पदे उपपन्नतरे । इतरथा 'यस्य सदसत्पुत्रः पिता स दद्यादि'ति सम्बन्धो दुश्लिष्टः स्यात् । सत्पुत्रपदेनास्य पुत्रादेरभिधानं, 'दद्यादि'ति जीवतः पुत्रसपिण्डादेः ।

ततश्च यदि क्षत्रियवैश्यापुत्रौ न स्तः केवलौ ब्राह्मणशूद्रौ, तदा न शूद्रस्य दशम एवांशः, किं तर्हि । अत्यल्पं, नाधिकतरं, धनं लभते । यत्र दश गावः सन्ति तत्र चतस्रो ब्राह्मणस्यैका शूद्रस्य पञ्च क्षत्रियवैश्ययोः । यदा तौ न स्तः तदा पञ्चगावस्तथैव कल्पनया ब्राह्मणशूद्राभ्यां विभजनीयाः । यदि सर्वा ब्राह्मण आदद्यान्न चांशहरः स्यान्न चतुरंशहरः । तस्मा'च्चतुरोंऽशान्हरेदि'ति (९ । १५३) चतुर्षु भ्रातृषु सत्सु कल्पना । शूद्रस्यापि दशमोंऽशहरत्वं चतुर्ष्वेव । द्वयोस्त्रिषु चतुर्षूभयोर्भागाधिक्यम् ॥ १५४ ॥

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ॥
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥ १५५ ॥

न रिक्थभाग् द्विजातीनां शूद्रापुत्रः ।

किं सदा । नेत्याह । यदेवास्य पिता दद्यात् । दायस्य । पित्रा दशमांश-कल्पना कृता तदेव तत्तस्य, तदधिकं पैत्रिकं नान्यल्लभते ।

तत्रापि—शङ्खेनोक्तं—"न शूद्रपुत्रोऽर्थभागी । यदेवास्य पिता दद्यात्स एव तस्य भागो, गोमिथुनं त्वपरं दद्युर्विभागकाले भ्रातर" इति वाक्यशेषः ।

अन्ये त्वनूढायाः शूद्रायाः पुत्रस्येमं विधिमिच्छन्ति । न ह्यत्र विवाहलिङ्गं किंचिदस्तीति वदन्तः । जातिविशेषवचनः शूद्राशब्दः । अतो यदेवास्य पिता दद्यात्, अतो यदस्य प्रजीवनं पित्रा दत्तं, तदे दातव्यम् । अथ तेन काचित् विभागकल्पना कृता, यावज्जीवं जीवनाय, तदा तदेवास्य धनं न भ्रातृभिः किंचि-द्दातव्यम् । यथा गौतमः शूद्रापुत्रप्रकरण एवाह—"अपरिग्रहीतास्वपि शुश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासिविधिना" ( २८।३९ ) इति ।

तेषां मते क्षत्रियवैश्ययोरनूढयोर्जाता रिक्थहराः प्राप्नुवन्ति । तत्र च कियानंश इति न ज्ञायते । "यावानंश ऊढयोरि"ति चेत्तत्रापि नोढाग्रहणं न लिङ्गं वचनं वास्ति ।

'कथन्नास्ति' । "एक एवौरसः पुत्र, इति धर्मपत्नीष्वौरसो न चानूढयोर्जाता-नामौरसलक्षणमस्ति । उक्तं च अनियुक्तासुतश्चैवेत्यादि" ।

अथ "भ्रातृजायाविषयमेतत् । तत्र किल नियोगे विहितेऽनियुक्तासुत इति प्रतिषेधेऽपि तद्विषया बुद्धिरुपजायते" ।

अत्राप्यस्ति तर्हि जातमात्रेष्विति । तस्मात्परस्त्रीषु नियोगेन विना'ऽनियुक्ता-सुताः' सर्वेषां च तेषां प्रजीवनमुक्तम् ॥ १५५ ॥

समवर्णासु वा जाताः सर्वे पुत्रा द्विजन्मनाम् ॥
उद्धारं ज्यायसे दत्वा भजेरन्नितरे समम् ॥ १५६ ॥

वाशब्दो द्वितीयं विकल्पमन्तरेणानुपपद्यमानः प्रकृतमपेक्ष्य निराकाङ्क्षी भवति । समवर्णास्वसमवर्णासु वा शूद्रस्यैव सर्वधनहरत्वनिषेधाद्द्विजातिविषयमेव विज्ञायते । तेन ब्राह्मणस्यासति ब्राह्मणीपुत्रे क्षत्रियादिजाताः सर्वधनहरा भवन्तीत्युक्तं भवति । एवं क्षत्रियस्य वैश्यापुत्रः ।

न त्वयमर्थः 'उद्धारं ज्यायसे दत्वा सर्वेऽसवर्णा जाताः समं सवर्णापुत्रैर्भजेरन् । प्रागुक्तैकांशापचयविरोधात् ।

यद्यप्युक्तं 'निर्गुणेषु सवर्णापुत्रेषु गुणवत्स्वितरेषु युक्तमेव साम्यम्'। तथा चोक्तं 'सवर्णापुत्रो अन्यायवृत्तो न लभेत केषामिति' ( गौ० २८।४० ), तदेतदसत्। जातेरत्यन्तमान्यत्वात्। "उत्पन्नो वाऽर्थस्वाम्यमित्याचार्या" इति। तेनेयमत्र व्याख्या। असत्सु सवर्णेष्वसवर्णास्वपि ये जातास्तेऽपि ज्यायोंशमुद्धारेण सवर्णाद्विभजेरन् ॥ १५६ ॥

शूद्रस्य तु सवर्णैव नान्या भार्या विधीयते ॥
तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् ॥ १५७ ॥

प्रतिलोमविवाहः शूद्रस्य नेष्यते। उक्तानुवादोऽयम्। तस्यां जाताः समांशाः स्युरिति।

पञ्चमस्य जात्यन्तरस्याभावादेवमुक्तम्। सवर्णैव तस्य भार्या, नान्याऽस्तीति ॥ १५७ ॥

पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः ॥
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥ १५८ ॥

वक्ष्यमाणसूत्रस्थानमेतत्।

बन्धुशब्दो बान्धवपर्यायः।

गोत्रहरा दायहराश्च षट्, इतरे विपरीताः।

यदत्र तत्त्वं तदुपरिष्टान्निदर्शयिष्यते ॥ १५८ ॥

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ॥
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ १५९ ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ॥
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ १६० ॥

श्लोकद्वयेन संख्यानिर्देशो वर्गद्वयप्रदर्शनार्थः ॥ १५९-१६० ॥

यादृशं फलमाप्नोति कुप्लवैः संतरं जलम् ॥
तादृशं फलमाप्नोति कुपुत्रैः संतरंस्तमः ॥ १६१ ॥

क्षेत्रजादीनामौरसेन सहोपदेशात्तुल्यत्वाशङ्का। तन्निषेधार्थमिदम्। न तुल्यमौरसेनोपकारं कर्तुं शक्ताः कुपुत्राः क्षेत्रजादयः।

असत्यपि विशेषश्रवणे प्रकृतत्वादेवं व्याख्यानयन्ति।

अन्ये तु कुपुत्रानियुक्तासुतान्मन्यन्ते।

एतदुक्तं भवति। नैतेषु सत्सु पुत्रवानहमिति कृतिनमात्मानं मन्यन्ते। किं तर्ह्यौरसोत्पादने पुनरपि यत्नवता भवितव्यम्।

तमः पारलौकिकं दुष्कृतकर्मजं दुःखं ऋणानपाकरणनिमित्तं "सप्रजया पितृभ्य" इति ॥ १६१ ॥

**यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ॥**

**यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥ १६२ ॥**

क्लीवस्य प्रागुपात्ते क्षेत्रजे 'यस्तल्पजः प्रमीतस्य व्याधितस्य वे' ति, पश्चादौषधे कथंचित् क्लीबत्वनिवृत्तौ संभवति, तदीयमेवासौ रिक्थं लभेतेति।

जनयितुर्यदि नाम पितृव्यपदेशः स्यादपि जननहेतुकः, तस्मादपि पुत्रः सुतोऽयमुपचारात्क्षेत्रज इत्युक्तः। तत्रौरसेन पितृधने गृहीते। कथंचित् जनयितुः अन्यदपत्यन्नोत्पादितं भवतीति। न च 'परा' यत्तमेव प्रीत्यादिना धनं कृतं न चास्य सपिण्डाः सन्ति। अस्यामवस्थायां यद्यस्य पित्र्यमुपपद्यते एतदेव लिङ्गम्। अनियुक्तासुतादयोऽसत्सु सपिण्डेषु जनयितू रिक्थहरा भवन्तीति।

अन्ये तु व्याचक्षते। सति दायादे समुत्पन्नः क्षेत्रजः स जनयितुर्लभते रिक्थं, न क्षेत्रिकात्, सत्यौरसे। उक्तश्च तस्य सत्यौरसे भागः "औरसक्षेत्रजौ पुत्रौ पितू रिक्थस्य भागिनौ इति। तथा "षष्ठं तु क्षेत्रजस्यांशम्" इति।

एकरिक्थिनौ एकहस्तस्थधनौ यथा च तौ भवतस्तथा दर्शयति ॥ १६२ ॥

**एकः एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ॥**

**शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥ १६३ ॥**

सत्यौरसे क्षेत्रजादयः सर्वेऽदायादाः प्रजीवनमौरसाल्लभेरन्।

आनृशंस्यमपापम्। अददत्पापमाप्नोति ॥ १६३ ॥

**षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ॥**

**औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥ १६४ ॥**

क्रीतादिपुत्रवत्प्रजीवनमात्रे प्राप्ते क्षेत्रजस्य भागविकल्पोऽयमुच्यते। स च गुणापेक्षः ॥ १६४ ॥

औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ॥
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ १६५ ॥

आद्योऽयं श्लोकः पूर्वोक्तविध्यनुवाद एव न पुनर्विध्यन्तरम्। औरसेन साम्यं क्षेत्रजस्य नेष्यते।

गोत्रभागिनो रिक्थांशभागिनश्च। रिक्थांशः प्रजीवनसंमित इत्युक्तः। दत्तके च क्षेत्रजवत्। स्मृत्यन्तरमुदाहरन्ति।

क्रमशः। औरसक्षेत्रजौ युगपद्भागहरावन्येषां तु पूर्वाभाव उत्तरस्य भागहरत्वम्।

"यद्येषां षट् दायादाः षडदायादा इति, वर्गद्वयप्रतिभागेन दायादादायादयोरनयो रिक्थवचनमनुपपन्नम्।"

सत्यौरसेऽदायादा इति। आद्याः षण्महोपकारा इतरे षट् न्यूना इति। आद्य औरसादन्ये समानफताः। एवमुत्तरे षट् ततो न्यूनाः। अवान्तरापेक्षया तुल्या एव। न पूर्वोत्तरपठितानां भेदोऽस्ति ॥ १६५ ॥

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् ॥
तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकम् ॥ १६६ ॥

आत्मीयवचनः स्वशब्दो न समानजातीयतामाह। एतेन स्वयं संस्कृतायां जात औरस इतरथाऽसंस्कृतायां निवृत्तिपरः संस्कृतशब्दः संभाव्यते। ततश्चान्येन संस्कृतायामन्य औरसः स्यात्। उक्तार्थे च स्वशब्दे क्षत्रियादिपुत्रा अप्यौरसा भवन्ति। न हि तेषामन्यत्पुत्रलक्षणमस्ति।

अन्ये तु प्राथमकल्पिकमौरसविशेषणं मन्वानाः क्षत्रियापुत्रानौरसानसंपूर्णलक्षणान्मन्यन्ते।

एवं तु व्याख्याने यथा स्वक्षेत्रे संस्कृतायामसंपूर्णलक्षण औरसस्तच्च स्वेऽसंस्कृतायां प्राप्नोति। किं पुनः क्षत्रियादीनामौरसत्वेन। पुत्रास्तावद्भवन्ति परिमितांशभाजश्च।

अथोच्यते "असत्यौरसक्षेत्रजादिलक्षणे द्वादशसंख्यानियमात्कथं पुत्रत्वमिति"। अत्रोच्यते। किं लक्षणेन। लोकतो व्यवहारप्रसिद्धेः। तथाहि यो यतो जातः स तस्य पुत्र इति लौकिका व्यवहरन्ति। तथा चाजनके कश्चित्पितृव्यवहारं कुर्व-

न्नन्येनेति बोध्यते नैष ते पिता न हि त्वमनेन जात इति। अन्वयव्यतिरेकाभ्यां जनकः पिता जन्यश्च पुत्र इत्येतदवगम्यते।

विशेषव्यपदेशार्थस्तु लक्षणारम्भः। यत्तु क्षेत्रजादेरजनके वा पुत्रत्वमिति, तत्कार्यनिबन्धनमपुत्रस्यापि कार्यविधानात्पुत्रत्वम्।

पुत्रत्वस्य तन्निषेधान्न जातत्वमिति। तथा चैते प्रतिनिधय उच्यन्ते। तैरत्रायम्। जन्मनिबन्धे हि पुत्रत्वे औरसपुनर्भवनियुक्तासुतानां विशेषो न स्यात्। जन्मनस्तुल्यत्वात्। किंच पुत्रकार्यकारणान्नैव कश्चिदपुत्रः स्यात्। यस्तु लौकिको व्यवहारः, असौ जनकेऽपि पितृव्यवहारदर्शनादव्यभिचारी।

तेन सत्यपि प्रयोगे इन्द्रादिशब्दवल्लोकतोऽर्थातिशयाच्छास्त्रे चोत्पत्तिविधानाद्भार्यादिव्यवहारवत् पुत्रव्यवहारोऽवगन्तव्यः।

"तत्र च यदौरसस्य प्राथमकल्पिकत्ववचनं तत्र व्यवहारोऽवगन्तव्यः। न व्यवहारे किं तर्ह्युपकारेऽपि। पितुरुपकारेण दृष्टं यथौरसो भूयांसं शक्नोत्युपकर्तुमिति प्राथमकल्पिकमिति पदं ज्ञापयति। उपकारापचयाभिप्रायाच्च प्रतिनिधिव्यवहारः। न ह्येषां प्रतिनिधिता संभवति प्रारब्धस्य कर्मणोऽङ्गोपचारप्रतिनिधेः। न च पुत्रः कर्माङ्गं, अपत्योत्पादनकर्मणो गुणकर्मत्वात्। तेन सत्येव क्षेत्रजादीनां पुत्रत्वे प्रतिनिधित्ववचनमौरसत्वप्रशंसार्थम्। यथा'ऽपशवो वाऽन्ये गोऽश्वेभ्यः पशवो गोऽश्वा इति' पशूनामपशुत्ववचनं गवाश्वानां प्रशंसितुम्।

यथा च यो यदीयाद्वीजाज्जातः स तस्य न पुत्र इति, तथा च दर्शितं महाभारते। द्वैपायनाज्जाताः पाण्डुधृतराष्ट्रविदुरादयो नैते व्यासपुत्रा इति व्यपदिश्यन्ते।

यथा च सप्रोजनं क्षत्रियादिपुत्राणामौरसत्वं तथोपपादितम्। पुत्रिकापुत्रस्य पुत्रत्वे द्वादशसंख्यातिरेक आप्नोति।

भवतु को दोषः। त्रयोदशोऽयं पुत्रोऽस्तु। औरसेन तुल्यफलत्वात् तद्ग्रहणम्। तत्साम्याच्च। तथा च स्मृत्यन्तरं "तत्समः पुत्रिकासुत" इति (याज्ञवल्क्य २। १२८)॥ १६६॥

**यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा॥**
**स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥ १६७॥**

व्याधितस्याप्रतीकारराजयक्ष्मादिव्याधितस्य ।

अवशिष्टं स्पष्टम् ॥ १६७ ॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ॥
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥ १६८ ॥

'च' शब्दः पठितुं युक्तो "माता पिता चेति"। न ह्युभयोरपत्यमन्यतरानिच्छायां दातुं युक्तम् ।

अथापि वा शब्दः पठ्यते। तथा चोक्तम् "माता पिता वं दद्यात्, तयोरपि पिता श्रेयान्" इति कार्यान्तरविनियोगविषयमेतत् ।

ननु सत्वापत्तौ सानुमापीदृशं दशान्तु पितरि पुत्रं प्रति दातृत्वं नास्ति। सत्यपि तूत्तरवचने अभावो वीजिनो नास्ति वियोगे विशेषविपयत्वात्सदृशेत्युक्तम् । आह च वसिष्ठः—"न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाच्च" ( अ० १५ सू० १ ) इति ।

सदृशं न जातितः। किं तर्हि, कुलानुरूपैर्गुणैः। क्षत्रियादिरपि ब्राह्मणस्य दत्तको युज्यते ।

प्रीतिग्रहणं लोभादिना प्रतिषेधार्थम् ॥ १६८ ॥

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ॥
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ १६९ ॥

अत्रापि सदृशो गुणत एव विज्ञेयः ।

ये तु 'सदृशं' सवर्णं व्याचक्षते, तेषां 'सजातीय' इति एष पाठो युक्तो यद्ययमर्थोऽभिप्रेतः। न तु जात्या सादृश्यमपि तूक्तमेव ।

गुणदोषविचक्षणम् । केचिदाहुः—'तावन्न क्रियते यावन्न प्राप्तव्यवहारः, न ह्यसौ गुणदोषान् जानाति। तदा त्वेवं जानाति येनाहं जातो येन च सम्प्रति पुत्रतया भरणं मे क्रियते तस्याप्यहं पुत्र'इत्यभ्युपगतपुत्राभावात्तथैव ग्रहीतव्योऽपि त्वन्यतरत्वे विशेषो नास्ति ॥ १६९ ॥

उत्पद्यते गृहे यस्तु न च ज्ञायेत कस्य सः ॥
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ १७० ॥

न च ज्ञायेत माता यद्युद्भ्रान्ता बहुशो गता वा तदा न ज्ञायते का पुनस्तस्य जातिर्यतः पूर्वैरुक्तं अविज्ञातवीजिनो मातृतः'।

एतच्च यत्र हीनजातीयपुरुषशङ्का नास्ति। तदाशङ्कायां हि प्रतिलोमसंभवः। प्रतिलोमत्वान्न कचित्पुत्रकार्याधिकारिणः ॥ १७० ॥

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ॥
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ १७१ ॥

बहुप्रजातया भरणासमर्थेनात्यन्तदुर्गत्या केनचिद्वा दोषयोगेन मातापितृभक्तिहीनत्वादिना। न पुनः प्रत्यक्षत्वेन, तस्य न कचिदेव पुत्रकार्येऽधिकार इति दर्शितं मन्यत्र। तथैवमप्यन्यतरेणोत्सर्गः।

'परिग्रहः' पुत्रबुद्ध्या, न तु तज्जीवितेच्छया च ॥ १७१ ॥

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ॥
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ १७२ ॥

अयं श्लोकः प्राग् व्याख्यातः। स्वयंदत्तकृत्रिमापविद्धेषु अस्य च भागकल्पना प्राङ् निरूपिता। प्रतिग्रहभूमिनिषेधश्च सत्यन्यस्मिन्धने न तावत् ॥ १७२ ॥

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ॥
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ १७३ ॥

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ॥
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥ १७४ ॥

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ॥
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ १७५ ॥

सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा ॥
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥ १७६ ॥

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ॥
आत्मानमर्पयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ॥ १७७ ॥

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ॥
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७८ ॥

कामादित्यनुवादः "कामतस्तु प्रवृत्तानाम" इत्यस्य।

पारयन् पिण्डदानादिना उपकुर्वन्नपि शवतुल्यः । अनुपकारकः । असंपूर्णोपकारकत्वात् ॥ १७३-१७८ ॥

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ॥
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ १७९ ॥

शूद्रस्यानूढायामनियुक्तायामपि जातः सुत एव । एवं यद्यपि दासस्य दासीत्यर्थेऽपि वचनात्तस्यां जातो न दासस्य दासस्वामिनः ।

सोऽनुज्ञातः पित्रा । सममंशमौरसेन हरेत् । जीवितभागे क्रियमाणे, अन्यथा वा यदि ब्रूयादेष वः समांश इति ।

यदा तु पिता नानुजानाति, तत्स्मृत्यन्तरे पठितं—"जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्" ( याज्ञवल्क्य० २ । १३३ )। 'कामतो' यावन्तमंशं पिताऽनुजानाति। "मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम्" ( याज्ञवल्क्य० २ । १३४ )। तं कुर्युः स्वांशापेक्षया, आत्मनो द्वौ द्वौ परिगृह्णीयुर्भागौ तस्यैकं दद्युः । "अभ्रातृको हरेत्सर्वं दुहितृणां सुतादृते" ( याज्ञवल्क्य० २ । १३४ )। असत्स्वौरसेषु सर्वं रिक्थं स एव हरेद्यदि दौहित्रो न स्यात्। सति तस्मिन्नौरसवत्कल्पना दौहित्रस्य, अन्यस्याश्रुतत्वात्, तस्य च प्रकृतत्वेन बुद्धौ सन्निवेशात्।

ब्राह्मणादीनां तु दासीसुताः प्रजीवनमात्रभाजो न रिक्थभाज इति स्थितिः ॥ १७९ ॥

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ॥
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ १८० ॥

मुख्याभावे 'प्रतिनिधिः' । अतोऽसत्यौरस एते कर्तव्या इत्युक्तं भवति ।

एतेषां स्मृत्यन्तरेऽन्यादृशः क्रम उक्तः । यथा गूढोत्पन्नः कैश्चित्पञ्चमोऽपरैः षष्ठ इति । तत्र पाठक्रमो नात्राङ्गमत एवानियमपाठात्। प्रयोजनं चोत्तरत्रानङ्गत्वे दर्शयिष्यामः ।

क्रियालोपाद्धेतोः क्रियते'ऽपत्यमुत्पादयितव्यमि'त्यस्य विधिलोपो माभूदिति । नित्यो ह्ययं विधिः । स यथाकथंचिद्गृहस्थेन संपाद्यः । तत्र मुख्यः कल्प औरसः । तदसंपत्तावेतेऽनुकल्पा आश्रयितव्याः ॥ १८० ॥

य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ॥
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ १८१ ॥

पूर्वोक्तस्याभावे विधिप्रतिषेधोऽयमिति व्याचक्षते। य एते औरसाभावे प्रतिनिधयः कर्तव्यतया उक्तास्ते न कर्तव्याः। यतस्तेऽन्यबीजजातास्तस्यैव ते पुत्रा नेतरस्य। येन क्रियन्ते तस्य ते न भवन्तीत्यर्थः।

अतश्च पूर्वेण विधिरनेन प्रतिषेध इति विकल्पः। स च व्यवस्थितो रिक्थग्रहणे। कानीनसहोढपुनर्भवगूढोत्पन्ना न रिक्थभाजः। दत्तकादयस्तु रिक्थभाजः असत्यौरसे। कानीनादयश्चासत्यप्यौरसे न पितृधनहराः, ग्रासाच्छादनभाजः केवलं सत्यसति चौरसे यत उक्तम्--

"सर्वेषामपि च न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्" (९।२०२)॥ १८१ ॥

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ १८२ ॥

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ॥
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ १८३ ॥

श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हति ॥
बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥ १८४ ॥

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ॥
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च ॥ १८५ ॥

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ॥
चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते ॥ १८६ ॥

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ॥
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥ १८७ ॥*

* श्लोकस्यास्य व्याख्यानं कुर्वता कुल्लूकेन 'अतो यन्मेधातिथिना पत्नीनामंशभागित्वं निषिद्धमुक्तं तदसंबद्ध' मित्यादिना श्लोकस्यास्यापि भाष्यं मेधातिथिविरचितमासीदिति सूचितम्।

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ॥
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥ १८८ ॥
अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ॥
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥ १८९ ॥
संस्थितस्यानपत्यस्य सगोत्रात्पुत्रमाहरेत् ॥
तत्र यद्रिक्थजातं स्यात्तत्तस्मिन्प्रतिपादयेत् ॥ १९० ॥
द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने ॥
तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः ॥ १९१ ॥
जनन्यां संस्थितायां तु समं सर्वे सहोदराः ॥
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ १९२ ॥
यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ॥
मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम् ॥ १९३ ॥
अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि ॥
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ १९४ ॥
अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ॥
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥ १९५ ॥
ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु ॥
अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ १९६ ॥
यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ॥
अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥ १९७ ॥
स्त्रियान्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ॥
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥ १९८ ॥

न निर्हारं स्त्रियाः कुर्युः कुटुम्बाद्बहुमध्यगात् ॥
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ १९९ ॥
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ॥
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ २०० ॥
अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ॥
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥ २०१ ॥
सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ॥
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥ २०२ ॥

सर्वेषामपि क्लीबादीनां च प्रकृतत्वेन दर्शितमिति । अत्यन्तं यावज्जीवमित्यर्थः । शरीरधारणार्थत्वाद्ग्रासाच्छादनस्य, भृत्यादेस्तदुपयोगिनः परिचारकस्यापि वेतनदानं विज्ञेयम् । न ह्यन्धादेः परिचारकमन्तरेण जीवनसंभवः । येषां दारकरणं मतं तेषां सभार्याणां भरणं दातव्यम् । शक्त्येति धनानुरूपेण भोजनवस्त्रादि देयम् । पतित इत्यर्थवादः ॥ १८९-२०२ ॥

यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथंचन ॥
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥ २०३ ॥

अर्थिता संप्रयोगेच्छा रतिनिमित्तम् । तस्यां सत्यां विवहेत् । तत्रोत्पन्नसंतानो नामापत्यं पुत्रो दुहिता वा दायं रिक्थविभागमर्हति ।

दुहितुर्यावान्भागः प्रागुक्तः ।

"वान्तरेतास्तु यः क्लीबस्तस्य भवत्येव मैथुनेच्छा । कुतः पुनस्तस्य तंतूत्पत्तिः" । उक्तं च तस्य "यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य" ( ९ । १६७ ) । इति ।

रागप्रयुक्तता वाऽनेन श्लोकेन विवाहस्य दर्शिता । धर्मप्रयुक्तत्वे ह्यनधिकृतानां कर्मसु कुतस्तेषां विवाहः । उपनेयता च जात्यन्धपङ्गूनां वातरेतसः क्लीबस्य दर्शिता । उन्मत्तादयस्त्वनुपनेयाः कुतस्तेषां विवाहः ।

आदिग्रहणं चोक्तविषये चरितार्थम् । यदि हि आदिग्रहणसामर्थ्यात्सर्व एव गृह्येरन्पतितोऽपि गृह्येत । तच्च स्मृतिविरोधान्नेष्टम् ।

अथवा कृताध्ययनानां कृतविवाहानामुन्मत्तादिरूपे समुपजाते विधिरेष विज्ञेयः ।

"ननु च कृतविवाहानां 'यद्यर्थिता तु दारैरिति' नोपपद्यते" ।

नैतदेवम् । कृतविवाहानां जायार्थितायाः संभवात् ।

पूर्वैस्तु धर्म्येऽपि विवाहेऽस्य प्रयोजनं दृष्टम् । ततश्च क्लीवस्य स्मार्तेष्वधिकारात्तदर्थो विवाहोऽसत्यामप्यर्थितायां युक्त एव । श्रौतेषु तु जातपुत्रस्याधानात्क्लीवस्य नाधिकारः । यस्य च प्रयोजकत्वं युक्तं तद्दर्शितम् ॥ २०३ ॥

यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ॥
भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥ २०४ ॥

पितृक्रमागतान्मित्राद्राजामात्यपुरोहितादेर्वा क्षेत्राद्वा कयाचिद्युक्त्याऽधिकोत्पत्तिं जनयेत्तत्सर्वेषां साधारणम् । नैव मन्तव्यं 'मयैतद्बुद्ध्या पित्रा प्रागनुपार्जितं मयैतल्लब्धं ममैवैतदिति' ।

विद्यानुपालिन इति वचनाद्विद्याजीविनां शिल्पिकारुकप्रभृतीनामेष विधिर्वैद्यनटगायनादीनाम् ॥ २०४ ॥

अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ॥
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥ २०५ ॥

अविद्या 'कृषिवाणिज्यराजोपसेवादि' । तत्र ईषन्न्यूनाधिकभावो न गणयितव्यः । तत्रापि यदि केनचिदपि बह्वर्जितं तदाऽस्त्येवविभागता ।

ज्येष्ठस्य तु ज्येष्ठांशनिषेधार्थं वचनम् ।

ईषदाधिक्ये तु सर्वेषां समांशकल्पना ।

अपित्र्य इति हेतुवचनादनपत्यधनस्याप्येष एव विधिः ॥ २०५ ॥

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ॥
मैत्र्यमौद्वाहिकं चैव माधुपर्किकमेव च ॥ २०६ ॥

'विद्यया' अध्यापनादिना शिल्पकौशलेन वा । तथा मित्रात् । अर्जितम् । औद्वाहिकं चैव माधुपर्किकमार्त्विज्येन । यद्यप्येतदपि विद्याधनं भवति तथापि याजनेन निमित्तेनोपादीयमानत्वाद्भेदेन व्यपदिश्यते ।

श्वशुरगृहलब्धमौद्वाहिकम्। अपरे उद्वाहनिमित्तेन यद्धनं लभ्यते ॥ २०६ ॥

**भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ॥**
**स निर्भाज्यः स्वकादंशात्किंचिद्दत्त्वोपजीवनम् ॥ २०७ ॥**

ये भ्रातरः सह वसन्ति विद्यमानपितृधनाश्च कृष्यादिना व्यवहरन्ति तेषां यद्येको न व्यवहरेत्तस्येयं निर्भाज्यता पठ्यते स निर्भाज्यः स्वकादंशादिति। भागान्नेतव्योऽपसारयितव्यः। स्वकादंशाद्यावदधिकं तदीयाद्धनाद्व्यवहारेणोत्पन्नं तत्तस्य न दातव्यं, न तु मूलधनस्य पैतृकस्य निषेधः। तत्रापि न सर्वेण सर्वं निर्भाज्यं, किंचिदन्योपजीवनं क्लेशफलमात्मनो गृहीत्वा शिष्टमस्मै दातव्यम्।

अथवा निर्भाज्यः पृथक्कार्यः सह वस्तुं न देयम्। कदाचिदुत्तरकालशक्तिसाधारण्येन धनेनार्जितत्वात्समांशता। तत्र भागकल्पना नारदेन दर्शिता। तत्र वचनेनोद्गतस्य निर्गतस्य भूयान्भागो गृह्यतेऽनुक्तस्य स्वल्प इति ॥ २०७ ॥

**अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् ॥**
**स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥ २०८ ॥**

विद्यानिमित्तस्य स्वयमर्जितस्यादानमुक्तम्। अनेन व्यतिरिक्तस्य कृष्यादिलब्धस्यादातव्यतोच्यते।

"ननु चायमेव श्लोको वक्तव्यः—'स्वयमीहितेन स्वयं चेष्टया यल्लब्धं तन्नाकामो दातुमर्हतीति' किं विद्याधनादिश्लोकेन"।

उच्यते। मैत्रे विवाहादौ न सर्वस्य स्वयमीहोपपत्तिरिति भेदेन व्यपदेशः ॥२०८॥

**पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ॥**
**न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥ २०९ ॥**

ग्रहणादन्यदर्थयन्पित्रा स्वयमर्जितं तदाकामो न विभजनीयोऽधिकारप्राप्तैरपि पुत्रैः।

"कः पुनर्जीवति पितरि पुत्राणां विभागकालः"।

उच्यते। यदा तावत्स्वयं पिता पुत्रान्विभजते। तदुक्तम्—"निवृत्ते रजसि मातुर्जीवति वेच्छतीति" ( गौ० २८। २ ) तथा "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते चापि रमणे पितर्युपरतस्पृहे" (नारद १३।३) इति।

अन्यथा तु यदैव प्राप्ताः पुत्रा भवन्ति तदैव ते पितामहधनस्येशते। तथा चोक्तं—भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः" ( या० व० स्मृ० २ । १२१ ) इति ॥

सत्यपि च पुत्रस्य स्वाम्ये यावदप्राप्तास्तावत् सर्वथा विशेषाभावात्सर्वे पितामहधनभाजः स्वत्वपूर्वकत्वाद्विभागस्य। बन्धक्रयादिक्रियासु पितृधनं जातपुत्रेण न नियोक्तव्यम्। योगकुटुंबभरणादौ तु विनियोगो दर्शितः। आचारेण सत्यपि चास्यामवस्थायां पुत्राणां स्वाम्ये 'पित्रा चाकामेन विभक्तानिति' निन्दादर्शनाद्बलाद्विभाजयन्तः पापा इत्यनुमीयते। यथाऽसकृत्प्रतिग्रहेण भवति स्वाम्यं दोषस्तु पुरुषस्य। तेनान्वयागतमितीदृशमशुद्धमेव। अतः संभवत्युपायान्तरे न पिताऽर्थनीयः। अधर्मो हि तथा स्यात्।

स्वयमर्जितमपि धनमधिकारप्राप्तान्गुणवतः पुत्रान् ज्ञात्वा विभक्तव्यमेव। उक्तं च—"वयसि स्थितः पिता पुत्रान्विभजेत ज्येष्ठं श्रेष्ठांशेनेतरान्समैरंशैः" इति। न चैतत्पितामहधनविषयम्। न हि तत्र पिता ज्येष्ठस्याधिकांशदानाय प्रभवति। तुल्यत्वादुभयोः स्वाम्यस्य।

यत्त्विदं "न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः" ( या० व० स्मृ० २ । ११६ ) इति तत्पितामहेऽपि स्वल्पया मात्रयेच्छन्ति। यत्र न परिपूर्णं भागद्वयं गृहीतं स्वयमर्जितविषये ह्यपवाद एव स्यात् ॥ २०६ ॥

विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ॥
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥ २१० ॥

स्पष्टार्थः श्लोकः।

विभागधर्मे विभागस्योद्धारप्रत्याशङ्कानिवृत्त्यर्थं, "अपित्र्य इति धारणेति' (६।२०५) वचनात्। पित्र्यस्य सर्वधनस्योद्धारः। इह तु भूतपूर्वगत्या पित्र्यं नास्तीत्याशङ्कया वचनम् ॥२१० ॥

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ॥
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ २११ ॥

येषां भ्रातृणां ज्येष्ठः कनिष्ठो वा भ्रातांशप्रदानाद्धीयते। 'अंशप्रदानं' विभागकालः। 'हीयते' पातित्याद्यविभागार्थं च हेतुमासादयेत्। म्रियेत वा। तस्य भागो न लुप्यते। तस्येयं प्रतिपत्तिः ॥ २११ ॥

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ॥
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥ २१२ ॥

सोदर्या भ्रातरो येषां संसृष्टोर्थं, ते गृह्णीयुः । भगिन्यश्च सनाभयः । सोदर्या अप्रत्तास्ता हि सनाभिव्यपदेश्याः । प्रत्ताः पुनः पतिगोत्रभावमनुभवन्तीति न भ्रातृणां 'सनाभयः' ।

ये च संसृष्टा इति चशब्दो भगिनीं समुच्चिनोति । न त्वियमाशङ्का कर्तव्या— "सोदर्या गृह्णीयुर्ये च भ्रातरः संसृष्टा" इति ।

तथा सत्यसोदर्याणामपि संसृष्टानां भागः प्रसज्येत । सन्त्येव सोदर्या असंसृष्टाः संसृष्टाश्च । संसृष्टा असंसृष्टाश्च सोदर्या यत्र सन्ति, तत्रोभयोरपि विभागेन विभागं गृह्णीयुः ।

न चेदं विरुध्येत ।

"अन्योदर्यस्तु संसृष्टो नान्योदर्यो धनं हरेत् । असंसृष्टोऽपि वा दद्यात्सोदर्यो नान्यमात्रिकः" ( याज्ञ० २।१३९ ) ॥

अस्यायमर्थः । सापत्नो भ्राता सत्यपि संसृष्टित्वे न गृह्णाति । यदा सोदर्योऽसंसृष्टोऽपि विद्यते सोदर्याणां मध्याद्येन संसृष्टः स एव नान्यः, सत्यपि सोदर्यत्वे । तदुक्तं—"संसृष्टिनस्तु संसृष्टी सोदर्यस्य तु सोदरः" (याज्ञ० २।१३४) इति । यदा तु सोदरा नैव सन्ति तदा यैरेव सापत्नैः संसृष्टस्त एव गृह्णीयुर्न त्वितरे । सोदर्यविभक्तानां सह वसतां महानिकटमावसत्यपि सान्निध्यं विशेषकार्यं सामान्योत्थं विभक्तानामपि विज्ञायत इत्याहुः ।

तेन विभक्तानामप्यन्यतरप्रमेये सोदर्य एव गृह्णीयान्नास्य भागः परिलुप्यते ।

न चैतच्चोदनीयं "नैवास्य तदानीं भाग उत्थितः परलोको वा चिन्त्यते ।"

यत उक्तम्—"समुत्पन्नो वाच्यः स्वामीति" । "अनीशास्ते हि जीवतोः" ( ९।१०४ ) इति तत्र पितुरूर्ध्वं समनन्तरमेव पुत्राणां स्वाम्यं दर्शयति ॥ २१२ ॥

यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः ॥
सोऽज्येष्ठः स्यादभागश्च नियंतव्यश्च राजभिः ॥ २१३ ॥

विनिकारो राजपूजादिष्ववज्ञा परे धनेन वचनम् ।

अज्येष्ठो बन्धुवत्पूज्य इत्युक्तम् । न सर्वेण सर्वं ज्येष्ठवृत्तिनिषेधः ।

अभागकत्वं च ज्येष्ठांशानर्हत्वम् ।

नियन्तव्यम् । अविशेषोपदेशात् । वाग्दण्डधिग्दण्डाभ्यां धनं चार्थानुरूपेऽपराधे ॥ २१३ ॥

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ॥
न चादत्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥ २१४ ॥

विकर्मस्थाः प्रतिषिद्धाचरणाः ।

कुटुंबार्थे चानुतिष्ठमानानां तेषामन्येषां भ्रातृणां संबन्ध्युपविष्टं स्थापयेद्य'दा ते वक्ष्यन्ते कुतस्तद्धनमिति तदा मूलं दर्शयिष्यामीति' तादृशं वृद्धिसहितमपि सर्वेषामपि दापयेत् । यदि तु तस्मिन्नेव काले भ्रातृणां दर्शये'दिदमधिकं दृश्यते तद्यथांशं गृहीताहमपि स्वतस्तत्पृथक्कृत्य वृद्धिं नेष्यामीति' तदा नास्ति तेषां भागः । तस्यैव तद्यौतकम् ॥ २१४ ॥

भ्रातृणामविभक्तानां यद्युत्थानं भवेत्सह ॥
न पुत्रभागं विषमं पिता दद्यात्कथंचन ॥ २१५ ॥

यदुक्तं—"न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः" ( याज्ञवल्क्य २ । ११६ ) इति तस्यास्मिन्विषये प्रतिषेधः ।

सहोत्थानं सर्व एव धनमर्जयन्तीत्यर्थः । कश्चित्कृष्यादिना कश्चित्प्रतिग्रहेण कश्चित्सेवया कश्चिद्यथाहृतं परिरक्षति यथोपयोगमसन्निहितेषु विनियुंक्ते । तत्सर्वमेकीकृत्य समं विभजनीयम् । न स्नेहादिना कस्मैचित्पित्राऽधिकं देयम् ॥ २१५ ॥

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ॥
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥ २१६ ॥

विभागोत्तरकालं पित्रा यद्विभागे भागद्वयं गृहीतं "द्वावंशौ प्रतिपद्येते" इति तदेव सत्यां पितुरिच्छायां ग्रहीतव्यम् । पितुरूर्ध्वं वा । न तत्र भ्रातृभिर्वाच्यं 'किमित्ययं द्वावंशौ गृह्णातीति' । अथ च नास्ति पितुरिच्छा, तदा समं च स्वसमोऽस्य भाग उद्धर्तव्यः ।

ये पितुरूर्ध्वं संसृष्टास्तेषामेव स पैतृकोंऽशः । तदुत्थं दद्यात् । अपरेषां स्वांशं

"जातस्य च मृतस्य च" इति। जातस्य संसृष्टिन एव दद्युः। पितुरूर्ध्वं तदीयमंशं च तत एव। 'विभक्ताः सह' (६।२१०) इत्यनया बुद्ध्या। "भगिन्या आ प्रसवान्नव विभागोऽस्ति" इति वसिष्ठेन दर्शितम्॥ २१६॥

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्॥
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥ २१७॥

व्याख्यातोऽयं श्लोकः॥ २१७॥

ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि॥
पश्चाद् दृश्येत यत्किंचित्तत्सर्वं समतां नयेत्॥ २१८॥

अविज्ञानान्न्यूनमधिकं वा विभक्तं परतो ज्ञातं समांशकीकर्तव्यम किंच विभागोत्तरकालं लब्धे नास्ति ज्येष्ठस्योद्धार इति॥ २१८॥

वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः॥
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥ २१९॥

वस्त्रपत्रालङ्कारकृतान्नोदकानामेकत्वं विवक्षितम्।

पत्रं वाहनं गन्त्रीशकटादि। अलङ्कारोऽङ्गुलीयकादि। वस्त्रं सममूल्यं, न तु महार्घम्। उदकं कूपवाप्यादि। स्त्रियो दास्यः। योगक्षेमं यतो योगे क्षेमो भवति, मन्त्रिपुरोहितामात्यवृद्धाः वास्तु च। चौरादिभ्यस्ततो रक्षा भवति। स्मृत्यन्तरे च पठ्यते—'वास्तुनि विभागो न विद्यते'।

प्रचारं यत्र गावश्चरन्ति। प्रवेत्रे(?)त्याह।

तेन यत्पैतृकेनोक्तं 'न ह्यत्र धर्मातिक्रमः कश्चिदस्तीति' तदनुपपन्नं दर्शयति। अदृष्टासु हि ते प्रतिषेधाः। तदतिक्रमादधर्मो न स्यात्॥ २१९॥

अयमुक्तो विभागो वः पुत्राणां च क्रियाविधिः॥
क्रमशः क्षेत्रजादीनां द्यूतधर्मं निबोधत॥ २२०॥

द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत्॥
राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्॥ २२१॥

प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ॥

तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥ २२२ ॥
अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ॥
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥ २२३ ॥
द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ॥
तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ २२४ ॥
कितवान्कुशीलवान्क्रूरान्पापण्डस्थांश्च मानवान् ॥
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ २२५ ॥
एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः ॥
विकर्मक्रियया नित्यं वाधन्ते भद्रिकाः प्रजाः ॥ २२६ ॥
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् ॥
तस्माद्द्यूतं न सेवेत हास्यार्थमपि वुद्धिमान् ॥ २२७ ॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ॥
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥ २२८ ॥

विविधः कल्पो विकल्पः। सम एव राज्ञोच्यते।

'द्यूतधर्मं निवोधत' ( ६। २२० ) इति तत आरभ्य द्वित्राः श्लोका विधायकाः। सर्वोऽप्यर्थवादः ॥ २२०—२२८ ॥

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ॥
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥ २२९ ॥

क्षत्रियादयो निर्धना न वन्धनेनावसादयितव्याः। किंतर्हि ? कर्मणा यद्यस्योचितं कर्म राजोपयोगि तेन दण्डधनं संशोधयितव्याः।

व्राह्मणस्तु कुटुंवानामविरोधेन शनैर्दाप्यः। वन्धताडनकर्मणी तस्य निषिध्येते। धनिकविषयः प्रागुक्तः श्लोकः। दण्डविषयोऽयम्। अपौनरुक्त्यम् ॥ २२९ ॥

स्त्रीवालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् ॥
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥ २३० ॥

दमम्। कर्मकरणेऽप्यसमर्था दरिद्रा एव गृह्यन्ते। महापातकिनां साम्यात्त-च्छिफादिभिस्ताडनम्।

शिफा लता। विदलं वृक्षत्वक्॥ २३०॥

ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्॥
धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः॥ २३१॥

ये कार्यिणामर्थिप्रत्यर्थिनां कार्येषु व्यवहारदर्शितादिषु नियुक्ता अधिकृता राजस्थानीयप्रभृतयस्ते धनोष्मणा पच्यमाना अन्यतरस्माद्धनं गृहीत्वा कार्याणि नाशयेयुस्तान्निःस्वान्कारयेत्सर्वस्वहरणं तेषां कार्यम्।

सत्यानामभ्यासेन वर्तमानानां सत्यपि वक्ष्यमाणदण्डान्तरविधावेष एव दण्डो न्याय्यः।

येऽप्यन्ये सेनापतिप्रभृतयः कस्यचित्साहाय्यके नियुज्यन्ते ततश्चार्थं गृहीत्वा शयन्ति तेऽप्येवमेव दण्ड्याः

अन्ये तु 'येऽनियुक्ता' इत्यकारप्रश्लेषं पठन्ति। ये राजवल्लेख्याद्बलातिशयाद्वा-ऽन्यस्य साहाय्यं कुर्वन्ति, कार्यनाशनार्थं द्वितीयस्य, तेषामयं दण्डः।

धनोष्मणेत्यविवक्षितम्। अनियुक्ता इत्येतदेव प्रधानम्॥ २३१॥

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान्॥
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥ २३२॥

कूटशासनस्य कर्तारो यन्नैव राज्ञादिष्टं तद्राजकृतमिति वदन्ति। शासनं राजादेशः। 'एतस्य गृहे न भोक्तव्यम्', 'अस्य चायं प्रसाद आज्ञात', 'इयं वा स्थिती राज्ञा कृतेति' पत्रकं राजाधिकृतलेखकलिखितमिति 'शासनं' राजादेशसंबन्धेन शासनम्। तत्कूटं कुर्वन्ति पालयन्ति।

प्रकृतीनां क्रुद्धलुब्धानां दूषका भेदकाः।

स्त्रीबालयोर्ब्राह्मणस्यापि हन्तारः।

द्विट्सेविनो राजशत्रुसेविनः प्रच्छन्नं गतागतिकान्॥ २३२॥

तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत्॥
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्तयेत्॥ २३३॥

यत्र क्वचन राजाधिकरणे व्यवहारपदं तीरितम्। पारतीरकर्मसमाप्तौ। निश्चितम्। असौ यत्र प्रयुञ्जीतेति न केवलं वाचा सत्यैरुक्तं यावदनुशिष्टं दण्डप्रणयनं कृतम्।

तद्राजा कृतमेव विद्यात्। न पुनर्निवर्तयेदन्तरेण द्विगुणं दण्डम्। यथाह— "द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत्" इति ॥ २३३ ॥

धनग्रहणसंबन्धेन पूर्वं निःस्वीकरणम्। अयं तु निमित्तान्तरेणाज्ञानादिना।

अमात्याः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथा ॥
तत्स्वयं नृपतिः कुर्यात्तं सहस्रं च दण्डयेत् ॥ २३४ ॥

धनग्रहणसंबन्धेन पूर्वं निःस्वीकरणम्। अयं तु निमित्तान्तरेण अज्ञादिना।

अमात्यो राजस्थानीयादिः।

तं सहस्रं च दण्डयेत्। गर्गशतदण्डनवत्समुदायेन वाक्यपरिसमाप्तिः ॥२३४॥

ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः ॥
एते सर्वे पृथक् ज्ञेया महापातकिनो नराः ॥ २३५ ॥

सुरापो ब्राह्मण एव महापातकी। तस्करो ब्राह्मणसुवर्णापहारी। नराः कथिताः।

उक्तार्थकथनमुत्तरार्थम् ॥ २३५ ॥

चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ॥
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥ २३६ ॥

"ननु च सुरापो ब्राह्मण एव पातकी। तस्य च शरीरसंयुक्तो दण्डो नास्ति 'न शारीरो ब्राह्मणो दण्ड' इति तत्र चतुर्णामपीति कथं" केचिदाहुः। पतितः संप्रयुक्तो गृह्यते पूर्वमनुपात्तोऽपि। चतुःसंख्यासामर्थ्यात्।

अन्ये त्वंकनं शरीरसंयुक्तमित्याहुः। तच्च ब्राह्मणस्याप्यस्ति।

अन्ये त्व'पि' शब्दात्पञ्चानामयं दण्ड इत्याहुः।

चतुर्णामपि। अपिशब्दात्पञ्चमस्यापि तत्संसर्गिणः।

ब्राह्मणस्य वधे पूर्वं शरीरदण्ड उक्त एव, "स्त्रीबालब्राह्मणघ्नांश्च हन्यादि"ति। अनेनान्तःशरीरयुक्तमङ्कनमेवोच्यते।

धर्म्यमित्यपराधानुरूपेण गुरुतरलाघवं कार्यमित्यर्थः ॥ २३६ ॥

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥
तस्करे श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥ २३७ ॥

ललाटाङ्कनम् । प्रतिषेधविधौ "नाङ्क्या राज्ञा ललाटे स्युः" ( ९ । २४० ) इतितच्छ्रवणात् ॥ २३७ ॥

असंभोज्या ह्यसंयाज्या असंपाठ्याविगर्हिताः ॥
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥ २३८ ॥

सर्वधर्मग्रहणादेवासंभोजनादीनां सिद्धे प्रतिषेधे दोषगुरुत्वख्यापनार्थमेषामुपादानम् ।

संभोग एकत्र ग्रसनं गीतादिश्रवणं च ।

संयाजनं तेषामेव याजनं तैः सह याजनं वा । एवं संपाठोऽपि द्रष्टव्यः । असंपाठ्याविगर्हिता इति । असंपाठ्याश्चाविगर्हिताश्चेति द्वन्द्वः ।

दीना इति । सत्यपि स्वरत्वे तत्संबन्धिनिषेधभिक्षादिभोजनेन परयाऽवज्ञया च वस्त्रखण्डादिवर्जनम् ॥ २३८ ॥

ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ॥
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥ २३९ ॥

कृतलक्षणा इति निश्चिते कार्यकारणत्वे इत्यर्थः ।

व्याध्यादियोगेप्येषु दया न कर्तव्या । ज्येष्ठ्यादिगुणयोगेऽपि च नैते नमस्कार्याः प्रत्युत्थानादिभिः ।

एष एव वचनसामर्थ्याद्धर्मो विज्ञेयः ॥ २३९ ॥

प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ॥
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥ २४० ॥

शूद्रादन्ये पूर्वे वर्णाः । तेषां प्रायश्चित्तं कुर्वतामङ्कनं नास्ति । दण्डस्तूत्तमसाहसं पणसहस्रं दाप्यते ॥ २४० ॥

आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ॥
विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः ॥ २४१ ॥

प्रायश्चित्तं तु कुर्वाणा इत्येतदत्र नापेक्षते ।

एतेषु ब्रह्महत्यादिष्वपराधेषु ब्राह्मणो मध्यमसाहस्रं दण्ड्यः ।

अकामत इत्युत्तरश्लोकादपकृष्यते ।

दण्डयित्वा प्रायश्चित्तं कारयितव्यः ।

सपरिच्छदः । गुणवतो ब्राह्मणस्यानुग्राह्यस्यैतत् । अकामं वाऽनिर्वास्यः ॥२४१॥

इतरे कृतवन्तस्तु पापान्येतान्यकामतः ॥
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥ २४२ ॥

इतरे क्षत्रियादयो वर्णा एतानि पापानि महापातकान्यकामतोऽनिच्छया कृतवन्तः सर्वस्वहरणाः कार्याः ।

केचित्प्रायश्चित्तमपि कुर्वतामेतद्दण्डं पूर्वेण वैकल्पिकमिच्छन्ति ।

कामतस्तेषां वध उक्तः ।

शूद्रस्याकामतोऽङ्कनसर्वस्वहरणे । कामतो वधः ॥ २४२ ॥

नाददीत नृपः साधुर्महापातकिनो धनम् ॥
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥ २४३ ॥

"ननु धनेन दण्डनं राज्ञा वृत्तिरिति स्थापितम् । कथमिह तद्धनस्याग्रहणम् ।"

उक्तम्—'राजनिर्धूतदण्डा' इत्यत्रान्तरे ॥ २४३ ॥

अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् ॥
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥ २४४ ॥

'वरुणायेदमि'ति मनसा ध्यायन्नप्सु दद्यादप्सु निक्षिपेत् । ब्राह्मणाय वा विद्याशीलसंपन्नाय दद्यात् ॥ २४४ ॥

ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ॥
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥ २४५ ॥

पूर्वस्य प्रतिपत्तिविधेरर्थवादोऽयम् ।

महापातकिनो दण्डस्य वरुण ईष्टे । यतो राज्ञां स दण्डधरो नेता ईशितेति यावत् । एवं ब्राह्मणोऽपि तद्धनस्येशोऽनेन ग्राह्यः ॥ २४५ ॥

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ॥
तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥ २४६ ॥
निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक् ॥
बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥ २४७ ॥

प्रसिद्धाविमावप्यर्थवादश्लोकौ ।

कालेन जायन्त इति वर्तमानजन्म विवक्षितम् ।

जातं जनिष्यमाणं च । विकृतं करचरणाक्षिविहीनम् ॥ २४७ ॥

ब्राह्मणान्बाधमानं तु कामादवरवर्णजम् ॥
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८ ॥

अवरवर्णजः शूद्रः ।

बाधनं धनाद्याहरणं शरीरोपपीडनं च । चित्रा विविधोपायाः शूलारोपणं शिरश्छेदः अंककल्पनं खड्गप्रहारकर्तिका इत्याद्याः । उद्वेजनकरैर्दीर्घकाल-पीडाकरः ॥ २४८ ॥

यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे ॥
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥ २४९ ॥

अवध्यवधे यो दोषस्तत्तुल्यो वध्यमोक्षणे राज्ञ उपर्युक्तेषु ।

अर्थभागहरस्य धर्मानकुर्वतः प्रत्यवायेन अवश्यमेव भवितव्यम । कुर्वतस्तु न कदाचिददृष्टसिद्धिः । यस्त्वयं धर्मस्तु विनियच्छत इति एवमादिधर्मप्रवादः, सर्वोऽसौ स्वकर्मानुष्ठानानुशंसार्थोऽर्थवादः ।

निग्रहोपसंहारार्थस्त्वयं वधोपदेशः । अतो यथाश्रुति चित्रवधोपायैः कर्तव्यः । दृष्टार्थेषु राज्यतन्त्रसिद्ध्यर्थमुपदेशेषु प्रवचनं, यथादृप्तं योधांश्च हन्यादि-त्युक्तम । तत्र दृष्टप्रयोजनत्वादुपदेशस्य, न नियतो वधः । एवं च सत्युपायान्तरे-णापि बन्धनादिना 'विनियच्छतो' न दोषः ॥ २४९ ॥

उदितोऽयं विस्तरशो मिथो विवदमानयोः ॥
अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥

सर्वव्यवहारोपसंहारार्थः श्लोकः ॥ २५० ॥

**एवं धर्म्याणि कार्याणि सम्यक्कुर्वन्महीपतिः ॥**
**देशानलब्धाँल्लिप्सेत लब्धांश्च परिपालयेत् ॥ २५१ ॥**

अलब्धांल्लिप्सेतेति संतोषपरेण न भवितव्यमित्यर्थः ॥ २५१ ॥

**सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः ॥**
**कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥**

देशनिवेशो दुर्गकरणं यत्सप्तमाध्याये उक्तं तत्कृत्वा कण्टकोद्धरणम्। तेनापि राष्ट्ररक्षा क्रियते।

कण्टकशब्दः पीडाहेतुसामान्यात्तस्करादिषु प्रयुक्तः ॥ २५२ ॥

एतदेव दर्शयति—

**रक्षणादार्यवृत्तानां कण्टकानां च शोधनात् ॥**
**नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥ २५३ ॥**

आर्यं शास्त्रनोदितं कर्तव्यमितरानुष्ठाननिषेधः, तद्वृत्तं येषामित्युत्तरपदलोपी समासः। तेन दीनानाथश्रोत्रिया अकरशुल्कदा गृह्यन्ते। तद्रक्षणाद्धि त्रिदिवगमनं युक्तम्। अन्येषां तु वृत्तिपरिक्रीतत्वादकरणे प्रत्यवायः यथोत्तरत्र वक्ष्यते "स्वर्गाच्च परिहीयत" इति। रक्षानुवृत्तिनिष्क्रयणेन प्रत्यवायाभावमात्रं न तु स्वर्गः।

अथवा वृत्तिनियमापेक्षं त्रिदिवप्राप्तिवचनं यथोक्तं प्राक्।

अन्येषां तु वृत्तिपरिक्रीतत्वादर्शनम्। अर्थवादमात्रं राज्ञः स्वर्गवचनम्। अवृत्तिदपरिपालनमपि वृत्तिप्रयुक्तं स्वराज्यभागस्थानीयस्य तद्राज्ञः। यथैव च 'शिल्पिजीविनः शिल्पिनो मासि मास्येकैकं काम्यं कुर्युरिति' वृत्त्यर्थं शिल्पं कुर्वाणा राज्ञा कर्म कार्यन्ते करग्रहणाय, एवं राजापि वृत्तियुक्तः प्रजापालनप्रवृत्तो नित्यकर्मवदार्यपरिपालनं कार्यते शास्त्रेण। यथैवं हि कामश्रुतितोऽग्न्याहितो नित्याननुतिष्ठति, न स्वर्गादिलाभाय, न हि तानि फलार्थतया नोदितानि, अथ च क्रियन्ते; तद्वदेतद्द्रष्टव्यम्। अतो यावती काचित्फलश्रुतिः सा सर्वाऽर्थवाद इति कोवरविष्णुस्वामी।

यदत्र तत्त्वं तद्दर्शितमधस्तात् ॥ २५३ ॥

अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः ॥
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥ २५४ ॥

'शासनं' यथाशास्त्रं वधादिदण्डमन्तरेण तस्कराणां निग्रहः रक्षा न शक्यते। अतो वृत्तिं गृहीत्वा यस्तस्करवधाज्जुगुप्सते तस्योभयो दोषः। इह राष्ट्रकृतोऽमुत्र स्वर्गपरिहानिः। युक्ता च बलिपरिगृहीतस्य तन्निष्कृतिमकुर्वतो दोषवत्ता ॥ २५४ ॥

निर्भयं तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ॥
तस्य तद्वर्धते नित्यं सिच्यमान इव द्रुमः ॥ २५५ ॥

प्रसिद्धमेवैतच्छ्लोके तस्करधर्मविशेषतयाऽनूद्यते ॥ २५५ ॥

द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् ॥
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ २५६ ॥

चाराः प्रच्छन्ना राष्ट्रे राजकृत्यज्ञानिनः। ते चक्षुषी इव यस्य स चारचक्षुः। प्रकाशस्तस्कराणां नातितस्करव्यवहारो यथा लोकेऽन्येषामटवीरात्रिचराणाम्। आप्तस्तैः सामान्योपादानं तद्वन्निग्रहार्थं क्रियते ॥ २५६ ॥

प्रकाशवंचकास्तेषां नानापण्योपजीविनः ॥
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः ॥ २५७ ॥

तत्र ये क्रेयार्थं मानतुलाविशेषेण मुष्णन्ति द्रव्याणामागमस्थाननिर्गमनापेक्षार्थं कुर्वन्ति ते प्रकाशवंचका वाणिजकाः।

प्रच्छन्नास्तु ये रात्रेरनुहरन्ति ते। स्तेना आटविका विजने प्रदेशे वसन्ति। अपरे तु प्रसह्य हारिणो न केवलमेत एव, किंतर्हीमे चान्ये यानूर्ध्वं वक्ष्यामः ॥२५७॥

उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा ॥
मङ्गलादेशवृत्ताश्च भद्रप्रेक्षणिकैः सह ॥ २५८ ॥

उत्कोचका ये कस्य चित्कार्येण कस्य चिद्राजामात्यादेः प्रवृत्ता ग्रहणातिकार्यसिद्धौ प्रवर्तन्ते।

औपधिकाः छद्मव्यवहारिणः। अन्यद्ब्रुवन्त्यन्यदाचरन्ति। प्रत्यक्षं प्रीतिं दर्शयित्वा हठोपकारे वर्तन्ते। विनाप्यर्थग्रहणेन निमित्तान्तरतः अन्यतोऽपरस्य

कार्यसिद्धिमवश्यं विज्ञाय 'मया तवैतत्क्रियत' इति परं गृह्णन्ति । भीपिकाप्रदर्शनं वा 'उपधिः' ।

कितवा धनग्रहणवञ्चका विप्रलम्भकाः । 'इदं कार्यं वयमेव करिष्यामस्तव नान्यत्रोद्यथा' इत्युक्त्वा न कुर्वते । उपेत्य नानाकारिणो नानाविधैरुपायैर्ग्रामीणान्मुष्णन्ति ।

शिवमाधवादयः शिवमादित्यं जीवन्ति । मङ्गलादेशवृत्ता ये ह्युपदेशिका ज्योतिपिकादयः । अथवा 'एतां देवतां त्वदर्थनाहं प्रीणयामि दुर्गां मार्तण्डं चेति' तथाऽऽढ्यानां धनमुपजीवन्ति । अथवा मङ्गलं 'तथाऽस्त्विति' वादिनः, 'मङ्गलादेशवृत्ताः' ।

सर्वस्य करवर्धने भद्रप्रेक्षणिकाः प्रशंसिपुरुपलक्षणाः ।। २५८ ।।

असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः ।।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोपितः ।। २५९ ।।

महामात्रा मन्त्रिपुरोहितादयो राजनिकटिकाः । ते चेदसम्यक्कारिणः ।

चिकित्सका वैद्याः ।

शिल्पोपचारयुक्ताः चित्रपत्रच्छेदरूपकारादयः । 'उपचार' उपायनमनुपयुज्यमानं स्वशिल्पकौशलं दर्शयित्वाऽनुष्ठाय धनं नयन्ति ।

एवं पण्ययोपितो निपुणाश्चोपचारेणासत्प्रीतिदर्शनेन ।

असम्यक्कारिण इति सर्वत्रानुयुज्यते ।। २५९ ।।

एवमाद्यान्विजानीयात्प्रकाशांल्लोककण्टकान् ।।
निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः ।। २६० ।।

एवमाद्यान् न शक्यन्ते धूर्तानां परद्रव्यापहाराणां प्रकारान्संख्यातुमित्याद्यग्रहणम् । तथा ह्यशक्यां कथयन्ति अवधारयन्तीमनुरागिणीम् । तथाऽभृत्यो भृत्यवदात्मानं दर्शयित्वा नयति । हिरण्यमृजुप्रकृतेः न चार्थभृत 'त्वं ब्रह्मा त्वं बृहस्पतिरि' त्युक्त्वा मूर्खाढ्यान्नयन्ति । 'देहि प्रसादेन कतिपयैर्वाऽहोभिः प्रत्यर्पयामीति' सिद्धे प्रयोजने तनुतरो भवति प्रियवाद्यप्रियवादी संपद्यते ।। २६० ।।

तान्विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः ।।
चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत् ।। २६१ ।।

निगूढचारिणः। तुल्यकर्मकारिभिर्विद्या। पूर्वं ये तत्कर्म कृतवन्तः। अथवा संप्रत्येव तत्कर्म कार्यन्ते अन्तर्भावसिद्ध्यर्थं लब्धान्तरा आगत्य कथयिष्यन्ति तथाद्यैरपि चारैस्तत्कर्मकारिभिरनेकसंस्थानैः ॥ २६१ ॥

तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः ॥
कुर्वीत शासनं राजा सम्यक् सारापराधतः ॥ २६२ ॥

न हि दण्डादृते शक्यः कर्तुं पापविनिग्रहः ॥
स्तेनानां पापबुद्धीनां निभृतं चरतां क्षितौ ॥ २६३ ॥

सभा प्रपापूपशालावेशमद्यान्नविक्रयाः ॥
चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥ २६४ ॥

जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ॥
शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥ २६५ ॥

एवंविधान्नृपो देशान्गुल्मैः स्थावरजङ्गमैः ॥
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥ २६६ ॥

तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः ॥
विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥ २६७ ॥

भक्ष्यभोज्योपदेशैश्च ब्राह्मणानां च दर्शनैः ॥
शौर्यकर्मापदेशैश्च कुर्युस्तेषां समागमम् ॥ २६८ ॥

ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये ॥ ॥
तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान् ॥ २६९ ॥

न होढेन विना चौरं घातयेद्धार्मिको नृपः ॥
सहोढं सोपकरणं घातयेदविचारयन् ॥ २७० ॥

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ॥
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥ २७१ ॥

राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान् ॥
अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतम् ॥ २७२ ॥
यश्चापि धर्मसमयात्प्रच्युतो धर्मजीवनः ॥
दण्डेनैव तमप्योषेत्स्वकाद्धर्माद्धि विच्युतम् ॥ २७३ ॥
ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ॥
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥ २७४ ॥

शक्तौ सत्यामालस्यादिना । ते निर्वास्याः ।

ये तु चौरैः कृतसंकेतास्तेषां पूर्वत्र वध उक्तो 'घातयेदि'ति ।

परिच्छदो गवाश्वादिः । तदपि निर्वास्या नापहर्तव्यम् । नासत्परिच्छदः कर्तव्यो धनं तु हर्तव्यम् ॥ २६२-२७४ ॥

राज्ञः कोशापहर्तृंश्च प्रातिकूल्येष्ववस्थितान् ॥
घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥ २७५ ॥

कोशो राज्ञां धनसंचयस्थानं तत्रापहर्तारो द्रव्यजातिपरिमाणानपेक्षमेव वध्याः ।

ये च प्रातिकूल्येन वर्तन्ते । यद्राज्ञां देशान्तरादानेतुमभिप्रेतं तद्देशदुर्लभमांजनेयाश्वादि प्राच्यानाम् । उदीच्यानां कलिङ्गदेशोद्भवहस्त्यादि । तदानयनप्रतिवन्धे ये वर्तन्ते । तथा यानि मित्राणि तानि शत्रून्कुर्वते । कृत्वा शत्रुभिः संयोजयन्ति ।

अरीणामुपजापकाः प्रोत्साहकाः । तान् घातयेत् ।

स्वतन्त्रप्रयोजनत्वान्नावश्यं घातनमित्युक्तम् ॥ २७५ ॥

सन्धिं भित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ॥
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥ २७६ ॥
अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ॥
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ २७७ ॥

ग्रन्थिं भिनत्तीति ग्रन्थिभेदः । 'भेदनं' मोक्षो ग्रन्थेर्वस्त्रप्रान्तादौ ग्रन्थिः ।

यद्वायद्द्रव्यं गृहीतं तत्केनचिच्छलेन ग्रन्थिमवमोच्य ये निनीषन्ति ते ग्रन्थिभेदाः ।

तेषां प्रथमायां प्रवृत्तावङ्गुलीनां छेदः। द्वितीयस्यां प्रवृत्तौ हस्तचरणयोः। तृतीयस्यां मारणम्॥ २७६-२७७॥

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान्॥
संनिधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः॥ २७८॥

अग्निदाः शीतापनोदनाद्यर्थं येऽग्निं ददति।
शस्त्रं कर्तरिकादि।
मोषस्य सन्निधातारः कर्तारः।
सर्वे चौरवज्ज्ञेयाः।
शस्त्रावकाशदग्रहणं प्रागुक्तमप्युपसंहारार्थमुच्यते॥ २७८॥

तडागभेदकं हन्यादप्सु शुद्धवधेन वा॥
यद्वाऽपि प्रतिसंस्कुर्याद्दाप्यस्तूत्तमसाहसम्॥ २७९॥

तडागग्रहणमुपलक्षणार्थम्। नद्युदकहरणेऽप्ययं दोष इति केचित्।
तदयुक्तम्। महान्हि तडागभेदनेऽपराधः। स्वल्पो नदीभेदने। तडागस्य हि वप्रभेदनेनोदकेऽप्ययमेव विधिः॥ २७९॥

कोष्ठागारायुधागारदेवतागारभेदकान्॥
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन्॥ २८०॥
यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत्॥
आगमं वाप्यपां भिद्यात्स दाप्यः पूर्वसाहसम्॥ २८१॥
समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि॥
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत्॥ २८२॥

राजमार्गे ग्रामनगरे रथ्यायाममेध्यं मूत्रपुरीषं समुत्सृजेदन्यतो वाऽऽनीय चण्डालादिभिर्निक्षिपेत्।
अनापदि आपद्वेगेनात्यर्थमुक्तं भवति।
चण्डलादेर्मूल्यं दत्वाऽपासयेत्स्वयं वाऽन्यासंभवे॥ २८०-२८२॥

आपद्गतोऽथवा वृद्धा गर्भिणी बाल एव वा॥
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥ २८३॥

आपद्गतः पूर्वोक्तः । वृद्धादयो ये वहिर्ग्रामं निर्गन्तुमशक्ताः ते गृह्यन्ते । शोणितमपि कर्तुमित्याशङ्क्य तेऽमेध्यमपि व्यपदेष्टुम् ।

'न पुनरेवं कर्तव्यम्' । पुनःकरणे राजतो महान्प्रत्यवायो भवति क्रोधगर्भमीदृशवचनं परिभाषणम् ।

तच्च शोध्यमिति राज्ञ उपदेशः । यद्युत्स्रष्टारो न ज्ञायन्ते । तथा च रथ्याचण्डालादिभिरपासनीया ॥ २८३ ॥

चिकित्सकानां सर्वेषां मिथ्याप्रचरतां दमः ॥
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः ॥ २८४ ॥

चिकित्सका भिषजः । तेषां मिथ्याप्रचाराणामौषधदानमुभयथा संभवति । यदि वाऽविज्ञातशास्त्रप्रयोगतया, शास्त्रे परिचितेऽपि वाऽतत्परतयाऽर्थलिप्सया ।

अमानुषेषु गवाश्व-हस्त्यादिषु । प्रथमः साहसशब्दोऽनुषक्तव्यः ।

एवं मानुषेषु तु मध्यम इति ।

तथाप्रचारेण यद्याश्वेव विपद्येत तदा महान्दण्डः कल्पनीयः ॥ २८४ ॥

संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः ॥
प्रतिकुर्याच्च तत्सर्वं पञ्च दद्याच्छतानि च ॥ २८५ ॥

संक्रमः । येन संक्रामन्ति मार्गेणावतरन्ति जलोपस्पर्शादिना निमित्तेन ।

शुभ्रं वासः । ध्वजः चिह्नं राजामात्यादीनाम् । देवायतनेषु च यष्टिः ।

ईदृशे च प्रतिमानामिति व्याख्यातम् ।

प्रतिकुर्यात्समदधीत प्रत्यापत्तिं नयेत् ॥ २८५ ॥

अदूषितानां द्रव्याणां दूषणे भेदने तथा ॥
मणीनामपवेधे च दण्डः प्रथमसाहसः ॥ २८६ ॥

यानि स्वयमदुष्टानि द्रव्याणि लाभार्थी दूषयति । तथा धान्यविक्रयी क्षेत्रे निर्दोषं धान्यमुत्तमं तृणवुसैर्योजयति । कुंकुमादेश्च अकुंकुमादिना द्रव्यान्तरेणैकीकरणम् ।

मणयो मुक्तास्तेषां भेदनं द्विधाकरणम् । अवेधितव्यप्रदेशेन विध्यते इति अपवेधः । अनेकार्थत्वाद्धातूनां विध्यते रूपमेतत् ।

मणयो हीनमध्यमोत्कृष्टतमा भवन्ति । तत्र दण्डकल्पना कर्तव्या । मध्यमेषु मध्यम उत्तमेषूत्तमः ॥ २८६ ॥

समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा ॥
समाप्नुयाद्दमं पूर्वं नरो मध्यममेव वा ॥ २८७ ॥

येषां द्रव्याणां समत्वेन विनिमय उक्तो यथा "तिला धान्येन तत्समा" इति, तत्र यदि विषममाचरति व्यवहारार्थं तिलं दत्वा बहुधान्यं व्रीह्यादि गृह्णीयात्। असति वा विनिमये मूल्यतः क्रयव्यवहारेण व्रीह्यादिधान्येभ्योऽधिकेन मूल्येन तिलान् क्रीणाति। अथवा, कस्यचिदुत्तरीयमुपबर्हणमस्ति विक्रेतव्यं कस्यचिदन्तरे शाटकाः। तत्र यस्योपबर्हणमस्ति तस्यान्तर उपयुज्यन्ते। उपबर्हणेन च ते सममूलाः। तत्र तदीयां कार्यवत्तां ज्ञात्वा समत्वेन न ददात्यधिकमूल्यं गृह्णाति। स उच्यते 'समैर्विषमं चरति मूल्येन'। तयोः क्रेतुर्विक्रेतुश्च तौ दण्डौ। 'चरति मूल्यत' इत्येकार्थस्तथैव। वाशब्दोऽस्मिन्पक्षे पादपूरण एव। प्रथममध्यमोक्तौ क्रयविक्रयौ विकल्पितौ द्रव्यसारापेक्षया ॥ २८७ ॥

बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ॥
दुःखिता यत्र दृश्येरन्विकृताः पापकारिणः ॥ २८८ ॥

प्रसिद्धे राजरथ्याप्रदेशे बन्धगृहाणि सन्निवेशयेत्कुर्यात्।

दुःखिता यत्र दृश्येरन्नित्यन्यत्रापि संनिवेशनं तत्प्रदेशभ्रमणं दर्शयति। एतेनान्या अपि बन्धसंस्थानां पीडाः कर्तव्या इत्याह।

शरीरात्यन्तकार्शाद्यवस्थांतरापत्त्या विकृताः अभोजनेनेपद्भोजनादिना।

शेषं स्पष्टम् ॥ २८८ ॥

प्राकारस्य च भेत्तारं परिखाणां च पूरकम् ॥
द्वाराणां चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥ २८९ ॥

दुर्गगतानां प्राकारादीनां विनाशने प्रवासनं दण्डः।
परिखा भूभागाः खाताः ॥ २८९ ॥

अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः ॥
मूलकर्मणि चानाप्तैः कृत्यासु विविधासु च ॥ २९० ॥

अदृष्टेनोपायेन मन्त्रादिशक्त्या मारणमभिचारः। तत्र प्रवृत्तानाममृतेऽभिचारणीये दण्डोऽयम्। अनभिचारणीयाभिचारेषु नैतावता मुच्यते तत्र। मनुष्यमारणदण्डः स विज्ञेयः।

सर्वग्रहणं लौकिकवैदिकयोरविशेषेण दण्डार्थम् । वैदिकाः श्येनादयः । लौकिकाः पादपांशुग्रहणसूचीभेदनादयः ।

मूलकर्म वशीकरणादि । आप्ताः पौत्रभार्यादयस्ततोऽन्येऽनाप्ताः ।

कृत्या अभिचारप्रकारा एव मन्त्रादिशक्तयः, उच्चाटनं सुहृद्बन्धुकुलाद्वि विचित्तीकरणादिहेतवो भूतविद्याः प्रसिद्धाः ॥ २९० ॥

अबीजविक्रयी चैव बीजोत्कृष्टा तथैव च ॥
मर्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम् ॥ २९१ ॥

अबीजं बीजमित्युक्त्वा विक्रीणीते स्वरूपलोपेन । धान्यशाकादीनां बीजानि चिरप्रोषितानि क्षेत्रे प्ररोहन्ति न च तानि शक्यन्ते वन्ध्यानीति ।

क्षेत्रात्तु बीजमुत्कर्षति शोभनं यद्बीजं क्षिप्रं प्ररोहति तदुत्कृष्य तदाभासं प्रतिधान्यादि क्षिप्त्वा विक्रीणीते । अथवा न्युप्तं बीजं क्षेत्रादेवोद्धृत्य नयन्ति ।

मर्यादा शास्त्रदेशाचारनिरूढा स्थितिः ।

विकृतं कर्णनासादिकर्तनम् ॥ २९१ ॥

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ॥
प्रवर्तमानमन्याये छेदयेत्खण्डशः क्षुरैः ॥ २९२ ॥

यावन्तः केचन कण्टकाः पूर्वमुक्तास्तेषां पापतमः सुवर्णकारः ।

यदि निर्धारणे षष्ठी । कथं न "न निर्धारण" इति समासाभावः ।

तस्य च पापतमत्वं स्वल्पेनैवापहरणेन महत एनसोत्पत्तिर्ब्राह्मणस्वर्णापहरणे च महापातकम् । अतस्तमन्याये प्रवर्तमानं छेदयेत्खण्डशः ।

परिवर्तनतुलान्तरतापच्छेदादिभिः अपहरन्ति गृह्णते । न चात्र ह्रियमाणद्रव्यपरिमाणापेक्षा, न स्वामिजात्यपेक्षा । अभ्यासस्त्वपेक्ष्यत इति, महत्त्वाद्दण्डस्य । आद्यायां तु प्रवृत्तौ धनदण्डेन क्षुरमांसलवच्छेदो विनिमातव्यः

शारीरनिग्रहे निगृह्यमाणानां पापमपैतीति प्रतिपादितम् ॥ २९२ ॥

सीताद्रव्यापहरणे शस्त्राणामौषधस्य च ॥
कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् ॥ २९३ ॥

कृष्यमाणा भूमिः सीता। तद्द्रव्याणि लाङ्गलकुद्दालकादीनि। तदपहरणे दण्डः प्रकल्प्यः।

किं इच्छयैव। नेत्याह। कालमासाद्य कार्यं च। कर्षणकाले प्रत्यासन्ने महान् दण्डः। अकृष्टे च यदा तस्मिन्महतः फलस्य नाशस्तदा भूयानेव।

आसाद्यासन्नं ज्ञात्वेत्यर्थः। अन्यदा तु द्रव्ये जात्यनुरूपः।

एवं शस्त्राणां च खड्गादीनां युद्धकाले। औषधस्य भेषजार्थमुपयोगकाले। तेन चौषधेन हृतेनानुपयुक्तेन यद्यातुरस्य महती पीडा जायते, अन्यच्च तस्मिन्काले न लभ्यते, तल्लभ्यमपि वाधकादिसंस्कारापेक्षया चिरेणोपयोगार्थम्, एवमाद्यपेक्षा राजदण्डप्रकल्पनायै प्रभवेत्।

शस्त्राणां राजोपकरणानाम्, अन्यथापि जनपदस्य भ्रातृव्यतस्कराशङ्किनः। तदा महान्दण्डः। स्वल्पे स्वल्पः॥ २९३॥

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा॥
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते॥ २९४॥

समाप्तायां कण्टकशुद्धौ केवलं राज्यतन्त्रोपयोगीं राजधर्म उच्यते। यथैतस्मिन्ननुष्ठीयमाने राज्यानाशः, एवं व्यवहारदर्शने कण्टकशुद्धौ वा क्रियमाणायां तुल्यो राज्यानाशः। किं च महिषीकुमारराजवल्लभसेनाध्यक्षाश्रिताः प्रायेण भवन्ति कण्टकाः, तान् कदाचिदनया बुद्ध्या नोद्धरेत् 'प्रकृतक्षोभशङ्कायां महत्तमं प्रयोजनं सेनाध्यक्षेण सामन्तेन च,—किमनेन निगृहीतेन राष्ट्रापराधिना'—तदर्थमुच्यते। तुल्यं राष्ट्रं स्वाम्यादिनेति राज्यप्रकृतित्वेन गुरुलघुभावश्च। प्राकृतीनामेवार्थमुच्यते। यदि महान् क्षोभोऽमात्यादिति राज्यप्रकृतित्वेन तत्परिहर्तव्यम्। राष्ट्रं ततो दुर्बलं केनचिदुपायेन वा बोधयित्वा कण्टकशुद्धिं करिष्यामीति न सहसा प्रवर्तितव्यम्। अतः सप्तमाध्यायोपदेशतोऽप्युत्कृष्यास्मिन्नवधा वुध्यते।

स्वामी राजैव। अमात्यो मन्त्रीपुरोहितः सेनानी। पुरं निवासनगरम्। राष्ट्रं जनपदाः। कोशो रूप्यसुवर्णरूपकादिधनसंचयः हस्त्यश्वरथपादातं दण्डः धर्मदंडादिव। सुहृत्समानकार्यः। यथोक्तं "मित्रं तस्मादनन्तरमिति"।

एता राज्यस्य प्रकृतयः कारणम्, अवयवा यथा घटस्य कपालानि।
स्वभाववचनो वा प्रकृतिशब्दः। एवं तदात्मकमेव राज्यं समस्तं क्षिप्तम्।
अस्यैव भेदो विस्तारो द्वासप्ततिस्तत्रापि यो भेदः स उक्त एव॥ २९४॥

सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् ॥
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं महत् ॥ २६५ ॥

मित्रव्यसनात्स्वव्यसनं गरीयः । स्वबलसंपन्नो हि शक्नोति मित्रमनुग्रहीतुम् । एवं दण्डकोशयोः । कोशनाशे हि दण्डोऽपि नश्यत्येव । एवं कोशराष्ट्रयोः राष्ट्रनाशे हि कुतः कोशोत्पत्तिः ।

पुनः राष्ट्रविनाशशंकायां पुरं यत्नतो रक्षितव्यम् । तत्र हि सर्वावयवसाधनादि संभवति ।

पुरादमात्यः प्रधानम् । प्रधानामात्यनाशे सर्वनाशः ॥ २६५ ॥

तथा च दृष्टान्तः ।

सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत् ॥
अन्योन्यगुणवैशेष्यान्न किंचिदतिरिच्यते ॥ २६६ ॥

विष्टब्धस्य त्रिदण्डवदिति । विष्टब्धस्यान्योन्यस्याधारभावेन । एतदेवाह । अन्योन्यगुणवैशेष्यात् परस्परस्योपकार्योपकारकाभावेनैकैकस्य न विनाशोत्पत्तेः भूमिवीजोदकसामग्र्या इव अंकुरजनने ।

तस्मात्सर्वेषां पूज्यताऽत्रोच्यते । अस्त्येवात्र गुरुलघुभावः । यत्तु न किंचिद-तिरिच्यत इति तन्महतादरेण मित्रादिरक्षायां वर्तितव्यमित्येवंपरमेतत् । मित्रनाशेऽचिरेण राज्यनाशो यदा वलवतोपरोधो न तु तदानीमेवेत्यालंवनं लघीयस्तायाः ॥ २६६ ॥

तेषु तेषु तु कृत्येषु तत्तदङ्गं विशिष्यते ॥
येन यत्साध्यते कार्यं तत्तस्मिन् श्रेष्ठमुच्यते ॥ २६७ ॥

नास्ति तद्वस्तु यद्राज्ञो नोपयुज्यते । भवति हि तत्कार्यं यन्निकृष्टेन साध्यते न महता । तस्मात्सर्वाः प्रकृतयो यत्नतः पालनीयाः, असद्दण्डादिना न राष्ट्रं कर्शनीयम्, चौराद्युपद्रवेभ्यश्च यत्नतो रक्ष्यमिति तात्पर्यार्थः । अतः कण्टकशुद्धिशेषोऽयम् ॥ २६७ ॥

चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ॥
स्वशक्तिं परशक्तिं च नित्यं विद्यात्परात्मनोः ॥ २६८ ॥

परस्यात्मनश्च नित्यं शक्तिं विद्यात् । 'किमयं प्रारिप्सते किंच मयि कर्तुं शक्तं

किं चाहमस्मिन्निति'—एतन्नित्यं वेदितव्यम् । कथं चैतच्छक्यते वेदितुम् ।

चारेण सप्तमाध्यायोक्तेन ।

उत्साहयोगेन दानादिपरितोषिता उत्साहेन युज्यन्ते संपन्नकृष्यादिफलाश्च ।

क्रिययैव च कर्मणाम् । 'कर्माणि' निवेशादीनि, तदारंभेन शक्तिमान् रिपुरवगम्यते । तानि ह्यर्थसंपत्कराणि । ततः सामर्थ्योत्पत्तेः ॥ २९८ ॥

पीडनानि च सर्वाणि व्यसनानि तथैव च ॥
आरभेत ततः कार्यं संचिन्त्य गुरुलाघवम् ॥ २९९ ॥

पीडनानि नरकदुर्भिक्षपातादीनि । तथाऽवर्षादिवर्षपर्जन्यमूषिकशलभाशनिप्रभृतयः ।

व्यसनानि कामक्रोधसमुत्थानि स्वपुत्रसंप्राप्तदैवविघटनयोपन्यासेन वा । तथापि न नित्यमुत्साहेन भवितव्यम् । अथवा न संतोषिणा भवितव्यम् । अथ तावत्पाड्गुण्यचिन्ता, अन्वाहिकौ चायव्ययौ, कया चिन्मात्रया गतौ च राष्ट्रवृत्तं प्रकृतिसमीहितं चरमुखादवधृतम् । नृत्यगीतादिसुखानुभवव्यापारान्तरेण वा पुनः कर्माणि वेदितव्यानि ॥ २९९ ॥

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ॥
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ ३०० ॥

पुरुषग्रहणं 'तिष्ठतु तावद्राजा' अन्योऽपि जानपद उद्योगश्रियोपचीयते । एतदुक्तम् "आमृत्योः श्रियमन्विच्छेत्" इति ॥ ३०० ॥

कृतं त्रेतायुगं चैव द्वापरं कलिरेव च ॥
राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते ॥ ३०१ ॥

इतश्च कर्मारम्भपरेण भवितव्यम् । अनारम्भी कलिः स्यात् । स च महान्दोषः । न चैवं मन्तव्यं राज्ञा 'कलिर्नाम कालविशेष इतिहासप्रसिद्धः कथमहं स्यामिति' यतो राज्ञो वृत्तानि युगादि ( दीनि ? ) ।

तदुत्तरेण निर्दिश्यते ॥ ३०१ ॥

कलिः प्रसुप्तो भवति सजाग्रद्द्वापरं युगम् ॥
कर्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥ ३०२ ॥

अनुत्थानशीलः प्रसुप्तः कलिर्भवति ।
जानानश्चोत्कर्षाभ्युपायाननुत्तिष्ठन्सजाग्रद्द्वापरं भवति ।
व्यवसितकर्मप्रयोगस्त्रेतायुगं भवति ।
विश्वस्य सर्वरूपाणि यथाशास्त्रं कर्मफलसंपदा कृतयुगं भवति ।। ३०२ ।।

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।।
चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ।। ३०३ ।।

तेजः शुक्रं कार्यं सामर्थ्यमित्यर्थः ।। ३०३ ।।

वार्षिकांश्चतुरो मासान्यथेन्द्रोऽभिप्रवर्षति ।।
तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ।। ३०४ ।।

नात्र प्रकरणे मासनियमोऽभिप्रेतः । केवलं चतुर्षु मासेषु सन्ततवर्षी पर्जन्यो भवति । अतः सन्ततं सर्वकालं स्वं राष्ट्रं कामैः पूरयेदित्युक्तं भवति । तथा कर्तव्यं यथा स्वराष्ट्रिया अनुरक्ता भवन्ति ।। ३०४ ।।

अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ।।
तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ।। ३०५ ।।

तोयं स्तोकमपि रसमीपत्तापेनादत्ते यथाऽऽदित्यस्तथा करमादद्यादित्येष उपमार्थः ।। ३०५ ।।

प्रविश्य सर्वभूतानि यथा चरति मारुतः ।।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ।। ३०६ ।।
यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ।। ३०७ ।।

अपराधे प्रियद्वेष्ययोर्निग्रहसमत्वेन वर्तितव्यम् ।। ३०६-३०७ ।।

वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते ।।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ।। ३०८ ।।

अविशेषिता एव अकार्यकारिणो निग्रहीतव्या, यथा न पलायन्ते ।। ३०८ ।।

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ॥
तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥ ३०९ ॥

अक्रोधनेन प्रसाधनालङ्कारवता प्रहृष्टवदनेन प्रजादर्शनकाले भवितव्यम्। निर्वातपरितापा भवन्तीत्यर्थः ॥ ३०९ ॥

प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ॥
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ ३१० ॥

भृशमुद्वेजनीयो दुष्ट इत्याग्नेयव्रतम्।

सामन्ता अमात्या एव साधनयुक्ताः ॥ ३१० ॥

यथा सर्वाणि भूतानि धरा धारयते समम् ॥
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ ३११ ॥

धरा पृथ्वी। तद्वद्दीनानाथाश्च वंशाश्च भरणीयाः ॥ ३११ ॥

एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः ॥
स्तेनान्राजा निगृह्णीयात्स्वराष्ट्रे पर एव च ॥ ३१२ ॥

उपसंहारश्लोकः। एतैर्देवव्रतैरन्यैर्लोकतोऽवगम्यैः ॥ ३१२ ॥

परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् ॥
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ३१३ ॥

यः क्षीणकोशो बलीयसा च राज्ञा दण्ड्यते, तथापि न ब्राह्मणधनमप्यापदि ग्रहीतव्यम्। न चावज्ञानादिना प्रकोपनीयाः ॥ ३१३ ॥

यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः ॥
क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥ ३१४ ॥

प्रागुक्तार्थसिद्धये ब्राह्मणमाहात्म्यं इतिहासं लोकप्रसिद्धमनुवदति। एष्वर्थेष्वाख्यानानि महाभारतादवगमयितव्यानि ॥ ३१४ ॥

लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः ॥
देवान्कुर्युरदेवांश्च कः क्षिण्वंस्तान्त्स मृध्नुयात् ॥ ३१५ ॥

क्षिणोति छादयति तदविशेषात्स्मृतीनां क्षिण्वन्हि संक्षेपोऽप्युत्तमानामेवेति युधिष्ठिरेण गाण्डीवे विक्षिप्ते व्यासमुनिना दर्शितम् ॥ ३१५ ॥

यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा ॥
ब्रह्म चैव धनं येषां को हिंस्यात्ताञ्जिजीविषुः ॥ ३१६ ॥

लोकास्त्रयः पृथिव्यादयः । देवा आहुतिद्वारेण ब्राह्मणोपाश्रिताः । अध्यापनाधिक्येन कर्मबहुत्वेन ब्राह्मणो देवानामाश्रयो न तथा क्षत्रियवैश्यौ ॥ ३१६ ॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ॥
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ३१७ ॥

जातिमात्राश्रयाणामनवज्ञानं, न विद्वत्तामपेक्षेत । दानादिक्रियास्विव । यथा 'चैतन्न पादतः कुर्या'दित्यग्नौ ॥ ३१७ ॥

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ॥
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥ ३१८ ॥

गतार्थोऽयम् । दुराचारोऽप्यनविज्ञेय इत्यर्थः ॥ ३१८ ॥

एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ॥
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥ ३१९ ॥

अनिष्टेषु प्रतिषिद्धेषु वर्तमाना मृदूपक्रमैर्यथाशास्त्रं दण्ड्या न सहसाऽऽक्रम्य, वर्णान्तरवत् ॥ ३१९ ॥

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रति सर्वशः ॥
ब्रह्मैव सन्नियंतृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ ३२० ॥

क्षत्रियस्य ब्राह्मणान्प्रतिबाधितुं प्रवृत्तस्य ब्राह्मणा एव संनियन्तारः । श्रीमदाबलिप्ताः व्यवस्थाभंगेन वर्तमानाः क्षत्रियाः, जपहोमादिशापादिना ब्राह्मणैर्मार्गे व्यवस्थाप्यन्ते ।

अत्र हेतुः क्षत्रं ब्रह्मसंभवम् । ब्राह्मणजातेः सकाशात्क्षत्रियाणां संभवः । अत्रार्थवाद एवायम् ॥ ३२० ॥

ननु यो यस्योत्पत्तिहेतुर्नासौ तस्य नाशकः । नैवम् ॥ ३२० ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ॥
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२१ ॥

अद्भ्य ओषधिवनस्पतिभ्य एव जायत इत्येवमग्निरद्भ्य एव उत्पन्नः।

तस्य सर्वगं तेजः सर्वदाह्यं दहति तेजसाऽभिभवति। अपः प्राप्य तदस्य तेजः शाम्यति। अश्मनो लोहं खड्गादि। तेन सर्वं विदार्यते अश्मसंपातात्स्फुटति। एवं क्षत्रियाः सर्वत्र जिगीषवो विजयन्ते ब्राह्मणेषु चेदौद्धत्येन वर्तन्ते तदा विनश्यन्ति ॥ ३२१ ॥

नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ॥
ब्रह्म क्षत्रं च संपृक्तमिह चामुत्र वर्धते ॥ ३२२ ॥

यत्क्षत्रं यद्ब्राह्मणरहितं राज्यं, मन्त्रिपुरोहितादयो यत्र न ब्राह्मणास्तत्र कुतः समृद्धिः। एवं ब्राह्मणा अपि राजोपाश्रिताः कुतः संपत्ति लभन्ते। उभौ युक्तौ जगज्जयतः।

ब्रह्मक्षत्रशब्दौ ब्राह्मणक्षत्रियजातिवचनौ ॥ ३२२ ॥

दत्त्वा धनं तु विप्रेभ्यः सर्वदण्डसमुत्थितम् ॥
पुत्रे राज्यं समासाद्य कुर्वीत प्रायणं रणे ॥ ३२३ ॥

यदा तु जरसाऽभिभूयेत कृतकृत्यः स्यात्तदा वसुनि धने सति सर्वदण्डसमुद्भूतं ब्राह्मणेभ्यो दद्यात्। महापातकिधनस्य वरुणाय प्रतिपादनमुक्तम्। न राज्ञा तद्ग्रहीतव्यम्। अन्यत्तु दण्डधनं राज्ञा दृष्टादृष्टकार्यार्थवादाद्बहुधनमस्ति प्रयाणकालश्च, तदा सर्वस्यायं विनियोगः।

अन्ये तु दण्डग्रहणं करशुल्कादीनामपि प्रदर्शनार्थं व्याचक्षते। तथा सति सर्वस्वं दद्यादित्युक्तं भवति। वाहनायुधभूमिपुरुषवर्जं सर्वं दातव्यम्।

एवं तु व्याख्याने पुत्रे राज्यं समासाद्य इति न घटते। न हि तस्याकोशस्य राजकरणसंभवः।

कुर्वीत प्रायणं रणे। आत्मत्यागे संग्रामं कुर्यात्। यदि कथंचिदन्त्यावस्थायां रणं नोपलभेत तदाग्न्युदकादिना शरीरं जह्यात्। फलातिशयसंपत्तिस्तु रणे समासं जनमारोपणम् ॥ ३२३ ॥

एवं चरन्सदा युक्तो राजधर्मेषु पार्थिवः ॥
हितेषु चैव लोकेभ्यः सर्वान्भृत्यान्नियोजयेत् ॥ ३२४ ॥

एवं चरन्विहरन्राजधर्मेषु यथाशास्त्रोपदिष्टेषु। सदा युक्तस्तत्परः। लोकेभ्यः स्वराष्ट्रीयेभ्यो हितेषु। सर्वान्भृत्यान्नियोजयेत् ॥ ३२४ ॥

एषोऽखिलः कर्मविधिरुक्तो राज्ञः सनातनः ॥
इमं कर्मविधिं विद्यात्क्रमशो वैश्यशूद्रयोः ॥ ३२५ ॥

आद्येनानेन कण्टकशुद्धिपर्यन्तो राजधर्म उपसंह्रियते। द्वितीयेन 'वैश्यशूद्रोपचारं' चेत्युक्तमनुस्मारयति ॥ ३२५ ॥

वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ॥
वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे ॥ ३२६ ॥

कृतसंस्कार उपनीतः कृतविवाहश्च। वार्तायां वक्ष्यमाणकालसमुदायो 'वार्ता'। तत्र नित्ययुक्तः स्यात्। यथा वार्हस्पत्ये वार्ता समुपदिष्टा ॥ ३२६ ॥

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ॥
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥ ३२७ ॥

पशुरक्षणं वैश्यस्य न केवलं जीविकायै, यावद्धर्मायापीति दर्शयत्यर्थवादेन।

"कथं पुनर्दृष्टे सत्यदृष्टमुक्तम्।"

प्रजापालनवन्नियमात्परिपालनीयं त्वयेति नियोगपरिदानम्। क्षत्रियस्य प्रजापालनेऽधिकारो निरूपितः। ब्राह्मणस्य प्रायश्चित्तोपदेशादिना जपहोमादिना च "आदित्याज्जायते वृष्टिः" इति सर्वाधिकारः।

दृष्टान्तार्थं चैतत्। तथैव धर्म एव वैश्यस्य पशुरक्षणादिः ॥ ३२७ ॥

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ॥
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन ॥ ३२८ ॥

"ननु को जीवितार्थं कामः यदुक्तं यद्यप्यदृष्टं तदा दृष्टाश्रितमेव। भोजने प्राङ्मुखतायामेव। तत्र कथंचिदिदमुच्यते न च वैश्यस्य कामः स्यादिति। न ह्यबुभुक्षमाणः प्रत्यवैति"।

सत्यमेवं 'कृष्टाविकृष्टं पाशुपाल्यमिति' ज्ञापयितुम्। कश्चिन्मन्यते सर्वाण्येतानि नियमार्थानि तुल्यफलानीति। तत्र तुल्यफलत्वे च पक्षेऽकामोऽपि स्यात्कर्मान्तरं कामयमानस्य। यदा त्वन्येभ्यो गुणवत्तरस्तदा तु तेनाजीवेन्न कर्मान्तरे प्रवृत्तिः। अत एव तदालंवनो जीवेत्॥ ३२८॥

मणिमुक्ताप्रवालानां लोहानां तांतवस्य च॥
गन्धानां च रसानां च विद्यादर्घवलाबलम्॥ ३२९॥

लोहशब्देन ताम्रायस्कांस्यान्याह।

अर्घवलावलं न्यूनताऽर्घस्य न्यूनताधिक्ये देशकालापेक्षे। कस्मिन्देश इदं महार्घम्। कस्मिन्वाऽपचितार्घम्। एवं कालेऽपि॥ ३२९॥

वीजानामुप्तिविच्च स्यात्क्षेत्रदोषगुणस्य च॥
मानयोगं च जानीयात्तुलायोगांश्च सर्वशः॥ ३३०॥

इदं वीजं विस्तृतमुप्यत इदं संहतमुप्यत इत्येनामुप्तिं विन्द्यात्। इदं वीजमस्मिन् क्षेत्रे प्ररोहतीदं न। इदं च वलवत्फलति। एवमादयो गुणदोषाः। द्रोणशूर्पाढकादयो मानविशेषास्तेषां योगा ये हस्तेन मीयन्ते॥ ३३०॥

सारासारं च भाण्डानां देशानां च गुणागुणान्॥
लाभालाभं च पण्यानां पशूनां परिवर्धनम्॥ ३३१॥

भाण्डशब्देन विक्रेयवस्त्राजिनान्युच्यन्ते। तत्र सारासारता, यत्कालान्तरे स्थितं च न नश्यति तत्'सारम्।' तदितरद'सारम्'।

अस्मिन्देशे व्रीहयो भूयांसोऽस्मिन्काले यवा अस्मिन्नीदृश आचार ईदृशो जानपदानां स्वभाव एवमादयो देशे गुणागुणाः।

अनेन च यवसेनेदृशेन च लवणेनास्मिन्काले प्रयुक्तेन पशवो वर्धन्त इति॥३३१॥

भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम्॥
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च॥ ३३२॥

भृत्या दासा प्रेष्यादयः गोपालाजपालमहामात्राद्याः। तेषां च कियती भृतिरिति विद्यात्।

मालवकमगधद्रविडादिदेशभाषाः एतद्देशा अस्मिन्नर्थे ईदृशमुच्चारयन्ति। इदं द्रव्यमेवं स्थाप्यत एवं संवर्तत एवमाव्रियतेऽनेन योज्यत इयता विक्रीयते॥ ३३२॥

धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ॥
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥ ३३३ ॥

बहु अन्नं दातव्यमित्यर्थः । अन्यथा राज्ञा दण्ड्यः । एवमर्थमत्रोच्यते महाधनस्य चैतत् ॥ ३३३ ॥

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ॥
शुश्रूषैव तु शूद्रस्य धर्मो नैश्रेयसः परम् ॥ ३३४ ॥

यशस्विनामिति साध्वाचारो लक्ष्यते ।
शुश्रूषा परिचर्यैव । तस्य धर्मः परं श्रेय आवहति ॥ ३३४ ॥

शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ॥
ब्राह्मणापाश्रयो नित्यमुत्कृष्टां जातिमश्नुते ॥ ३३५ ॥

शुचिः मृद्वारिशुद्ध्येन्द्रियसंयमनेन च । उत्कृष्टांन्त्रैवर्णिकान् शुश्रषुः । मृदुवाक् न तर्कादिशास्त्रगन्धितया परुषभाषी । उत्कृष्टां ब्राह्मणादिजातिमाप्नोतीत्यर्थः । स्पष्टमुक्तं प्रयोजनम् । पुनर्ब्राह्मणापाश्रयग्रहणात् अन्यानप्याश्रितस्यान्यशुश्रूषकस्यैतदविरोधेन धर्म एव ॥ ३३५ ॥

एषोऽनापदि वर्णानामुक्तः कर्मविधिः शुभः ॥
आपद्यपि हि यस्तेषां क्रमशस्तन्निबोधत ॥ ३३६ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां नवमोऽध्यायः ॥ ९ ॥

स्पष्टमुक्तं प्रयोजनं च ॥ ३३६ ॥

इति श्रीभट्टवीरस्वामिसूनोर्भट्टमेधातिथिकृतौ मनुभाष्ये नवमोऽध्यायः ॥

---

# अथ दशमोऽध्यायः १० ।

अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः ॥
प्रब्रूयाद्ब्राह्मणस्त्वेषां नेतराविति निश्चयः ॥ १ ॥

"वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति ग्रहणार्थं त्रैवर्णिकानां स्वाध्यायविधिरुक्तः। गृहीतस्य चाविस्मरणमप्युक्तं सर्वाश्रमिणाम्। 'स्वाध्याये नित्ययुक्तः स्या'त्तथा 'नित्यं शास्त्राण्यवेक्षेत'। शास्त्रं प्रमुख्यया वृत्त्यैव शासनाद्धि शास्त्रं प्रमाणान्तरानवगतविधिप्रतिपादनाच्च वेद एवेति। तदेव शास्त्रम्। अन्यत्र ग्रन्थसंदर्भसामान्याच्छास्त्रशब्दप्रयोगः। तथा नियतो वेदमभ्यसेत्। ब्रह्मोज्झता वेदनिंदेति। यस्तु ब्रह्मयज्ञः स एकेनापि सूक्तेन साम्नानुवाकेन खण्डेन कण्डिकया वैकयैव यावज्जीवमधीतया सिध्यति। न तेन ब्रह्मस्मरणमाक्षिप्यते। तदेवं निर्विषयत्वादस्य विधेरनुवादार्थतैव।

प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति क्षत्रियवैश्ययोः प्रवचनं निवर्तयितुम्।

"ननु च 'अध्यापनं ब्राह्मणस्य' इत्यादिना तयोस्तदप्राप्तमेव"।

नैष दोषः। वृत्तिकरणस्य श्रुतत्वात्तदर्थैव निवृत्तिः संभाव्यते। धर्मार्थं तु विद्यादानं तयोरप्यस्त्येवेत्याशङ्कां निवर्तयति।

अथास्ति सामान्येन निषेधः एवं तर्हि जातिलक्षणप्रसङ्गजननार्थं सिद्धमेवोच्यते। एवं च कृत्वाऽनुक्रमणीयः संबन्धो न हातव्योऽयमिति भविष्यति। "वैश्यशूद्रोपचारं च संकीर्णानां च संभव" इति।

कश्चिदाह। 'अध्यापनं' शब्दोच्चारणशिक्षणम्, 'प्रवचनं' तु तदर्थव्याख्यानमपि। अतो भिन्नत्वान्नाध्यापननिवृत्त्या तदर्थव्याख्याननिवृत्तिर्भवतीत्यतः पुनरुपदेशः।

"ननु च नात्र वेदशब्दोऽस्ति। कुतस्तत्कर्मता अध्ययनक्रियायाः। अथवा, लौकिकगद्यपद्यविषयमपीदमध्ययनमुच्यते"

उच्यते। तथा सत्यदृष्टार्थो विधिः स्यात्। अतश्चाधिकारकल्पना प्रसज्येत मूलकल्पना च स्यात्। यथा तु व्याख्यातं उपलब्धमूलैवेयं स्मृतिर्भवतीति नादृष्टमूलकल्पनाप्रसङ्गः।

द्विजातय इति सिद्धे त्रयो वर्णा इति पादपूरणम्। एवं स्वकर्मस्था इति ॥ १ ॥

सर्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान्यथाविधि ॥
प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवेत् ॥ २ ॥

'न चास्योपदिशेद्धर्मम्' इति न कश्चिद्धर्मोपदेशः शूद्रस्य कर्तव्य इत्युक्तम्। वृत्तिधर्मा उपदेष्टव्या इति तस्यापवादः।

वृत्तिः शरीरकुटुम्बस्थितिस्तदर्था उपायास्तान् विद्यात्।

प्रब्रूयात्सर्वेभ्य इतरेभ्यः इति। बहुवचनं शूद्रावरोधार्थम्।

स्वयं च तथा भवेद्यथोपदिष्टा वृत्तिनियमा अनुष्ठेया इत्यर्थः ॥ २ ॥

वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् ॥
संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः ॥ ३ ॥

"किं पुनः कारणं ब्राह्मण एव प्रकृतत्वेनाऽधिक्रियते, न पुनः क्षत्रियादयोऽपि"।

यत एतच्छेषतया प्ररोचनं पठति।

वैशेष्याद्विशिष्टत्वादित्यर्थः, गुणाधिक्यादिति यावत्।

तदिदानीमाधिक्यमाह। प्रकृतिश्रैष्ठ्यादुत्तमाङ्गोद्भवादिदमुक्तम्। 'प्रकृतिः' कारणम्।

नियमस्य च धारणान्मद्यपानप्रतिषेधादयमेव नियमोऽभिप्रेतः। स्नातकव्रतानि वा वैणवधारणादीनि ब्राह्मणस्यैव।

संस्कारस्य च विशेषो नियमोऽभिप्रेतः, स्नातकव्रतानि च 'विशेषो' हृदयङ्गमाभिरित्यादेरुपनयनादेर्वा बालस्यैव विधानात्। क्षत्रियवैश्ययोरत्वतीतशैशवयोरेकादशद्वादशयोः।

अतो हेतोर्वर्णानां ब्राह्मणः प्रभुः शासिता ॥ ३ ॥

के पुनरमी वर्णा नाम मनुष्यजातिवचनो वर्णशब्दो नेत्याह

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ॥
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ ४ ॥

चत्वारो वर्णा ब्राह्मणाद्याः शूद्रपर्यन्ताः । अन्ये तु वर्वरकैवर्तादयः संकीर्णयोनयो यथा वक्ष्यन्ते । तत्र चतुर्णां त्रयो द्विजातयः, उपनयनस्य तेषां विहितत्वात् । एकजातिः शूद्रो, न हि तस्योपनयनमस्ति । उपनयनविधौ ब्राह्मणादिवर्णविशेषसंयोगात् । "अष्टमे ब्राह्मणमुपनयीतैकादशे राजन्यं द्वादशे वैश्यम्" इति । न कस्मिंश्चित्काले शूद्रं पठन्ति ।

"ननु कालविशेषानुपादानादनियतकालं शूद्रोपनयनमस्तु ।"

भवेद्यद्यसंयुक्ता सामान्येनोपनयनस्योत्पत्तिः स्यात् । एताश्च वर्णकालविशेषयुक्ता निमित्तार्थाः स्तुतयः स्युः । न तु पृथगुत्पत्तिरस्यास्ति । तत्कस्य प्रमाणस्य सामर्थ्येनास्योपनयनमनियतकालं क्रियताम् ।

"यद्येवं किं तर्ह्यनेन चतुर्थ एकजातिरिति" ।

सत्यम् । आशङ्कामात्रनिवारणार्थम् । 'मन्त्रवर्जं तदुच्यत' इति अमन्त्रकस्यानियतकालस्य प्राप्तिराशङ्क्येत ।

"ननु च पाकयज्ञविधावेतद्वाक्यं तत्सन्निधौ श्रवणात्तत्र कृतार्थं नान्यत्र भवितुमर्हति" ।

अत एवाशङ्कामात्रमित्युक्तम् । परमार्थतस्तु व्यवहारनियमार्थपरः श्लोकः ॥ ४ ॥

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ॥
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥ ५ ॥

के पुनरमी ब्राह्मणादयो नाम । न ह्येषां परस्परो भेदः शक्योऽवसातुम् । व्यक्त्यधीनाधिगमा हि जातयो न च व्यक्तयः स्वावयवसन्निवेषविशेषावगमशून्याः शक्नुवन्ति तासां भेदमावेदयितुम् । न च ब्राह्मणक्षत्रियादीनां गवाश्वस्येव वाऽऽकारभेदोऽस्ति, येन रूपिसमवायाच्चाक्षुष्यः स्युः । नापि विलीनघृततैलगन्धरसादिभेदेन क्रियान्तरगोचराः । नापि शौचाचारपिङ्गलकेशत्वादिभिर्धर्मैः शक्यभेदावसानाः, तेषां सर्वत्र संकरोपलब्धे । व्यवहारश्च पुरुषाधीनो, विप्रलम्भभूयिष्ठत्वाच्च पुरुषाणां नान्ततो वस्तुसिद्धिः । इत्यतो जातिलक्षणमुच्यते ।

सर्ववर्णेष्वेतल्लक्षणं जातेर्यत्तुल्यासु समानजातीयासु संभूतासु पत्नीपूढासु जातास्त एव जात्या ज्ञेयाः। प्रायेण मातापित्रोर्या जातिः सैवापत्यस्योढायां जातस्य वेदितव्या। संबन्धिशब्दत्वात्पत्नीग्रहणास्याऽतो वोढा 'पिता' लभ्यते। तेन येनैवोढा तत एव यस्तस्यामेव जातस्तदा तज्जातीयो भवति।

अक्षतयोनिग्रहणं पुनर्विवाहसंस्कारेण पत्नीत्वमाशङ्कमानं निवर्तयति। सहोढकानीनमातॄणां च।

"ननु च नैवैतासां विवाहसंस्कारोऽस्ति, "पाणिग्रहणिका मन्त्राः कन्यासु" (८।२२६) इति वचनात्। यदपि "वोढुः सगर्भो भवति" (९।१७३) इति विवाहश्रवणेन शास्त्रीयसंस्कारप्रतिपत्तिः, प्राप्तिमात्रवचनत्वात्तस्य न विहितवचनीयं प्रत्यभिज्ञानमस्ति। तस्मात्स्वीकारमात्रे धातुर्वर्तते स्वीकर्तुरित्यर्थः। पित्रादीन् वंचयित्वा येनैव स्वीकृता तस्यैव सा भवति, ततः पुत्रश्चेति तस्यार्थः। पुनर्भूसंस्काराभावात्। "सा चेदक्षतयोनिः स्यात्" (९।१७६) इति पठ्यते। गतप्रत्यागतायामपि पुनःशब्दप्रत्यभिज्ञानाद्भर्तुरुक्ताः। न च ताभिः सहाभिः सहाधिकारोऽस्ति। यज्ञसंयोगेऽस्ति पत्नीशब्दः। अतो'ऽक्षतयोनि'शब्दोऽतिरिच्यते। अत्र पूर्वे पत्नीशब्दपर्यायेण नारीष्विति पठन्ति तदपि न किंचित्। केवले ह्यक्षतयोनिशब्दे त्वसंस्कृतास्वपि जातास्तज्जातीयाः स्युः। पत्नीशब्दपाठेन शास्त्रीयेण विधिना या संस्कृता भार्यात्वमापादिता सा गृह्यते। यास्तु कुमार्य एवोपगम्यन्ते भवन्ति ता 'अक्षतयोनयो' न तु 'पत्न्यः'। तस्मादक्षतयोनिशब्दस्य प्रयोजनं वाच्यम्"।

उच्यते। यत्तावदुक्तं 'न ताः 'पत्न्यो' यज्ञसंयोगाभावादिति' यदि विवाह्येरन् स एव यज्ञः स्यात्। तत्रापि पूषवरुणार्यम्णामस्त्येव यागः। समानार्थौ च यागयज्ञशब्दौ। तस्मात्स्युरेव पत्न्यः। अकन्यात्वादविवाह्यतयैव न पत्न्य इति युक्तम्।

अतश्चानर्थक्येऽक्षतयोनिशब्दस्य प्रयोजनमुच्यते। दृश्यते लक्षणयाऽसत्यपि यज्ञसंयोगे पत्नीशब्दः प्रयुज्यमानो लोके रजकस्य पत्नी। यथाऽन्यत्रावरुद्धासु स्त्रीषु गृहिणीशब्दः सोऽपि भार्यावचन एव केनचिद्धर्मसाम्येन तत्रापि प्रयुज्यते। यद्यपि सति मुख्ये लक्षणा न न्याय्या, तथापि मन्दधियां सुहृद्भूत्वा आशङ्कामात्रं निवर्तयति। किंनाम नाशङ्क्यते मूढमतिभिः।

आनुलोम्यग्रहणमुत्तरार्थम्।

येऽपि 'त एव त' इति पठन्ति तेषामपि स एवार्थस्तज्जातीया इति।

अत्रोच्यते। "किं प्रमाणमूलमेतत्स्मृतिकाराणां स्मरणम्। भ्रमकार्यरूपत्वान्न धर्माधर्मोपदेशतुल्यम्। प्रमाणान्तरञ्च नास्तीत्युक्तम्। स्मृत्यन्तरमूलत्वेऽन्धपरम्पराप्रसङ्गः प्रमाणश्लोके दर्शितः"।

उच्यते। वृद्धव्यवहार एव मूलं साधुत्वस्मृतिवत्।

ननु च सापराधाऽसावित्युक्तम्।

अत एव नियामिकाः स्मृतयः फलवत्यः। अभियुक्तस्मरणमन्यथेति न शक्यते वक्तुम्। शास्त्रस्थाः प्रसिद्धाः प्रमाणतराः। संभवति च तेषामनादिव्यवहारो मूलम्।

एतत्स्मृतिसंस्कृतानां वावगताभिजनजातीयानां प्रत्यक्षमप्युपपद्यत इति केषांचिद्दर्शनम्। एतत्स्मृतिविवेके प्रपञ्चितम्।

ननु च स्मृत्यन्तरे नायं विशेषोऽस्ति "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः॥" ( याज्ञ० १ । ९० ) इति। आद्येनार्धेन जातिर्लक्ष्यते। उत्तरेण हि ब्राह्मादिविवाहजातानां संतानवर्धनत्वम्। तत्र सवर्णेभ्यः सवर्णास्विति नात्र पत्नीशब्दोऽस्ति।

कथं नास्ति। यावता "विन्नास्वेष विधिः स्मृत" ( याज्ञ० १ । ९२ ) इति। मा वा भूत्। अविशेषस्मृतेर्विशेषस्मृतिर्बलीयसी। अदर्शनाद्दर्शनं बलीयः। यत एकेन विशेषो न दृष्टोऽपरेण दृष्ट इति संभवत्येतत्।

अतोऽभियुक्तस्मरणं संभवन्मूलतया प्रमाणम्।

"ननु चाव्याप्तेरलक्षणमेतत्। न हि सहोढकानीनपौनर्भवादीनामनेन ब्राह्मण्यं भवति। 'कुण्डगोलकयोः क्षेत्रजस्य च अनभिप्रेतमेव तत्तेषामिति' चेत् का तर्हि तेषां जातिः। कुण्डगोलकयोश्च असति ब्राह्मण्ये श्राद्धे प्राप्त्यभावादनर्थको निषेधः स्यात्। स्मृत्यन्तरविरोधश्च। "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" ( या० व० व्य० १३३ ) इति। किं च यदेव लक्षणं तदेव लक्ष्यम्। अनिर्ज्ञातं लक्ष्यं भवति। निर्ज्ञातं लक्षणम्। यथा को देवदत्त इति संशयेऽङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुः। इह तु यथा कश्चित् ब्रूयात्कः काक इत्युक्ते काकाज्जात इत्युत्तरं तादृगेव 'को ब्राह्मणो' यो ब्राह्मणाज्जात इति। जनकेऽपि हि ब्राह्मण्यमप्रसिद्धमेव।

न्यायविरोधश्च। सजातीयात्सजातीयायां जातः स लोके सजातीयो भवति। यथा गोर्गवि गौरश्वाद्वडवायामश्वः।

अत्रोच्यते। यत्तावदुक्तं का तेषां जातिरिति—किमन्यया जात्या। मनुष्यास्तावद्भवन्ति। पुरुषधर्मैश्चाक्रियंते अनुपात्तजातिविशेषैः। पुत्रत्वाच्छ्राद्धादिभिश्च। दाने च सर्वेषामधिकारः।

"ननु च विशेषस्योपदेशेन विना व्यवहारो न सिध्यति। सर्वसाधारणत्वान्मनुष्यजातेः"।

असदेतत्। सर्वस्यैव स्वसंज्ञाविशेषो विद्यते। प्रतिपुरुषं देवदत्तो यज्ञदत्त इति।

अथापि संबन्धव्यपदेशः कर्तव्य इति "कानीनः सहोढ" इत्येव व्यपदिश्यते। 'सोऽपि चातुर्वर्ण्ये सद्भावात्सामान्यरूप एवेति' चेद्देवदत्तस्य कानीन इत्यादि जनकेन व्यपदेशः करिष्यते। तस्मादसंबद्धमेतद्यदुच्यते व्यपदेशः कथमिति।

एवं तर्हि सर्व एव धर्माश्चातुर्वर्ण्यं प्रतिबोध्यन्ते "अन्तरप्रभवानां च" (मनु १। २)। तत्र बहुत्वं ब्राह्मणादिजातिचतुष्टयविषयम्। न चैतेषामप्येकजातिः। सर्वजातिष्वेतस्य लक्षणस्य प्रवृत्तेः। यथैव ब्राह्मणादूढायां ब्राह्मण्यां जातो ब्राह्मणः, एवं क्षत्रियादयोऽपि समजातायमातृपितृजाः। सर्वविशेषाभावे च कुतः सामान्यम्। न हि शिंशपादिसर्वविशेषाभावे वृक्षत्वसंभवः।

अन्तरप्रभवाश्चानुलोमप्रतिलोमाः। तत्रानुलोमा मातृजातीयाः। प्रतिलोमास्तु धर्महीना अन्यत्राहिंसादिभ्यः। ते च सर्वे स्वसंज्ञाभिर्विशेषतो निर्दिष्टाः। न चैषां नामापि तत्रास्ति।

"तत्र कतमे ते धर्मा यत्रामी अधिक्रियेरन्। क्व च तद्वचनं यदेतानधिकुर्वीत। न हि कश्चिज्जातिविशेषः स्त्रियो धर्मविधिरस्ति। सर्ववर्णानामन्तरभावानां चेति शास्त्रादधिकृतत्वाच्च"।

उच्यते। यत्तावदहिंसादिषु चातुर्वर्ण्यवचनं तन्नरमात्रोपलक्षणार्थमेव। सत्यपि प्रतिलोमाधिकारे मुख्यार्थवृत्तेः। प्रत्युत सहचारिजात्यन्तरपरत्वमेव लक्षयितुं क्षमं नान्तराऽवस्थातुमर्हति। तत्रैव च वक्ष्यामः। इदं चास्ति। "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" (मनु १०। ४१) इति। 'अपध्वंसो'ऽसंस्कारः। स चाष्टविधः। 'व्यभिचारेण वर्णानाम्' (मनु० १०। २४) इत्या-

दिनोक्तः। व्यभिचारः परस्त्रीषु गमनं सजातीयासु। अन्यद्वक्ष्यामः। तस्मादसत्यपि वर्णत्वे वाचनिक एव तेषामधिकारः।

क्षत्रियस्य तु मातृजातीयत्वमेव, लिङ्गदर्शनात्। पुत्रो द्व्यामुष्यायणस्य संविधानादितिकर्तव्यताविशेषः श्रुतः। अन्येष्वपि श्रौतेषु तस्य विधानान्तरं दृश्यते।

तस्मादेष ब्राह्मणादिजातीय एव समभागः स्वपितृव्येण, "तस्माद्धर्मेण तं भजेत्" इति। न च यथोक्ते विधौ तद्युक्तम्। तदा ह्ययं शूद्रधर्मा। धनस्य यज्ञार्थतायामुक्तायां कुतस्तस्य तावद्भागः।

कुण्डगोलकौ क्षेत्रजावेव। शिष्टसमाचारश्चैवमेव। पाण्डुधृतराष्ट्रविदुराः क्षेत्रजाः सन्तो मातृजातीयाः। अतो युक्तः श्राद्धे प्रतिषेधः। किं च पतितोऽपि तत्र प्रतिषिद्धः, यस्य सर्वधर्मबहिष्कृतत्वात्प्राप्त्याशङ्कैव नास्ति।

यत्तु सजातीयेष्वपि स्मृत्यन्तरं तदुक्तानुवादत्वाद्यथासंभवं व्याख्येयम्। कार्यपुत्रविषयतया वा।

यच्च निर्ज्ञातं लक्षणं भवति तत्किं ब्राह्मणार्थो नैव लोकप्रसिद्धः। यत्र ब्राह्मणादिशब्दः प्रयुज्यते तत्रापध्वंसनिवृत्त्यर्थं वचनम्। मातापित्रोरेतदेव जातिलक्षणम्। न चानवस्था, अनादित्वात्संसारस्य।

प्रस्तुतन्यायविरोधस्तु साक्षात् व्यवसायगम्यत्वे आसां जातीनां स्यात्। तास्तु स्मृतिलक्षणाः यथास्मरणं भवितुमर्हन्ति। यथा वा वसिष्ठादयः शब्दा अन्तरेणैवान्वयधर्ममनवच्छिन्नस्मृतिपारम्पर्यं कैश्च विदितार्थेषु प्रयुज्यन्ते, भवन्ति व्यवहारहेतवो वसिष्ठब्राह्मणा 'वासिष्ठाः' शृण्वंतीति। तद्वदेतद्द्रष्टव्यम्। यथा समाने ब्राह्मणत्वे केचिद्भृगवो वत्सा भारद्वाजा इत्यादिविशेषः स्मृत्येकप्रमाणः, तथैव समाने पुरुषत्वेऽमी ब्राह्मणा अमी क्षत्रिया इत्यादिरुपपन्नो व्यवहारः।

यैरपि लिङ्गदर्शनत्वेन जाबालश्रुतिरुक्ता "सत्यकामो जाबालो मातरमपृच्छत्किंगोत्रोऽहमस्मीति। सैवं प्रत्यब्रवीत्, वह्वहं चरन्ती परिचारिणी यौवने त्वामालभे नाहं तद्वेदेति", स एवमुपश्रुत्य हारिद्रुमतं गौतममियाय। तं होवाच ब्रह्मचर्यं भवतो विवत्स्यामि। स एवमुवाच। किंगोत्रस्त्वमसीति। स प्रत्युवाच। अपृच्छं मातरं सा माता प्रत्यब्रवीत् "यौवने त्वामि'त्यादि। गौतमो न चैतदब्राह्मणो

वक्तुमर्हति समिधं सोम्याहर उप त्वानेष्ये",—अस्यायमर्थः । बहुभिरहं यौवने पुंभिः संगताऽभूवं न जाने केन जातोऽसीति । गौतमस्तु सत्यवचनान्निश्चिकाय ब्राह्मणेनायं जातस्ततस्तमुपनिन्येऽतो मन्यामहे स्वैरिणीष्वप्यनूढासु समानजातीयाज्जातासु तज्जातीया भवन्ति" ।

तदेतन्न किंचित् । यतो यौवने त्वामालभे, यौवने किल न स्मृतिर्दृढीभवति उत्कलिकाबहुलत्वाद्यौवने चेतसः । किंच परिचारिणीपरिचारिकाहेतोः क्षुधापीडिता बहुविचरन्ती नैकस्मिंस्थाने, ततो मे न स्मृतिरस्ति भर्तुः किं गोत्रमिति ।

अतः स्थितिमेतत्समानजातीयोढायां जातास्तज्जातीया इति । गौतमस्यापि न ततो वचनाद्ब्राह्मणोऽयमित्यवगमः । प्रागेवासौ तं ब्राह्मण इति वेद । गोत्रं तु न वेद । गोत्रप्रश्नेन चरणप्रश्नो वेदितव्यः । तत्र उपनयनभेदोऽस्ति । न तु गोत्रभेदेनोपनयने प्रयोजनम् ।

ननु यथा केचिदाहुः "जातिप्रश्नोऽयमाभिजात्याद्गोत्र एव जातिमवगमिष्यामि, साक्षाज्जातिप्रश्ने हि मुखरता स्यात्" ॥ ५ ॥

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् ॥
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥ ६ ॥

अनन्तरास्वव्यवहितास्वानुलोम्येन य उत्पन्नाः पुत्रास्ते सदृशा ज्ञेयाः, न तु तज्जातीयाः । यथा ब्राह्मणात्क्षत्रियायां क्षत्रियाद्वैश्यायाम् । तेन सदृशाः, न तु त एव ।

अत्र हेतुः मातृदोषविगर्हितान् ।

तत्सदृशग्रहणान्मातृत उत्कृष्टान्पितृतो निकृष्टान् ।

द्विजैरिति बहुवचननिर्देशान्मातृतश्च ग्रहणादानुलोम्येष्वेतत्संभवति । प्रातिलोम्ये पितृतो ग्रहणेन मातृतः, पितुर्निकृष्टजातीयत्वात् ।

अत आनुलोम्यग्रहणं पूर्वश्लोके । यदुक्तमुत्तरार्थमिति तदिहानर्थकम् । अतः परेषु श्लोकेषूपदिश्यते ॥ ६ ॥

अनन्तरासु जातानां विधिरेष सनातनः ॥
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ॥ ७ ॥

आद्येनार्धश्लोकेनोक्तमर्थमनुवदति। द्वितीयेन वक्ष्यमाणसंक्षेपः। द्वयेकान्तरा द्वयन्तरा ब्राह्मणस्य शूद्रा। एकान्तरा वैश्या।

नातीवश्लोकः सप्रयोजनः ॥ ७॥

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते ॥
निषादः शूद्रकन्यायां यः पारशव उच्यते ॥ ८॥

एकान्तरा ब्राह्मणस्य वैश्या, तत्र जातोऽम्बष्ठः। स्मृत्यन्तरे ( गौ० ४। २० ) 'भृज्यकण्ठ' इत्युक्तः।

द्वयन्तरायां शूद्रकन्यायां निषादः पारशवश्च।

निषादशब्दः प्रतिलोमजातीयेऽपि वर्तते।

कन्याग्रहणं स्त्रीमात्रोपलक्षणार्थमिति व्याचक्षते, वैश्यस्त्रियामित्यर्थः। एवं सर्वत्र द्रष्टव्यम् ॥ ८॥

क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ॥
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥ ९॥

आचारविहारौ कायचेष्टावाग्व्यापारश्च। तावस्य क्रूरौ भवतः।

स्वभावानुवादोऽयम्। वपुःशब्दः स्वभाववचन एव। उभयजातिसंभूतत्वादुभयधर्मा भवति ॥ ९॥

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ॥
वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः ॥ १०॥

अत्र त्रिपादी अनुवाद एव। चतुर्थस्तु पादोऽपसदाभिधानार्थः।

एते त्रैवर्णिकानामेकान्तरद्वयन्तरस्त्रीजाता अपसदा वेदितव्याः। अपसदा पुत्रार्थफलादवसन्नाः समानजातीयपुत्रापेक्षाया निन्द्यन्ते ॥ १०॥

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः ॥
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥ ११॥

आनुलोम्ये पूर्वो विधिः। प्रातिलोम्ये न स्वयमुच्यते।

कन्याग्रहणमुक्तार्थम्।

वैश्यान्मागधवैदेहौ यथा संख्येन। राजस्त्रियां मागधः ब्राह्मण्यां वैदेहः ॥ ११॥

शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ॥
वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः ॥ १२ ॥

अत्रापि यथासंख्यमेव ।

वैश्यराजन्य इति निर्देशे जातिपरेऽपि सामर्थ्यात्स्त्रीलिङ्गप्रतिपत्तिः । 'मृगक्षीरं', 'कुक्कुटाण्ड' इति यथा । वृत्तानुरोधात्स्त्रीप्रत्ययो न कृतः ॥ १२ ॥

एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथास्मृतौ ॥
क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि ॥ १३ ॥

एकान्तरे वर्णे ब्राह्मणाद्वैश्यायामम्बष्ठः, क्षत्रियाच्छूद्रायामुग्रः एतावानुलोम्येन; एवमेकान्तरे प्रातिलोम्येन शूद्रात्क्षत्रियायां क्षत्ता, वैश्याद्ब्राह्मण्यां वैदेहः; तौ तुल्यौ, भवनादिक्रियासु, न तु यजनादिषु ।

चण्डाल एकः प्रतिलोमोऽस्पृश्यः । यथा च दिवाकीर्तिश्लोके तत्स्पर्श एवं स्नानं नान्येषु प्रतिलोमेषु । सूतमागधायोगवानामनन्तरजातानां चण्डालवद्दण्डापूपिकायां सिद्धः स्पर्शादिसम्बन्धः ॥ १३ ॥

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ॥
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥ १४ ॥

यथा ब्राह्मणात्क्षत्रियायां वैश्यायां च एवं क्षत्रियादुभयोस्ताननन्तरनाम्नः प्रचक्षते । अनन्तराऽनुलोमा जातिः समाना तेषां, मातृजातीया इत्यर्थः ।

अनन्तरग्रहणमविवक्षितमत एवाह मातृदोषादिति । पितृजात्युत्कर्षेण नो दुष्यन्ते । अतश्च सत्यपि वर्णसंकरत्वे वचनान्मातृजात्याः स्मृताः । संस्कारास्तेषु कर्तव्या इत्युक्तं भवति । न ह्येतद्वचनमन्तरेण क्षत्रियादिसंस्कारास्तेषु लभ्यन्ते । अश्वतरवज्जात्यन्तरत्वात् । वचनेन तु मातृजातावुक्तायामदोषः ॥ १४ ॥

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ॥
आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥ १५ ॥

आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् ॥
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥ १६ ॥

वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु ॥
प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः ॥ १७ ॥
जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः ॥
शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः ॥ १८ ॥

अयं 'निषादो'ऽस्मिँश्लोके न शूद्रायां ब्राह्मणाज्जातो यः प्रागुक्तः। किंतर्हि। यः प्रतिलोमो वक्ष्यमाणः, प्रतिलोमाधिकारात्प्रतिलोमा हि पुल्कसाजातिः प्रसिद्धा।

एवं शूद्रान्निषाद्यां कुक्कुटकः ॥ १५—१८ ॥

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ॥
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥ १९ ॥

अनुलोमाः स्त्रियः, प्रतिलोमाः पुमांसः, तयोः संभवे श्वपाकवेणौ प्रतिलोमजातीयौ ॥ १९ ॥

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ॥
तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ॥ २० ॥

नैते प्रतिलोमवर्णसंकराः स्युः। अतोऽस्मिन्विधावुच्यन्ते।

द्विजातयो यान्सवर्णासु जनयन्ति तेऽवेदव्रता भवन्ति, अब्रह्मचारिणः सावित्रीपरिभ्रष्टा उपनयनहीनाश्च तदा व्रात्या इति तान्निर्दिशेत्।

अव्रताञ्जनयन्तीति नायं संबन्धः। न हि व्रतिनोऽव्रता वा जन्यन्ते, जातानामुपनयनसंस्कारविधानात्। उक्तव्रात्यलक्षणानुवादः, उत्तरविवक्षया।

यस्त्वयं पाठो'ऽव्रतायाञ्जनयन्ति तान्व्रात्यान्विनिर्दिशेत्' तदसत्, उक्तव्रात्यलक्षणविरोधात् ॥ २० ॥

व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ॥
आवन्त्यवाटधानौ च पुष्पधः शैख एव च ॥ २१ ॥

स्ववर्णास्वपि पूर्वश्लोकादनुवर्त्यते।

इह स्त्रीजातेरनुपादानादवश्यंभावाच्च तदपेक्षायाः स्मृत्यन्तरे वैश्यायां ब्राह्मणाज्जातो भूर्ज्जकण्टकः स्मर्यते। अतो विशिनष्टि पापात्मेति। स ह्यनुलोमत्वान्न

पापात्मा । अयं चासंस्कृतात्मनो व्रात्याज्जातोऽनधिकारित्वाद्युक्तं यन्निन्द्यते ।

न च पर्यायशब्दा देशभेदेन प्रसिद्धप्रयोगभेदाः ।

पूर्वैस्तु व्याख्यातं तत्पुत्रपौत्राणामेता आख्याः । भृज्जकण्टको ब्राह्मण्यां जातः । आवन्त्यश्चावन्त्याम् । तस्यामेव वाटधानः । वाटधानात्पुष्पशेखरः । एवमुत्तरेष्वपि ॥ २१ ॥

झल्लो मल्लश्च राजन्याद्व्रात्याल्लिच्छिविरेव च ॥
नटश्च करणश्चैव खसो द्रविड एव च ॥ २२ ॥
वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च ॥
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ २३ ॥

एताभिः संज्ञाभिः प्रसिद्धा एवंजातीया वेदितव्याः ॥ २२—२३ ॥

व्यभिचारेण वर्णानामवेद्यावेदनेन च ॥
स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः ॥ २४ ॥

व्यभिचारः परस्त्रीगमनम् । तत्समानजातीयासु परकीयास्वनुलोमप्रतिलोमासूढास्वनूढासु च स्वयम् ।

अवेद्यावेदनमविवाह्याविवाहः । 'अविवाह्याः' स्वसृनप्त्रादयस्तदयोन्यः ।

स्वकर्मणां त्याग उपनयनवेदग्रहणादीनाम् ।

क्षात्रवृत्त्यादयोऽपि पुत्रपौत्रान्वयिन एवमुक्ताः इति केचित् ॥ २४ ॥

संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः ॥
अन्योन्यव्यतिषक्ताश्च तान्प्रवक्ष्याम्यशेषतः २५ ॥

व्यतिषङ्गः संबन्धः । इतरेतरमनुलोमानामनुलोमैः प्रतिलोमैश्चैवं प्रतिलोमानामन्यैः प्रतिलोमैरनुलोमैश्च ।

वक्ष्यमाणसंज्ञार्थं वचनम् ॥ ॥ २५ ॥

सूतो वैदेहकश्चैव चण्डालश्च नराधमः ॥
मागधः क्षत्तृजातिश्च तथाऽयोगव एव च ॥ २६ ॥

उक्तलक्षणा एते प्रातिलोमा उत्तरार्थं पुनरुपन्यस्यन्ते ॥ २६ ॥

एते षट्सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु ॥
मातृजात्याः प्रसूयन्ते प्रवरासु च योनिषु ॥ २७ ॥

एते सूतादयः प्रतिलोमाः स्वयोनिषु सदृशान् जनयन्ति, तज्जातीयानित्यर्थः । तद्यथा । सूतः सूतायां सूतमेव जनयति । एवं चण्डालः चण्डालायाम् ।

ये च मातृजात्याः प्रसूयन्तेऽनुलोमा मातृजातीया ये पूर्वमुक्ता 'स्त्रीष्वनन्तरजातासु' (१० । १४) इति, तेऽपि स्वयोनिषु सदृशानेव जनयन्ति । यथाऽम्बष्ठोऽम्बष्ठायाम् ।

तथा वैश्यायामात्मनो हीना वैश्याञ्जनयन्ति । मातृजातित्वस्योक्तत्वात् ।

अन्ये पुनः पठन्ति 'मातृजातौ प्रसूयन्ते' । अर्थश्चायम् । स्वयोनिषु आम्बष्ठादौ मातृजातौ च वैश्यायां सदृशानेव जनयन्ति । यद्यपि शुद्धवैश्येभ्य उत्कृष्टा अम्बष्ठादयस्तथापि साम्यमुच्यते, वैश्यधर्म उभयेषामधिकारात् ।

अनुलोमग्रहणं मातृजातिपदसामर्थ्याल्लभ्यते सत्यपि प्रकृतिप्रतिलोमप्रत्यवमर्शकत्वं एत इति ।

प्रवरासु च योनिषु प्रतिलोमा गच्छन्तो जनयन्ति हीनतरमित्येवं ज्ञेयं, वक्ष्यमाणपर्यालोचनया ।

न हि आयोगवादिभिः स्वजातीयासु जनिता अयोगवादिव्यपदेशं लभन्ते । सदृशग्रहणं तु प्रातिलोम्यसामान्येन । हीनतरत्वं चावान्तरविशेषमनपेक्ष्य प्रयुक्तम् । तेनायमत्र वाक्यार्थः । 'प्रतिलोमेभ्यः समानजातीयासूत्कृष्टजातीयासु च प्रतिलोमा एव भवन्ति' ॥ २७ ॥

यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते ॥
आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमः ॥ २८ ॥

अस्य ब्राह्मणस्य त्रयाणां वर्णानामात्मा जायते । द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्द्विजत्वं जायते । तथा स्वयोनौ । एवं त्रयाणां वर्णानां ब्राह्मणो द्विजान् जनयति ।

एवं बाह्येष्वपि प्रातिलोम्येन वैश्यक्षत्रियाभ्यां क्षत्रियब्राह्मणयोरात्मा द्विजत्वं भवति । सति च द्विजत्वे उपनयनं कर्तव्यम् । वक्ष्यन्ति च 'एते षट्द्विजधर्माण' इति । एतावांस्तु विशेषः । अनुलोमाज्जाता मातृजातीया । स्तुतिमात्रमिदं वक्ष्यामः ॥ २८ ॥

ते चापि वाह्यान्सुबहूंस्ततोऽप्यधिकदूषितान् ॥
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ २९ ॥

ते चाप्ययोगवादयः षट् वाह्यान् सुबहून् परस्परदारेषु जनयन्ति। तद्यथाऽऽयोगवः क्षत्तृजायायां क्षत्ताऽऽयोगव्याम्। परस्परमात्मापेक्षया गर्हितान् जनयन्ति। तद्यथाऽऽयोगवः क्षत्तृजायायामात्मनो वाह्यतरं जनयति। ततोऽपि बाह्यतरं चण्डाल्याम्। एवं सर्वत्र ॥ २९ ॥

यथैव शूद्रो ब्राह्मण्यां वाह्यं जन्तुं प्रसूयते ॥
तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ ३० ॥

एवं परस्परगमने स्त्रीप्रतिलोमानां पूर्वेण वाह्यतरोत्पत्तिर्वर्णिता। इदानीं चातुर्वर्ण्यं कथ्यते।

सूयतिर्जनिनात्यन्तसमानार्थोऽत्र प्रकरणे प्रयुक्तः। प्रसूयते जनयतीत्यर्थः। तदुत्तरश्लोकेन निर्दिश्यते ॥ ३० ॥

प्रतिकूलं वर्त्तमाना बाह्या बाह्यतरान्पुनः ॥
हीनाहीनान्प्रसूयन्ते वर्णान्पञ्चदशैव तु ॥ ३१ ॥

एकैकस्य तु वर्णस्य संकीर्णयोनयो भवन्ति। कस्यचिदनुलोमाः, कस्यचित्प्रतिलोमाः; कस्यचिदनुलोमप्रतिलोमाः। ब्राह्मणस्यानुलोमाः, शूद्रस्य प्रतिलोमा एव। क्षत्रियवैश्ययोरनुलोमाः प्रतिलोमाः। क्षत्रियस्य द्वावनुलोमौ, एकः प्रतिलोमः। वैश्यस्यैकोऽनुलोमो द्वौ प्रतिलोमौ। एवमेते द्वादशानुलोमप्रतिलोमाः। एतेषामेकैकस्य चतुर्षु गच्छतश्चत्वारो भेदा भवन्ति। ते च केचिद्धीनाः केचिदहीनाः। बाह्यतरास्तु सर्व एव बाह्यतरत्वं मातापितृजातेर्विप्रकर्षः, कर्मभ्यो हीनत्वात्। तदेतदुदाहरणैः स्फुटीक्रियते।

प्रतिलोमांस्तावद्गृहीत्वा वक्ष्यामः।

अयोगवो वैश्यायां शूद्राज्जातः शूद्रायां वैश्यायां क्षत्रियायां ब्राह्मण्यां चतुरो जनयति। सोऽयमात्मना सह पंचधाऽऽयोगवः। एवं क्षत्तृचण्डालावपि। एवं शूद्रास्त्रयः पंचकाः पंचदशधा भवन्ति।

एवं वैश्यप्रभवौ द्वौ प्रतिलोमौ क्षत्रियायां मागधो ब्राह्मण्यां वैदेहकः। शूद्रायामनुलोमः। तत्र यः शूद्रायां जातः स यदा चातुर्वर्ण्यं जनयति तदैष एव प्रकारः।

स यदा शूद्रां गच्छति तदा हीनतरो वर्णो जायते तदपेक्षया । एवं वैश्यां गच्छन्-हीनतरं जनयति ।

एवं क्षत्रियायां ब्राह्मण्यां च केवलशूद्राज्जाता उत्कृष्टा । एवमित्यपेक्षावशा-द्धीनांश्चाहीनांश्च । एवं क्षत्रिये ब्राह्मणे च द्रष्टव्यम् । ब्राह्मणस्य त्वयं विशेषः । अनुलोमा एव तस्य भवन्ति ।

एवं चतुर्वर्णानां प्रत्येकं पंचदशधा भेदाः षष्टिः संपद्यन्तो मुख्याश्चत्वारो वर्णाः सा चतुःषष्टिर्भवति । परस्परसंपर्कात्तेषामन्येऽनन्तभेदा भवन्ति । तदुक्तम् । "ते चापि बाह्यान्सुबहून्" इति ( १०।२९ ) ।

प्रतिकूलं शास्त्रव्यतिक्रमेण ।

वर्तमाना मिथुनीभवन्तः ।

हीनाहीनानित्येकं पदम् । अथवा हीनाः सन्तोऽहीनान्प्रसूयन्ते जनयन्तीत्यर्थः ।

वर्णान्पंचदशैवेति 'नास्ति तु पंचम' ( १०।४ ) इति पंचमस्य वर्णाभावात्पंचदशसु वर्णत्वमुपचाराद्द्रष्टव्यम् ॥ ३१ ॥

**प्रसाधनोपचारज्ञमदासं दास्यजीवनम् ॥**
**सैरन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥ ३२ ॥**

प्रसाधनं मण्डनम् । उपचारोऽनुवृत्तिः । केशरचनाकुंकुमचन्दनादिनाऽनु-लेपनविच्छित्तिः पाणिपादविमर्दनं प्राप्तिलोभात्कर्मकारिक्षिप्रकारिकार्याणामवसर-मित्यादिविधिज्ञ एवमुच्यते ।

अदासं दास्यजीवनम् । वत्सरभृत्या षण्मासभृत्या च कंचन सेवते ।

अथवैतद्विधिज्ञतया सर्वोपवस्थापको भवति जीवनाय । मता (?)

वागुरावृत्तिम् । द्वितीयोऽयं वृत्त्युपायः । 'वागुरा' अरण्यपशुहिंसनम् । तच्चार्याणां देवपित्र्यर्थं क्षुधार्थं च, न तु व्याधवत्पशून्हत्वा मांसविक्रयेण जीवनम् । राजनियोगाद्बहुप्राणिवधो जीविकार्थः ।

सैरन्ध्रनामानं सूते उत्पादयति । दस्युर्नाम वक्ष्यमाणः ।

अयोगवे जातिविशेषे । सामर्थ्यात्स्त्रीत्वलाभः ॥ ३२ ॥

**मैत्रेयकं तु वैदेहो माधूकं सम्प्रसूयते ॥**
**न्प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥ ३३ ॥**

मैत्रेयकं नाम्ना वर्णमायोगव्याम्। संप्रसूयते जनयति। वैदेहनामा ब्राह्मण्यां वैश्याज्जातो यः।

पाठान्तरं मैरेयकमिति।

माधूकम्। उपमापदमेतत् मधूककुसुमतुल्यम्, मधुरभाषित्वात्। अथवा मधुकायतीति 'अन्येष्वपि दृश्यते' ( पा० ३।२।१०१ ) इति डः। अन्येषामपीति दीर्घः। स्वार्थिकेन चादिवृद्धिस्तस्य वृत्तिः।

नॄन् मनुष्यान् प्रशंसन्ति अजस्रं सर्वदा वन्दीति यः कथ्यते।

अरुणोदये प्रबोधकाले घण्टां ताडयत्याहन्ति, राज्ञामीश्वराणां चान्येषां प्रबोधाय।

आयोगव्यामेवानुजनयति, प्रकृतत्वात्॥ ३३॥

निषादो मार्गवं सूते दासं नौकर्मजीविनम्॥
कैवर्त्तमिति यं प्राहुरार्यावर्तनिवासिनः॥ ३४॥

प्रतिलोमप्रकरणात् न यः शूद्रायां ब्राह्मणाज्जातो निषाद पूर्वमुक्तः स इह गृह्यते, अपि तु दस्युवत्प्रतिलोम एव।

मार्गवं नाम प्रतिलोमं सूते, आयोगव्यामेव।

यस्येमे अपरे नामनी 'दासः' कैवर्त इति।

आर्यावर्तः प्रसिद्धः।

तस्य वृत्तिर्नौकर्मणा नौवाहनेन जीवति॥ ३४॥

येऽनन्तर उपदिष्टास्त्रयो मार्गवपर्यन्तास्तेषां मातृजातिर्नोक्ता, तत्प्रतिपादनार्थोऽयं श्लोकः।

मृतवस्त्रभृत्स्वनार्यासु गर्हितान्नाशनासु च
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः॥ ३५॥

आयोगवीषु स्त्रीष्वेते जायन्ते।

तासां च विशेषणम्। मृतवस्त्रभृत्सु शववासांसि परिदधतीष्वित्यर्थः। अनार्या अस्पृश्याः। गर्हितमुच्छिष्टं मांसादि चान्नमश्नन्ति॥ ३५॥

कारावरो निषादात्तु चर्मकारं प्रसूयते॥
वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ॥ ३६॥

उत्तरत्र वैदेह्यामेव जायन्त इत्येवकारकरणाल्लिङ्गादिहापि वैदेह्यां निषादात्कारावरो नाम जायत इति संबंधप्रतीतिः।

वैदेहिकादुद्वावन्ध्रमेदौ। कस्यां स्त्रियाम्। कारावरीनिषाद्योः। तयोरत्र सन्निधानात्। वैदेह्यां च वैदेह्याद्भिन्नवर्णसंभवादेवं व्याख्यायेते। स्त्रीभेदेन चैकस्माद्वर्णादेते द्वे जाती।

बहिर्ग्रामं प्रतिश्रयो निवासो ययोः॥ ३६॥

चाण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्॥
आहिण्डिको निषादेन वैदेह्यामेव जायते॥ ३७॥

चाण्डालात् वैदेह्यां पाण्डुसोपाको नाम वर्णो जायते।

तस्य वृत्तिस्त्वक्सारव्यवहारवान्। 'त्वक्सारो' वेणुः तद्व्यवहारेण वंशक्रयविक्रयादिना कटादिकरणेन वा जीवति।

निषादात्तस्यामेवाहिण्डकस्तस्य वृत्तिरेषैव, अन्वेष्या वा॥ ३७॥

चाण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्॥
पुल्कस्यां जायते पापः सदा सज्जनगर्हितः॥ ३८॥

व्यसनं दुःखं तस्य मूलं मारणं तद्वृत्तिर्वध्यमारणं राजादेशादनाथशववहनं तद्वस्त्रादिग्रहणं प्रेतपिण्डभोजनमित्येवमादिवृत्तिः।

पुल्कस्यां चाण्डालेन जायते।

अथवा मूलादिवृक्षादीनां तद्व्यसनं विभागकरणं सा वृत्तिर्व्यवच्छिन्नेषु वृक्षेषु यदनुवृत्तं मूलं तदुद्धृत्य विक्रयादिना जीवति॥ ३८॥

निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम्॥
श्मशानगोचरं सूते बाह्यानामपि गर्हितम्॥ ३९॥

अन्त्यावसायिनं चण्डालमेव वदन्ति।

अथवा निषाद्यां चण्डालादुत्पन्नस्यान्त्यावसायीति नामधेयम्।

श्मशानगोचरं शवदहनादिवृत्तिः। अतश्चाण्डालादपि कुत्सिततरो विज्ञेयः।

तदेतदानन्त्यात् संकराणां प्रदर्शनमात्रं कृतम्॥ ३९॥

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ॥
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ ४० ॥

यान्येतान्यनन्तरमुद्दिष्टानि त्वक्सारव्यवहारादीनि कर्माणि तैः अप्रसिद्धाः सोपाकादिनामतया तज्जातीया वेदितव्याः।

पित्रा मात्रा च विभागेन दर्शिताः।

प्रच्छन्ना वा प्रकाशा वा तज्जातीया वेदितव्याः। आयोगव्यां मात्रा विभागो निषादाद्वैदेहिकादान्ध्रमेदाविति पित्रा दर्शितो विभागः ॥ ४० ॥

स्वजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ॥
शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥ ४१ ॥

स्वजातीयास्त्रैवर्णिकेभ्यः समानजातीयासु जातास्ते द्विजधर्माण इत्येतत्सिद्धमेवानूद्यते। अनन्तरजानां तुल्यताभिधानं तद्धर्मप्राप्त्यर्थम्। अनन्तरजा अनुलोमाः। ब्राह्मणात् क्षत्रियवैश्ययोः क्षत्रियाद्वैश्यायां जाताः तेऽपि द्विजधर्माण उपनेया इत्यर्थः। उपनीताश्च द्विजातिधर्मैः सर्वैरधिक्रियन्ते।

"ननु च 'ताननन्तरनाम्न' इति मातृजातीयत्वमेषामुक्तमेव। ततश्च तज्जात्या समेषु धर्मेषु सिद्ध एवाधिकारः"।

सत्यम्। अनन्तरनाम्न इति नामग्रहणा'त्संज्ञैवैषां न तु जात्यतिदेश' इति कस्यचिदाशङ्का स्यादतः स्पष्टार्थं 'षट् सुता द्विजधर्मिण' इति वचनारम्भः।

ये पुनरपध्वंसजाः संकरजास्ते शूद्राणां सधर्माणः समानाचारास्तद्धर्मैरधिक्रियन्त इत्यर्थः।

प्रतिलोमानां तु विशेषो वक्ष्यते।

अनन्तरग्रहणमनुलोमोपलक्षणार्थमेव। तेन व्यवहितोऽपि ब्राह्मणाद्वैश्यायां जातो गृह्यते।

षट्संख्यातिरिक्तत्वान्न शूद्रायां पारशवः ॥ ४१ ॥

तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ॥
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥ ४२ ॥

तएतेऽनन्तरजाः तपःसामर्थ्येन बीजसामर्थ्येन युगे युगे जन्मनि जन्मनि उत्कर्ष-

मपकर्षं च गच्छन्ति। तद्वक्ष्यामः 'शूद्रायां ब्राह्मणाज्जात' ( १० । ६४ ) इत्यत्र ॥ ४२ ॥

यदुक्तं 'स्वकर्मणां त्यागेनेति' तस्यैवायं प्रपञ्चः ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ॥

वृषलत्वं गता लोके ब्राह्मणातिक्रमेण च ॥ ४३ ॥

क्रियालोपो यत्र संस्कार्यतया संबध्यते, यथोपनयनादिषु; यत्र वा कर्तृतया, यथा नित्याग्निहोत्रसन्ध्योपासनादिषु। तासां लोप उभयासामप्यननुष्ठानम्। अतश्च न केवलमुपनयनसंस्काराभावेन जातिभ्रंशः, अपि तूपनीतानां विहितक्रियात्यागेनापि। तथा चाह शनकैरिति। पुत्रपौत्रादिसंततेः प्रभृतिशूद्रत्वं, न तु जातस्यैव। उपनयनाभावे तु तस्यैव व्यपदेशान्तरं प्रवर्तते। यद्यपि सा जातिर्न निवर्तते तत्पुत्रपौत्राणां भृज्जकण्टकादिजात्यन्तरमेव व्यपदेशहेतुकमिति ब्राह्मणातिक्रमेण ब्राह्मणविधिविहितातिक्रमेणेत्यर्थः। अथवा शास्त्रार्थसंशये प्रायश्चित्ते वा परिषद्गमनाभावः ॥ ४३ ॥

पुण्ड्रकाश्चोड्रद्रविडाः काम्बोजा यवनाः शकाः ॥

पारदापह्लवाश्चीनाः किराता दरदाः खशाः ॥ ४४ ॥

पुण्ड्रकादयः शब्दाः परमार्थतो जनपदशब्दाः, इह तु 'क्षत्रियेषु मुख्यास्तत्संबन्धत्वाज्जनपदेषु वर्तन्त' इत्येतद्दर्शनमाश्रितम। यथालुग्विधौ 'तस्य निवासो', 'जनपदे लुगिति' न तु यथा 'लुग्योगात्प्रख्यानादिति'।

नैतेषु देशेषु वाहुल्येन चातुर्वर्ण्यमस्तीत्येतदालम्बनं वृषलत्ववचनम्।

यदि वा पुण्ड्रादयः शब्दाः कथंचिद्देशसंबन्धेन विना दृश्यन्ते, तदैतज्जातीया वेदितव्याः। 'महाभारतादौ क्षत्रिया वर्ण्यन्ते तथाऽद्यत्वेऽप्येते क्षत्रिया एवेति' कस्यचित् भ्रान्तिः स्यादत एवमुक्त'मेते वृषला' इति ।

ये चैते दिगन्तवासिनः किरातवेनदरदादयस्तेषामप्राप्तरूपं वेदेनानूद्यते 'न जनमियान्नांतमियादिति' ( बृह० १ । ३ । १० ) ॥ ४४ ॥

मुखबाहूरुपज्जानां या लोके जातयो बहिः ॥

म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥ ४५ ॥

असदविद्यमानार्थासाधुशब्दान्वया वाक् म्लेच्छोच्यते। यथा शवराणां किरातानामन्येषां वान्त्यानाम ।

आर्यवाच आर्यावर्तनिवासिनः। ते चातुर्वर्ण्यादन्यजातीयत्वेन प्रसिद्धास्तदा दस्यव उच्यन्ते । एतदुक्तं भवति । न देशनिवासेन म्लेच्छवाक् संकरत्वे कारणमपि तु यथोक्तवर्वरादिशब्दप्रसिद्धिर्मुखादिजानां बहिष्क्रियते ब्राह्मणादिशब्दैरप्रसिद्धै-रित्यर्थः। ते सर्वे दस्यव उच्यन्ते ॥ ४५ ॥

ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ॥
ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ॥ ४६ ॥

अपसदा अनुलोमाः प्रतिलोमाः। अपध्वंसजा गोवलीवर्दवद्भेदः। द्विजाना-मुपयोगिभिः प्रेष्यकर्मभिर्वर्तयेयुः आत्मानम् ।

निन्दितैः प्रेष्यकार्यत्वान्निन्दितानि ॥ ४६ ॥

तथा च वक्ष्यते

सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम् ॥
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥ ४७ ॥

स्त्रीकार्यमन्तःपुररक्षाकारित्वम्। वणिक्पथः स्थलपथवारिपथादिः प्रसिद्धः ॥४७॥

मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ॥
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥ ४८ ॥

त्वष्टिर्दारुतक्षणं तक्षकर्म ॥ ४८ ॥

क्षत्त्रुग्रपुक्कसानां तु विलौको वधबन्धनम् ॥
धिग्वणानां चर्मकार्यं वेणानां भाण्डवादनम् ॥ ४९ ॥

विलौकसोऽहिनकुलगर्गरादयः। तेषां वधबन्धनं क्षत्रादीनां जीविका। चर्मकार्यं कवचादिसीवनमुपानद्ग्रथनमित्येवमादि। भांडवादनं मुरजार्धमुरजादी-नाम् ॥ ४९ ॥

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ॥
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥ ५० ॥

बहिर्ग्रामनिवासिनः पर्वतलक्षणप्रदेशे निवसेयुः। विज्ञाता जातिच्चिह्नं विदुषाम्। यद्यस्य कर्म विहितं स तेनैव जीवेत्। उत्कृष्टं कर्मसंकरं कर्तुं न लभते ॥ ५० ॥

चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः ॥
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् ॥ ५१ ॥

प्रतिश्रयो निवासस्तेषां ग्रामान्निष्क्रान्तः स्यात्। अपपात्राश्चिरवसानीयास्तैर्येषु पात्रेषु भुक्तं तानि न संस्कार्याणि, त्यक्तव्यानि। सौवर्णराजताभ्यामन्यानि। तयोः शुद्धिविशेषा उक्ताः।

अथवाऽवपात्राः। तदीयेषु च सक्तेषु पात्रेषु सक्तुभक्तादि न दातव्यम्। भूमिष्ठे पात्रेऽन्यहस्तस्थे वा दत्वा तत्पात्रं भूमौ स्थितं ते गृह्णीयुः।

भिन्नं वा पात्रमवपात्रं यथा वक्ष्यति "भिन्नभाण्डे च भोजनम्" इत्यादि।

धनमेषां श्वगर्दभम्। गवाश्वादि सुवर्णरजतादि न धनत्वेन गृह्णीयुः ॥ ५१ ॥

वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम् ॥
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥

सर्वकालं परिव्रज्या, नैकत्रस्थाने वसेयुः ॥ ५२ ॥

न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन् ॥
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥

समयः 'संकेत' 'एककार्यता' 'संगति' रित्यनर्थान्तरम्। एकत्र स्थानासनविहारास्तैः सह न कर्तव्या इत्यर्थः। विवाहो दारग्रहणादिः। सोऽप्येवमेव ॥ ५३ ॥

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ॥
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥ ५४ ॥

तत्साक्षादेषां न दातव्यम्। प्रेष्यैः कैश्चित्पूर्वोक्तेन प्रकारेण दापयितव्यः। रात्रौ स्पर्शाशङ्कयाऽन्तर्ग्रामनगरचर्याप्रतिषेधः ॥ ५४ ॥

दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः ॥
अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ॥ ५५ ॥

दिवा विचरन्ति कार्यार्थं क्रयविक्रयस्वकार्यसिद्ध्यर्थम् । राजकार्याय वा चरेयुर्नगरोत्सवप्रेक्षादिनिमित्तम् । तत्रापि च चिह्निता राजशासनैरुपलक्षिता राजादिष्टैर्वस्त्रादिचिन्हैः, वध्यवधशासनैर्वा परशुकुठारादिभिः स्कन्धारोपितैः ॥ ५५ ॥

तथा चाह

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ॥
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥ ५६ ॥

वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ॥
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥ ५७ ॥

वर्णादपेतं चातुर्वर्ण्याद्भ्रष्टम् ।

अविज्ञातं सत्यां शङ्कायां जारजातम् ।

वक्ष्यमाणैः कर्मभिः स्वभावातिशयैश्च निश्चिनुयात् ।

हीनकर्मरतिः क्रूरकर्मा च सत्यां शङ्कायां कलुषयोनिजो जारजातो वेदितव्यः ॥ ५७ ॥

अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ॥
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥

अनार्यो द्वेषमत्सरप्रधानः । निष्ठुरः स्वार्थपरः । क्रूरो लोभहिंसापरः । निष्क्रियात्मा विहितक्रियावर्जितः ।

एतैः स्वभावैः कलुषयोनिता व्यज्यते ॥ ५८ ॥

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा ॥
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥ ५९ ॥

दुर्योनिः संकीर्णजन्मा । प्रकृतिं स्वामात्मीयं कारणं न नियमेन निगृह्णाति ॥ ५९ ॥

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः ॥
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ६० ॥

तस्य शीलं येन जातो, न तु यस्य क्षेत्रम् । स लोके प्रसिद्धः ॥ ६० ॥

यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः ॥
राष्ट्रीयैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥ ६१ ॥

तस्माद्वर्णसंकरो राज्ञा परिवर्जनीयः।

राष्ट्रिया जानपदाः।

राष्ट्रममात्यादयः॥ ६१ ॥

ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः॥
स्त्रीबालाभ्यवपत्तौ च बाह्यानां सिद्धिकारणम् ॥ ६२ ॥

अनुपस्कृतो धनमगृहीत्वा।

अभ्यवपत्तिरनुग्रहः।

बाह्यानां प्रतिलोमानाम्।

सिद्धिकारणं उत्कृष्टजातौ जन्मसिद्धेः सिद्धिहेतुत्वादेवमुच्यते।

तादृशं जन्म लभन्ते यथाधिकृता भवन्ति।

स्वर्गादिप्राप्तिर्वा सिद्धिः॥ ६२ ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः॥
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ६३ ॥

शौचं मृज्जलादिबाह्यगतम्।

सामासिकं समस्तस्य सर्वमनुष्यभेदजातेरुक्तम्, न ब्राह्मणादिजातिविभागेन।

व्याख्यातमन्यत्।

"यद्यहिंसाप्रतिलोमानां धर्मः स्यात्कथं तर्हि तदुक्तम्—'मत्स्यघातो निषादानां', 'बिलौको वधबन्धनम्', क्षत्रादीनामरण्यपशुहिंसनमेव च"॥

केचिदाहुः। ये जीविकाहेतुतया वध्यत्वेनोक्तास्ततोऽन्यत्राहिंसा।

अन्ये मन्यन्ते। 'अहिंसा' तेषामभ्युदयसाधनहेतुत्वेन धर्मो, न तु प्रतिषेधो हिंसायाः संमत इति। यथा "न मांसभक्षणे दोष" इतिवत्।

"यद्यहिंसाधर्मस्तेषां कथं तर्हि तैर्जीवितव्यम्।" "यथा कुतश्चिदवगमात् तेषामनुपपन्ना हिंसानिवृत्ति'धर्मायेति' चेत्तदा को जीवनोपायः। अन्याश्च वृत्तयः प्रतिवर्णनियताः। अध्यापनादयस्तावदत्यन्तासंभवादप्राप्ताः। कृष्यादयोऽपि वैश्यनियताः। शूद्रस्य सेवाऽन्या वा साधारणी वृत्तिरस्ति"।

यथा "वर्तेरन्विद्याशिल्पं" (१० । ११६) इत्यत्र दर्शयिष्यामः । यदपीदमुच्यते "ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः" इति तत्र किमस्ति निन्दिततरमन्यदतो हिंसायाः । न च मत्स्यघातो द्विजानामुपयुज्यते । श्राद्धेऽतिथिभोजनादौ च कदाचित्क उपयोगो, न सार्वकालिको जीविकाभावः ।

तस्मान्न घातादि स्वतन्त्रम् ॥ ६३ ॥

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ॥
अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात् ॥ ६४ ॥

'गर्भं गृह्णाति', गर्भश्च श्रवणाज्जात' इति पुल्लिङ्गनिर्देशेऽपत्यर्थयोगता विज्ञेया । अत इदमुक्तं भवति । शूद्रायां ब्राह्मणात् या जाता कुमारी, सा चेच्छ्रेयसा जात्युत्कर्षवता ब्राह्मणेनैव, प्रजायते विवाहादिसंस्कृताऽपत्योत्पत्तिहेतुसंबन्धं प्राप्नोति । तस्यामपि यदि कुमारी जायते सा ब्राह्मणेनैव विवाह्यते । एवमनया परम्परया सप्तमे पुरुषे प्राप्ते ब्राह्मण्यां यस्तत्र जायते तस्य भवति ।

श्रेयसेति यद्यप्युत्कृष्टजातीयमात्रे वर्तते, तथापीह ब्राह्मणपदसन्निधानादुत्तरत्र च "शूद्री ब्राह्मणतामेति" इति वचनात् ब्राह्मण्यप्राप्तिः शूद्रवर्णस्य विज्ञेया ।

अनयैव कल्पनया पञ्चमे वैश्यायां जातस्य वर्णस्य; तृतीये क्षत्रियायाम् । अत्रापि स्त्रीत उत्कर्षः । एवं वैश्यस्य तृतीये क्षत्रियत्वम् । शूद्रायां जातायाः कुमार्या वैश्यान्तरेण संयोगे तृतीये जन्मनि वैश्यत्वम् । क्षत्रियजातायाः शूद्रायाः पञ्चमे युग इति ।

'युग'शब्दो जन्मवचनः ।

अश्रेयान्निकृष्टजातीयः श्रेयसीमुत्कृष्टाजातिं गच्छति प्राप्नोति ।

आङ् अभिविधौ व्यापकार्थः ॥ ६४ ॥

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ॥
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥ ६५ ॥

शूद्रो ब्राह्मणतामेतीत्युक्तोऽर्थः ।

ब्राह्मणश्चैति शूद्रताम् । ब्राह्मणोऽत्र पारशवो ब्राह्मणजातो विज्ञेयः । स चोक्तलक्षणशूद्रां यदि परिणयते तदाऽपकर्षं जन्मनि प्राप्नोति । तृतीय इति व्याचक्षते ।

यथोक्ते युगपरिवर्ते उत्कर्षं प्राप्ता यथा संस्कारैः कर्मभिश्चाधिक्रियन्ते ॥ ६५ ॥

**अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ॥**

**ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं कस्यचिद्भवेत् ॥ ६६ ॥**

किंशब्दः क्षेपे ।

यदि बीजप्राधान्याद्धीनजातीयासु जाता मातृजातेरुत्कृष्टाः क्रमेण पितृजातितां प्राप्नुवन्ति, इदं तर्हि क्षेत्रप्राधान्येऽपि द्रष्टव्यम्, यथा क्षेत्रजः पुत्रः । अतश्च यथाऽनार्यायां शूद्रायां ब्राह्मणाज्जात उत्कृष्टो भवति, यदृच्छया यथाकथंचिदनूढायामपि, एवं ब्राह्मण्यामनार्याच्छूद्रात्क्षेत्रप्राधान्येन श्रेयसत्वम् । यथोक्तं "क्वचित् बीजं क्वचिद्योनिः" इति ॥ ६६ ॥

**जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः ॥**

**जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥ ६७ ॥**

नार्यां स्त्रियामनार्यायां हीनजातीयायामार्याज्जात उत्कृष्टजातीयाद्ब्राह्मणादार्य एव भवेत् ।

किं ब्राह्मणजातीयत्वम् । नेत्याह—गुणैः । गुणतो गौण्या वृत्त्या पाकयज्ञाद्यधिकारमात्रेण ।

वक्ष्यमाणानार्यापेक्षयाऽऽर्य इत्युच्यते ।

अनार्याच्छूद्रादार्यायां ब्राह्मण्यां जातोऽनार्य एवैष निश्चयः ।

एतदुक्तं भवति । यावद्वचनमेव प्राधान्यमवतिष्ठते, नानुमानेन शक्यमन्यत्प्रसंजयितुम् । अतः समानजातीयागमनमेव युक्तं, क्षेत्रप्राधान्यं क्षेत्रज एव नान्यत्र ॥ ६७ ॥

एवं च कृत्वा ।

**तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ॥**

**वैगुण्याज्जन्मतः पूर्व उत्तरः प्रतिलोमतः ॥ ६८ ॥**

उभावपि, चण्डालः पारशवश्चासंस्कार्यावनुपनेयौ ।

अत्र हेतुवन्निगदोऽर्थवादः । वैगुण्याज्जन्मतः पूर्वः । ब्राह्मणाद्यः शूद्रायां जातः, सत्यपि बीजप्राधान्ये विगुणमेतस्य जन्म, योनिदोषात् । उत्तरश्चण्डालः । स प्रतिलोमोऽत्यन्तप्रातिलोम्यात्, सत्यपि क्षेत्रप्राधान्ये, पितृदोषात् ॥ ६८ ॥

सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा ॥
तथाऽऽर्याज्जात आर्यायां सर्वं संस्कारमर्हति ॥ ६९ ॥

पूर्वोक्तावसंस्कार्यौ, स्वजातिजास्तु संस्कार्याः, इत्युभयत्राप्यर्थवादः। अत एतदेव स्थितं "क्वचिद्बीजं क्वचिद्योनिः" इति यथोपदेशात्। एकान्तरपरिग्रहस्तु न युक्तः ॥ ६९ ॥

बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ॥
बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः ॥ ७० ॥

यथा त्रय एते पक्षाः। तेषां कश्चित्पक्षः केनचित्परिगृहीतः।

केचिदाहुर्बीजमेव ज्यायः। तथा च ब्राह्मणाज्जातः क्षत्रियादिस्त्रीषु मातृजातित उत्कृष्टः।

अन्ये पुनराहुः--क्षेत्रं श्रेष्ठं, यतः क्षेत्रियो यत्र क्षेत्रे जातः तज्जातीयो भवति, तस्यैव च तदपत्यम्।

अपरे मन्यन्ते—उभये बीजक्षेत्रे ज्यायसी। तदुक्तं "सुबीजं चैव सुक्षेत्र" इति।

तदेतत्सर्वमारोचयमान आह तत्रेयं तु व्यवस्थितिः इयमत्र निरूप्यावस्थितम् ॥ ७० ॥

अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ॥
अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥ ७१ ॥

अक्षेत्रे ऊषरे उत्सृष्टमुप्तमपि बीजमन्तरैवादत्त्वैव फलं नश्यति। अबीजकमयोग्यबीजकं वा क्षेत्रं स्थण्डिलमेव भवेत्खिलमेव। ततो न फलं लभ्यत इत्यर्थः ॥ ७१ ॥

यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् ॥
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं विशिष्यते ॥ ७२ ॥

पूजिताः सर्वेण केनचित्प्रणम्यन्ते। प्रशस्ताः स्तुतिवचनैः स्तूयन्ते।

तस्माद्बीजं विशिष्यत इति बीजप्राधान्यवादिनः। तदेतदयुक्तमित्युक्तम्। "तत्रेयं तु व्यवस्थितिः" इति।

अथवा बीजप्रभावेणेति न बीजप्राधान्यं दर्शितमपितु षणमेव। यदाशंक्यतेदू

बीजप्राधान्यान्मन्दपालादीनां तिर्यग्जा ऋषय इति बीजप्राधान्यं तद्दर्शनात्, न तत्र बीजप्राधान्येन तदपत्यानामृषित्वमपि तु तपःश्रुतादिजेन प्रभावेण धर्मविशेषेण ॥ ७२ ॥

अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम् ॥
संप्रधार्याब्रवीद्धाता न समौ नासमाविति ॥ ७३ ॥

अनार्यः शूद्रः । स आर्यकर्मा द्विजातिशुश्रूषादिरतः पाकयज्ञयाजी च देवद्विजनमस्कारपरः । आर्यो ब्राह्मणादिः । सोऽनार्यकर्मा प्रतिषिद्धाचरणो विहितकर्मत्यागी । तावुभौ संप्रधार्य तद्गुणत्वेनावगम्य तयोः किं कस्यचित्सातिशयो गुणः कस्याश्चित् वा अन्ते निरूपणवुद्धिः । संप्रधार्य धाता प्रजापतिर्मनुर्वुद्ध्या निरूप्याऽब्रवीत् ।

न समौ जातेर्गरीयस्या उत्कृष्टगुणोऽपि शूद्रः तुल्यो न स्यात् । पुनराह नासमौ किं जात्या तूत्कृष्टयाऽपि वहुदोषावगृहीतस्य ।

एतदुक्तं भवति । न जातिबलमाश्रित्य नरो माननीयः, किंतु गुणा माननीयाः । न गुणहीनं जातिः परित्रातुमलम् । प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात् ।

"अनार्यायां समुत्पन्नः" इत्यत आरभ्य यावदयं श्लोको वर्णसङ्करनिन्दा कर्मप्रशंसाऽर्थो नात्र किंचिद्विधीयते प्रतिषिध्यते वा । नापूर्वार्थो ज्ञाप्यतेऽभिलक्षणवत् । तस्मात्प्रशंसार्था एवैते ॥ ७३ ॥

ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः ॥
ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम् ॥ ७४ ॥

आपद्धर्माणामुपोद्घातः । योनिः कारणम् । ब्राह्मणा ब्रह्मयोनिस्थास्ते षट्कर्माण्युपजीवेयुरनुतिष्ठेयुः ।

यथाक्रमं यथाधिकारम् । यस्मिन्कर्मणि योऽधिकारी ।

कानिचिद्विध्यर्थानि कानिचिद्दृष्टार्थानि ॥ ७४ ॥

अध्यापनमध्ययनं यजनं याजनं तथा ॥
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥ ७५ ॥

प्रथमेऽध्याये शास्त्रस्तुत्यर्थं एषां पाठः । इह तु विध्यर्थम् । यद्यपि तेषां केवलानां

विधिरुक्तस्तथापीह समस्य निर्दिश्यते सौहार्देन। विध्यन्तरसापेक्ष्यमेवेदं रूपम्। वचनाच्चैतेषां कर्मणाम्। अतो यथाविहितमनूद्य वक्ष्यमाणोऽर्थो विधीयते ॥७५॥

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ ७६ ॥

कर्मत्रिकविभागः स्पष्टप्रयोजनः। एकं त्रिकं दृष्टार्थमुपात्तं सामर्थ्यात्। अन्यस्यादृष्टार्थता।

विशुद्धोऽपापकर्मा।

एवं शूद्रोऽपि विशुद्धः प्राप्नोति।

को भवतो मत्सरः

स्मृत्यन्तरविरोधः प्राप्नोति। 'प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्चे'ति। एवं तर्हि यथाऽविरोधो भवति तथा व्याख्येयम्। न ह्यविरोधे संभवति विरोधो न्याय्यः।

अपि वाऽनुवाद एवायं, 'राजतो धनमन्विच्छेत्' इति। एवमादावस्यार्थस्य विहितत्वात्॥ ७६ ॥

त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति ॥
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥ ७७ ॥

जीविकाकर्माण्येतानि क्षत्रियस्य न भवन्ति। यानि त्वदृष्टार्थानीष्ट्यध्ययन दानानि न विवर्तन्ते। वेदस्य च प्रकृतत्वादेतदध्यापनं निषिध्यते। न तु धनुर्वेद-शिल्पकलाविद्यानाम्॥ ७७ ॥

वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः ॥
न तौ प्रति हितान्धर्मान्मनुराह प्रजापतिः ॥ ७८ ॥

पूर्वेणैतद्व्याख्यातम्।

तौ क्षत्रियवैश्यौ प्रत्येतेऽध्यापनादयो धर्मा मनुना प्रजापतिना नोक्ताः, न स्मृता इत्यर्थः॥ ७८ ॥

शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः ॥
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥ ७९ ॥

इदं तयोर्जीविकाकर्म ।

शस्त्रं खड्गादि । अस्त्रं तन्मन्त्राः धनुर्वेदप्रसिद्धाः ।

अयमप्युक्तानुवाद एव ।

वणिक्पशुशब्दौ कर्मान्तर्भावेन प्रयुक्तौ, वणिज्या पशुपालनं च ।

यद्यप्यध्ययनादिधर्माः सर्वेषां सन्ति तथापि प्राधान्यमेतेषाम् ।। ७९ ।।

वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम् ।।
वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ।। ८० ।।

वेदाभ्यासो वृत्तिप्रकरणादध्यापनम् ।

एवं विशिष्टानि स्वकर्मसु । शास्त्रीयवृत्तिकर्मस्वन्येभ्यो जीवनकर्मभ्य इमानि श्रेयस्करतराणि ।। ८० ।।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ।। ८१ ।।

यदाऽस्य शरीरकुटुंबनित्यकर्मावसादो भवति, न तेभ्यः पर्याप्तं धनं भवति, तदाऽय'मजीवन्नि'त्युच्यते ।

यथोक्तेनाध्यापनादिना ।

तदा क्षत्रियवत् ग्रामनगररक्षादिना शस्त्रास्त्रधारणेन सति संभवे सर्वाधिपत्येन जीवेत् । जीवतिर्व्याख्यातार्थः शरीरमात्रसंधारणे न वर्तते । किं तर्हि । कुटुम्बस्वकर्माणि नित्यकर्मावस्थितामपि लक्षयति ।

स ह्यस्य प्रत्यनन्तरोऽनन्तर एव प्रत्यनन्तरः ।

हेतुवचनाद्व्यवहितवृत्तिः पापकरी ।

स्ववृत्तिपरित्यागेऽपि नैवं मन्तव्यं शास्त्रातिक्रमकृतस्तत्र न विशेषो वैश्यशूद्रेष्वपीति तथा चाह ।। ८१ ।।

उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् ।।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ।। ८२ ।।

उभाभ्यामप्यजीवंस्तु । क्रमोऽनेन प्रदर्श्यते । प्रथममनन्तरा वृत्तिस्तदभावे व्यवहितेति ।

कृषिगोरक्षाग्रहणं वैश्यवृत्तिमात्रप्रदर्शनार्थम् । तथा च वणिज्यायामविक्रेयप्रतिषेधं वक्ष्यति ।

जीवेद्वैश्यस्य जीविकामिति । सामान्यविशेषभावेन क्रियायाः साध्यसाधनभावः प्रागुपपादितः । तत्र कृषिवाणिज्यकुशीदान्यनापद्यैवोक्तान्यध्यापनादिवत् । "प्रमृतं कर्षणं स्मृतम्" । "सत्यानृतं तु वाणिज्यम्" इति तु केचिदाहुः । "कृषिवाणिज्ये चास्वयंकृते । कुसीदं चेति" ( गौ० १०।५-६ ) । उक्तं स्वयंकरणमत्राभ्यनुज्ञायते ।

यत्त्वध्यापनादिवदिति साम्यमाशङ्कितमत्रैव परिहृतम् । यदि सर्वेषां कृष्यादयः समत्वेन स्युः कथमिदमुच्यते "वणिक्पशुकृषीर्विशः आजीवनार्थम्" । ब्राह्मणक्षत्रिययोरपि नाऽऽजीवनार्थस्तदा । किंच 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' इत्यत्र तान्यपि समाख्यास्यत् । तस्मादध्यापनादिनियमैर्जीवतः कृष्यादयः प्रतिषिद्धा एव । यस्तु प्रकरणादन्यत्रैषामुपदेशः स तत्रैव प्रदर्शितप्रयोजनः ॥ ८२ ॥

वैश्यवृत्त्याऽपि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा ॥
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥ ८३ ॥

कृषिनिन्देतरवैश्यवृत्तिस्तुत्यर्था, न पुनस्तस्याः प्रतिषेधार्था । तथा च सति उपदेशो व्यर्थोऽस्या आपद्यते ॥ ८३ ॥

कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ॥
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥ ८४ ॥

कृषिं लोकाः साध्वेव कर्मेति मन्यन्ते ।

यदुक्तम् । कर्षतः पुरुषस्य बहु धान्यं भवति ततोऽतिथ्यादिभ्योऽन्नदानेनोपकरोत्यतः साध्वी । तथा चोक्तं "नाकृष्यतोऽतिथिप्रियः" । "कृषिं यत्नेन कुर्वीत मौर्व्या सर्वत्र यत्नतः" । तथा "लाङ्गलं पवीरवं सुशेवं सुमतित्सरु । उदित्कृषतिगामविप्रफर्व्यं च पीवरीम्" ( वाजसनेयिसंहिता १२।७१ ) इत्यादि ।

ते न सम्यक् मन्यन्ते । सा हि वृत्तिः सद्भिर्निन्द्यते । कस्य हेतोः । भूमिं हन्ति काष्ठमयोमुखं लाङ्गलम् । भूमिशयांश्च । भूमौ शेरते ये प्राणिनस्तृणजलूकादयस्तांश्च हन्ति ।

ननु च भूमेः कीदृशं हननं न हि सा प्राणिवत्काष्ठहत्यापीडामनुभवति। अनुभूतं तु सर्वैर्विदारणं भूमेर्दोषवदिति ज्ञापयति ॥ ८४ ॥

इदं तु वृत्तिवैकल्यात्त्यजतो धर्मनैपुणम् ॥
विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम् ॥ ८५ ॥

इदमिति वक्ष्यमाणस्य प्रतिनिर्देशः ।

विशः पण्यं विट्पण्यं वैश्यानां यद्विक्रेयं तदपि वृत्तिवैकल्याद्धनाभावाद्ब्राह्मणेन विक्रेयम् ।

उद्धार्याणि द्रव्याण्युद्धारशब्देनोच्यन्ते । उद्धृत उद्धारो यस्मिन् तदेवमुच्यते । वक्ष्यमाणानि द्रव्याण्यत उद्धृत्यान्यानि विक्रेयाणि ।

वित्तवर्धनमिति स्वभावानुवादः । वाणिज्यायां हि धनवृद्धिः प्रसिद्धाः ।

त्यजतो धर्मनैपुणं धर्मे या निष्ठा । अतस्तेन पण्यविक्रयो न कर्तव्य इति ज्ञापयति । अतश्चेदमवगम्यते सर्वासां वैश्यवृत्तीनां गर्हिततरा कृषिः । ततो न्यूना वाणिज्या । ततो गोरक्षा ॥ ८५ ॥

सर्वान् रसानपोहेत कृतान्नं च तिलैः सह ॥
अश्मनो लवणं चैव पशवो ये च मानुषाः ॥ ८६ ॥

मधुरादयः षड्रसाः । तत्प्रधानानि द्रव्याणि गुडदाडिमकिराततिक्तकादीनि प्रतिपिध्यन्ते । न हि केवलानां रसानां संभवः । यद्यपि रसशब्दो न स्वयं द्रव्ये शुक्लादिशब्दवद्वर्तते सामानाधिकरण्येन, तथापि लक्षयति द्रव्यम् । 'गंगायां घोष' इति यथा ।

अपोहेत त्यजेन्न विक्रीणीयादिति यावत् ।

कृतान्नं सिद्धमन्नमोदनादि तण्डुलादि च ।

तिलैः सह तिला अपि न विक्रेयाः । न तु पुनस्तिलकृतान्नयोः सहप्रयुक्तयोः प्रतिषेधः, केवलयोरभ्यनुज्ञानम् ।

अश्मानः सर्वपाषाणाः ।

लवणमपाषाणरूपमपि, सैन्धवस्य पाषाणशब्देन ग्रहणम् । रसपक्षे लवणस्य नित्यार्थ आरंभः । तेन मधुरादीनां पाक्षिको विक्रयः ।

पशवो ग्राम्या आरण्याः ।

मानुषा मनुष्याः ॥ ८६ ॥

सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च ॥
अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥ ॥ ८७ ॥

तान्तवं तन्तुनिर्मितं वस्त्रपटबृहतिकादि । रक्तं लोहितम् । लोहिते वर्णे रक्तशब्दः प्रसिद्धतरः । तथाहि रक्तो गौर्लोहित उच्यते, यद्यपि शुक्लस्य वर्णान्तरापादनमपि रञ्जेरर्थः ।

शाणक्षौमाविकान्यरक्तान्यपि । यत आह । अपि चेत्स्युररक्तानि ।

शिष्टं प्रसिद्धम् ॥ ८७ ॥

अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ॥
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥ ८८ ॥

शस्त्रं खड्गपाशादि । गन्धास्तगरोशीरचन्दनादयो द्रव्यविशेषाः । रसशब्दवदेतद्व्याख्येयम् ।

क्षीरं रसविकारं स्मृत्यन्तरप्रसिद्धमतो मस्तुकिलाटोदश्विदादीन्यपि न विक्रेयानि। दधिघृतग्रहणं प्राधान्यादुपात्तम् ।

मधु मधूच्छिष्टमेकदेशलोपाद्देवदत्तो दत्त इतिवत् । स्मृत्यन्तरे हि तत्प्रतिषिद्धम्। इह च क्षौद्रशब्देन सारघस्य निषिद्धत्वात् । माध्वीकस्य च मद्यग्रहणेनोत्तरत्र प्रतिषेधात् ।

अन्ये तु माध्वीकस्यैवाप्राप्तमद्यावस्थस्य प्रतिषेधार्थं मधुशब्दं वर्णयन्ति ।

तदयुक्तम् । नायं निष्पीडितमृद्वीकारसवचनः । किं तर्हि ? मद्यरूपतयैव वर्तते । उभौ मध्वासवक्षीबाविति प्रयोगदर्शनात्, क्षीबतामद्यकृतेव ।

गुडस्य रसत्वप्रतिषेधनिवृत्त्यर्थग्रहणम् । अन्ये तु खण्डमत्स्यण्डिकादीनामनुज्ञानार्थं व्याचक्षते ॥ ८८ ॥

आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ॥
मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफांस्तथा ॥ ८९ ॥

आरण्यपशुशब्दौ गुडलवणेनैव व्याख्यातौ । ग्राम्यपश्वनुज्ञानार्थम् । ग्राम्या अपि पशवो हिंसायां संयोग इति निषिद्धार्थः ।

दंष्ट्रिणः श्वशूकरादयः।

वयांसि पक्षिणः। एकशफा अश्वाश्वतरगर्दभादयः।

'बहूनि' ति तथाशब्दस्थाने पठन्ति। एकस्य विक्रये तथा न दोषः॥ ८९॥

कामम्रुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः॥

विक्रीणीत तिलान् शुद्धान्धर्मार्थमचिरस्थितान्॥ ९०॥

"कृकान्नं च तिलैः सह" इति प्रतिषिद्धानां तिलानां स्वरूपप्रयोजनविशेषाश्रयः प्रतिप्रसवः।

शुद्धानचिरस्थितानिति च स्वरूपविशेषः। धर्मार्थमिति प्रयोजनविशेषः।

शुद्धा व्रीह्यादिभिरमिश्राः। कृशराद्यर्थं मिश्राणां विक्रयासंभवः।

अचिरस्थिताः। अर्थाधिकं लाभमनपेक्ष्य स्वल्पं मूल्यमद्य कालान्तरे चागामिनि बहुमूल्यं लभेयेत्येवं न प्रतीक्षितव्यम्।

अथवा शुद्धा अकृष्णाः। कृष्णतिलानां प्रतिषेधः। अचिरस्थितानिति वेयमर्थः। चिरस्थितं हि कृष्णं भवति। कृष्णा उत्पाद्य क्रीत्वा न विक्रेयाः।

स्वयं कृष्या कृषीवल इति प्रायिकोऽनुवादो, न विवक्षितानि पदानि। प्रतिग्रहाद्यर्जितानामप्यप्रतिषेधः।

धर्मप्रयोजने यत्र तिलान् विक्रीणते। इह च रूपकैर्गावो दक्षिणाद्यर्थं स्वाध्यायाग्निहोत्राद्यर्थं क्रीयन्ते। व्रीह्यादयो वा दर्शपूर्णमासाद्यर्थं स 'धर्मार्थो विक्रयः'। यस्य वा तिला एव दानादिधर्मायोपयुज्यन्ते, भेषजतैलोपयोगे वा क्रेतुः, सोऽप्येवमेव॥ ९०॥

भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः॥

कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति॥ ९१॥

प्रकृततिलविशेषव्यतिरेकेण तिलविक्रयप्रतिषेधे विशेषोऽयमर्थवादः।

"ननु चोक्तं प्रतिषेधानां दोषसूचनं फलतयैव संवध्यते। तत्किं भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः। कृमिभूत इत्ययमर्थवाद" इति।

उच्यते। असम्भविनः फलस्य शास्त्रान्तरेण विरुद्धस्य च श्रवणादेवमुच्यते। तथा पितृभिः सहेत्युच्यते, न च तैः किंचिदपराद्धम्। सुकृतदुष्कृतयोः फलं हि

कर्तृगामि। न च पितॄणां कथंचिदपि कर्तृत्वमित्येतत्प्रागुक्तमेव। किंच "सद्यः पतति मांसेन" इति पतितत्ववचनं परेषां न पातित्यमिति नियमात्। तस्मादस्ति किंचिदनिष्टमित्येतावन्मात्रं प्रतिषेधेन संबध्यते। यथाश्रुतमेव न युक्तम्। भोजनादिक्रिया यत्र तद्व्यतिरेकेण यदन्यद्विक्रयस्नानादि तत्र तिलैर्यः कुरुते स कृमित्वं प्राप्नोति यथोक्तेन दोषेण संयुज्यते ॥ ९१ ॥

सद्यः पतति मांसेन लाक्षया लवणेन च ॥
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ ९२ ॥

उक्तार्थः ॥ ९२ ॥

इतरेषां तु पण्यानां विक्रयादिह कामतः ॥
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥ ९३ ॥

कामत इतिवचनादनापदित्यनुमीयते।

गुरुलघुत्वदर्शनं मांसादीनां प्रायश्चित्तविशेषार्थम्। गुरुणिगुरूणि लघुनिलघूनीति वक्ष्यामः ॥ ९३ ॥

रसा रसैर्निमातव्या न त्वेव लवणं रसैः ॥
कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः ॥ ९४ ॥

रसाः पूर्वोक्तास्ते रसैर्निमातव्याः। मधुररसं गुडादि दत्वाऽऽम्लादिरसमामलक्यादि ग्रहीतव्यम्। न केवलं लवणं दत्वा रसान्तरमादेयम्।

पाठान्तरं 'लवणं तिलैरिति'। अस्मिन्पाठे तिलैरेव लवणस्य प्रतिषेधो न रसान्तरैः।

कृतान्नं सक्त्वोदनाद्यन्नेन पायसापूपादिना निमातव्यम्।

तिलास्तु धान्येन व्रीह्यादिना तत्समाः। प्रस्थं दत्वा प्रस्थ एव ग्रहीतव्यो नार्थापेक्षयाऽधिकं वाऽऽदेयम्।

'विनिमयो' नाम विक्रय एव। क्रीणातिस्तु द्रव्यविनिमये पठ्यते।

न हि तद्युक्तम् "विक्रये प्रकृतिविनिमयमस्त्विति" गौतमो भेदं दर्शयति। एवं तर्हि प्रसिद्धेन रूपकादिना द्रव्यार्पणं 'विक्रयः'। तदन्यद्रव्यपरिवृत्तौ 'विनिमयः' ॥ ९४ ॥

जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः ॥
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥ ९५ ॥

एतेन सर्वेणापि। प्रतिषिद्धपण्यप्रतिप्रसवोऽयं राजन्यस्य। न किंचित्तस्याविक्रेयं वैश्यवत्। किंतु सत्यपि स्ववृत्तित्यागे न ज्यायसीं ब्राह्मणवृत्तिं कदाचिदप्यभिमन्येत। इमां करोमीति चेतसि न कुर्यात्।

प्रतिकूलं दैवमनयः। एतदापदुपलक्षणार्थम्। गतः प्राप्तः। आपद्गत इति यावत् ॥ ९५ ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ॥
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥ ९६ ॥

यो जात्याऽधमो निकृष्टः क्षत्रियादिः। सत्यपि प्रकृतत्वे राजन्यस्य, सर्वेषामयं ब्राह्मणवृत्तिप्रतिषेध एवमेवायं श्लोकः।

उत्कृष्टो निरपेक्षो ब्राह्मण एव। कर्मभिरध्ययनादिभिर्जीवति। दण्ड्योऽयं सर्वस्वग्रहणप्रवासनैः ॥ ९६ ॥

वरं स्वधर्मो विगुणः परधर्मात्स्वधिष्ठितात् ॥
परधर्मेण जीवन्हि सद्यः पतति जातितः ॥ ९७ ॥

पूर्वस्य विधेर्निन्दार्थवादोऽयम्। यो यस्य विहितो धर्मो जात्याश्रयेण विगुणोऽप्यपरिपूर्णाङ्गोऽपि युक्तोऽनुष्ठातुम्। न परधर्मः सर्वाङ्गसम्पूर्णोऽपि।

अत्र निन्दार्थवादः परधर्मेणेति ॥ ९७ ॥

वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत् ॥
अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ॥ ९८ ॥

स्वधर्मेणाजीवतो वैश्यस्य शूद्रवृत्तिरनुज्ञायते। पादधावनादिशुश्रूषया।

अनाचरन्नकार्याणि। उच्छिष्टापमार्जनाद्य 'कार्यम्', तत्परिहर्तव्यम्।

शक्तिमान्निवर्तेतेति सर्वशेषः।

अत्र केनचिदुक्तम्। सामर्थ्यात् ब्राह्मणक्षत्रिययोरप्येतदतिदिश्यते।

तत्रापरेण संदिह्यते। कथं शूद्रवृत्तिं ब्राह्मणः कुर्यात्। एवं हि श्रूयते—

"उत्कृष्टं चापकृष्टं च विद्येते कर्मणी तयोः। मध्यमे कर्मणी हित्वा सर्वसाधारणे

हि ते" ॥ इति तदयुक्तम् । न त्वस्यायमर्थो ब्राह्मणस्य शूद्रवृत्तिरनुज्ञायते सामर्थ्यादिति, किं तर्हि ? निवर्तेत च शक्तिमानिति यदस्माभिरुक्तं सर्वशेष इति ॥ ९८ ॥

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ॥
पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः ॥ ९९ ॥

कारुकाः शिल्पिनः । सूदतन्तुवायादयः । तेषां कर्माणि पाकवयनादीनि प्रसिद्धानि । तैर्जीवेत् । पुत्रदारात्ययस्तद्भरणासमर्थता ।

एतेन धनतन्त्रभङ्गेन तस्यापदि विवाहादिकर्मणामेषां विधानान्निकृष्टताऽनुमीयते ॥ ९९ ॥

यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ॥
तानि कारुककर्माणि शिल्पानि विविधानि च ॥ १०० ॥

प्रचरितैरनुष्ठितैः । शुश्रूष्यन्ते सेव्यन्ते । तदुपयोगीनि यानि कर्माणि शिल्पानि । यद्यपि शिल्पमपि कारुकर्मैव, तथापीह भेदेनोपादानात्तक्षकिवर्धकिप्रभृतयः कारवस्तेषां कर्माणि तक्षणवर्धनादीनि ।

शिल्पानि पत्रच्छेदरूपकर्माण्यालेख्यानि ॥ १०० ॥

वैश्यवृत्तिमनातिष्ठन्ब्राह्मणः स्वे पथि स्थितः ॥
अवृत्तिकर्पितः सीदन्निमं धर्मं समाचरेत् ॥ १०१ ॥

अनातिष्ठन्निच्छया ।

एतदुक्तं भवति । क्षत्रवृत्त्यसंभवे यदि वा वैश्यवृत्तिमाचरेदसत्प्रतिग्रहं वा । तुल्ये एते वृत्ती । असत्प्रतिग्रहात्क्षत्रवृत्तिः श्रेयसी ।

अथवाऽनातिष्ठन् वैश्यवृत्तिमसंभवे । ततश्चासत्प्रतिग्रहो वैश्यवृत्तेर्हीनतरः । स्वे पथि स्थित इति ब्रुवन्नापद्वृत्तीनां समुच्चयोऽस्तीति ज्ञापयति ।

अवृत्त्या कर्षितः ।

सीदन्नवसादं प्राप्नुवन् ॥ १०१ ॥

सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः ॥
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥ १०२ ॥

सर्वत इति प्रतिग्राह्यजातिगुणानामपेक्षा न कर्तव्या ।

अत्रापि हीनहीनतरहीनतमेषु क्रमेण पूर्वपूर्वाभावे उत्तरोत्तरप्राप्तिरस्त्येव । यथा क्षत्रवृत्त्यभावे वैश्यवृत्तिः ।

पवित्रं गङ्गास्रोतस्तदमेध्यसंसर्गे न दुष्यति । "नदी वेगेन शुध्यति" इत्युक्तम् । एवं ब्राह्मणोऽपीति ॥ १०२ ॥

नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ॥
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥ १०३ ॥

पूर्वेणासत्प्रतिग्रह उक्तः । अनेन याजनाध्यापने अनुज्ञायेते ।

गर्हितातिदिति सिंहावलोकितवत्पूर्वाभ्यामप्यभिसंबध्यते ।

यथाग्निरापश्च सर्वत्र शुद्धा एवं ब्राह्मणा अपीति प्रशंसा ।

केचिदाहुः । असत्प्रतिग्रहवदसद्याजनाध्यापने अप्यनुज्ञायेते । यद्यभविष्यतां, तदा पूर्वश्लोक एव प्रतिग्रहवदपठिष्यताम् । इह तु विधिप्रत्ययाभावाद्दोषो भवति विप्राणामिति । वर्तमानप्रत्ययेन सिद्धव्यपदेशादर्थवादताप्रतीतेः । किंच प्रतिवचनं तावदर्थवादः पूर्वेण सिद्धत्वात्तदेकवाक्यत्वापत्तेर्याजनाध्यापने अप्येवं भवितुमर्हतः ।

वयं तु ब्रूमोऽसंभवेऽसत्प्रतिग्रहस्य तत्रापि वृत्तिर्युक्ता । यतः प्रवृत्तिः स्मर्यते । 'यथाकथंचित्स आत्मानमुद्धरेदन्यत्र प्रत्यवायेभ्यः' । कर्मार्थस्त्वापद्धर्मपाठः ॥१०३॥

जीवितात्ययमापन्नो योऽन्नमत्ति ततस्ततः ॥
आकाशमिव पङ्केन न स पापेन लिप्यते ॥ १०४ ॥

पूर्वेणासत्प्रतिग्रह उक्तः । अनेन परिग्रहदुष्टमन्नमभ्यनुज्ञायते ।

ततस्तत इति जातिकर्मानपेक्षमन्नस्वामिनमाह ।

शेषोऽर्थवादः ॥ १०४ ॥

अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः ॥
न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥ १०५ ॥

अजीगर्तो नाम ऋषिः । स क्षुत्परिपीडितः पुत्रं सुतं शुनःशेपनामानं हंतुमुपासर्पत् प्रचक्रमे । न चासौ क्रव्याद इति युज्यते । शौनःशेपमाख्यानं बह्वृचि

सुप्रसिद्धम् । नात्र विस्तर आगमस्योपयुज्यते । परमार्थस्तु परकृतिरूपोऽर्थवादः । एवं सर्व एते द्रष्टव्याः ॥ १०५ ॥

श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः ॥
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥ १०६ ॥

एवं वामदेवो नाम ऋषिः। स आर्त्तः क्षुधा श्वमांसमत्तुं भक्षयितुमैच्छत् ॥ १०६ ॥

भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने ॥
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥ १०७ ॥

वृधो नाम तक्षा अप्रतिग्राह्यः। ततो बह्वीर्गा भरद्वाजो नाम ऋषिः प्रतिजग्राह ॥ १० ॥

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ॥
चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ १०८ ॥

विश्वामित्रो नाम महामुनिः प्रसिद्धः । स कस्मिंश्चिदवसरे क्षुधादुःखेन श्वजाघनीं चण्डालहस्तादादायात्तुमभ्यागत आभिमुख्येनाध्यवसितः ।

न केवलं परिदुष्टेऽन्ने दोषोऽस्ति यावत्स्वभावदुष्टेऽपीति श्वजाघनीग्रहणम् । सर्वदोषदुष्टमप्यापदि भक्षयितव्यमिति श्लोकतात्पर्यार्थः ॥ १०८ ॥

प्रतिग्रहाद्याजनाद्वा तथैवाऽध्यापनादपि ॥
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥ १०९ ॥

आपदीषद्गर्हितयोर्याजनाध्यापनयोः संभवे न गर्हितप्रतिग्रहे वर्तितव्यमिति श्लोकार्थः ॥ १०९ ॥

याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम् ॥
प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः ॥ ११० ॥

अत्रैव हेतुरूपोऽर्थवादः । प्रवृत्तिरेवेदृशी लोकस्य यदनुपनीता नाधीयते न च यजन्ते । अतः सुष्ठ्वार्त्तोऽपि न शूद्रं याजयिष्यत्यध्यापयिष्यति वा । दानं तु सार्ववर्णिकं प्रसिद्धम् । शूद्रादपि प्रतिग्रहः कर्तुं प्राप्नोत्यतः स प्रत्यवरः ॥ ११० ॥

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् ॥
प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च ॥ १११ ॥

जपेन होमेन चैनः पापमपैति विनश्यति। तेन न क्षतिः।

प्रतिग्रहाद्यदेनस्तत्त्यागेन तस्य प्रतिग्रहस्य, तपसा, वक्ष्यमाणेन "मासं गोष्ठे पयः पीत्वा" इत्यादि ॥ १११ ॥

शिलोञ्छमप्याददीत विप्रोऽजीवन्यतस्ततः ॥
प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥ ११२ ॥

अस्याप्यनुवादोऽर्थवादमेवाह।

महदेतदन्याय्यं यत्परद्रव्यग्रहणम्। तत्र कदाचिदश्रूयमाणस्य ग्रहणेऽपीदं भवत्युष्यतोऽप्येतावता प्रशस्यत्वम्। अत्र शिलःप्रतिग्रहसमानजातीयः। स एवायं प्रकर्षप्रत्ययहेतुर्भवति। प्रतिग्रहाच्छिलः श्रेयानिति। यतो निकृष्टमपेक्ष्योत्कृष्टत्वनिमित्तं प्रकर्षमनुभवति। न हि भवति चण्डालाद्ब्राह्मणः श्रेयान्। अतः शिलोञ्छयोरपि ग्रहणेऽनस्वग्रहणम्। तथापि शिलोञ्छं श्रेयः। यद्यपि शिलोञ्छवृत्तिरत्यन्तत्कृष्टोक्ता तथाप्यस्ति प्रतिग्रहेण किंचित्साम्यम्। यतस्तत्राधिदेवतानिष्ठितभृत्यागतं क्रियावैकल्यम्। असत्प्रतिग्रहेऽप्यात्मनि ग्रह उपपन्नो न कुप्यतीत्वयमिति। तत्रेतरसंनिहितद्रव्यस्याऽऽत्मनिग्रहः। अतः शिलोञ्छवृत्तिरपि न निरवद्या। ततो युक्तं प्रतिग्रहाच्छिलः श्रेयानित्यादि ॥ ११२ ॥

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ॥
याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥ ११३ ॥

अत्र त्रीणि निमित्तानि राजप्रतिग्रहे उच्यन्ते।

सीदद्भिः कुटुम्बावसादं प्राप्तैरापदीत्यर्थः।

कुप्यमिच्छद्भिः। कुण्डलकटकाद्युष्णीपासनादि काञ्चनादि।

अन्यद्वा धनं गोहिरण्यादि यज्ञोपयोग्यन्यद् वा। विप्रैः पृथिवीपतिर्याच्यो देशेश्वरोऽभ्यर्थयितव्यः।

अत्र यदुक्तं 'न राज्ञः प्रतिगृह्णीयात्' इति स दुष्टराजविषयः प्रतिषेधो द्रष्टव्यः। तथा चोक्तं "लुब्धस्योच्छास्त्रवर्तिन" इति।

अदित्सन् याचितः सन् दातुं यो नेच्छति । स त्यागमर्हति । तस्य विषये न वस्तव्यम् । अथवा त्यागो हानिः । अन्यस्य चानिर्देशाद्धर्महानिं प्राप्नोति ॥ ११३ ॥

अकृतं च कृतात्क्षेत्राद्गौरजाविकमेव च ॥
हिरण्यं धान्यमन्नं च पूर्वं पूर्वमदोषवत् ॥ ११४ ॥

अकृतमकृष्टं क्षेत्रं प्रशस्यम् । अजाविकं च भवति । परस्परविशेष उक्तार्थः श्लोको गम्यते ॥ ११४ ॥

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ॥
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ ११५ ॥

दायोऽन्वयागतं धनम् ।

लाभो निध्यादेः । पित्राद्यर्जिताद्वा बन्धात्संविभागः । यद्यपि तत्पित्रादिक्रमायातं तथापि न तद्दायशब्देन शक्यमभिधातं, बहुसाधारण्यात् । तथा च 'निबन्धो द्रव्यमिति' ( याज्ञ० २ । १२१ ) स्मृत्यन्तरे पठितम् । अथवा, मित्राच्छ्वशुरगृहाद्वा यल्लब्धं प्रीत्या स 'लाभः' ।

क्रयः प्रसिद्धः ।

जयः संग्रामे ।

प्रयोगकर्मयोगौ कुसीदकृषिवाणिज्यानि ।

अतश्च वर्णभेदेनैतेषां धर्म्यत्वम् । तत्राद्यास्त्रयः सर्वसाधारणाः । 'जयः' क्षत्रियस्य । 'प्रयोगकर्मयोगौ' वैश्यस्य । 'सत्प्रतिग्रहो' ब्राह्मणस्य विशेषः । सर्ववर्णेऽपि प्राग्दर्शनन्यायो विभागः ।

केचित्क्रये विवदन्ते ।

तन्न युक्तम् । सर्वव्यवहारोच्छेदप्रसङ्गात् ।

जयं यानबन्धेनापि केचिदिच्छन्ति सर्वविषयम् ।

तदयुक्तम् । द्यूतधनस्य स्मृत्यन्तरेष्वशुद्धित्ववचनात् पाशुकद्यूतेत्यत्र ।

तथा परे प्रयोगमव्यापारमाहुः । तथा हि प्रयोगो दृश्यते 'ज्ञानपूर्वप्रयोग इति । तत्र शब्दस्य प्रयोग इति गम्यते ।

तथा 'कर्मयोगः' कर्मप्रचारः ॥ ११५ ॥

विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः ॥
धृतिर्भैक्षं कुसीदं च दश जीवनहेतवः ॥ ११६ ॥

सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते।

तत्र विद्या वेदविद्याव्यतिरेकेण वैद्यकतर्कभूतविषासनविद्या सर्वेषां जीवनार्था न दुष्यति।

शिल्पं व्याख्यातम्। भृतिः प्रेष्यकत्वम्।

सेवा परवृत्तानुवृत्तित्वम्।

धृतिः संतोषः। दृष्टान्तार्थं चैतत्।

अतो यथाविहितवृत्त्यभावेनैते जीवनोपायाः संकीर्यन्ते। पुरुषमात्रविषयत्वात्॥ ११६ ॥

ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत् ॥
कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम् ॥ ११७ ॥

धर्मार्थमिति पूर्वोक्तैवाऽऽपत्तिवृत्तिर्वेदितव्या।

पापीयस इति वचनाद्धार्मिकादल्पाऽपि न ग्रहीतव्या। यदुक्तं 'अध्यापनतुल्यानि कृषिवाणिज्यकुसीदानि' तदापद्गतेन॥ ११७ ॥

चतुर्थमाददानोऽपि क्षत्रियो भागमापदि ॥
प्रजा रक्षन्परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥ ११८ ॥

राज्ञः क्षीणकोशस्य षड्भागग्रहणापवादश्चतुर्थभागोऽभ्यनुज्ञायते।

परिशिष्टोऽर्थवादः।

परमिति क्रियाविशेषणं परया रक्षयेत्यर्थः॥ ११८ ॥

स्वधर्मो विजयस्तस्य नाहवे स्यात्पराङ्मुखः ॥
शस्त्रेण वैश्याद् रक्षित्वा धर्म्यमाहारयेद्बलिम् ॥ ११९ ॥

विजयशब्देन विजयफलं युक्तं स्वधर्मतया विधीयते।

तथा चाहवे न स्यात्पराङ्मुखः। भये उपस्थिते पराङ्मुखो युद्धे न स्यादित्यर्थः।

अनेन प्रकारेण प्रजा रक्षित्वा वैश्याद्वलिर्हारयितव्यः। वैश्या महाधना भवन्ति। ततस्तथाहरणे नियुक्ताः कृतापराधा न हन्यन्ते ॥ ११६ ॥

धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम् ॥
कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा १२० ॥

धान्यव्यवहारिणां लाभादष्टमो भागो ग्रहीतव्यः। विट्शब्दः प्रजावचनः। हिरण्यव्यवहारिणां विंशतितमः। शूद्राः कर्मोपकरणाः कर्म उपकरणमुपकारो येषाम्। न ते किंचिद्दापयितव्याः। एवं शिल्पिनः कारवस्तदेवमुक्तं प्राक् 'शिल्पिनो मासि मासि' इत्यादि।

अधिकभागग्रहणार्थोऽयं श्लोकः ॥ १२० ॥

शूद्रस्तु वृत्तिमाकांक्षन्क्षत्रमाराधयेदिति ॥
धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥ १२१ ॥

शूद्रस्तु वृत्तिमाकांक्षेत्तदा क्षत्रमाराधयेत्। वृत्तिग्रहणाज्जीविकार्थमेव क्षत्राराधनम्, न धर्मार्थम्। ब्राह्मणाराधनं तूभयार्थमपीत्युक्तं भवति।

एवं धनिनं वैश्यमाराध्य जीवेत् ॥ १२१ ॥

स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ॥
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥ १२२ ॥

आराधयेदित्युक्तं भवति। तदाह।

जातब्राह्मणशब्दस्य 'ब्राह्मणोऽयमिति' यदाऽस्य एष शब्दो भवति, तदा स कृतकृत्यः कृतार्थो वेदितव्यः।

अथवा जातब्राह्मणव्यपदेशस्येति व्याख्येयम्। ब्राह्मणाश्रितोऽयमिति यदास्य व्यपदेशो जायते ॥ १२२ ॥

विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ॥
यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ १२३ ॥

ब्राह्मणशुश्रूषैव मुख्यः शूद्रस्य धर्मः।

ततो यदन्यद्व्रतोपवासादि कुरुते तदस्य निष्फलम्।

न तु दानपाकयज्ञादीनामस्य प्रतिषेधः, प्रत्यक्षविधानात्।

इतरप्रतिषेधो ब्राह्मणशुश्रषास्तुत्यर्थः ॥ १२३ ॥

प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः ॥
शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ॥ १२४ ॥

द्विजातीनामयं धर्मः । तस्य वृत्तिः कल्पनीया शुश्रूषमाणस्य । स्वकुटुम्बादिति पुत्रवदसौ पालनीयः ।

आत्मीयां शक्तिमवेक्ष्य । दाक्ष्यं च तस्य कार्येषु योगम् । भृत्यानां च पुत्रदाराणां तदीयानां परिग्रहं कियंतोऽस्य भर्तव्या इत्येतदपेक्ष्य सर्वेषां भरणं कर्तव्यम् ॥ १२४ ॥

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ॥
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥ १२५ ॥

उच्छिष्टशब्दो व्याख्यातार्थः । अतिथ्यादिभुक्तशिष्टमाश्रिताय शूद्राय दातव्यम् । एवं वासांसि जीर्णानि धौतानि शुक्लानि । पुलाका असारधान्यानि । एवं परिच्छदाः शय्यासनादयः ॥ १२५ ॥

न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ॥
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥ १२६ ॥

सर्वोऽयमनुवादश्लोकः ।

यदस्याहत्यशृङ्गग्राहिकया न प्रतिषिद्धं, यथा हिंसास्तेयाद्यनादृतवर्णविशेषं सामान्यशास्त्रप्रतिषिद्धं, न तद्व्यतिक्रमादस्य पापमुत्पद्यते । श्रुतमेवास्य शब्देन यथा हिंसास्तेयादिस्तत्रास्य भवत्येव दोषः ।

न च संस्कारमुपनयनलक्षणमर्हति । तदुक्तं "त्रयो वर्णा द्विजातय" इति ।

एवं नास्याधिकारो धर्मेऽस्ति स्नानोपवासदेवतार्चनादौ नास्य नित्योऽधिकारोऽस्ति । अकरणे न प्रत्यवैति ।

न धर्मात्प्रतिषेधनम् । येषु स्नानोपवासव्रतादिषु नित्याधिकारो नास्त्यकरणे प्रत्यवायाभावोऽथ निषेधो नास्ति तादृशेभ्यो धर्मेभ्यो न प्रतिषेधः । न चेदृशादस्य प्रतिषेधः । अतः शिष्टाप्रतिषिद्धत्वादभ्युदयकामस्य तदनुष्ठानं युज्यते । एवं लशुनादिभक्षणनिवृत्तिरप्यभ्युदयायास्य वेदितव्या । सामान्यशास्त्रविहितं 'निवृत्तिस्तु महाफलेति' । अतो न धर्मात्प्रतिषेधनमिति यत्रारम्भः ॥ १२६ ॥

धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः ॥
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ १२७ ॥

एतदेवाह। धर्ममाप्तुमिच्छन्तोऽभ्युदयकामाः। सतां साधूनां धर्ममनुष्ठिताः समाश्रिताः। मन्त्रवर्गं न दुष्यन्ति। अतस्ते अनेकाहोपवासदेवतार्चनगुरुब्राह्मणनमस्कारादि सतां वृत्तमाचरन्तो न दुष्यन्ति। प्रशंसां फलं च प्राप्नुवन्ति।

न पुनरेतन्मन्तव्यं "यानि समन्त्रकाणि ब्राह्मादीनां कर्माणि दर्शपौर्णमासादीनि तानि मन्त्रवर्जं शूद्रस्य न दुष्यन्तीति"। यतः समन्त्रेपूत्पन्नेषु मन्त्ररहितेनानुष्ठानमशाब्दं स्यात्। मन्त्रवर्जमित्येतस्य दर्शितो विषयः। तथा च भगवान् व्यासः—

"न चेह शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति।
स्मृतिप्रयुक्तं तु न धर्ममश्नुते न चास्य धर्मे प्रतिपेधनं स्मृतम्" ॥ इति

एतदपि यथाविहितानुवाद्येव। लशुनसुरापानादेर्न पतति। संस्कारानर्हतोक्तैव। उक्तं चानुपनीतत्वाच्छ्रुतिविहिहितधर्माभावे स्मृतिविषये सामान्यविहिता धर्मा यथोक्तप्रकारास्ते नास्य प्रतिषिध्यन्ते। तथा च स्मृत्यन्तरं—"पाकयज्ञैः स्वयं यजेत, अनुज्ञातोऽस्य नमस्कारो मन्त्र इति" ( गौतम १० । ६४-६५ )।

ये पुनराहुः-"आवसथ्याधानपार्वणवैश्वदेवान्नपाकयज्ञादिषु शूद्राणां पाक्षिकोऽधिकारः" तेषामभिप्रायं न विद्मः। आवसथ्याधानं तावद्गृह्यकारैराम्नातं त्रैवर्णिकोद्देशेनैव। मन्वादिभिश्च नैवमाम्नातम्। तथा केवलं "वैवाहिकाग्नौ कुर्वीत गृह्यं कर्मेति" ( ३।६७ ) तत्र नैवाम्नातम्। कुतः शूद्रस्याधानम्। अथ पाकयज्ञविधानादग्न्याधानाक्षेपस्तदपि न, लौकिकाग्नौ वैश्वदेवो भविष्यति। यावद्वचनं वाचनिकं नान्यदाक्षेप्तुमलम्। विवाहाग्नावित्यत्रैव प्रदर्शितम्। पार्वणशब्देन च यद्यामावास्यं श्राद्धमुच्यते तदभ्यनुजानीमः, अष्टकापार्वणश्राद्धवैश्वदेवानां विहितत्वात्। अथ दर्शपौर्णमासौ, तदपाकृतम् ॥ १२७ ॥

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ॥
तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दितः ॥ १२८ ॥

उक्तार्थः श्लोकः ॥ १२८ ॥

**शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः ॥**

**शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥ १२९ ॥**

शक्तेनापि कृष्यादिकर्मणा धनसंचयः शूद्रेण न कर्तव्यः ।

तत्र हेतुस्वरूपमर्थवादमाह । शूद्रो धनं बह्वासाद्य स्वीकृत्य ब्राह्मणानेव बाधते ।

"का पुनर्ब्राह्मणानां बाधा" ।

महाधनत्वादत्यर्थं ब्राह्मणान्प्रतिग्राहयेत् । शूद्रप्रतिग्रहश्च तेषां प्रतिषिद्धः । तत्र निमित्तभावमापद्यमानो दुष्येत् ।

एतच्च न विहितं कुर्वतः कर्मदोषाशङ्का । तस्माद्ब्राह्मणान्न परिचरेदित्येषैव 'बाधा' ॥ १२९ ॥

**एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्तिताः ॥**

**यान्सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम् ॥ १३० ॥**

सम्यगापद्धर्मानुष्ठानात्परमा गतिः प्राप्यते । शरीररक्षणाद्विहितातिक्रमो न भवतीति, युक्ता शुभफलप्राप्तिः । नापद्गतेनासत्प्रतिग्रहादौ विचिकित्सितव्यमिति शास्त्रन्यायानुवादः ॥ १३० ॥

**एष धर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्तितः ॥**

**अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ॥ १३१ ॥**

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥ १० ॥

पाठादेव सिद्धार्थोऽयमिति ॥ १३१ ॥

इति श्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्ये दशमोऽध्यायः ॥

---

# अथ एकादशोऽध्यायः ११ ।

सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ॥
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥ १ ॥
न वै तान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभिक्षुकान् ॥
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ २ ॥

श्लोकद्वयेन च वाक्यार्थसमाप्तिः । अनेकविशेषणविशिष्टो दानार्थी विधीयते । सान्तानिकादिभ्यो धर्मार्थं भिक्ष्यमाणेभ्यो निःस्वेभ्यो विद्याविशेषेण दातव्यमिति । संप्रति संप्रदानविशेषणत्वे धर्मभिक्षुकशब्दस्याधिकारसंपादनमपि प्रतीयते । एवं नैवं विशिष्टायाश्चैव निमित्तमिति नैमित्तिको दानाधिकारश्चोच्यते ।

संतानं प्रजा प्रयोजनमस्येति सान्तानिको विवाहार्थी भण्यते । तत्र हि धनमुपयुज्यते । भवति च पारंपर्येण संतानप्रयोजनः । धर्मग्रहणात् 'कामतस्तु प्रवृत्तानाम्' इति द्वितीयादिविवाहप्रवृत्तौ न नियमतो देयमिति ।

एवं यक्ष्यमाणो नित्ययज्ञाग्निष्टोमाद्यर्थं वृत्तिवचनं यः करोति स वेदितव्यः ।

अध्वगः क्षीणपथ्योदनः ।

सार्ववेदसो विश्वजिति सर्वस्वं दक्षिणात्वेन दत्तवान्न तु प्रायश्चित्ताद्यर्थम् ।

स्वाध्यायार्थी । यद्यपि ब्रह्मचारिणोऽध्ययनं विहितं भिक्षाभोजनं च तथापि वस्त्रार्थोपयोगि धनं दातव्यम् । अथवा गृहीतवेदस्य तदर्थजिज्ञासा भैक्षभुजोऽपि ।

उपतापी रोगी ।

स्नातकग्रहणं प्रशंसार्थम् ।

गुर्वर्थं स्वाध्यायार्थत्वं प्रायः स्नातकविषये विद्यते । ब्रह्मचारिणो गुर्वर्थं कर्तव्यमिति विहितम् ।

निःस्वेभ्यो निर्धनेभ्यः ।

विद्याविशेषतो बहुविद्याय बहु स्वल्पविद्यायाल्पमिति ।

"ननु च सर्वमेवेदमप्रकृतं प्रक्रियते । एवं हि प्रतिज्ञातम्, 'अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्' इति" ।

नैष दोषः । आश्रमधर्मत्वादस्य प्रकरणस्य । प्रायश्चित्तानामतुल्यरूपतया सहोपदेशस्तत्र प्रायश्चित्तनिमित्तत्वादस्यार्थस्य प्रथममभिधानम् ।

दानं देयमित्युक्तम् । दानशब्दश्च कर्मसाधनः । किं तद्देयमित्यपेक्षायामुत्तरश्लोकः ॥ १—२ ॥

एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम् ॥
इतरेभ्यो बहिर्वेदि कृतान्नं देयमुच्यते ॥ ३ ॥

'दक्षिणाशब्दो' यद्यपि कर्मकरसंयुक्ते संत्यागे वर्तते, तथापि गोभूमिहिरण्यादिभाजनादन्यद्देयं द्रव्यमुच्यते । तथा हि लौकिकी प्रसिद्धिरिति ।

इतरेभ्य एतद्व्यतिरिक्ता ये भिक्षुकास्तेभ्यः ।

कृतान्नं सिद्धमन्नं भोजनार्थं दातव्यम् ।

बहिर्वेदि यज्ञादन्यत्रातिथिभ्यो दानं गृहस्थधर्मेषु यदेतत्तदेवानूद्यते ॥ ३ ॥

सर्वरत्नानि राजा तु यथार्हं प्रतिपादयेत् ॥
ब्राह्मणान्वेदविदुषो यज्ञार्थं चैव दक्षिणाम् ॥ ४ ॥

सर्ववर्णानां स्वर्गादिफलाय पुरुषार्थोपयोगि दानं विहितम् । अयं तु राज्ञो नियमार्थमुतदेशः ।

बहुधनेन राज्ञा सर्वरत्नानि मणिमुक्तादीनि । यथार्हं विद्याकर्मानुरूपेण ब्राह्मणेभ्यो दातव्यानि । यज्ञार्थं च दक्षिणा । काम्यकर्मसिद्ध्येऽपीति पुनरुपदेशः । प्रतिपादयेत्स्वीकारयेत् ग्राहयेदिति यावत् ॥ ४ ॥

कृतदारोऽपरान्दारान्भिक्षित्वा योऽधिगच्छति ॥
रतिमात्रं फलं तस्य द्रव्यदातुस्तु सन्ततिः ॥ ५ ॥

कामतो द्वितीयादिविवाहप्रवृत्तौ भिक्षमाणस्य निषेधोऽयम् ।

रतिमात्रं फलमित्यादिरर्थवादो, न यथाश्रुतमेव प्रतिपत्तव्यम् ।

अन्ये तु व्याचक्षते । धर्मार्थं सान्तानिकाय दातव्यं न कामप्रवृत्तायेति । स

एवायमर्थः पुनरन्यथोच्यते । सान्तानिकाय दातव्यं, अयं तु रतिकामो, न सान्तानिक इत्यर्थः ।

द्रव्यदातुर्हि सा संततिर्न तस्येति ॥ ५ ॥

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ॥
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति ॥ ६ ॥

त्रीणि वर्षाणि यस्य पर्याप्तं भृत्यभरणाय धनं तत् त्रैवार्षिकं ततोऽधिकं वा यस्यास्ति स सोमं पातुमर्हति ।

श्रुतौ नित्यस्य सोमस्याऽऽवश्यकर्तव्यतया उक्तत्वात् भृत्योपरोधेऽपि नैष निषेधः प्रवर्तते, वलीयस्त्वाच्छ्रुतेः । अत इच्छासोमविषयोऽयं निषेधः ।

ननु च सोमे धनं परिक्रयार्थमुपयुज्यते 'तस्य द्वादशशतं दक्षिणेति' । तत्र वृत्तिर्वर्धतेऽतश्च सोमे तत्र धनमुपयुज्यते । नोच्यते यस्य त्रैवार्षिकमिति ।

ननु च वृत्तिधनमसति धने नित्यवदस्तीति विद्यमानधनेनाऽपि तत्कर्तव्यमेवेष्यते । प्राशस्त्यकरदानशब्दो भक्तमात्रे यदि हिरण्यदानं सोमक्रयार्थमेवमादिनिवृत्तिः ॥६॥

अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ॥
स पीतसोमपूर्वोऽपि न तस्याप्नोति तत्फलम् ॥ ७ ॥

प्रतिषेधातिक्रमेणानधिकारिणः कुर्वतो न्यायसिद्धफलाभावोऽनेनानूद्यते । फलग्रहणाच्च काम्यविषयता स्फुटतरा प्रतीयते ।

स पीतसोमपूर्वोऽपि । अनेन प्रथमयज्ञस्यावश्यकर्तव्यतां दर्शयति । स पीतत्वाद्यर्थवादोऽयम्, न पुनरपीतसोमस्य प्रतिषेधः ॥ ७ ॥

शक्तः परजने दाता स्वजने दुःखजीविनि ॥
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥ ८ ॥

यः स्वजनो भृत्यामात्यमातृपितृपुत्रदारादिः तस्मिन् दुःखजीविनि । यः परजने यशोऽर्थं ददाति तस्यासौ विषास्वादः । आपाते सन्निपाते मधुरः । यथा विषस्यास्वादः सन्निपातमधुरो विपाकविरसो मरणफलत्वात्, एवं तादृशं दानम् । यद्यपि संप्रति यशः सुखं जनयत्यमुत्र प्रत्यवायोत्पत्त्या विषास्वादसमं संपद्यते ।

तदेवाह धर्मप्रतिरूपकोऽसौ धर्मसदृशो न धर्मः, शुक्तिरिव रजतज्ञानस्य ॥ ८ ॥

भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदेहिकम् ॥
तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च ॥ ९ ॥

पूर्वस्य निन्दार्थवादोऽयम्।

भृत्या व्याख्याताः।

उपरोधो भक्तवस्त्रादिना यथोपयोगमाहरणम्।

और्ध्वदेहिकं परलोकप्रयोजनम्। असुखोदर्क'मुदर्कः' आगामीकालः, सोऽस्य दानस्यासुखोदर्कं भवतीति प्रयोजनं सिद्धमेव ॥ ९ ॥

यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ॥
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ १० ॥

यो वैश्यः स्याद् बहुपशुर्हीनक्रतुरसोमपः ॥
कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ ११ ॥

अत्राङ्गग्रहणान्न केवलं सर्वासां दक्षिणानामसंपत्तौ हिरण्यानामिदमाहरणं विधीयते। अपि च तस्मिन्नपि पश्चादौ। आहरेदिति तत्स्वीकारोत्पत्तिमात्रमुच्यते, नोपायविशेषः। अतश्च याच्ञया विनिमयेन चौर्येणैवापहर्तव्यम्।

"ननु च चौर्येण साम्यं नोत्पद्यत इत्युक्तम्"।

नैष दोषः। इह स्वशब्देनैवोक्तं 'हर्तव्यमिति'। एवं ह्याह—'कर्तव्यं हीनकर्मण' इति।

अयं चापहारः प्रागारब्धयागस्य सर्वाङ्गोपेतस्यैकाङ्गासंपत्तौ प्रारिप्स्यमानस्य वेति न विशेषहेतुरस्ति।

ब्राह्मणस्य विशेषेणेतिवचनात्क्षत्रियवैश्ययोरप्यस्ति तदेकाङ्गग्रहणमस्मिन्निमित्ते।

ननु कः क्षत्रियो याचेदिति क्षत्रियस्य याच्ञा प्रतिषिद्धा।

अत्यल्पमिदमुच्यते। ब्राह्मणस्यापि चौर्यं निषिद्धम्। तस्मात्तस्मिन्निमित्ते नास्त्यर्जनोपायनियमः।

धार्मिके सतीत्यनुवादोऽयम्। यो हि धर्मज्ञो राजा तस्मिन्निमित्ते चौर्यं विहतमिति। अन्यस्य तु निगृहीतत्वात्कुतः प्रवृत्तिः।

बहुपशुग्रहणं धनमात्रोपलक्षणार्थम्।

हीनक्रतुः कर्म यागादन्यदपि दानादि न करोति । सत्यप्यसोमपे ।

कुटुम्बाद्गृहादित्यर्थः गृहाद्धि चौर्यं दोषवत्तरमतस्तदनुज्ञायते ।

न पुनरप्येवमेव नियमः । अन्यतोऽपि यत्खलादेः संपद्यते तत्कर्तव्यमेव । वक्ष्यति च 'खलात्क्षेत्रादगाराद्वेति' ॥ १०-११ ॥

आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ॥
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥ १२ ॥

वैश्यासंभवे शूद्रादप्याहर्तव्यम् ।

त्रीणि वा द्वे वेत्यङ्गप्रकरणादङ्गानि वेदितव्यानि ।

अत्रार्थवादो न हि शूद्रस्येति ।

यद्यपि पूर्वमनेकोपायकृतमाहरणं विहितं तथापि भिक्षणमत्र नास्ति, 'न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेतेति' ।

"ननु च स्मृत्यन्तरेऽविशेषेण शूद्रधनेन यागः प्रतिषिद्धः" ।

अस्योपदेशस्य सामर्थ्याच्छूद्रात्प्रगृह्णीतेति द्रष्टव्यम् ।

अन्ये त्वाहुः । ब्राह्मणेन स्वीकृतत्वान्नैव तच्छूद्रधनमिति । यस्तु प्रतिषेधः, स शूद्रस्य शान्तिकपौष्टिकादि येन धनेन करोति ऋत्विग्वत्तत्र द्रष्टव्यः । इह तु भूतपूर्वगत्या शूद्रधनव्यपदेशोऽस्य स्यात् सांप्रतिकत्वाभावे च शास्त्राद् या चैवति चेत्ययमेव ॥ १२ ॥

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ॥
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १३ ॥

ब्राह्मणक्षत्रियाभ्यामप्येवंविधाभ्यामाहर्तव्यमिति श्लोकार्थः ।

गोग्रहणं तावत्परिमाणधनोपलक्षणार्थम् ।

अयज्वाऽसोमयाजी ॥ १३ ॥

आदाननित्याच्चादातुराहरेदप्रयच्छतः ॥
तथा यशोऽस्य प्रथते धर्मश्चैव प्रवर्धते ॥ १४ ॥

अयं सर्ववर्णविषयः श्लोकः ।

आदाननित्यो यः सर्वकालं कृषिप्रतिग्रहकुसीदादिभिर्धनमर्जयति न च ददाति ।

तत उपायान्तराण्याश्रयणीयानि ।

अदातुरित्ययागशीलस्यापि द्रष्टव्यम् ।। १४ ।।

**तथैव सप्तमे भक्ते भक्तानि षडनश्नता ॥**
**अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ १५ ॥**

आत्मकुटुम्बावसादेऽपि पूर्ववत्परादानं कर्तव्यम् ।

अश्वस्तनग्रहणादेकदिनवृत्त्यर्थमेवानुजानाति नाधिकम् ।

हीनकर्मण इति कर्मार्थम् ।

स्मृत्यन्तरे 'हीनादादेयमादौ स्यात्तदलाभे समादपि । असंभवे त्वाददीत विशिष्टादपि धार्मिकात् ॥'

सप्तमे भक्ते । त्र्यहं येन न भुक्तं चतुर्थेऽहनि प्रातर्भोजनार्थं परादाने प्रवर्तेत ।

सायंप्रातर्भुञ्जीतेत्यहन्यहनि भक्तद्वयं विहितम् ।। १५ ।।

**खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते ॥**
**आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥ १६ ॥**

यतो वापीति आरामादेरपि ।

आख्यातव्यं पृच्छत इत्येव । यदि पृच्छतीति वचनं न हठात्पुनः प्रेषणादिना प्रश्नमसौ कारयितव्यः ।

अथवा पृच्छते धनस्वामिने, यदि पृच्छति राजेति । 'राजपुरं नीत्वैव' विषयभेदो दर्शयितव्यः । तथा च गौतमः ( अ० १८ सू० ३० ) 'आचक्षीत राज्ञा पृष्ट' इति ।

भक्तच्छेदे यज्ञप्रतिबन्धतः प्रकरणविशेषादुभयत्रायं विधिर्ज्ञेयः ।। १६ ।।

**ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन ॥**
**दस्युनिष्क्रिययोस्तु स्वमजीवन्हर्तुमर्हति ॥ १७ ॥**

क्षत्रियेणेति । क्षत्रियग्रहणं वैश्यशूद्रयोरपि प्रदर्शनार्थम् ।

कदाचनेति महत्यामापदीत्यर्थः ।

दस्युनिष्क्रिययोर्ब्राह्मणयोरेव । 'दस्यु'स्तस्करो 'निष्क्रिय'स्त्वकर्माऽनाश्रमी ।। १७ ।।

योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति ॥

स कृत्वा प्लवमात्मानं संतारयति तावुभौ ॥ १८ ॥

प्लवः समुद्रतरणः। उभौ यस्यापहरति यस्मै च प्रयच्छति। शेषोऽर्थवादः ॥१८॥

यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥

अयज्वनां तु यद्वित्तमासुरस्वं तदुच्यते ॥ १६ ॥

अयमस्यार्थवाद एव। 'गुणवद्भ्यो नापहर्तव्यं निर्गुणेभ्यस्तु न दोषः' ॥ १६ ॥

न तस्मिन्धारयेद्दण्डं धार्मिकः पृथिवीपतिः ॥

क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥ २० ॥

अस्मिन्निमित्ते चौरत्वेनानीतेभ्यो राज्ञा दण्डो न कर्तव्यः। यतस्तस्यैव बालिश्यान्मौर्ख्यात् क्षुधाऽवसीदति। क्षुधेत्यविवक्षितमुभयोः प्रकरणादर्थवादत्वाच्च ॥ २० ॥

तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः ॥

श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत् ॥ २१ ॥

धर्म्या वृत्तिर्यया नित्यकर्माण्यपि संपद्यन्ते। क्षीणकोशेनापि महिषीराजपुत्रादिकल्पिताद्दायाद्विहिताच्च धनाच्च किंचिदवकृष्य दातव्यमिति। स्वकुटुम्बादित्यादिना महाधनस्यैव राज्ञोऽयं विधिः। 'सर्वरत्नानीति' वचनात् ॥ २१ ॥

कल्पयित्वाऽस्य वृत्तिं च रक्षेदेनं समन्ततः ॥

राजा हि धर्मषड्भागं तस्मात्प्राप्नोति रक्षितात् ॥ २२ ॥

स्पष्टार्थोऽयं श्लोकः ॥ २२ ॥

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित् ॥

यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥ २३ ॥

भिक्षणमत्र निषिध्यते। अयाचितोपपन्नं तु न दुष्यति। तथा चोक्तं 'अयाचितोपपन्नानां द्रव्याणां यः प्रतिग्रहः। विशिष्टलोकशास्त्राभ्यां तं विद्यादप्रतिग्रहम्' ॥ इति।

यज्ञार्थोऽयं प्रतिषेधो न तु भृत्यभरणे।

केचित्पूर्वशेषमेव मन्यन्ते। भिक्षणे दोषदर्शनादुपायान्तरेणोक्तमादानम् ॥२३॥

**यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति ॥**
**स याति भासतां विप्रः काकतां वा शतं समाः ॥ २४ ॥**

भिक्षितस्य यज्ञार्थपरिशेषितस्य कार्यान्तराय फलं काकताभासताप्राप्तिः ॥२४॥

**देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ॥**
**स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २५ ॥**

यागशीलानां त्रयाणां वर्णानां यद्वित्तं तद्देवस्वम्। ब्राह्मणस्यायागशीलस्यापि यत्स्वं तद्ब्राह्मणस्वमिति।

एवमपि श्लोको गच्छत्येव। किंतु अर्थवादश्लोकोऽसौ। 'यद् धनं यज्ञशीलानामिति', न चौर्यादिशब्दवच्छब्दार्थपरिभाषापरः। अतोऽन्यथा व्याख्यायते। देवानुद्दिश्य यागादिक्रियार्थं धनं यदुत्सृष्टं तद्देवस्वम्। मुख्यस्य स्वस्वामिसंबन्धस्य देवानामसंभवात्। न हि देवता इच्छया धनं नियुङ्क्ते। न च परिपालनव्यापारस्तासां दृश्यते। स्वं च लोके तादृशमुच्यते। तस्माद्देवोद्देशेन यदुक्तं 'नेदं मम देवताया इदमिति' तद्देवस्वम्। तच्च दर्शपूर्णमासादियागेष्वग्न्यादिदेवताभ्यश्चोदितम्। शिष्टसमाचारप्रसिद्ध्यैव गौणोपायदुर्गायागादिषु।

"ननु चतुर्भुजादिप्रतिमासंबन्धि लोके देवस्वमुच्यते। लोकप्रसिद्धश्च शब्दार्थः शास्त्रे ग्रहीतुं न्याय्यः"।

स्यादेवं यदि देवस्वशब्दो निर्भागः प्रसिद्धिमुपेयात्। देवानां स्वं देवस्वमित्यवयवप्रसिद्ध्या समुदायार्थः प्रकृष्टः। न च वाक्यान्तरप्रकल्पना प्रमाणेनाप्यस्ति। मुख्यं चतुर्भुजादीनां देवत्वं प्रतिमाव्यवहारेणैवापहृतम्। न च व्ययोकूल (?) लक्षणमस्ति। अथ समाचारतो देवस्वं भवतु, स्वस्वामिभावस्तावन्नास्ति। यथोक्तेन च प्रकारेण स्वव्यवहारोपपत्तिरिति शिष्टं द्वितीये ॥ २५ ॥

**इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ॥**
**क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे ॥ २६ ॥**

वैश्वानर्या इष्टेर्गृह्यस्मृतिभ्यः स्वरूपमवसातव्यम्।

समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्ययः।

क्लृप्तानां विहितानां पशुसोमानां नित्यानां षाण्मास्यः सांवत्सरः पशुर्नित्यं वसन्ते सोमः। तेषामसम्भवे धनाभावादिदोषेण। निष्कृत्यर्थं नित्यस्याकरणे यो दोषस्तन्निवृत्त्यर्थम्।

श्रुतेऽस्मिन्निमित्तेऽन्यकर्म समामनन्ति। तत्र केचित्समुच्चयं मन्यन्ते, सत्यप्येककार्यत्वे प्रमाणभेदेन विधानात्। तदयुक्तम्।

तथा च ब्रह्महत्याप्रायश्चित्ते श्रौते स्मार्ते च स्वशब्देन विकल्पं वक्ष्यति 'अभिजिद्विश्वजिद्भ्यां च' इति ॥ २६ ॥

आपत्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ॥
स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥ २७ ॥

आपत्कल्पप्रतिनिधिं वैश्वानरीं वा विद्यमानधनो यो गौणपक्षमाश्रयति तस्य न सोऽर्थः सिध्यति ॥ २७ ॥

विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ॥
आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥ २८ ॥

एष एवार्थः 'आपदि प्रतिनिधिराश्रयितव्यो न संपदि' ॥ २८ ॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ २९ ॥

अयमपि पूर्वशेषोऽर्थवादः।

सांपरायिकं पारलौकिकम् ॥ २९ ॥

न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित् ॥
स्ववीर्येणैव तान् शिष्यान्मानवानपकारिणः ॥ ३० ॥

निमित्तेऽभिचारो न दोषायेति श्लोकार्थः। न त्वभिचारो विधीयते। न च राजनि वेदनं प्रतिषिध्यते। केवले सति निमित्तेऽभिचरितुं प्रवृत्तो राज्ञा न किंचिद्वक्तव्यः। तथा वक्ष्यति 'विधाता शासिता वक्ता' इति। 'तस्मै नाकुशलं ब्रूयात्' इति राजेति प्रतीयते।

शिष्यादिति। सत्यपि विधौ राजनि निवेदयेत्। न च प्रतिषेध उपसंहारश्लोकपर्यालोचनया तत्परमवतिष्ठते।

निमित्तानि चोक्तानि 'भार्यातिक्रमकारी' चेत्यादीनि ।

किंचित्पीडानिमित्त 'मनेन मे कृतमिति' राज्ञे निवेदयेत् ।

धर्मवित् अभिचारविधिज्ञः ।

स्ववीर्येण मन्त्राभिशापाभ्याम् । तत्रैवोत्तरश्लोकार्थः ॥ ३० ॥

स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् ॥
तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन्द्विजः ॥ ३१ ॥

राजा कदाचिदनिपुणतया न निग्रहेण प्रवर्तेत स्वतस्तु न कदाचिदुपेक्षेति स्ववीर्यं बलीयः ॥ ३१ ॥

श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ॥
वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन्द्विजः ॥ ३२ ॥

किंतत्स्ववीर्यमिति शङ्कानिवृत्त्यर्थोऽयं श्लोकः ।

श्रूयन्त इति श्रुतयः । अथर्वणवेदे येऽभिचारप्रकाराः श्रुतास्ते कर्तव्या इत्यर्थः । बाहुल्येन तत्राभिचाराणां विधानात् अथर्वाङ्गिरसग्रहणम्, न पुनरन्येषु वेदेष्वननुज्ञातम् ।

अथवाऽभिचारश्रुतयोऽथर्वाङ्गिरसशब्देनोच्यन्ते ।

अथवाऽथर्वणशब्दा एवंविध एवार्थे प्रयुज्यन्ते'यज्ञोऽथर्वणवित्काम्य' इति ॥३२॥

क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ॥
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ ३३ ॥

पूर्वशेष एव ॥ ३३ ॥

विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते ॥
तस्मै नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ॥ ३४ ॥

प्राग्व्याख्यातोऽयम् ।

तस्मै ब्राह्मणायाभिचरते 'निगृह्यतामयमि'त्यकुशलं न ब्रूयात् ।

न शुष्कां गिरमीरयेत् । वाग्दण्डधिग्दण्डयोरपि प्रतिषेधः ।

अथवा सर्वेषां वर्णानां न ब्राह्मणः क्षोभयितव्यो यस्त्रयीविद्याप्रभावेण शक्तः स्वयं निग्रहीतुम् ।

विधाता स्रष्टा। अन्यस्य राज्ञः शासिता निग्रहीता। वक्ता हितान्। अतो मैत्रस्तस्मात्सर्वप्रशक्तियुक्तत्वान्न दुर्बलोऽयमित्यवमन्तव्यः ॥ ३४ ॥

न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ॥
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥ ३५ ॥

अग्निहोत्रे ऋत्विग्वरणस्य समाम्नानात् 'जुहुयाद्धावयेद्वेति' स्त्रीपुंसयोरविशेषेण क्षीरहोतृताप्राप्तौ कन्यायुवत्योः प्रतिषेधः।

एवमाहुतिद्वयमात्रविधिज्ञस्याल्पविद्यस्य बालिशस्य वा प्राप्तिः प्रतिषिध्यते।

आर्त्तो व्याधिना।

असंस्कृतोऽनुपनीतः।

एतच्चायुक्तम्। श्रौते ह्यग्निहोत्रे 'स्वयं पर्वणि जुहुयात् ऋत्विजामेक इतरेषां कालमिति' समाचरन्ति। न च स्त्रीणामार्त्विज्यसंभवोऽतो गृह्याग्निविषये कन्यायुवत्योः प्रतिषेधो, जातपुत्रायाः प्राप्त्यर्थ इति वर्णयन्ति। तथा चान्येपि सूत्रकाराः 'कामं गृह्येऽग्नौ पत्नी जुहुयात्सायंप्रातर्होमाविति'।

अन्ये तु 'वैतानकुशल' इति वचनात्त्रेताग्निविषयमेवेदं मन्यन्ते।

'वितानो' विहारः। स च श्रौतेष्वग्निषु सम्भवति। न च तत्र स्त्र्यादीनां प्राप्तिः, न त्वविदुषां, विशिष्टानामेव पुंसामार्त्विज्यविधानात्। अतोऽ'ग्निहोत्र'ग्रहणं सर्वकर्मणां, 'होतृ'ग्रहणं च सर्वर्त्विजां प्रदर्शनार्थम्।

अतः श्रुत्यर्थानुवादमात्रमेषा स्मृतिः ॥ ३५ ॥

नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ॥
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥ ३६ ॥

एते कन्यादयो जुह्वतो नरकं गच्छन्ति। स च यजमानो ह्रावयिता ॥ ३६ ॥

प्राजापत्यमदत्वाऽश्वमग्न्याधेयस्य दक्षिणाम् ॥
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥ ३७ ॥

अग्न्याधेयेऽश्वो दक्षिणा दातव्या।

प्राजापत्यग्रहणं स्तुत्यर्थम्।

अथवा नात्युत्कृष्टो नातिनिकृष्टः 'प्राजापत्यः' । अथ च लौकिका ईदृशे वस्तुनि 'प्रजापति'शब्दमुदाहरन्ति ।

विभवे सतीति वचनादसंपत्तावददद्भवत्येवाहिताग्निः ॥ ३७ ॥

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ॥
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥ ३८ ॥

यावती दक्षिणा विहिता ततो न्यूना दीयते यत्र सोऽल्पदक्षिणो यज्ञः ।

"परिक्रयः किल दक्षिणा । वल्पेन चेत्परिक्रयेण कर्मकरो लभ्यते किमिति बहु दीयते लोक इव वाहादीनाम् । 'पणलभ्यं हि कः प्राज्ञः क्रीणाति दशभिः पणैः' । द्वादशशतदानं तत्फलभूयस्त्वायेति" मन्यमानस्य प्रतिषेधः ।

ये तु स्वल्पदक्षिणा उत्पत्त्यैव च सोमे दक्षिणेति क्रतुमन्तो न तन्निषिध्यते ॥३८॥

इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् ॥
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥ ३९ ॥

पूर्वविध्यतिक्रमे फलकथनम् ॥ ३९ ॥

अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः ॥
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥ ४० ॥

अपविध्य त्यक्त्वा । त्यागश्च नित्यानामग्निहोत्रादीनां अकरणमुद्वापनं च । प्रसङ्गादत्र प्रकरणात्प्रायश्चित्तोपदेशः । अग्नीनिति बहुवचननिर्देशात् गृह्याग्नित्यागे कल्पना कार्या ।

वीरहत्यासममिति श्रुतिः 'वीरहा वा एष देवानामिति' ।

कामकारवचनादकामत्यागे कल्पनैव ॥ ४० ॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ॥
ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥ ४१ ॥

शूद्रादधिगतेनार्थेन प्रीत्यादिनाऽग्न्याधेयं न कर्तव्यमिति व्याचक्षते । न तु प्रवृत्तकर्मणो नित्यकर्मानुष्ठानं प्रतिषिध्यते । तथा चोक्तं न शूद्राद्भिक्षित्वाऽनुष्ठानं करणीयम् । अयाचितलाभे तु नास्ति दोषः प्रवृत्तकर्मणस्तदर्थम् । तथा चासत्प्र-

तिग्रहादात्मवृत्तिरेका प्रतिषिद्धा । नित्यानि कर्माण्यभ्यनुज्ञातानि । अतः शूद्रधनेन प्रार्थितलब्धेन वाऽविशेषाभिधानसामर्थ्यादग्न्याधेयस्यैकस्य प्रतिषेधोऽयं विज्ञायते । यदि सर्वकर्मार्थोऽयं प्रतिषेधः स्यादनेनैव सिद्धत्वान्न भिक्षणं प्रतिषिध्येत 'न यज्ञार्थं धनं शूद्रात्' इति ॥ ४१ ॥

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम् ॥
पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत् ॥ ४२ ॥

अग्नीनां वृषलाग्नित्ववचनं लिङ्गात् पूर्वविध्यतिक्रमे दोषाभिधाने निखिलप्रकरणमेतत् ॥ ४२ ॥

अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ॥
प्रसज्जन्निन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ ४३ ॥

इदानीं प्रकृतान्येव प्रायश्चित्तानि कथ्यन्ते ।

प्रथमं तावत्तेष्वधिकारं निरूपयति । कोऽत्राधिकारः ।

विहितं नित्यतया संध्योपासनाग्निहोत्रादि 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिभिः पदैर्ज्ञपितनित्यभावात् । यदप्यनियतनिमित्तेऽशुचिस्पर्शनादौ स्नानादि तद्विहितम् ।

अकुर्वन् प्रमादालस्यादिना ।

तथा निन्दितं प्रतिषिद्धं सुरापानादि । तदपि शास्त्रमतिक्रम्य सेवमानः ।

प्रायश्चित्तीयते ।

तदेतदुक्तं भवति । नैमित्तिकोऽयमधिकारो विहिताकरणात्प्रतिषिद्धसेवनाच्च प्रायश्चित्तम् ।

"ननु च ग्रामकामस्य सांग्रहणी विहिता । ततो ग्रामार्थिनः कथंचिदकरणे विहितातिक्रमः स्यात् । यदि नाम ग्रामार्थी प्रत्यवेयात्ततस्तत्कामोऽस्य । यदा तु ग्रामं कामयते तदा तस्य तद्विहितं भवति । न चेत्प्रवर्तते विहितमतिक्रामेत् । अतश्च प्रायश्चित्ती प्राप्तः" ।

उच्यते । ग्रामस्य स्वामीस्यामिति फललिप्सया तस्य तत्र प्रवृत्तिर्न विधिलक्षणा । शास्त्रं तु यागग्रामयोः साध्यसाधनसंवन्धावेदकमेव । वस्तुतो यद्यपि

तत्रापि कर्तव्यताप्रधानप्रसाधनो वाक्यार्थः, तथापि फलसिद्ध्यर्थमेव कर्तव्यतां विधिरवगमयति । अतश्च यागमकुर्वतः फलं न निष्पद्यते, न पुनः प्रत्यवायः । यत्र प्रत्यवायस्तत्र च प्रायश्चित्तम् ।

"ननु च नित्यानामकरणे प्रत्यवायो भवतीति कुत इयमवगतिः । न ह्येवमग्निहोत्रादौ श्रूयते 'यो न कुर्यात्स प्रत्यवेयात्' " ।

श्रूयते वाक्यशेषेषु 'वेदिभ्यः परमा भवति' इति । सर्वत्रार्थवादाः प्रत्यवायप्रदर्शनार्थाः सन्ति । अवश्यं च तेषामालंबनं वाच्यं नान्यथा विधिनैकवाक्यतां भजन्ति । यत्रापि न श्रूयन्ते तत्रापि विध्यनुग्रहार्था अर्थवादाः प्रकल्प्यन्ते । किं चार्थवादैर्विधेरेव प्रवर्तकत्वम्, अन्यथा नोपपद्यते यावदप्रवृत्तौ प्रत्यवायपरिहारो न कल्पितः । एवंविध एवार्थे वृद्धव्यवहारे विधिः प्रवर्तते । वोध्यते तु पुरुषप्रवर्तनारूढोऽसौ । न च पुरुषा अपुरुषार्थे प्रवर्तयितुं शक्यन्ते । अतः प्रवर्तकत्वविहतविधिर्माभूदिति श्रुतिसिद्ध्यर्था कल्पनैषा । यद्यपि स्वर्गादिकल्पनायामपि तथार्थलाभस्तथापि यावज्जीवादिपदविरोधात्प्रत्यवायपरिहारार्थताऽपि स्यात् । उक्तम्—

'भयाद्धि यादृशी पुंसां प्रवृत्तिरुपजायते । न तादृशी भवेदत्र विधिकोटिशतैरपि' ॥

तस्मादकुर्वन्विहितम् इति नित्यं कर्मेति द्रष्टव्यम् ।

"ननु चाशुचिस्पर्शनादौ न नित्यावेदि किंचित्पदमस्ति, यावज्जीवमित्यादिवत् ।"

किमत्रान्येन पदेन निमित्तविशेषे यत् श्रुतं तस्य च तन्निमित्तेन कर्तव्यता प्रतीयते । नाधिकारान्तरं प्रत्यपेक्षा जायते । यदा निमित्तसंविधानं तदा कर्तव्यमित्युपगमैर्नित्यतासिद्धिः । अग्निहोत्रादावपि न नित्यशव्दोऽस्ति निमित्तनित्यत्वात् ।

प्रसज्जन्नविदितत्वेषु विषयेषु संस्कृतान्नभोजनचन्दनानुलेपनादिषु तात्पर्यत आसेवा प्रसङ्गो विषयाभिलाषपरतेति यावत् ।

"ननु चैतदपि प्रतिषिद्धम् 'इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामत' इति" ।

स्नातकव्रताधिकारान्नायं प्रतिषेध इति मन्यते । व्रतशव्दाधिकारे हि तत्र प्रतिषेधकः । संकल्पविशेषो हि मानसस्तत्रोपदिश्यते 'इदं मया न कर्तव्यमिति' ।

अथवा कश्चिदल्पप्रतिषेधे न तुल्यतां मन्येत, 'पदार्थस्तावदयं न निषिध्यत' इति मन्यमानः, अतः समानीक्रियते ।

अथवा सामान्ये तद्भूतस्यापि विशेषस्य पृथगुपदेशो दृष्टः, प्राधान्यख्यापनार्थम्। यथा 'ब्राह्मणा आयाताः', 'वसिष्ठोऽप्यायात' इति।

प्रायश्चित्तीयते। प्रायश्चित्तशब्दो रूढिरूपेण विशिष्टे नैमित्तिके वर्तते। तदेतीच्छति वेति विनिमयः (?) कर्त्तव्यो "व्यत्ययो बहुलम्" इति (व्या० सू० ३।१।८५)।

नर इति वचनं चातुर्वर्ण्याधिकारार्थम्॥ ४३॥

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः॥
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥ ४४॥

कामकारकृतेऽप्यतिक्रमे प्रायश्चित्तगौरवार्थमिदमुच्यते।

अकामतः कृत इति प्रमादकृते पापे शास्त्रव्यतिक्रमे प्रायश्चित्तमाहुः। कस्य पुनर्हेतोः। विधिः। 'प्रतिशास्त्रमतिक्रम्याकार्ये प्रवर्तते स प्रायश्चित्तमाचरिष्यत' इति। कोऽत्र विशिष्टहेतुः यस्मात्कामकृते दोषे प्रायश्चित्तशास्त्रानर्थक्यमिति मन्यन्ते। एवं पूर्वपक्षभङ्ग्योपन्यस्यति। कामकारकृतेऽपीति शब्दात्कामतोऽकामतश्च कृते व्यतिक्रमे प्रायश्चित्तं कर्त्तव्यमिति शास्त्रार्थः।

श्रुतिनिदर्शनादिति वैदिकलिङ्गनिदर्शनमुपहव्यब्राह्मणमुदाहर्तव्यम् 'इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत्'। न च श्वभ्यो दानं यतीनामकामतः संभवति। उपहव्यं प्रायश्चित्तार्थं प्रजापतिरिन्द्राय प्रायच्छदिति स्पष्टार्थः॥ ४४॥

अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति॥
कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः॥ ४५॥

किं पुनरेतानि प्रायश्चित्तानि निमित्तमात्रपर्यवसायीनि सन्ध्योपासनादिवत्, उत कार्यपर्यन्तानि शारीरशौचवदुत्पन्नदोषनिर्घातार्थानि।

तत्र केचिदाहुः। न हि कर्म क्षीयते। कार्यविरामित्वमेव धर्माधर्मयोः। न हि कर्माणि स्वफलमदत्वा प्रलीयन्ते। तदुक्तं 'न हि कर्म क्षीयत' इति। तस्माद्योऽतिक्रमकारी स ततो नरकफलं भुङ्क्त एव। प्रायश्चित्तानि यदि न करोति ततस्तदतिक्रमात्प्रत्यवायान्तरोत्पत्तिः।

तदेतदयुक्तम्। न हि कर्म चरितव्यमतो नित्यं प्रायश्चित्तम्। 'विशुध्यत' इति

स्वशब्देनैव शुद्ध्यर्थता विहिता। तथा च तैः कृतैरपोहेत पापं स्वयं कृतत्वात्। यदप्युच्यते "प्रतिषेधविधिना प्रतिषिध्यमानक्रियाकर्तुः प्रत्यवायभागित्वमवगमितं, न तस्य प्रायश्चित्तैर्मिथ्यात्वं शक्यते कर्तुं" तदप्ययुक्तम्। यतस्तेन दुःखहेतुता तस्यावगमिता। प्रायश्चित्तेष्वपि तपोदानादि दुःखमस्त्येव। अल्पेन तादात्मिकेन दुःखेनागामिनः संभाव्यमानस्य महतो दुःखस्य निवृत्तिर्युक्तैव। यथा व्याधेस्तिक्त-कटुकौषधदानलब्वाहारादिना। यथा व्यतिक्रमं कृत्वा कश्चित्स्वयमागत्य राजनि वेदनं करोति 'इत्येवं कर्मास्मि' इति सोऽर्द्धदण्डभाग्भवति। यस्तु राजपुरुषैर्हठा-दानीयेत स भूयो दण्ड्यते।

एवमुपदेशानामर्थवत्त्वसिद्धिः। अतः स्वयं कार्यविरोधित्वमस्य विहितत्वात्। निष्कृतिः प्रायश्चित्तमिति समाख्यानमपि सत्तदेव कृतदोषस्य निर्यातनमपि। अकारणं निर्यातो निष्कृतिरिति उच्यते। एवं प्रायश्चित्तमपि नास्याधिकारप्रति-प्रसवार्थम्। पंचानामेव पातकानामधिकारोपगमविहितत्वाद्द्विजातिकर्मभ्यो हानिः पतनमिति।

न चात्र 'वेदाभ्यासोऽकामतः, कामतस्तप इति, विषयविभागो बोद्धव्यः। उभयार्थोभयत्रोपदर्शनार्थत्वात्। निमित्तोपदेशकरणे पठितत्वात्। 'ब्रह्महा द्वादशे'त्यादि प्रायश्चित्तानामुपक्रम्यमाणत्वात्। तस्मादकामतो लघुप्रायश्चित्तं कामतो गरीय इति श्लोकस्य तात्पर्यम्।

"ननु चाकामतो नैव तस्य कर्तृत्वं, बुद्धिपूर्वं, कुर्वन्कर्त्तेत्युच्यते। यथा च लौकिको 'दैवेन कार्यते। किमयं करोतीति'। किं च लिप्सया यत्र प्रवृत्तिस्तत्र प्रतिषेधः। यो हि मद्याय स्पृहयति स पिपासुं न कदर्थयति 'मा पासीः सुराम्' इति। यस्तु जलार्थी जलबुद्ध्या सुरां पीतवांस्तस्याजानतो नापराधो न हि तस्य सुरालिप्सया प्रवृत्तिः।

अथोच्यते 'विधिलक्षणाप्रवृत्तिर्न निषिध्यते', सत्यम्। भवत्वनर्थलक्षणानां तु मध्ये तद्युदकेन च सर्वस्य अर्थलक्षणायाः प्रतिषेधः"।

केचिदाहुः। प्रत्यवायपर्यन्तो विधिर्विषभक्षणवन्निषेधशास्त्रार्थः। तेषामचो-द्यमेतत्। विपमविशेषेणोपात्तं ज्ञानतोऽज्ञानतश्च मरणाय कल्पत एव। एवं ब्रह्महत्यादयोऽपीति। येषामपि 'कर्तव्यमिति वचनात्' क्रियते, 'न कर्तव्यमिति'

न क्रियते, तेषामपि लौकिकक्रियया प्रवर्तमानस्य निषेधः प्रवर्तमानश्चोच्यते प्रवृत्तः कर्त्ता। कर्तृत्वमबुद्धिपूर्वकमप्यस्ति। कूले पततीति। न चायं गौणः कर्तृताभावः। 'स्वतन्त्रः कर्ते'ति हि स्मर्यते। ने'च्छया प्रवर्तते यः स कर्तेति'। किं चास्मादेव वचनात्प्रमादकृतो दोषोऽस्ति, प्रायश्चित्तमिति, किमपरेण विकल्पितेन ॥ ४५ ॥

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ॥
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४६ ॥

दैवात्स्वीकृतात्प्रमादादित्यर्थः।

अन्ये तु दैवशब्दस्थाने मोहादिति पठन्ति। मोहादेवाकार्यं क्रियते। को ह्यमूर्खः शास्त्रं व्यतिक्रमिष्यति।

पूर्वकृतेन जन्मान्तरकृतेन चोपभुक्तफलेन कर्मणा विशेषेण कौनख्यादिलिङ्गाद्यनुमितेन। एतदुक्तं भवति। इह जन्मकृते व्यतिक्रमे बुद्धिपूर्वमबुद्धिपूर्वं वा तथा जन्मान्तरकृतेऽपि लिङ्गानुमेये कर्तव्यम्।

किं पुनः कुनख्यादीनां प्रायश्चित्तम्।

कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तानि। वसिष्ठेन तु 'यस्य यल्लिङ्गं तेन तदेव प्रायश्चित्तं केनचिदंशेन कर्तव्यमिति' पठितम्।

अतश्चैव ते सर्वेऽकृतप्रायश्चित्ताः संसर्गं सद्भिर्वर्जयेयुः। अध्ययनादिक्रिययैकस्थानादिरूपतया।

संसर्गो यद्यप्युभयाश्रयत्वादन्यतरप्रतिषेधेनोभयोरपि सिद्धः प्रतिषेधस्तथापि, 'सद्भिस्तैः संसर्गो न कर्तव्य' इति पुनः प्रतिषिध्यते उत्तरत्र, कर्तृभेदात्। एकस्य हि प्रतिषेधे स एव प्रायश्चित्ती स्यान्न द्वितीयः, सत्यपि संसर्गे। अत उभयोः प्रायश्चित्तार्थमुभयत्र प्रतिषेधः। सतामसतां चातः श्यावदन्तिप्रभृतिभिरकृतप्रायश्चित्तैः सह संसर्गो न कर्तव्यः ॥ ४६ ॥

इह दुश्चरितैः केचित्केचित्पूर्वकृतस्तथा ॥
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ४७ ॥

एतदेवाह। इह दुश्चरितैः केचिदस्मिन् जन्मनि प्रतिषिद्धाचरणैः। तथा पूर्वकृतैः कर्मभिस्तथोक्तं प्राक्। स इदानीं रूपविपर्ययप्रपञ्चो दुष्कृतशेषचिह्नरूपतोऽनुक्रम्यते ॥ ४७ ॥

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् ॥
ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥ ४८ ॥
पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् ॥
धान्यचौरोऽङ्गहीनत्वमातिरैक्यं तु मिश्रकः ॥ ४९ ॥
अन्नहर्तामयावित्वं मौक्यं वागपहारकः ॥
वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः ॥ ५० ॥
एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः ॥
जडमूकान्धवधिरा विकृताकृतयस्तथा ॥ ५१ ॥

क्षयो नाम रोगो राजयक्ष्मेति वैद्यानां प्रसिद्धस्तेन तद्वान्भवति ब्रह्महत्याविशेषेण।

गुरुस्त्रीगामी दुश्चर्मा।

क्वथितगन्धवाहिन्या नासिकया युक्तः पिशुनः।

एवं सूचको दुर्गन्धवाह्यास्यः।

"ननु च सूचकः पिशुन" एव।

सत्यम्। एकः कल्पयित्वा परदोषान् प्रकाशयति। अन्यस्तु सत्यानेवाविदितानिति भेदः।

आतिरैक्यमधिकांगता। मिश्रको यो द्रव्याण्यद्रव्यैस्तदाभासैः संमर्दयति। यथा कंकुमं कुसुंभेनान्यैरन्यानि।

आमयावी यस्य भुक्तमन्नं न सम्यक् जीर्यते।

मौक्यं वाग्वैकल्यं यत्राप्रतिपत्तिमानपस्मारी।

शिष्टं प्रसिद्धम्।

विकृताकृतयः। 'आकृतिः' संस्थानं 'विकृता'ऽमनोरमा निन्दितैषां कर्मविशेषेणेति। एषां कर्मणां कुम्भीपाकयमयातनास्थानेषु फलं तदनुभूतवत ईषच्छेषे तस्मिन् कर्मण्युद्रिक्ते च सुकृतेऽदत्तफले फलदानोन्मुखे दुष्कृतस्यासद्भावोऽतः कर्मविशेषोपपत्तिः॥ ४८—५१ ॥

चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये ॥
निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः ॥ ५२ ॥

निन्द्यैर्हि लक्षणैः कुनखश्यावदन्तादिभिरनिष्कृतैनसः ॥ ५२ ॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ ५३ ॥

गुर्वङ्गनागमः स्तेयं पतितसंप्रयोगः सर्ववर्णानां महापातकानि। सुरापानं ब्राह्मणस्यैव।

स्तेयं ब्राह्मणसुवर्णहरणं—स्मृत्यन्तरात् 'ब्राह्मणसुवर्णापहरणे महापातकम्' इति।

पातकशब्दः पातयतीति व्युत्पत्त्या सर्वव्यतिक्रमेषु वर्तते, महापातकेषूपपातकेषु च। महच्छब्दो गुरुत्वप्रदर्शनार्थः।

तैश्च संयोगमेकैकेनापि। स च वक्ष्यति 'संवत्सरेण पतति' इत्यादिना ॥५३॥

अनृतं च समुत्कर्षे राजगामि च पैशुनम् ॥
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ५४ ॥

समुत्कर्ष इति निमित्तसप्तमी, 'चर्मणि द्वीपिनं हन्ति' इतिवत्। समुत्कर्षं प्राप्स्यामीति यदनृतमभिधीयते तद्ब्रह्महत्यया समम्। यत्र पूजातिशयो धनातिशयो ब्राह्मणत्वेन श्रोत्रियत्वेन महाकुलीनतया वा प्राप्यते तत्रातद्रूपमात्मानमावेदयति। यो वा पात्रातिशयेन पुण्यस्कन्धोत्कर्षं प्राप्तुमिच्छति तस्यापात्रं पात्रमित्युच्यते। एवंविधे समुत्कर्षेऽनृतम्। न पुनः स्वल्पवस्तुनि अपेक्षायां, सत्यपि समुत्कर्षव्यपदेशे।

पिशुनमलीकवदिति परच्छिद्रप्रकाशनम्।

गुरोश्चालीकनिर्बन्धोऽसत्याभिधानेन चित्तसंक्षोभः, 'कन्या ते गर्भिणी' इत्येवमादिना निष्प्रयोजनो द्वेषः। राजकुलात्तेन सह विवादो निर्बन्धोऽनृताभिशंसनं वा। तथा च गौतमो 'गुरावनृताभिशंसनम्' (२१-१०) इति पातकसमानि ॥५४॥

ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ॥
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥ ५५ ॥

अधीतस्ववेदस्यानाभ्यासेन विस्मरणं ब्रह्मोज्झता। नित्यस्वाध्यायविधेः त्यागो वा।

कूटसाक्ष्यं समुत्कर्षादन्यत्रापि।

सुहृद्वधो मित्रमारणम्।

गर्हितानाद्ययोः। गर्हितं शास्त्रप्रतिषिद्धं लशुनाद्यनाद्यममनस्तुष्टिकरं, न भोक्ष्य इति कल्प्य यद्भुज्यते ॥ ५५ ॥

निक्षेपस्यापहरणं नराश्वरजतस्य च ॥

भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ ५६ ॥

निक्षेपस्यासारद्रव्यस्यापि।

नराश्वशब्दो जातिशब्दो, नारीहरणेऽप्येतदेव। यो हि दुहितरं दत्वाऽसति नरदोषेऽन्यस्मै पुनर्ददाति, तस्याप्येतदेव। तदुक्तं 'प्राप्नोति पुरुषोऽनृतम्' इति ॥ ५६ ॥

रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ॥

सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ ५७ ॥

स्वयोनयो भगिन्य एकोदरसंभूताः।

कुमार्योऽनूढाः।

अन्त्यजा बर्बरचंडालस्त्रियः।

सख्युः। सखा मित्रं तस्य स्त्रियः। स्त्रीग्रहणं न जायायामेव प्रतिषेधार्थम्। एवं पुत्रस्यान्यापि या अवरुद्धा मैथुनधर्मेण।

वयं तु ब्रूमः। सत्यपि स्त्रीग्रहणेनोढानूढयोर्विषमसमीकरणस्यान्याय्यत्वात्समत्ववचनम्। एतन्न प्रायश्चित्तनिर्देशार्थं, किं तर्हि, गुरुत्वख्यापनपरम्। अतश्च गुरुतरं प्रायश्चित्तं भवति। तथा चोक्तं 'एनसि गुरुणि गुरूणि लघुनि लघूनि'। यदि ह्येतत्प्रायश्चित्तनिर्देशार्थमभविष्यत्प्रायश्चित्तनिर्देशप्रकरण एव वाऽवक्ष्यत्। कौटसाक्ष्यसुहृद्वधयोश्चेह सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तातिदेशमुपरिष्टान्न कुर्यात्। 'गुरोश्चालीकनिर्बन्ध' इत्येतस्य चेह ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टात् ब्रह्महत्याप्रायश्चित्ताभिधानात्। तथा कुमार्यामिति रेतःसेकस्य गुरुतल्पसमीकृत-

स्येह पुनस्तत्र गुरुतल्पप्रायश्चित्तविधानाद्गम्यते नेदं प्रायश्चित्तार्थं समीकरणमिति ।

अन्ये तु मन्यन्ते । भेदेन समीकरणं गुरुत्वभावेऽपि विवक्षिते नान्यगम्यम् । अतः प्रायश्चित्तार्थमेव सुरापानस्य समीकृतयोश्च कौटसाक्ष्यसुहृद्वधयोर्ब्रह्महत्याप्रायश्चित्तनिर्देशो विकल्पार्थं सुरापानप्रायश्चित्तेन । अस्य चातिदेश एव श्रूयते । समीकरणे तु विकल्पो नास्ति । यथा 'हत्वा गर्भमविज्ञातम्' इति ॥ ५७ ॥

इदानीमुपपातकान्याह

गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयाः ॥
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ ५८ ॥

अयाज्या अविरुद्धापातकिशूद्रादयस्तेषां संयाज्यं संयाजनम् । भावे ण्यच्छान्दसः ।

आत्मविक्रयं गवादिद्रव्यवदात्मनः परविधेयकरणं दास्येन ।

अन्ये तु पारदार्यमविक्रयमिति पठन्ति ।

अनुत्साहो निराहारः स्वल्प एवोपघातेऽवसादाश्रयणम् ।

गुरोस्त्यागो यथावदननुवृत्तिः । अध्यापनसमर्थेऽध्यापयितर्युपाध्यापकान्तराश्रयः ।

एवं मातापित्रोः ।

अपतितानां चैतेषां त्यागो दोषाय । पतितानां त्विष्ट एव ।

स्वाध्यायाग्न्योस्त्याग इति संबध्यते । स्वाध्यायस्य त्यागश्च 'अहरहः स्वाध्यायमधीयीत' इत्यस्य विधेरननुष्ठानम् ।

"किमैकाह्निके माससांवत्सरिके वा त्यागे व्यतिक्रमोऽयम्" ।

अविशेषादैकाह्निके प्राप्नोति ।

तदयुक्तम् । एतस्य विधेर्नित्यत्वात् । नित्यानां च व्यतिक्रमे प्रायश्चित्तान्तरं वक्ष्यति । तस्माद्विस्मरणपर्यन्तस्त्यागोऽभिप्रेतः ।

स ब्रह्मोज्झतापदेन सुरापानेन समीकृतः । तत्र विकल्पनार्थमेतत् । अस्य च लघुत्वात्तस्य गुरुत्वाद्व्यवस्थायां विकल्पो योज्यः । तत्र यो वैदिक एवान्यस्मिन् कर्मणि युक्ततया स्वाध्यायं जहाति तस्योपपातकत्वम्, यस्तु भोगसेवयाऽर्थपरतया कलहशीलतया जहाति तस्य सुरापानसमत्वम् ।

अग्नेस्त्वेकत्वविशिष्टस्येहोपादानादृगृह्यस्येति द्रष्टव्यम् । 'प्रागग्नीनिति' बहुवचनाच्छ्रौतानां ग्रहणम् ।

"ननु च तत्रापि चान्द्रायणमुक्तमिहाप्युपपातकत्वात्तदेवात्र वाच्यम्" ।

नैष दोषः । उपपातकेष्वप्यन्यान्यपि प्रायश्चित्तानि सन्ति । शक्त्यपेक्षया गुरुलघुभावो न्यूनाधिकभावः । अतो नियमार्थं तत्र चान्द्रायणग्रहणम् ।

सुतस्य त्यागोऽभरणं गृहान्निष्काशनमशिशोः प्राप्तस्य च गुणवतः, पातकिनस्तु न दोषः ॥ ५८ ॥

परिवित्तिताऽनुजेऽनूढे परिवेदनमेव च ॥
तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ ५९ ॥

अनुजः कनीयान् भ्राता ।

तयोर्याजनं विवाहे दर्शपूर्णमासादौ वाऽऽर्त्विज्यम् ॥ ५९ ॥

कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् ॥
तडागारामदाराणामपत्यस्य च विक्रयः ॥ ६० ॥

कन्याया दूषणं नेयं कन्या पुरुषेणोपभुक्तेत्यध्यवसायेन प्रतिपादनम् । अंगुष्ठादिना वा प्रजननं धर्मभेदो मैथुनधर्मवर्जम् । तत्र हि गुरुतल्पसाम्यमुक्तम् ।

वार्धुषित्वं अनापदि धनप्रयोगेण वृत्तिग्रहणम् । वासिष्ठे तु 'वृद्धेस्तु प्रयोक्ता धान्यानां वार्धुषित्वं तदुच्यते' । सा च शास्त्रपरिभाषा । न लौकिके वा पदार्थे ।

व्रतच्युतिः शिष्टप्रतिषिद्धेऽमुष्यगृहे न भोक्तव्यमुपवस्तव्यमेवंरूपः संकल्पो 'व्रतम्' । ततो यः संकल्पाच्चलति सा तस्य व्रतच्युतिः ।

"ननु च व्रतमिति इच्छाकृतो नियम उच्यते । यदि चेच्छाकृतः संकल्पस्ततो निवृत्तौ कः शास्त्रातिक्रमो 'विहितमकुर्वन् प्रायश्चित्तीयत' इत्युक्तम् । न चैतद्विहितम् ।

उच्यते । सत्यमिच्छालक्षण आरम्भः । समाप्तिस्तु शास्त्रीया । यथा सौर्यादीनां काम्यानां कर्मणां लिप्सातः प्रवृत्तिः, समाप्तिस्तु शास्त्रीया । अतीतायां फलेच्छायामवाप्ते वा फले यथोक्तं तदर्थं एवावशिष्टं वर्जयेयुः ( × × ) प्राक्रमिकोऽयं कापुरुष इति वदन्तः । स्नातकव्रतानां त्वत्यन्तलघीयः प्रायश्चित्तं प्रवक्ष्यते । तेनेदं विकल्पितुमर्हति ।

आराम उद्यानोपवनादि । स्मृत्यन्तरे सर्वभूमिरविक्रेया ॥ ६० ॥

व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च ॥
भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥ ६१ ॥

बान्धवा ज्ञातयः सोदरादिभ्योऽन्येपि मातुलमातृष्वस्रेयादयः । सति विभवे तेऽप्यजीवन्तो भर्तव्याः । तदुक्तं 'स्वजने दुःखजीविनि' इति ।

"यद्येवं सुतस्येत्याद्यनर्थकम्" ।

न, अनन्यार्थं वचनम् । जालपादप्रतिषेधे हंसप्रतिषेधवत् । तेन मात्रादित्याग उपपातकमेव । इह तु लघीय इति ।

भृत्याध्यापनम् ।

भृतकस्य सतोऽध्यापकत्वात् यश्च भृतकादधीते ।

अपण्यानि दशमे उक्तानि ॥ ६१ ॥

सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम् ॥
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥ ६२ ॥

आकराः सुवर्णादिभूमयस्तत्राधिकारो राजनियोगेनाधिपतित्वम् सर्वग्रहणादन्यदप्यर्थोत्पत्तिस्थानं गृह्यते । तेन ग्रामनागरनियोगो व्यवहारदर्शनदण्डग्रहणादियोगः ।

एवमेव यन्त्राणि सेतुबन्धादीनि जलप्रवाहनियमार्थानि तेषां महतां प्रवर्त्तनम् ।

औषधीनामशुष्काणां हिंसाच्छेदः ।

स्त्रीणामाजीवः । स्त्रिय उपजीव्यते । स्त्रीधनेन शरीरकुटुम्बधारणं क्रियते । भार्यापण्यभावो वेशस्त्रीप्रयोजनं वा ।

अभिचारो वैदिकेन शापादिना मन्त्रप्रयोगेण श्येनादियागेन वा शत्रुमारणम् ।

मूलकर्म वशीकरणं मन्त्रादिक्रिययैव ॥ ६२ ॥

इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् ॥
आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥ ६३ ॥

इन्धनाद्यर्थं तु न दोषः अग्निशुद्धत्वाच्छुष्कसर्वसंभवे ।

क्रियारम्भः पाकारम्भः । 'आतुरत्वादेवात्मार्थं न भवेदिति' प्रतिषेधात् ।

क्रियारम्भ एवं व्याख्यायते। क्रियारम्भे हि प्रायश्चित्तोपदेशादेव प्रतिषेधः कल्प्येत। न ह्यप्रतिपिद्धप्रायश्चित्तं युक्तं 'निन्दितं च समाचरन्' इति वचनात्। अद्य पुनर्यत्प्रभाषितं तथासिद्धे प्रतिषेधे प्रायश्चित्तं विधीयते। न कल्पनागौरवं भवति तेन।

निन्दितान्नादनम्।

"ननु गर्हितान्नाद्ययोरिति कुत एतत्"।

विकल्पार्थम्। अभ्यासे तत्प्रायश्चित्तमिदं तु सकृदेव। प्रत्ययभेदो वा॥ ६३॥

अनाहिताग्निता स्तेयमृणानामनपक्रिया॥
असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया॥ ६४॥

कृतविवाहस्य विदुषो द्रव्यसंपत्तौ जातपुत्रस्य वाऽनाहिताग्निता। साऽधिकाराविशेषान्नित्यश्रुतयो नित्याधानस्य प्रयोजिका इति स्मृतिकारो मन्यते।

"कथं पुनः श्रुतिप्रयुक्तमाधानं विहितम्। कस्यचित्प्रकरणे कथ्यते येनागमोऽप्युच्छिद्येत। स्वतश्च प्रतीयमानाधिकारत्वादग्निनिष्पत्त्यर्थतया कुतोऽधिकारान्तरप्रयुक्तिः"।

अग्नयस्तावद्विनियुक्ता 'यदाहवनीये जुहोति' इत्यादिना। न चाधानेन विना तेषां निष्पत्तिरित्यतोऽग्निषु प्रयुक्तेषु तदपि प्रयुक्तमित्युच्यते।

"यद्येवमग्निनिष्पत्त्यर्थं तदाहिताग्निष्वधिकारोऽसत्स्वग्निषु नाधिक्रियते। न चाधानं नित्यं यावज्जीवादिविधिवदतः कथमनाहिताग्नितादोषः"। 'अकुर्वन् विहितं कर्मेति' विहिताकरणे प्रायश्चित्तं विहितम् 'अग्नीनादधीतेति'। "सत्यं विहितम्। न स्वर्गाय नाधिकारान्तर संपत्तये। किं तर्हि, अग्निनिष्पत्तये। अग्नेश्च ज्ञातप्रयोजना यस्य तैः प्रयोजनं स तेनोपायेनार्जयति, अन्यस्तु नेति। का तत्र विहिताकरणाशङ्का येन प्रायश्चित्ती स्यात्। यो हि सुवर्णं नार्जयति कथमसौ दुष्येत"।

उच्यते। अस्मादेव वचनात्सत्यधिकारेऽग्नयोऽवश्यमर्जनीया इति गम्यते।

स्तेयमुक्तेभ्यो द्रव्येभ्योऽन्यस्य।

ऋणानां "चतुर्भिर्ऋणैः" इत्येतच्छ्रुतेरननुष्ठानम्।

असच्छास्त्राणि चार्वाकनिर्ग्रन्थाः, यत्र न प्रमाणं न वेदकर्म फलसंबद्धमापद्यते।

कौशीलवत्वं चारणत्वं नर्तनत्वं गायनत्वम्॥ ६४॥

धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् ॥
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥ ६५ ॥

शणसप्तदशानि धान्यानि ।

कुप्यं लोहताम्रादिमयं कुण्डकटाहादि

"ननु चाविशेषेण पूर्वश्लोके स्तेयमुक्तम्" ।

परिहृतमेतत् 'हंसप्रतिषेधवदिति'। अथवा स्तेयं यदन्यस्माद्धृते गृहीते संभवेनाशोध्यते न हि जातु स्तेयमिति लोकप्रसिद्धं यथा धैर्यादिना अपकरणम् ।

मद्यपेति ।

ब्राह्मणस्य क्षत्रियादिस्त्रीनिषेवणं सह शयनं संप्रयोगं वा ।

स्त्रिया वधो, ब्राह्मण्या अपि ।

नास्तिक्यं नास्ति परलोको नास्ति दत्तमित्याद्यभिनिवेशः ॥ ६५ ॥

ब्राह्मणस्य रुजःकृत्यं घ्रातिरघ्रेयमद्ययोः ॥
जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥ ६६ ॥

दण्डहस्तादिना शरीरपीडाजननं रुजःकृत्यम् ।

"किं पुनरघ्रेयम् । न हि भक्षणप्रतिषेधवत् घ्राणप्रतिषेधः क्वचिदस्ति । न तु शक्यं विज्ञातुं यदभक्ष्यं तदघ्रेयमिति । घृतादेर्यागार्थमुपात्तस्याभक्ष्यत्वन्नचाघ्रेयत्वम्" ।

उच्यते । पूतिदुर्गन्धतया घ्राणं विकरति लशुनपलाण्डुपुरुषपुरीषादि तद्गृह्यते । मद्यसाहचर्याच्च यदभक्ष्यं तदेव विज्ञायते । न पूतिदार्वादि ।

जैह्म्यं कुटिलताऽप्रसन्नहृदयत्वम्, अन्यदुच्यतेऽन्यत्क्रियते हृदये चान्यत् ॥६६॥

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ॥
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ ६७ ॥

मृगा रुरुपृषतादय आरण्याः । इभो हस्ती । सत्यपि मृगत्वे बाहुल्येन ग्रामवासित्वाद्ग्रहणम् । मीनो मत्स्यः । अहिः सर्पः ॥ ६७ ॥

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ॥
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ ६८ ॥

निन्दिता अप्रतिग्राह्याः शूद्रा ये पापकर्माणस्तेभ्यो धनादानं प्रतिग्रहेण पुनः पुनः, प्रत्यादिष्टप्रतिग्रहस्य प्रतिषिद्धत्वात् ॥ ६८ ॥

कृमिकीटवयोहत्या मद्यानुगतभोजनम् ॥
फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥ ६९ ॥

कृमयो भूमिशरणाः क्षुद्रजन्तवः । कीटास्तथाविधा एव किञ्चिदुपचितमूर्तयोऽपक्षाः सपक्षाश्च मक्षिकाशलभादयः । वयांसि पक्षिणः शुकसारिकादयः । मद्यानुगतं मद्येन संस्पृष्टं तद्गन्धाचितं च । अधैर्यं चेतसोऽस्थिरत्वं स्वल्पेऽप्युपघातेऽपध्वंसः ॥ ६९ ॥

एतान्येनांसि सर्वाणि यथोक्तानि पृथक्पृथक् ॥
यैर्यैर्व्रतैरपोह्यन्ते तानि सम्यङ्निबोधत ॥ ७० ॥

प्रायश्चित्तनिमित्तान्युक्तानि । संज्ञाभेदश्च प्रायश्चित्तभेदार्थः । वक्ष्यमाणस्य संक्षेपवचनम् ॥ ७० ॥

ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत् ॥
भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥ ७१ ॥

तृणपर्णादिकृतो निकेतो वर्षातपशीतत्राणादिहेतुर्गृहं कुटीति कथ्यते ।

समा वर्षाणि ।

भैक्षाशीति स्मृत्यन्तरे सप्तागारमनभिसंहितं च भैक्ष्यमुक्तम् ।

शवशिरो हतस्यान्यस्य वा ध्वजे काष्ठादिमयी शिरःप्रतिकृतिमुद्यतां धारयेदिति मन्यते ।

नैवं शब्दार्थविदः । न हि तच्छवशिर इत्युच्यते ।

अन्योऽप्यत्र विधिर्भविष्यति 'कृतवापनो निवसेत्' इत्यादि ॥ ७१ ॥

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ॥
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ ७२ ॥

धानुष्का यत्र युद्धं कर्तुं लक्षं विध्यन्ति तत्र तद्भूतेन भवितव्यम् । अथवा संग्रामेऽन्यत्र युध्यमानानां शस्त्रप्रहाराः प्रतीप्सितव्याः । आत्मन इच्छयेति । प्रमादात्तदन्तरंगतस्य सत्यपि स्ववधे न शुद्धिः ।

विदुषामित्येव जानते प्रायश्चित्तोपदेशोऽयमिति । अथवा धनुर्वेदज्ञानाम् ।
अग्नौ वाऽऽत्मानं क्षिपेत्समिद्धे त्रिरुत्थाय पुनः पतेत् ॥ ७२ ॥

यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा ॥
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुताऽपि वा ॥ ७३ ॥

जनपदेश्वरस्याश्वमेधेऽधिकारः । तत्र हिरण्यादिप्राच्यादिदिग्भ्यः आहृतं द्रव्यं दक्षिणा विहिता ।

ये चानाहिताग्नयस्ते न यागेष्वधिक्रियन्ते । न पुनस्तदर्थमेवाधानं कर्तव्यम् । कर्माणि हि प्रायश्चित्तार्थानि सांगानि । न चांगमाधानम् ॥ ७३ ॥

जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ॥
ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ॥ ७४ ॥

मितभुग्यावता न तृप्यति ।

नियतेन्द्रियो ब्रह्मचारी विषयेष्वगृध्नुः ॥ ७४ ॥

सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् ॥
धनं हि जीवनायालं गृहं वासःपरिच्छदम् ॥ ७५ ॥

यावत्किंचिद्गोहिरण्यादिकं तत्सर्वं दातव्यम् ।

अत्राऽर्थवादो धनं हि जीवनायालमिति । तावता धनेन दत्तेनान्यस्मै जीवितं दत्तं भवतीत्येव साम्यम् ।

गृहं वासःपरिच्छदम् । परिच्छदशब्देन यावत्किंचिद्गृहोपकरणं सर्पिस्तैलधान्यादि कुण्डकटाहादि कुप्यशयनासनादि तत्सर्वं गृह्यते ॥ ७५ ॥

हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम् ॥
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ॥ ७६ ॥

हविष्यं भुन्नन्नं नीवारादि ग्राम्यमपि पयोघृतादि ।

प्रतिस्रोतः स्रोतःस्रोतः प्रति यावन्ति सरस्वत्याः स्रोतांसि तावन्त्यनुसरेत् ।

नियताहार आहारनिवृत्तिं कृत्वा ।

वेदसंहिता समन्त्रब्राह्मणकाम् । त्रिरावर्तेत ।

एतेषां प्रायश्चित्तानामियमत्र व्यवस्था ।

बुद्धिपूर्वेण ब्राह्मणमात्रवधे द्वादशवार्षिकं 'लक्ष्यं शस्त्रभृता' मनेन विकल्प्यते। यद्यपि द्वादशवार्षिके न मरणान्तं तथापि दैवोपपत्तिपतितेऽन्तरामरणे सामिकृते प्रायश्चित्ते शुद्ध्यभावात् प्रत्यवायो न निवर्तते। द्वितीये तु तदानीमेव निर्मुक्तपापः। शस्त्रहतो वा कदाचिन्न म्रियेत। अत एव आद्योपात्तप्रायश्चित्तमिच्छया विकल्पेन दातव्यम्।

अग्नौ प्रवेशस्तु श्रोत्रियत्वादिगुणयुक्ते। तत्रापि सवनगुणेऽग्नौ। सन्ति ब्रह्मघ्नस्त्रिरवस्थास्तस्यावसानं शस्त्रेण गात्राणां खण्डशो विदारणं सवनगत इति पठन्ति। न च प्राणान्तिकेषु द्वैगुण्यसंभवः। न ह्येकस्मिन् जन्मनि द्विर्मरणोपपत्तिः। तत्तुल्यपीडानुभवात्तस्य द्वैगुण्यम्। न च द्वादशवार्षिकं द्विगुणं युक्तम्। को हि देवसमश्चतुर्विंशतिवर्षाणि प्रायश्चित्तं चरेत्। संवत्सरशेषे हि मृतस्य सर्वं निष्फलं स्यात्।

अश्वमेधयागस्तु त्रैवर्णिकानां सति संभवे पूर्वोक्तैर्विकल्प्यते।

गोसवादयस्त्वबुद्धिपूर्वं महागुणवति हन्तरि स्युः।

योजनशतं बुद्ध्या च ब्राह्मणजातीयमात्रवधे। एवमुत्तराण्यपि। त्रिवृताग्निष्टुतेति समानाधिकरणे। एवं स्वर्जिता गोसंवेनेति अभिजिद्विश्वजितौ द्वे प्रायश्चित्ते ॥ ७६ ॥

**कृतवापनो निवसेद्ग्रामान्ते गोव्रजेऽपि वा ॥**
**आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ ७७ ॥**

द्वादशवार्षिकस्यायं विशेषः कश्चिद्वैकल्पिकधर्म उपदिश्यते। वपनं अपूर्वम्।

आश्रमवृक्षमूले वैकल्पिकमेव वा कुटी स्यात्।

"किमर्थं पुनस्तत्रैव नोक्तम्।"

प्रक्रान्तद्वादशवार्षिकस्य वक्ष्यमाणं यथा स्यात् पृथक् प्रायश्चित्तं मा भूदिति पूर्वैर्व्याख्यातम्। स्वतन्त्रं ह्यन्यस्मिन् प्रक्रान्तेऽन्यत्र प्राप्नोति, प्रक्रान्तासमाप्तौ दोषश्रवणात्। पृथगधिकारात्पृथक्प्रयोगता। अन्यस्यान्यतरप्रयोगः ॥ ७७ ॥

**ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान्परित्यजेत् ॥**
**मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च ॥ ७८ ॥**

अपरित्रायाऽपि सम्यक् प्राणपरित्यागेन मुच्यते। परित्रायाप्राणत्यागेनापि ॥ ७८ ॥

त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा ॥
विप्रस्य तन्निमित्ते वा प्राणालाभेऽपि मुच्यते ॥ ७९ ॥

प्रतिरोद्धा प्रवृत्तः शस्त्रेण क्षतो वा युद्धकरणे।

त्र्यवरम्। यदि न्यूनं तदा तिस्र आवृत्तयः। कृते युद्धेऽसौ मुच्यते, अपरित्राय मृतोऽपि।

सर्वस्वमवजित्येति ब्राह्मणादीनां चौरापहृतं यदि प्रत्यानयति, तदा मुच्यते। ब्राह्मणस्य वा तन्निमित्ते प्राणदाने।

"ननु चोक्तं 'गोप्ता गोब्राह्मणस्ये'ति"।

सत्यम्। युद्धेनान्येन वा शरीरव्यापारेण गां पङ्कलग्नां दस्युभिर्वोह्यमानां ब्राह्मणं शत्रुभिश्चौरैर्नद्या वाऽपह्रियमाणं यदि मोक्षयति ततः शुध्यतीत्युक्तम्। इह तु तन्निमित्तग्रहणाद्यदि धनेऽपह्रियमाणे ब्राह्मणो व्यामूढतयाऽऽत्मानं हन्ति निरपेक्षं वा चौरैर्युध्यते तत्र तत्समधनदानेन 'मा मृथा अहं त इयद्धनं ददामी'ति तमाश्वास्य दत्वा मुच्यते ॥ ७९ ॥

एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः ॥
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥ ८० ॥

अस्माद्वचनादाद्यशेषमुत्क्रान्तं विज्ञायते।

दृढव्रत इति समाहित इति च पादपूरणे पदे।

उपसंहारोऽयं पूर्वस्य ॥ ८० ॥

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ॥
स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते ॥ ८१ ॥

चरमपक्ष उच्यते।

शिष्ट्वा स्वमेन आत्मीयं दोषम्। भूमिदेवतानां ब्राह्मणानां नरदेवैः क्षत्रियैः समागमे। ऋत्विजो ब्राह्मणाः क्षत्रियो यजमान एवं कृताऽश्वमेधेऽवभृथस्नातो विमुच्यते। द्वादशवार्षिकस्योपसंहृतत्वात्स्वतन्त्रमिदं वैकल्पिकमिच्छन्ति।

अन्ये तु वैकल्पिकानां मध्य उपदेशात्प्रक्रान्तद्वादशवार्षिकस्यैव गोब्राह्मणपरित्राणवत्समाप्त्यवधिमाहुः। यथा सारस्वतेन पक्षं वा प्रस्रवणं प्राप्योत्त्थानमिति।

वयं तु ब्रूमः। उपसंहृतत्वादाद्यस्य वैकल्पिकमध्ये वा पाठादुभयरूपताऽस्य प्रक्रान्तेऽपक्रान्ते च सति संभवे ॥ ८१ ॥

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते ॥
तस्मात्समागमे तेषामेनो विख्याप्य शुध्यति ॥ ८२ ॥

यजमानर्त्विजां ब्राह्मणक्षत्रियाणामश्वमेधसमागम एनो विख्यापनीयमित्यत्रार्थवादः ॥ ८२ ॥

ब्राह्मणः संभवेनैव देवानामपि दैवतम् ॥
प्रमाणं चैव लोकस्य ब्रह्मात्रैव हि कारणम् ॥ ८३ ॥

प्रायश्चित्तिना परिषद्गमनं कर्तव्यम्। परिषत्पूज्यस्तु विधिरनुष्ठेयः। सा चैवंरूपा परिषदेवमर्थश्लोकोऽयमुत्तरश्च।

उत्पत्त्यैव ब्राह्मणो देवानामपि देवो लोकस्य प्रमाणं प्रत्ययितः, प्रत्यक्षदर्शनवत्। न तदीयं वचनमपि शङ्कते कश्चित्।

अत्र कारणं ब्रह्म वेदस्तदर्थज्ञो ह्यदृष्टमुपदर्शयन् प्रमाणीक्रियते ॥ ८३ ॥

तेषां वेदविदो ब्रूयुस्त्रयोऽप्येनः सुनिष्कृतिम् ॥
सा तेषां पावनाय स्यात्पवित्रं विदुषां हि वाक् ॥ ८४ ॥

परिषद्गमनं प्रायश्चित्तिनोऽनेन कथ्यते। तस्याश्च लक्षणं 'ब्राह्मणा वेदविदस्त्रयः परिषदि'ति।

"ननु च 'दशावरा वा परिषत्' इति वक्ष्यति। तथा 'एकोऽपि वेदविद्धर्मम्'। इति।" न दशसंख्या पुरुषाणामुपदिश्यते किं तर्हि गुणानाम्। तथा 'च त्रैविद्यो हैतुकस्तर्की' इति गुणानामेव निर्देशः। 'एकोऽपि वेदवित्' इत्यनेन चैतत्प्रकटीकरोति हैतुकत्वादिगुणान्तराभावेऽपि केवलेनैव वेदेन वेदवित्परिषत्त्वं लभते।

अयं तु श्लोकः संख्यानिर्देशार्थः। अत्र यद्यपि वेदविद इत्युपात्तं, हैतुकत्वादयोऽपि गुणा गृह्यन्ते। न ह्यन्यथा वेदवित्त्वं शिष्टपरिषल्लक्षणम्। तत्रैव व्याख्यास्यामः।

"यदि वेदवित्त्वं न हैतुकत्वादिना विना भवति, कथं तर्हीदमुक्तम् 'एकोऽपि वेदवित्' इति"।

गुणान्तराभावेऽपि वेदवित्परिग्रहार्थमित्येतदपि तत्रैव वक्ष्यामः।

अतः प्रायश्चित्तिना त्रयः समुदिताः प्रष्टव्याः। एकस्य कदाचित्प्रमादोऽनवधानं स्यात्। तथैतत्परिषद्गमनं विदुषाऽप्यदृष्टार्थं कर्तव्यमिति। यथा च पवित्रं विदुषां हि वाक्।

न च रहस्यप्रायश्चित्ताभावप्रसङ्गः। यत्र कस्याप्यविदितं तद्रहस्यम्। विदिते तु परिषद्गमनम्। यथा चोक्तं 'ख्यापनेनानुतापेन' इति।

तदेतदयुक्तम्। कल्पनाविषयत्वादस्य। 'शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं विकल्पयेदिति' अनुक्तनिष्कृतीनां प्रायश्चित्तं कल्पयेत्। तत्र त्रिभिर्या कल्पना कृता सा प्रमाणयितव्या॥ ८४॥

अतोऽन्यतममास्थाय विधिं विप्रः समाहितः॥
ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया॥ ८५॥

सर्वेषां ब्रह्महत्याप्रायश्चित्तानामुपसंहारार्थः श्लोकोऽयम्।

विप्रग्रहणं चात्र सर्ववर्णप्रदर्शनार्थम्।

व्यपोहत्यपहरति।

आत्मवत्तयाऽऽत्मज्ञानतया। शास्त्रार्थकृताभिनिवेश आत्मवानित्युच्यते। तस्यायमध्यवसायो 'न शास्त्रार्थमन्यथा वर्त्तते'॥ ८५॥

हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्॥
राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम्॥ ८६॥

गर्भो ब्राह्मणजातीय एव। केन गर्भस्य पातनं कारयेत्।

अविज्ञातमज्ञातस्त्रीपुरुषविशेषव्यञ्जनम्। उपज्ञाते यथायथं स्त्रीपुंसनिमित्तमेव।

"कथं पुनः स्त्रियामहतायां गर्भस्य वधो भवति।"

औषधादियोगेन गर्भस्य पातनम्।

एतदेवेत्येकवचनात्प्रत्यासन्नद्वादशवार्षिकमेवातिदिश्यत इत्याहुः।

अन्ये एतदिति शुद्धिकारणं सामान्यापेक्षायाम्, अतः सर्वप्रायश्चित्तातिदेशः।

क्षत्रियवैश्यौ चेजानौ यजमानौ। भूतकालता न विवक्षिता।

स्मृत्यन्तरे 'सवनगतौ राजन्यवैश्याविति'। अतश्च प्रारब्धसोमपानयोरेष विधिर्न दर्शपूर्णमासादियजमानयोः। लिङ्गदर्शनं तु यजमानमात्रयोर्भावयतीति। ब्राह्मणीभूयैव यजत इति।

आत्रेयीं स्त्रियमत्रिगोत्रजाताम्। जातेरविशेषात् स्त्रीपुंसयोर्ब्राह्मणीनामपि प्राप्तावात्रेय्या वचनमन्यगात्रनिवृत्त्यर्थम्। अतो ब्राह्मण्यां अप्यन्यस्या वध उपपातकमेव। 'स्त्रीशूद्रविट्क्षत्रियवध' इति।

यत्तु 'स्त्रीसुहृद्वधम्' इति तच्चातुर्वर्ण्यस्त्रीमात्रे। अधमस्त्रीणामुपपातकमहापातकप्रायश्चित्ते विकल्प्येते। भर्तृस्वगुणापेक्षो विकल्पो बुद्धिपूर्वाबुद्धिपूर्वकृतश्च सः। स्तनपबालापत्ययोस्तदभावे बालानां दुःशके जीविते विजातियाया अपि, ब्राह्मणभार्याया भर्तृद्वेषादनपराधिन्या निमित्तान्तरतो वोपजाप्यमानायाः शीलं रक्षन्त्या असंप्रत्युज्यमानाया वधः। एवमप्युत्प्रेक्षया 'स्त्रीसुहृद्वधम्' इत्यादेशात्। अन्यत्र तु 'स्त्रीशूद्रेति'।

आत्रेय्यां त्वविकल्पः।

अन्ये त्वात्रेयीं गर्भसाहचर्यादृतुमतीमाहुः। पत्यते भ्रूणहात्रेयाश्च हन्तेति। भ्रूणहा ब्राह्मणवधकारी सा। सा च ब्राह्मण्येव। अत्र कुक्षाववश्यं गर्भ उह्यत इत्यात्रेयी। यद्यपीदृश्यां वृत्तौ तद्धितो न स्मर्यते, प्रयोगानुसारेण तु भवतीति॥ ८६॥

**उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा॥**
**अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्॥ ८७॥**

हिरण्यभूम्यादिसाक्ष्ये नु वधादिसंशये वाऽनृताभिधाने प्रायश्चित्तमेतत्। अत्र हि दोषातिशयः श्रूयते 'भञ्जता'मित्यादि। अन्यत्र गुरुलघुभावेन कल्पना कार्या।

प्रतिरभ्येति यदुक्त'मलीकनिर्बन्ध' इति तदेवेदं 'प्रतिरंभः', संरंभपूर्वको गुरोरुपद्रवारंभः।

निक्षेपः। अत्रापि दरिद्रस्य महतो धनवतोऽधमस्योताऽन्यस्य ब्राह्मणजातीयस्येत्यादिकल्पना। यत्र त्वेकमेव श्रूयते तत्र यथा श्रुत्येव भवितुमर्हति। कः कल्पनाय अवसरो, न चेह कौटसाक्षिनिक्षेपयोर्लघुप्रायश्चित्तमस्ति। यदपि सुरापाने तदपि तुल्यमनेन गरीयः, श्रुताश्रुतविषयत्वं 'शक्तिं चावेक्ष्येति' यत्।

सत्यप्य'नुक्तनिष्कृतीनामिति' श्रवणे ॥ ८७ ॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ॥
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥ ८८ ॥

प्रमाप्य हत्वा । निष्कृतिरिति ।

प्रागयं व्याख्यातार्थः प्रायश्चित्तगौरवोपदेशपरः ॥ ८८ ॥

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ॥
तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ ८९ ॥

द्विजश्रुतिर्ब्राह्मणार्थैव । आह च स्मृत्यन्तरे 'ब्राह्मणस्य उष्णां मा सिंचेयुः सुराम्' ( गौ० २३।१ ) इति ।

मोहादित्यनुवादः ।

अग्निवर्णां वर्णश्रुतिग्रहणं सामान्यलक्षणार्थम् । अत एवाह काये निर्दग्धे मुच्यत इति ॥ ८९ ॥

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ॥
पयो घृतं वाऽऽमरणाद्गोशकृद्रसमेव वा ॥ ९० ॥

अन्यतरप्रायश्चित्तमग्निवर्णं भवत्येव ।

गोमूत्रादयो द्रव्यविशेषा अन्यप्रकारमरणनिवृत्त्यर्थाः ।

सुरा च पैष्टीति विज्ञेया । तां मुख्येत्युपचरन्ति । अन्यत्र तु प्रयोगो गौणः ।

कामतः पाने चैतत् । तथा च वक्ष्यति । 'अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति' ।

अग्निवर्णमित्यग्निस्पर्शमिति ज्ञातव्यम् । तथा चाह 'आमरणादिति' ।

सुरा च स्त्रीणामपि प्रतिषिद्धा । उक्तं हि वासिष्ठे ।

'तथा ब्राह्मणी सुरापी भवति । न तां देवाः पतिलोकं नयन्ति ।

इहैव सा भ्रमति क्षीणपुण्या लोके प्रेत्यावाप्सु च जलभुग्भवति' ॥ ९० ॥

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ॥
सुरापानापनुत्यर्थं वालवासा जटी ध्वजी ॥ ९१ ॥

इतं प्राणात्यये औषधार्थम् । अन्येन विहितस्यापि तस्य ।

अज्ञानात्तु तप्तकृच्छ्रसहितः पुनः संस्कारो दर्शयिष्यते ।

अन्ये तु गौडीमाध्व्योरुपचरितसुराभावयोरिच्छन्ति । तथा च स्मृत्यन्तरे 'असुरामद्यपाने चान्द्रायणमभ्यसनीयम्' ।

सकृदिति कणपिण्याकयोरुभयोः शेषः । निशायाम् ।

अबालमयम् । गोलोमाजालोमादिकृतं वासः । जटी शिखयाऽन्यैर्वा केशैः । ध्वजी मद्यघटिकादिनेति ॥ ९१ ॥

**सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ॥**

**तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ ९२ ॥**

'अन्न'शब्दो यद्यप्यदनक्रियाकर्मणि व्युत्पाद्यते, तथापि व्रीह्यादिप्रभृतावेव भक्तसक्त्वपूपादौ प्रसिद्धतरप्रयोगः । तथा चा'न्नेन व्यञ्जनमि'ति भेदोपपत्तिः । अतः पिष्टविकारत्वात् सुराया अन्नव्यपदेशे लब्धेऽन्नानां मलमिति निवारणोपपत्तौ पैष्ट्याः सुरायाः प्रतिषेधे लिङ्गमिदम् ।

लिङ्गं त्रयाणां वर्णानां संपद्यते । ब्राह्मणक्षत्रियवैश्यैरपि वर्णैः पैष्टी न पातव्या । किंच सैव सुरा मुख्या गौडीमाध्व्योः । एवं यथा सीधुमाध्वीकयोर्गुरु प्रायश्चित्तं तथान्येषामरिष्टादीनां मद्यानाम् ।

मलशब्दः पाप्मेति व्याख्यातो निन्दातिशयदर्शनार्थः ।

सत्यपि प्रायश्चित्तप्रकरणे वाक्यात् सुरापाननिषेधोऽयम् । भिन्नवाक्यत्वाच्च नार्थवादः ॥ ९२ ॥

**गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ॥**

**यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥ ९३ ॥**

गुडविकारो गौडी । येषामपीक्षुरसमेव मद्यतामापद्यते तेषामपि कारणे कार्योपचारेण 'गौडी'व्यपदेशो न विरुद्धः ।

मधुनो विकारो माध्वी । मधु माध्वीकं विकारवृत्त्या । न सद्यो जातस्य मृद्वीकारसस्य प्रतिषेधो यावन्मद्यावस्थामप्राप्तस्येति दर्शयति । अविकृतं हि मधुमाध्वीकमिच्छन्तीति स्मरति । यत्रापि मद्यशब्देन प्रतिषेधस्तत्राप्यनासादितमद्यपानशक्तियोगस्य नैव प्रतिषेधः । तस्य मद्यशब्देनानभिधानात् । यथा 'शुक्त'-शब्दोऽवस्थाविशेषवति प्रवर्तते नाविशेषेण । न हि तदेवाम्लतामनापन्नं 'शुक्त'-

मित्युच्यते । यथा स एव गौः वत्सावस्थायां न 'बलीवर्दः' । एवं च पिष्टोदकादिसंघातसंमष्ट्या न 'सुरा' यावत्कालपरिवासेन न मदशक्तिमापन्ना । एवमिक्षुरसमृद्वीकारसयोर्द्रष्टव्यम् ।

"अल्पायास्तर्हि पानं प्राप्नोति, यावत्या मात्रया पीता न मदयति । प्रतिबन्धकद्रव्ययोगेन च" ।

नैष दोषः । नायं मदोत्पत्तिप्रतिषेधः । 'तथा कर्तव्यं यथा मत्तः क्षीवो न भवतीति' । किं तर्हि 'यन्मदजननसमर्थशक्तियुक्तं तन्न पातव्यमिति' । अल्पाया अपि सा शक्तिर्विद्यते । यावता रूक्षमल्पप्राणं स्वल्पमपि मद्यं मदयति स्निग्धं महाप्राणं बह्वपि नेति । नैतावता मदशक्त्यभावः शक्यो वक्तुम् । कार्याभावेन कारणभावान्मद्यानामपि नैव निश्चीयते । न हि महत्काष्ठं दग्धुमसमर्थस्याग्नेरदाहकत्वमनुमीयते, शुष्कतृणे तादृशस्यैव दाहकत्वोपलम्भात् ।

"यदप्युक्तं द्रव्यान्तरेण शक्तिप्रतिबन्धकत्वे पानप्राप्तिरिति", तदप्यचोद्यम् । न हि तृणेन तादृशस्यैव दाहे तदानीं सा तस्य शक्तिर्नास्ति किंतु विद्यमानाऽपि कार्यारम्भं प्रत्यसमर्था । शक्तिसंभवश्च प्रतिहेतुर्न ते नित्यकार्यम् । न च द्रव्यान्तराणि शक्तिं विनाशयन्ति, अपि तु कार्यारंभं प्रतिबध्नन्ति । तथा च तत्परिमाणारंभकद्रव्ययोगेऽपि पैत्तिको माद्यति न श्लैष्मिकोऽतोऽनुमीयते न तस्य विनाशः ।

तस्मान्न भाविमद्यावस्थस्य प्रतिषेधो नापि प्राप्तावस्थाविशेषस्य प्रतिबन्धकाभावादिवत्तत्प्रतिषेधः । यथा चौरः स वर्जनीय इति । नोदश्वितोऽप्राप्ताम्लभावस्य प्रतिषेधः ।

"माध्वीति कथं, यावता गुणेन माध्वीति भवितव्यम्" ।

'संज्ञापूर्वको विधिरनित्य इति' ( परिभाषा ९५ ) परिहारः । ज्ञापकं चास्याः परिभाषाया ओरोदिति वक्तव्ये 'ओर्गुण' ( पा० सू० ३ । ४ । १४६ ) इति गुणग्रहणम् ।

अत्र द्विजोत्तमग्रहणं च क्षत्रियवैश्ययोर्मद्यानुज्ञानार्थम् । तथा च महाभारते भारतानां यादवानां मद्यपानं तु वर्ण्यते 'उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ' इत्युत्तरश्लोकादर्थवाद एव ।

"ननु च तथा सर्वा इति बहुवचनं कथम्" ।

यावता एकमुपमानं द्वे उपमेये ।

अन्नमलत्वं चात्र हेतुमन्निगदोऽर्थवादो मलं हेतुर्यथा शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति ॥ ९३ ॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ॥
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ ९४ ॥

यक्षादयो निन्द्याः प्राणिनो भक्ष्याभक्ष्यविवेकशून्या मांसमभक्षयन् ।

सुरा चासवश्च सुरासवम् । 'जातिरप्राणिनाम्' इत्येकवद्भावः ।

आसवोऽत्र मद्यविशेष एव, ईषन्मद्याद्भिन्नं गोबलीवर्दवदिहोपादानम् ।

देवानामश्नता देवदेयानि हवींषि चरुपुरोडाशादीनि दर्शपूर्णमासोदितानि ब्राह्मणस्याशितुं युक्तानि, न पिशाचाद्यन्नं मद्यमांसादीनि ॥ ९४ ॥

अमेध्ये वा पतेन्मत्तो वैदिकं वाऽप्युदाहरेत् ॥
अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः ॥ ९५ ॥

अमेध्ये पतनं देवान्नाशनवदर्थवादः ।

"ननु च वैदिकोदाहरणं कथमकार्यम्" ।

अत्रोच्यते । तदपेक्षयाऽन्यदकार्यं कुर्यादिति । कथमकार्यम् । अशुचेर्वेदाक्षरोच्चारणप्रतिषेधात् ॥ ९५ ॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ॥
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥ ९६ ॥

अधीते वेदे संस्काररूपेणावस्थितं हृदयं ब्रह्मशब्देनोच्यते । अतो हृदये मद्येनाप्लाविते । स शूद्रतां गच्छति ।

ब्राह्मण्यवचनं सर्वप्रकारमद्यनिषेधार्थं ब्राह्मणस्य । क्षत्रियवैश्ययोः पैष्ट्या एव निषेध इति दर्शयति ॥ ९६ ॥

एषा विचित्राऽभिहिता सुरापानस्य निष्कृतिः
अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥ ९७ ॥

उक्तप्रयोजनौ पूर्वोत्तरश्लोकौ ॥ ९७ ॥

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ॥
स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥ ९८ ॥

ब्राह्मणसुवर्णस्तेये एतत्प्रायश्चित्तम् ।

विप्रग्रहणं सर्ववर्णप्रदर्शनार्थम् । क्षत्रियादीनामन्यस्य प्रायश्चित्तस्यासमाम्नानात् ।

मामनुशास्तु निग्रहं करोतु । राजा गत्वा च वक्तव्यः । अत्र च राजशब्दो देशेश्वरवचन एव न क्षत्रियजात्यपेक्षः ॥ ९८ ॥

गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ॥
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव तु ॥ ९९ ॥

मुशलं दण्डविशेष आयसो दारुमयो वा ।

सकृत्स्वयमिति च विवक्षितम् ।

वधेन शुध्यति । सकृत्प्रहारेण वधो मरणफलो वा भवतु मा वाऽस्तु । तादृशेन मुशलप्रहारेण शुद्धो भवति ।

ब्राह्मणस्तु तपसा वक्ष्यमाणेन ।

अत्रापि ब्राह्मणग्रहणमविवक्षितम् । तथा चोत्तरत्र द्विजग्रहणम् ।

यद्यपि च कृष्णलग्रहणे महापातकं तथापि मरणान्तं प्रायश्चित्तं सुवर्णशतहरणे द्रष्टव्यम् । उक्तं दण्डप्रायश्चित्तं तुल्यरूपेण । तत्र चोक्तं 'शतादभ्यधिके वध' इत्यतोऽर्वाक् कल्पना कार्या ।

यस्तु 'मरणात्पूतो भवति' इति प्रायश्चित्तान्तरं, तस्मिन् राजा शस्त्रं उदुम्बरं आदद्यात्तस्मात्तं प्रमापयेन्मरणात्पूतो भवतीति विज्ञायते । यदा क्षत्रियादिर्हर्ता स्वामी च गुणवांस्तत्रैतद्विज्ञायते । दातुमुद्युक्तं यदा स्यादिति प्रयोजने प्रयोजनोपहारस्तदा वा शिष्टं निष्कान् को घृताक्तो गोमयादिना या प्रकृतिः ( ? ) ॥९९॥

तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ॥
चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ १०० ॥

इति च द्वादशवार्षिकधर्मानुवादात्तस्यैवातिदेशो न ब्रह्महत्यायाः, प्रायश्चित्तान्तरम् । ब्रह्महणि यद्व्रतमुक्तं तच्चरेदिति योजना ।

अपनुनुत्सुरपनेतुमिच्छुः । शुद्धिं चिकीर्षतीति यावत् ॥ १०० ॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ॥
गुरुस्त्रीगमनीयं तु व्रतैरेभिरपानुदेत् ॥ १०१ ॥

"ननु च वधेन शुध्यति स्तेनस्तपसा चेति द्वयस्य प्राक्तनत्वादेतैरिति बहुवचनं न सम्यक्"

एतदेव ज्ञापकं—एष निःशेषोक्तानप्यनुक्तान् कल्पेतानुबन्धाद्यपेक्षया ।

गुरुस्त्रीगमनप्रयोजनं गुरुस्त्रीगमनीयम् । निमित्तमपि प्रयोजनमुच्यते, प्रयोजयति प्रवर्तयतीति ॥ १०१ ॥

गुरुतल्प्यभिभाष्यैनस्तल्पे स्वप्यादयोमये ॥
सूर्मीं ज्वलंतीं वाश्लिष्येन्मृत्युना स विशुध्यति ॥ १०२ ॥

गुरुतल्पगः । गुरुतल्पीति वा पाठः । तल्पीतिमत्वर्थीयेन विशिष्ट एव स्त्रीपुंसयोः संसर्ग उच्यते ।

गुरुराचार्यः पिता चेति । तल्पशब्दो दारवचनः ।

आचार्याणीं गत्वेदं प्रायश्चित्तम् । अपरा मातेव मातासमानजातीयायां गमने । इमानि त्रीणि प्रायश्चित्तानि कल्प्यते बुद्धिपूर्वं च ।

अभिभाष्यैनः पापं विख्याप्य । तल्पे शयनेऽग्निस्पर्शेऽयोमये शयीत ।

मृत्युना शुध्यतीति वचनात् ।

सूर्मिः तप्ता स्त्रीप्रकृतिरयोमयी तामाश्लिष्येदालिंग्येत् ॥ १०२ ॥

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ॥
नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥ १०३ ॥

उत्कर्तनं न कल्पेन शोधनम् । शस्त्राद्याक्षिप्तम् । शक्तिः सर्वत्र सहकारिणी । येन शक्येत छेत्तुं तत्सामर्थ्याल्लभ्यते ।

प्रत्यग्दक्षिणा नैर्ऋती दिक् ।

अजिह्मगोऽकुटिलगः । श्वभ्रकूपादि न परिहरेदित्यर्थः । कुड्यादिषु प्रतिपातनं हि तदापाताद्गच्छेदेव ॥ १०३ ॥

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ॥
प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः ॥ १०४ ॥

अबुद्धिपूर्वकं स्वभार्याभ्रान्त्या गमन इदं प्रायश्चित्तम् । विजातीयगमने बुद्धिपूर्वकमपि । चीरं वस्त्रखण्डम् । श्मश्रुलो रूढश्मश्रुः । समानजातीयाया अपि व्यभिचारिण्या गमने लघ्वेव प्रायश्चित्तम् ॥ १०४ ॥

चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः ॥
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥ १०५ ॥

अतिदिष्टगुरुभावानां मातुलपितृव्यादीनां या भार्यास्तद्गमन इदं प्रायश्चित्तम् । हविष्यं पयोमूलघृतादि । यवागू द्रवपेयादि ॥ १०५ ॥

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम् ॥
उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥ १०६ ॥

उक्तवक्ष्यमाणसंक्षेपवचनोऽयम् ॥ १०६ ॥

उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् ॥
कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः ॥ १०७ ॥

गोघ्नो गोघाती । मूलविभुजादिदर्शनात्कः ।

यवान् पिबेदिति यवसक्तुपानं केचिदाहुः । अन्ये तु प्रकृतिशब्दः कार्ये यवाग्वां प्रयुक्तोऽतो यवान् पिष्ट्वा पाययेदित्युक्तं भवति ।

पूर्वस्मिन्पक्षेऽश्रुतोदकादिद्रवकल्पना भवति । न हि यवा उदकादिना विना पातुं शक्यन्ते । इह तु लक्षणामात्रम्, अश्रुतकल्पनायाश्च लघ्वी लक्षणा ।

कृतवपनः कृतमौण्ड्यः । केशच्छेदवचनो वा ।

गोष्ठे यत्र गाव आसते ।

चर्मणा तेन । या न गौर्हता, अपि त्वन्यस्या अपि ॥ १०७ ॥

चतुर्थकालमश्नीयादक्षारलवणं मितम् ॥
गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ १०८ ॥

द्वौ मासावेकैकमाहारं भुक्त्वा द्वितीयेऽहनि सायमश्नीयात् ।

लवणविशेषेण क्षारग्रहणात्सैन्धवस्याप्रतिषेधः । स्वतन्त्रः क्षारप्रतिषेधो हि द्वन्द्वे सति स्यात् । तत्र वचनप्रवृत्तिः पदद्वयस्य च लक्षणार्था । युगपदधिकरणतायां

द्वन्द्वः । स्थिते विशेषणसमासे विशिष्टस्यार्थस्य नानुज्ञासंबन्धः । न समासादिलाघवम् ।

मितं स्वल्पमित्यर्थः । न यावता तृप्तिर्भवति शरीरस्थितिश्च जायते ।

गोमूत्रस्नानं त्रिष्वपि कालेषु ।

चतुर्थकालं द्वौ मासाविति सम्बन्धः । एवं स्मृत्यन्तरे

'कृतवपनो वसेद्गोष्ठे चर्मणा तेन संवृतः । द्वौ मासौ स्नानमप्यस्य गोमूत्रेण विधीयते' ॥ 'पादशौचक्रियाकार्यमद्भिः कुर्वीत केवलम् ।'

न चास्य द्वौ मासावित्यस्यानेन संबन्धः संभवति । स्नानग्रहणं पादपूरणार्थम् । स्नानकाले यदि पादाद्यशुद्धिर्भवत्यर्थात्तदुदकेनैव द्रव्यशुद्धिविधिना शोधनीयम् । अत आचमनमपि शुद्ध्यर्थमुदकेनैव स्नानकाले । अन्यदा मृदा शुद्धिः । सा मृद्वारिक्रमेणैव कर्तव्या । स्नानविधौ गोमूत्रश्रवणादाचमनादौ कः प्रसङ्गः । स्नानेऽपि प्रायश्चित्ताङ्गेन शुद्ध्यर्थम् ॥ १०८ ॥

दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् ॥
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनो वसेत् ॥ १०९ ॥

यासां गवां स्थाने वसति ताश्चरितुं गच्छन्तीः पश्चादनुगच्छेत् । तच्छब्देन प्रत्यवमर्शाद्यासां गृहे स्थितस्तासाम् । अन्यासां गच्छन्तीनां न भवत्यनुगमनम् ।

ताभिः समुत्थापितं रजो रेणुरूर्ध्वं गच्छन् पिबेत् ।

एवं तत्रैव ताभिः सह दिवसं विहृत्य ताभिरेव सह पुनर्गोष्ठमागच्छेत् ।

शुश्रूषयित्वा कण्डूकर्षणरजोपनोदनेनोपगच्छन् ।

नमस्कृत्य जानुशिरसा प्रणामं कृत्वा ।

वीरासनो वसेत् । भित्तिशय्यादावनिषद्य यदुपविष्टस्यावस्थानं तद्वीरासनम्' ॥ १०९ ॥

तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ॥
आसीनासु तथासीनो नियतो वीतमत्सरः ॥ ११० ॥

तिष्ठन्तीत्येवमादिको विधिः ।

यत्र काश्चित्तिष्ठन्ति काश्चिद्व्रजन्ति काश्चिद्वाऽऽसते तत्र भूयसीनां धर्मं समाश्रयेत् ।

वीता मत्सरो लोभो यस्येति। प्रदर्शनार्थं चैतत्। त्यक्तरागादिमनोदोष इति यावत्। नियतेन्द्रियवचनात्॥ ११० ॥

आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः ॥
पतितां पङ्कलग्नां वा सर्वप्राणैर्विमोचयेत् ॥ १११ ॥

आतुरां व्याधिताम्। अभिशस्तां गृहीताम्। भयैर्व्याघ्रादिनिमित्तैः।

सर्वेण सामर्थ्येन प्राणशब्दोच्छ्वासपवन एव। 'अल्पप्राणो महाप्राण' इति स्थूले बलवति च प्रयोगदर्शनात्। तेन स्वयमशक्तेन सहायकोपादानेनाप्युद्धारः कर्तव्यः॥ १११ ॥

उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ॥
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ ११२ ॥

उष्णेन भृशं तपत्यादित्ये वर्षति पर्जन्ये शीते वा मारुते वाति वायौ भृशमिति॥ ११२ ॥

आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽथवा खले ॥
भक्षयन्तीं न कथयेत्पिबन्तं चैव वत्सकम् ॥ ११३ ॥

व्रीह्यादि भक्षयन्तीं गां न वारयेत्। न चान्यानाचक्षीत निवारणार्थम्। यदि तु बध्नीयात् आशंक्यते बाधेति तृष्या तदा पूर्वोक्तकरणे न दोषः। तदनुग्रहो विधीयते।

एवं पिबन्तं वत्सकमपि॥ ११३ ॥

अनेन विधिना यस्तु गोघ्नो गामनुगच्छति ॥
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥ ११४ ॥
वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः ॥
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत् ॥ ११५ ॥

दश गावो देया एको वृषभः। शक्तौ चत्वारि व्रतानि।

अविद्यामाने गदितधने ततो न्यूनं सर्वस्वं देयम्।

वेदविद्भ्य इति बहुशः, न द्वयोरेकस्मिन्वा। 'वेदविद्'ग्रहणं न बहुवचनार्थमनुवादो वेदविदामेव पात्रतयोक्तत्वात्।

यत्तु स्मृत्यन्तरे 'दहनवाहनवन्धनदामपाशयोजनतैलौषधादियोगे मृते सशिखं वपनं कृत्वा प्राजापत्यं चरेत्ततश्चैलखण्डं दद्यादिति' यो नातिप्रयत्नेनैतासु क्रियासु प्रवर्तते तस्य प्रमादजेऽपराधे प्रायश्चित्तमेतत्। यतः

'यंत्रणे गोश्चिकित्सायां गूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात्प्रायश्चित्तं न विद्यते'॥ 'औषधं स्नेहमाहारं दद्याद्गोत्राह्मणेषु यः। दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते॥' इति सांवर्तम्।

तथाऽस्य मासेन शुद्धिरुक्ता 'पंचगव्यं पिवेत् षष्ठे काले पयः समाप्ते ब्राह्मणांस्तर्पयेत्। तिलधेनुं च दद्यात्'।

तथान्याऽर्द्धमासेन 'सक्तुयावकशाकपयोदधि घृतं सकृदिति'। विकल्पानेतान्वक्ष्यामि। येन द्रव्येण यः प्रयोग आरब्धः स तेनैव समापनीयो न तु कस्मिंश्चिदह्नि सक्तवः कस्मिंश्चिद्यावकादीनीति। व्रीहिभिर्यजेत यवैर्वेति विकल्पितेऽपि द्रव्यद्वये न व्रीहिषूपपन्नेष्विच्छया चैतेषां वा विनाशे यवा उपादीयन्ते। प्रतिनिधिनैवं प्रयोगसमाप्तिः। तत्रापि गोदानं विहितम्। तथैतावन्त्येव तपांस्यतो वत्ससहितां गां दद्यादिति।

अत्रोक्तं गौतमीये (२२।१८) च 'गां वैश्यवदिति'। तत्र श्रोत्रियस्य यज्ञविदुषोऽग्न्याहितस्य दोग्ध्रीं वहुक्षीरां वालवत्सां निर्धनस्य गां हत्वा गौतमीयं, क्षेत्रारामादौ व्रीह्यादिषु च प्रविश्य तन्निवारणार्थं प्रद्रुते 'मा मारयाम्येनामिति' अनया बुद्ध्या कथंचिन्मृतायामिदं मासिकम्। तथाऽश्रोत्रियस्य जरत्या अक्षीरायाश्च बुद्धिपूर्ववधे त्रैमासिकम्। सर्वतो निर्गुणाया निर्गुणस्वामिकाया अबुद्धिपूर्ववधे प्राजापत्यम्। तस्या एव बुद्धिपूर्वमृतायां त्रैमासिकमिति॥ ११४-११५॥

एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः॥
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा॥ ११६॥

एतदेवेति गोघातकप्रायश्चितं सर्वेपूपपातकेष्वतिदिशति।
वैकल्पिकं चान्द्रायणमपि।
उपपातकित्वे विशेषोपदेशान्न गोघ्नस्य चान्द्रायणमिच्छन्ति।
तेषामुपपातकित्ववचने गोघ्नस्य प्रयोजनं मृग्यम्॥ ११६॥

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे॥
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि॥ ११७॥

'अवकारो'ऽ'वकीर्णो' ब्रह्मचारिणो व्रतानि तस्यातिक्रमः स्त्रीसंप्रयोगलक्षणः सोऽस्यास्तीत्यवकीर्णी । वक्ष्यति 'कामतो रेतसः सेकमिति' ।

काणेन गर्दभेनेति सगुणद्रव्यनिर्देशः । चतुष्पथेनेति देशस्य । निशीति कालस्य । नैर्ऋतमिति देवातायाः । पाकयज्ञविधानेनेतीतिकर्तव्यताविधानम् ।

"ननु च पशुयागा अग्निष्टोमीयपशुसाध्या अग्निषोमीयपशुप्रकृतयः" ।

सत्यम् । स एव पाकयज्ञप्रकृतिः । सत्यधिकारे हि सः । उक्तं च 'पशुरपि द्रवति पयोऽपि द्रवतीति' । 'पाकयज्ञाः' पूर्णमासादयः ॥ ११७ ॥

हुत्वाऽग्नौ विधिवद्धोमानंततश्च समेत्यृचा ॥
वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाऽऽहुतीः ॥ ११८ ॥

अग्नौ यदा होमम् । अग्निहोमाश्च 'हृदयस्याग्र' इति ।

अन्ततः समाप्तेषु होमेषु मरुद्भ्य इन्द्राय बृहस्पतयेऽग्नयेऽप्याहुतीर्जुहुयात् । 'सम्' इत्यनया । 'सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । संचायमग्निः सिञ्चतु प्रजया च धनेन च ।' ( अथर्ववेद ७ । ३३ । १ ) इत्येतया जुहुयात् ।

मान्त्रवर्णिकत्वात् देवतानां श्लोके 'वातगुरुशब्दौ मरुद्बृहस्पतिशब्दलक्षणौ । अतो वातादिषु स्वाहाकारादौ मरुद्बृहस्पतिशब्दौ प्रयोक्तव्यौ, न वातगुरुशब्दौ ॥ ११८ ॥

कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ॥
अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥ ११९ ॥

अवकीर्णिपदार्थनिरूपणम् । अतश्चोपात्तव्रतातिरिक्तविषय एवं विज्ञायते । व्रतस्थस्येति ब्रह्मचर्याश्रमस्थस्येति, स्मृत्यन्तरदर्शनाद्विज्ञेयम् ।

रेतःसेकस्त्वस्यैव विशेषतःप्रतिषिद्धोऽन्तरेणापि स्त्रीसंप्रयोगम् ।

कामतः सेके विधिरयम् ॥ ११९ ॥

मारुतं पुरुहूतं च गुरुं पावकमेव च ॥
चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः ॥ १२० ॥

'जुहुयादाहुतीरिति' विधेरर्थवादः । व्रतिनः सत अवकीर्णिनः यद् ब्राह्मं तेजो विविधविज्ञानोपार्जितं पुण्यं तद्देवतां देवतामुपैत्युपसंक्रामति । तत्र लयं गच्छतीति

यावत्। व्रतिनोपैतीति विवक्षितम् ॥ १२० ॥

एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ॥
सप्तागारांश्चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥ १२१ ॥

वसित्वा आच्छाद्य।

स्वकर्मावकीर्णोऽस्मीत्येवम् ॥ १२१ ॥

तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम् ॥
उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति ॥ १२२ ॥

प्रातर्मध्याह्नापराह्णेषूपस्पृशन् स्नानं कुर्वन्। संवत्सरेण पूतो भवति ॥ १२२ ॥

जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ॥
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ १२३ ॥

समाप्तान्युपपातकानि।

अन्यतममित्यनुवादः। न हि निमित्तानां समाहारसंभवः। समुदायविवक्षायां न च कस्यचित्प्रायश्चित्तमुपदिशति। को हि मनुष्यः सर्वाणि जातिभ्रंशकराण्यकार्याणि कुर्यात्। एक एव शब्दः प्रायश्चित्तानुदेशोऽशास्त्रताप्रसंगः। न च साहित्यविवक्षाऽप्युक्ता, लक्षणत्वेन श्रवणात्पुरुषं प्रति निमित्तानाम्। अतः प्रत्येकं वाक्यपरिसमाप्तिः 'यस्य पिता पितामहः सोमं न पिबेदि'त्यन्यतरस्य पितुः पितामहस्य वा सोममपीतवतो भवत्येव पशुः। यथा सत्यप्युभयश्रवणे यद्युभयं हविरार्तिमियादित्यन्यतरहविर्विनाशेऽपि भवत्येव पंचशरावः, एवं सर्वप्रायश्चित्तेषु द्रष्टव्यम्।

इच्छयेति विवक्षितम्। अनिच्छयेति च। प्राजापत्यसान्तपनयोः स्वरूपं वक्ष्यति ॥ १२३ ॥

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवः ॥
मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ १२४ ॥

सङ्करीकरणमपात्रीकरणं पूर्वमुक्तेनेति। एवं सङ्करापात्रकृत्यास्विति संज्ञिभेदाद्बहुवचनम्। कृत्याशब्दः प्रत्येकमभिसंबध्यते। 'कृत्यं' कारणम्।

ऐन्दवो मासः चान्द्रायणः।

यावको यवविकारः पेयलेह्यादिः।

अत्राविशेषश्रवणेऽपीच्छानिच्छयोर्गुरुलघुभावो विज्ञेयः॥ १२४॥

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः॥
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥ १२५॥

सवनगतयो राजवैश्ययोर्ब्राह्मणसममुक्तम्। इह तु ततोऽन्यत्र। स्वधर्मानुष्ठानयोश्चतुर्थाष्टमविभागविधिः। तथा च वृत्तस्य ग्रहणं सर्वक्रियार्थम्।

त्रीणि वर्षाणि क्षत्रियस्य, सार्धवर्षं वैश्यस्य, नव मासान् शूद्रस्य।

यत्तु 'स्त्रीशूद्रविट्क्षत्रियवध' इति तत्परित्यक्तस्वकर्मणोः अधर्मस्थितयोः। शूद्रस्य 'वृत्तं' द्विजशुश्रूषादि, न महायज्ञानुष्ठानं च।

वृत्तं शीलं वैश्यवृत्तौ वैश्यस्य वृत्तावेव वा तिष्ठति। गहने यथा समये 'तियच्छग्निवेति'।

स्वधर्मपराणां विधिवत्प्रायश्चित्तम्॥ १२५॥

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः॥
वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः॥ १२६॥

इदमपरं दानप्रायश्चित्तम्। संभवद्वित्तस्य तपो नास्तीति वक्ष्यति, 'दानेन वधनिर्णेकम्' इत्यादि।

अकामत इति न विवक्षितं, महत्त्वात्प्रायश्चित्तस्य। यदि वा 'सवनगतयोरेवाकामत' इति कल्पनीयम्।

वृषभ एको यासां सहस्रे ता वृषभैकसहस्राः॥ १२६॥

त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्॥
वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः॥ १२७॥

आद्योऽर्धः श्लोकस्तुरीय इत्यस्यानुवादः।

जटीति चीरखट्वाङ्गधारणादिनिवृत्त्यर्थमिति केचित्।

तदयुक्तं तत्रैव ते धर्मास्तदीयतुरीयभागातिदेशो नान्येषां सत्यपि संभवे, सरस्वतीपरिसर्पणादीनामिव प्रयोजनसत्त्वोपपत्तौ।

दूरत इति ग्रामान्निवृत्तिः

वृक्षमूले कुटीं कृत्वेति ॥ १२७ ॥

एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ॥
प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥ १२८ ॥

पूर्वत्राष्टमोंऽशः, अनेन द्वादशो विधीयते । अल्पत्वादब्दं न्यूनगुणस्य विधिरयमिति विज्ञायते ।

"ननु वृत्तस्थं इति श्रुतम्" ।

सत्यम् । संप्रति वृत्तस्थो वधकाले, प्राङ्निर्गुण इति । यस्तु सर्वदैव वृत्तस्थस्तस्य पूर्ववदिति ज्ञेयम् ॥ १२८ ॥

एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ॥
वृषभैकादशा वाऽपि दद्याद्विप्राय गाः सिताः ॥ १२९ ॥

अत्रापि मासषट्कं नवकं च वृत्तस्थेतरभेदेन योज्यम् ।

यथाश्रुतसंख्यं च गोदानं सर्वत्र वैकल्पिकम् । द्विजोत्तमग्रहणं च प्रदर्शनार्थम् ।

सिता न वर्णतः । किं तर्हि ? शुद्धिसामान्याद्या बहुक्षीरास्त्र्यपत्या अनष्टप्रजाश्च ॥ १२८ ॥

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ॥
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥ १३० ॥

अतिमहत्त्वात्प्रायश्चित्तस्य समुदायवधे प्रायश्चित्तमेतत् ।

"ननु चात्र साहित्यं न विवक्षितमित्युक्तं यतो जातिभ्रंशकरादिषु । कथं चैते सर्वे चैकस्य हन्तव्यतया उपनयेयुः । अतिरिक्तसद्भावे न तन्निमित्तं स्यात् । अर्थान्तरमेवैतद्वशेनैव तच्छक्यते वक्तुम् । तेनावृत्तेन हन्ता । अधिकवधे त्वन्यद्भविष्यति । नैतच्छ्रूयते न्यूने वधे च न स्यात् । पयः पिबेदित्यादि प्रत्येकविधेन सम्बध्यते । न समुदाये प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वा । अर्थान्तरे तु स्थातुं लभ्यते" ।

यत्तावदुच्यते साहित्यं न विवक्षितमिति । तत्र न विवक्ष्यते यत्र प्रत्येकं संबन्धिवाच्यमर्थवत् । यथा 'यस्य पिता पितामहः सोमं न पिबेत्' इति । यत्र पुनरविवक्ष्यमाणे वाच्यमेवानर्थकं तत्र तत्परिहारार्थं युक्ता विवक्षा । यथा वक्ष्यति 'सहस्रस्य प्रमापणे पूर्णे वानसीति' । अत्राविवक्षायां सहस्रस्येति व्यर्थं स्यात् । एवं हि शास्त्रान्तरविरोधादतिमहत्त्वे युक्तैव विवक्षा ।

"ननु च पदोपादानतायामपि लक्षणागतस्य विशेषणस्याविवक्षैव । यथा यस्योभयं हविरित्युभयशब्दार्थं तत्र तुल्यम् । अत्र हविरुभयमिति च पदद्वये वक्ष्यमाणे वाक्यभेदः । हविरत्रोभयं चेति । यत्रावस्थाभेदस्तत्र वाक्यभेदपरिहारार्थमवश्यं भेदः । अन्यतरस्मिन् व्यवहितो गुणो वा हातव्यो भवति । तथोभयशब्दे सर्वमस्ति । आच्छेदिति हविःशब्देन व्यवहितो भवति संख्यानुरूपत्वात् । गुणानुवादकत्वं वाऽस्य संभवति । अविवक्षिते च तस्मिन् परिशिष्टं वाक्यमर्थवाद एव । इह पुनः समुदायविवक्षायां सहस्रशब्दविवक्षायां वा कृत्स्नमेव वाक्यमनर्थकम् । तथा ह्येतावद्वाच्यं स्यात् । स्थानतां प्रमाणतां तथाऽस्यां शूद्रहत्याव्रतमित्येतावद्वक्तव्यं स्यात् । प्रमाणे शूद्रहत्येति । एतावतामेव हिंसा संभवति" ।

तथाऽन्यदप्येवं जातीयकं विशेषणं न विवक्ष्येत, समानन्यायत्वात्, फलदानां तु वृक्षाणाम्' इति । ततश्च सर्वमसमंजसं स्यात् ।

पौरुषेयं चेदं वाक्यं नैव वैदिकम् । वेदे च कस्य पुरुषस्य प्रयोगः किमर्थमनर्थकं प्रयुक्तमिति । इह तु बुद्धिपूर्वे प्रयोगे मात्रायामप्ययुक्तमानर्थक्यम् । तत्साहित्यविवक्षाविशेषणविवक्षा वायुक्तैव । यच्चोक्तं "कथं च तदिति सर्वं ऐत इति च", तत्राप्याखेटकार्थमृगयायां दावदाहिनो वा उपपद्यतयैव ।

यदप्युक्तमतिरिक्तसद्भावे न तन्निमित्तमिति, तदप्ययुक्तम् । न त्वाधिक्ये पूर्वेषां नाशो न्यूनेषु च तथैव कल्पना कार्या ॥ १३० ॥

पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत् ॥
उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत् ॥ १३१ ॥

प्रत्येकं वधे प्रायश्चित्तान्तरमुच्यते ।

पयः क्षीरं, प्रसिद्धतरत्वात्प्रयोगस्य, नापः, सत्यामप्युभयार्थतायां; यथा 'पयसा जुहोति' इति । यथैव वराहशब्दो मेघे पर्वते सूकरे वर्तते । प्रसिद्धतरः सूकरे । पर्वतादिप्रवृत्तौ सामानाधिकरण्यमपेक्षते 'वराहो हिमवान्', 'वराहः पारियात्र' इति ।

प्रकृते च भोजने भक्तादौ शरीरस्थित्यर्थं प्राप्ते तत्स्थाने पयो विधीयमानमन्यदन्नं निवर्तयति । तपोरूपत्वाच्चैतदेव प्रतिपत्तुं युक्तम् । तापयति दुःखयतीति तपः । अतो यथा 'प्राणायामे घृतप्राशनमिति' नात्र पौरस्य भोजनं निवर्त्यते,

एवमिह नाचमनं निवर्तयति । यो घृतप्राशनं भोजनान्तरनिमित्तं बाधत इति ।

नापः पयःपानेन विकल्पिताः, किं तर्हि ? उपस्पृशेत् स्रवन्त्यामिति । पयःपानात्तद्गमने अध्वगमनशब्द उक्तस्य नद्यां स्नानम् । स्रवन्तिवचनात्तडागसरसोर्निवृत्तिः ।

अब्दैवतं 'आपो हि ष्ठा' इत्यादि ऋक्समुदायोक्तं पवमानसूक्तम् ।

स्मृत्यन्तरेषु 'कृशरभोजनमेकार्थं लोहदण्डं च दक्षिणेति' ।

व्रजेत् न देशान्तरप्राप्तिरित्येव, किं तर्हि ? पादाभ्यां गमनम् ।। १३१ ।।

अभ्रीं ( भ्रीं ? ) कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ।।
पलालभारकं षण्ढे सैसकं चैकमाषकम् ।। १३२ ।।

द्विजोत्तमग्रहणमतंत्रम् ।

तीक्ष्णामायसीमभ्रीम् । कार्ष्णायसीग्रहणं काष्ठादिनिवृत्त्यर्थम् ।

षण्ढे नपुंसके । तच्चतुर्विधम् । अरेतो वातरेतो वा अप्रवृत्तेन्द्रियमुभयव्यञ्जनं वा ।

सर्वप्राणिमात्रसंबन्धेनैतत्प्रायश्चित्तम् । ब्राह्मणस्य शूद्रस्य मेषस्य छागस्य च ।।१३२।।

घृतकुम्भं वराहे तु तिलद्रोणं तु तित्तिरौ ।।
शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ।। १३३ ।।

वराहः सूकरस्तस्मिन्हते घृतघटं दद्यात् ।

चतुराढको द्रोणः ।

हायनो वर्षम् । वत्सो गोजातीयो बालः ।। १३३ ।।

हत्वा हंसं बलाकां च बकं बर्हिणमेव च ।।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ।। १३४ ।।

हंसादयः पक्षिणः । वानरो मर्कटः ।

स्पर्शयेद्दद्यात् ।

प्रत्येकवधे चैतत्प्रायश्चित्तं, द्वन्द्वानिर्देशादित्युक्तम् ।। १३४ ।।

वासो दद्याद्धयं हत्वा पंच नीलान्वृषान्गजम् ।।
अजमेषावनड्वाहं खरं हत्वैकहायनम् ।। १३५ ।।

हयोऽश्वः । गजो हस्ती ।

अनड्वान् पुंगवः । अजमेषवधे ।

खरवधे अनडुत्साहचर्यादेकहायनो गोवत्सः ॥ १३५ ॥

**क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् ॥**

**अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥ १३६ ॥**

क्रव्यादास्तरक्षसिंहमृगादयः । अक्रव्यादाः रुरुपृषतादयः । धेनुर्गौरेव । कृष्णलं विशिष्टपरिमाणं सुवर्णम् । दण्डाधिकारशास्त्रपरिभाषा । अन्यत्र लौकिकमेव । 'शतकृष्णलं घृतमायुष्काम' इति ॥ १३६ ॥

**जीनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये ॥**

**चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ॥ १३७ ॥**

अनवस्थिताः । बहुभिः संगच्छमाना वेश्यावृत्तमाचरन्त्योऽ'नवस्थिता' भवन्ति । न पुनः शास्त्रातिक्रममात्रम्, तथा सति न परपुरुषसंप्रयोग एव लभ्यते ।

वर्णक्रमेण जीनादिदानात् जीनं चर्मपुटं मुटकाधारादिप्रयोजनम् । कार्मुकं धनुः । बस्तः छागः । अविर्मेषः ।

पृथग्ग्रहणं लिङ्गादुक्तं न समुदाये प्रायश्चित्तमिति ।

केचिद्धत्वेति पठन्ति तदयुक्तम् । हिंसाप्रकरणात् ॥ १३७ ॥

**दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ॥**

**एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥ १३८ ॥**

निर्णेकः शुद्धिः ।

हिंसायां दानं मुख्यमिति दर्शयति । न च तस्यैकैकश इति लिङ्गात् कचित्समुदायेऽपीति ।

द्विज इत्यादिपादपूरणम् ।

अविशेषग्रहणे कृच्छ्रशब्दं प्राजापत्ये इति स्मरन्ति ॥ १३८ ॥

**अस्थिमतां तु सत्वानां सहस्रस्य प्रमापणे ॥**

**पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ १३९ ॥**

स्वल्पशरीरत्वमिहास्थिमत्त्वम्, अनस्थिसाहचर्यात् ।

अनः शकटस्तत्संख्यानमेतत्।

उक्तार्थे सत्येव ॥ १३९ ॥

किंचिदेव तु विप्राय दद्यादस्थिमतां वधे ॥

अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति ॥ १४० ॥

किंचिदिति स्वल्पधनमुच्यते। परिमाणतः प्रयोजनतो मूल्यतश्च।

पूर्वेषामेव प्रत्येकवध एतत्। अनुक्तनिष्कृतयश्चा'नास्थिमन्तो' ज्ञेयाः।

आत्मनिरोधः प्राणायामः।

मलिनीयेषु यत्कृमिकीटवयोग्रहणं तदुपचितग्रहपरिमाणार्थम्। इदं तु ये क्षुद्रा मशकादयः ॥ १४० ॥

फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ॥

गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ १४१ ॥

फलदा आम्रकण्टक्यादयः।

ऋक्शतजपो द्विजानाम्।

शूद्रस्य तर्हि किं ?

केचिदाहुः 'इन्धनार्थमशुष्काणाम्' इति उपपातकप्रायश्चित्तम्।

तच्च न, अतिमहत्त्वात्।

यदि न तद्भवति किमर्थं तर्ह्युपपातकेषूपदेशः।

भूयोभूयः प्रवृत्तौ स्यादिति।

तस्माच्छूद्रस्य द्विरात्रत्रिरात्रादीत्येव कल्पयेत्।

गुल्मादयो व्याख्याताः।

लता वृक्षशाखाः ॥ १४१ ॥

अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः ॥

फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥ १४२ ॥

अन्नाद्याद्भक्तसक्त्वादेश्चिरस्थिताद्यानि जायन्ते सत्त्वानि प्राणिनः।

रसजानामिति गुडोदश्विदादिभ्यः।

उदुम्बरमशकादीनि फलपुष्पोद्भवानि।

घृतप्राशः अशनप्रारंभे घृतं पातव्यम्। 'प्र'शब्द आदिकर्मणि। तेन न प्राकृतं भोजनं निवर्तते, यथा पयोव्रतादौ। तथा चैते प्राणिनः क्षुद्रजन्तवो, येषां वधे प्राणायाम उक्तः। तदपेक्षयोपवासोऽतिमहान्। तस्मादाचमनवत् घृतप्राशनम् ॥ १४२ ॥

कृष्टजानामोषधीनां जातानां च स्वयं वने ॥
वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः ॥ १४३ ॥

फालकुद्दालादिना याः कृष्टे जायन्ते। याश्च स्वयं वने। तासां वृथालंभे गवादि प्रयोजनेन विना छेदनम्।

गवानुगमनम्। दिनमेकं परमहर्षाय परिचर्यते।

पयोव्रतं भोजनान्तरनिवृत्तिः ॥ १४३ ॥

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ॥
ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे ॥ १४४ ॥

हिंसासमुद्भवं हिंसात उत्पन्नमेनः पापमेतैरनन्तरोक्तैः प्रायश्चित्तैरपोह्यमपनोद्यम्। बुद्धिपूर्वकृतमबुद्धिपूर्वकृतं वा।

अनाद्यभक्षणेऽभक्ष्यभक्षणे यथा पापमपोह्यते तथा शृणुत ॥ १४४ ॥

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति ॥
मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ॥ १४५ ॥

मेखलादीनां निषेधादुपनयनं विज्ञायते। तच्च स्मृत्यन्तरात्तप्तकृच्छ्रसहितम्। एवं हि गौतमः 'अमत्या मद्यपाने पयोघृतमुदकं वायुं प्रति त्र्यहं तप्तानि सकृच्छ्रास्ततोऽस्य संस्कारः' (२३।२)।

सुरा चात्र न पैष्टी, किं तर्हि? गौडी माध्वी वा।

"कुत एतत्"।

स्मृत्यन्तरदर्शनात्। 'प्रमादान्मद्यमसुरां सकृत्पीत्वा द्विजोत्तमः। गोमूत्रयावकाहारो दशरात्रेण शुध्यति' ॥ पैष्ट्याश्च प्रमादपाने प्रत्यवायप्रायश्चित्तात्। व्रतं विधितो विज्ञाय संवत्सरं कणभक्षश्चान्द्रायणाभ्यासो वा।

मतिपूर्वं तयोरपि पाने एतदनिर्देश्यम्। किं तर्हि? येन प्राणानामन्तो भवति। किं तत्? यत् मुख्यायाः सुराया उक्तम्।

अभ्यासे चैतद्द्रष्टव्यम्। 'सकृत्पाने असुरा मद्यपाने चान्द्रायणमभ्यसेदिति'। तथाहि इयमत्र व्यवस्था। बुद्धिपूर्वं पैष्ट्याः पाने प्राणान्तमेव तस्या एवाबुद्धिपूर्वं सकृत्पाने कणभक्षणचांद्रायणाभ्यासोऽबुद्धिपूर्वेऽप्यसकृत्पाने बुद्धिपूर्ववत्। अन्येषां तु मद्यानां बुद्धिपूर्वत्वे चांद्रायणमभ्यसेदिति। अबुद्धिपूर्वं सकृत्पाने तप्तकृच्छ्रसंस्कार-गोमूत्रयवकद्रव्याणि। अबुद्धिपूर्वमसकृत्पाने पैष्टीवत्॥ १४५॥

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा॥
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीश्रृतं पयः॥ १४६॥

यत्र सुरारसोऽनुभूयते तत्र तद्भाजनस्थानामपां पाने प्रायश्चित्तमेतत्।

ननु च मद्यशब्दस्य सामान्यशब्दत्वान्मद्यभाण्डस्थिता इत्येव सिद्धे अपः सुरे-त्यादि न वक्तव्यम्"।

सत्यम्। यदि सुरामद्ययोर्मद्यपानेऽत्यन्तप्रायश्चित्तभेदो न स्यात्। सति तस्मिन् कल्पनायाश्चानुज्ञातत्वात् सुराभाजनस्थानामधिकतरं स्यादतः कल्पनानि-वृत्त्यर्थं समप्रायश्चित्तवचनम्।

पंचरात्रं शंखपुष्पीश्रृतं पयः। श्रृतग्रहणा'त्पयः' क्षीरमेव। क्षीरहविषोरेव श्रृतशब्दः साधुः। शंखपुष्पीनामौषधिः तया पिष्टं क्वथितं पंचाहानि पयः पातव्यम्॥ १४६॥

स्पृष्ट्वा दत्वा च मदिरां विधिवत्प्रतिगृह्य च।
शूद्रोच्छिष्टाश्च पीत्वाऽऽपः कुशवारि पिबेत्त्र्यहम्॥ १४७॥

विधिवत्प्रतिगृह्य स्वस्तिवाचनिकेन।

एवं दत्वेत्यपि।

व्रीह्यादौ न दोषः।

कुशो दर्भः॥ १४७॥

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः।
प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति॥ १४८॥

सुरापस्य गन्धमिति सुराया एव जाठरेणाग्निना धातुभिश्च संयोगेन गन्धघ्राणे लघीयः। भाण्डान्तरस्थितायाः प्राप्तिरघ्रायैव।

अन्ये तु व्याचक्षते । सुरापस्य ब्राह्मणस्य आघ्राणेऽप्येतदेव ।
सोमप इति वचनाद्दर्शपूर्णमासयाजिनः कल्पे न ।
घृतं प्राश्येति । अत्रापि न भोजनान्तरनिवृत्तिः ।
सुराग्रहणान्न 'मद्य'स्य ॥ १४८ ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेवच ॥
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १४९ ॥

विण्मूत्रग्रहणं रेतस उपलक्षणार्थम् । स्मृत्यन्तरे 'पुरीषकुणपरेतसां प्राशने चैवमिति' ।
"किंजातीयविण्मूत्रप्राशन एतत्" ।
मनुष्याणामेव । अन्येषां तु वक्ष्यामः ।
अत्रापि तप्तकृच्छ्रं समुच्चीयते । दर्शितश्च हेतुः ।
द्विजातय इति विवक्षितम् । शूद्रस्याऽन्यद्वक्ष्यामः ।
अज्ञानादित्यनुवादः । को हि ज्ञात्वा विण्मूत्रमश्नीयात् ।
तथा मद्यपाने एतदेवोक्तं 'मद्यं भुक्त्वा चरेत्कृच्छ्रमिति', यदि तु संस्कारो भवति तदा वचनात्तुल्यमेव ॥ १४९ ॥

वपनं मेखलादण्डो भैक्ष्यचर्या व्रतानि च ॥
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥ १५० ॥

व्रतानि वेदव्रतानि ।
तदयुक्तम् । ग्रहणार्थत्वात्तेषां कुतः प्राप्तिः ।
तस्माद्यान्युपनयनकाले 'मा दिवा स्वाप्सीः सायंप्रातः समिधमादध्या आचार्याधीनो भव' इत्येवमादीनि च व्रतानि । तानि निवर्तन्ते ॥ १५० ॥

अभोज्यानां तु भुक्त्वाऽन्नं स्त्रीशूद्रोच्छिष्टमेव च ॥
जग्ध्वा मासमभक्ष्यं च सप्तरात्रं यवान्पिबेत् ॥ १५१ ॥

येषामन्नं न भुज्यते तेऽभोज्याः पुरुषाः अश्रोत्रियस्त्रीसंग्रामजीव्ययाज्ययाजकादयः ।
शूद्रजातिग्रहणादेव जातिनिर्देशात्स्त्रीग्रहणे लब्धे सवर्णार्थं स्त्रीग्रहणं विज्ञेयम् ।

उच्छिष्टं तदास्य पृष्टम् । यच्च 'नित्यमास्यं शुचिः स्त्रीणामिति' तस्य विषयो दर्शितः ।

शूद्रोच्छिष्टानामपां पाने पूर्वत्र कुशवार्युक्तम्, इह तु सप्तरात्रं यवानिति । आगमिकत्वादस्यार्थस्योभयत्र भक्ताद्युच्छिष्टभोजने इदं द्रष्टव्यम् ।

अभक्ष्यं मांसं प्लवहंसचक्रवाकादीनाम् ।

इदं तु बुद्धिपूर्वकमभ्यासभक्षणे द्रष्टव्यम् । अन्यत्र 'शेपेपूपवसेदहरिति' ।

एतदेव पयः पीत्वा, सूकरोष्ट्रादिभ्यो अन्यत्र, तत्र प्रतिपदं प्रायश्चित्तान्तराम्नानात् । सक्तुपानं यवपानं भवत्येव ॥ १५१ ॥

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः ॥
तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः ॥ १५२ ॥

मेध्यानि शुक्तानि 'दधि भक्ष्यं च शुक्तेष्वि'त्याद्यनुज्ञातानि । दध्नस्तु सत्यपि शुक्तत्वे भक्ष्यताया विहितत्वान्नैष विधिः । पवित्रं हि तदिति स्मरन्ति ।

कषाया वैद्यकप्रसिद्धा अनेकौषधिसंयोगेन ये क्वाथ्यन्ते ।

अप्रयतोऽशुचिः ।

यावद्व्रजत्यधः । अधोगमनं जीर्णानां मूत्रपुरीषभागेन निष्क्रमणम् । यदि वा पाकाशयप्राप्तिः ॥ १५२ ॥

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ॥
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ १५३ ॥

विशेषानुपदेशादमत्या वा तुल्यमेव च युक्तं अमत्या लाघवकल्पनात् ॥ १५३ ॥

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च ॥
अज्ञातं चैव सूनास्थमेतदेव व्रतं चरेत् ॥ १५४ ॥

शुष्काणि वल्लूरादीनि ।

भौमानीति कोटरजातानामनिषेधार्थम् ।

अज्ञातं मेषस्य महिषस्येति प्रकृतेरज्ञानात् ।

सूना घातस्थानम् । यत्र विक्रयार्थं पशवो हन्यन्ते । अतोऽन्यत्र । स्थितस्य लघुप्रायश्चित्तम् ।

"ननु 'सूनास्थ' इति वचनादन्यत्र स्थितस्य प्रायश्चित्ताभाव एव युक्तः" ।

नैतदेवम् । सौनमित्यविशेषेण प्रतिषेधात् । प्रायश्चित्ते तुच्छग्रहणात्तद्रहितस्य गुरुलघुभावो युक्ततरः ।

तदेव चान्द्रायणम् ।

ज्ञाते तु जातिविशेषेऽभ्यासे सप्तरात्रं यावकपानम् । 'शेषेषूपवसेदहः' इति ॥ १५४ ॥

क्रव्यादसूकरोष्ट्राणां कुक्कुटानां च भक्षणे ॥
नरकाकखराणां च तप्तकृच्छ्रं विशोधनम् ॥ १५५ ॥

चेति पूर्वश्लोकोऽत्राकृष्यते । तेन विड्वराहादीनां भक्षण एतदेव । द्वितीयेन चशब्देन क्रव्यादादीनां विण्मूत्रप्राशने यदेव विड्वराहादीनाम् । स्मृत्यन्तरे च नरमात्राधिकारेणेह द्विजग्रहणमविवक्षितं 'द्विजश्चान्द्रायणमिति' ।

एवमियं द्विश्लोकी विडालकाकेत्यत्रापेक्ष्यते । अतश्चैतेषामप्युच्छिष्टप्राशने विडालादिवत् । ततोऽस्यां त्रिश्लोक्यां समुद्दिष्टं मूत्रपुरीषं च सर्वेषां प्रतिषिद्धम् । अतश्च यत्क्रव्यादानां मूत्रपुरीषप्राशने तद्विडालादीनामपि ॥ १५५ ॥

मासिकान्नं तु योऽश्नीयादसमावर्तको द्विजः ॥
स त्रीण्यहान्युपवसेदेकाहं चोदके वसेत् ॥ १५६ ॥

मासिकमेकोद्दिष्टश्राद्धम् । 'अकृते सपिण्डीकरणे प्रतिमासं तु वत्सरम्' इति । आमावास्यस्य तु मासिकव्यपदेशेऽप्यनुज्ञातत्वात् 'काममभ्यर्थितोऽश्नीयात्' इति । कुतः प्रायश्चित्तम्

अन्ये त्वभ्यर्थितस्यानुज्ञानादनभ्यर्थ्यमानस्योक्तमेवेत्याहुः ।

असमावर्तको गुरुकुले तिष्ठन्नर्थाद्ब्रह्मचार्युच्यते ।

त्र्यहादन्यतरस्मिन्नहन्युदके वसेत्, त्र्यहस्यैव बुद्धौ स्थितत्वात्तर्हि चतुर्थमहस्तद्दिवसः ॥ १५६ ॥

व्रतचारी तु योऽश्नीयान्मधु मांसं कथंचन ॥
स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥ १५७ ॥

व्रतचारी प्रयुक्तो ब्रह्मचर्याश्रमस्थ एव

कथंचन आपद्यपीत्यर्थः । 'प्राणानामेव चात्यय' इत्यापदिविधानात् असति

दोषे न तन्निर्घातार्थमेतत्प्रायश्चित्तम्। किं तर्हि? निमित्तमात्रपर्यवसायि वचनात्क्रियते।

प्राकृतं प्राजापत्यं प्रकृतौ भवं प्राकृतम्। सर्वकृच्छ्राणां प्रकृतित्वादेवमुच्यते।

व्रतशेषं समापयेत् अकृतप्रायश्चित्तस्यावशिष्टव्रतसमाप्तावनधिकारमाह॥ १५७॥

बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च॥
केशकीटावपन्नं च पिबेद्ब्रह्मसुवर्चलाम्॥ १५८॥

आखुर्मूषकः।

अवपन्नमेतत्संपर्कदूषितम्।

ब्रह्मसुवर्चलां पिष्टोदकेन सह पिबेदेकाहमविशेषात्तेनैव शास्त्रार्थस्य कृतत्वात्॥ १५८॥

अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता॥
अज्ञानभुक्तं तूत्तार्यं शोध्यं वाप्याशु शोधनैः॥ १५९॥

आद्योऽर्धः श्लोकोऽनुवादः।

अज्ञातभुक्तशुद्ध्यर्थमित्येतद्विधीयते।

समनन्तरं तूत्तार्यं वमितव्यमित्यर्थः।

क्षिप्रं वा शोधनैः प्रायश्चित्तैः शोध्यम्।

अन्ये तु शोधनानि हरीतक्यादीनि रेचनान्याहुः, गौतमीयं चेदमुदाहरन्ति 'अभोज्यभोजने पुरीषाभाव' ( २३। २३ ) इति।

तदेतदसाधकम्। उपवासेनाऽपि निष्पुरीषत्वोपपत्तेः। तस्मादवान्तौ यथाश्रुतप्रायश्चित्तमेव वेदितव्यम्॥ १५९॥

एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः॥
स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः॥ १६०॥

व्रतानामनाद्यादनस्याभक्ष्यभक्षणस्य।

स्तेयं तद्दोषशमस्तमपहरन्ति यानि व्रतानि तेषामिदानीं विधिरुच्यते॥ १६०॥

धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः
स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति॥ १६१॥

द्विजोत्तमग्रहणं प्रदर्शनार्थं क्षत्रियादीनामपि ।

द्विजोत्तमशब्दसन्निपाताच्च स्वजातीयगृहादित ब्राह्मणगृहाद्विज्ञायते । तेनैतदुक्तं भवति । सर्व एव वर्णा ब्राह्मणगृहात् धनं हृत्वा कृच्छ्राब्देन शुध्येयुः ।

धनग्रहणात्सर्वस्मिन् धने सिद्धे 'धान्यान्न'ग्रहणं सद्धान्यार्थम् । अल्पसाराणामन्यं विधिं वक्ष्यति । अतः सारभूतप्रधानद्रव्यापहरणे इदं विज्ञायते ।

"तेषां हि परस्परद्रव्यापहरणे ब्राह्मणस्य तदीयधनापहारे कतरत्प्रायश्चित्तम् ।"

उच्यते । हिंसाप्रायश्चित्तवत्तुर्याष्टमादिभागकल्पना कर्तव्या । क्षत्रियस्य धने त्रीन्, वैश्यस्य सार्धं, शूद्रस्य द्वाविंशतिरात्रं वा ।

"कियत्परिमाणे धान्येऽपहृते"

दशभ्यः कुंभेभ्यः किंचिदूने, महत्त्वात्प्रायश्चित्तस्य । धनमप्येवं कालं न कल्पनेति विज्ञेयम् ।

कामादिति श्लोकपूरणम् । न ह्यकामस्य परधनहरणसंभवः ।

धान्यं व्रीह्यादि तदेवापहृतम् ।

अन्नं सिद्धम् ।

धान्यादीनां प्रत्येकं हरणे त्र्यब्दं कृच्छ्रम् ।

केचिच्च समुदायहणे प्रायश्चित्तमिच्छन्ति, गरीयो ह्येतत् ॥ १६१ ॥

मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च ॥
कूपवापीजलानां च शुद्धिश्चांद्रायणं स्मृतम् ॥ १६२ ॥

मनुष्याणां दासानाम् । स्त्रीणां दासीनाम् । क्षेत्रं भूभागो व्रीह्यादिधान्योत्पत्तिस्थानम् । कूपवाप्योर्जलशब्दः प्रत्येकमभिसंबध्यते । उद्धृतोदकस्येरणादिस्थस्यापहरणे एतद्भवति । जलग्रहणाच्छुष्कयोः कूपवाप्योर्विध्यन्तरम् । वापी खाततडागे च ॥ १६२ ॥

द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनि ॥
चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥ १६३ ॥

अल्पसाराणि न चिरमवतिष्ठन्ते, स्वल्पमूल्यानि च मृण्मयानि स्थालीपिठरादीनि दारुमयानि द्रोणाढकादीनि अयोमयानि लेपनीकुद्दालकादीनि ।

वेश्मनीति गृहस्थितापहारे भूयान् दोषः । न तथा खलक्षेत्रादिगते ।

निर्यात्य दत्वा ।

सर्वशेषश्चायं, विशेषाभावात् ।

यत्र त्वपहृतं दातुमशक्यं तत्र द्विगुणं प्रायश्चित्तम् ।। १६३ ।।

भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ।।

पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ।। १६४ ।।

यानं गन्त्र्यादि । शय्या खट्वादि । आसनं वृस्यासंदीपट्टादि ।

भक्ष्यभोज्ययोः खरविशदतद्वैपरीत्येन भेदो विज्ञेयः । भक्ष्यं मोदकशष्कुल्यादि । भोज्यं यावकादि ।

पंचगव्यं प्रसिद्धम् ।

अत्राप्येकाहमेव ।। १६४ ।।

तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ।।

चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ।। १६५ ।।

तृणादीनां पूर्वस्मात् यानादेरधिकहरणे प्रायश्चित्तमेतत् ।

काष्ठमघटितं वंशस्तंभादि, द्रुमसाहचर्यात् ।

द्रुमो वृक्षः ।

शुष्कान्नं तण्डुलादि भ्रष्टयवा वा ।

गुडग्रहणं स्वविकारार्थम् । तेन खण्डमत्स्यण्डिकादेर्ग्रहणम् ।

चैलं वस्त्रं वहूनां 'उत्तमानां च वाससाम्' । प्रागुक्तेन धनग्रहणेन कृच्छ्रादेः ।

चर्म कवचम् ।

मांसमामिषम् ।। १६५ ।।

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।।

अयःकांस्योपलानां च द्वादशाहं कणान्नता ।। १६६ ।।

स्वल्पबहुत्वापेक्षया च कालह्रासः सकृदावृत्तौ च ।। १६६ ।।

कार्पासकीटजोर्णानां द्विशफैकखुरस्य च ।।

पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः ।। १६७ ।।

कीटजाः पट्टाः ।

द्विशफा गवादयः । एकखुरा अश्वादयः ।

पक्षिणः शुकश्येनादयः

रज्जुः कूपादेरुदकोदंचनी ॥ १६७ ॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ॥

अगम्यागमनीयं तु व्रतैरेभिरपानुदेत् ॥ १६८ ॥

उक्तार्थः श्लोकः ॥ १६८ ॥

गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ॥

सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ १६९ ॥

गुरुतल्पव्रतमित्यविशेषवचनेऽपि, न तेन 'सुप्यादि' त्येवमाद्यतिदिश्यते, अपि तु 'प्राजापत्यं चरेदब्दम्' इति महापातकत्वात्। न हि महापातकेभ्योऽन्यत्र मरणांतं प्रायश्चित्तमस्ति। अभ्यासे तु स्यादिति।

स्वयोनयो भगिन्यः सोदराः।

सख्युः स्त्रीषु सुहृद्भार्यासु। सुहृत्त्वमेवाऽत्र कारणं, न यौनादिविशेषः, नापि श्रोत्रियत्वादिगुणः।

एवं पुत्रस्य स्त्रीषु स्नुषासु।

असमानजातीयास्वपि कुमारीषु पित्रादिभिरदत्तासु। स्वयं संप्रीत्यानुपनतास्वेतदेव बलाद्गमने।

अत्रापि न सत्यपेक्षा। यद्यप्यतिदेशे विशेषो नास्ति तथापि प्रायश्चित्तद्वयं स्यादिति, दृष्टत्वात्। तथा च गुरुलघुभावाद्धीनजातीयासु कृच्छ्राब्दाच्चांद्रायणं मासत्रयं लघीय आदेश्यम्।

अन्त्यजाश्चाण्डालम्लेच्छादिस्त्रियः। चण्डालादिस्त्रीषु च स्मृत्यन्तरे ज्ञानाज्ञानकृतो विशेष उक्तः। 'अन्त्यावसायागमने कृच्छ्रार्धमन्यासु द्वादशरात्रम्॥१६९॥

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ॥

मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥ १७० ॥

पितृष्वसुर्दुहिता पैतृष्वसेयी भगिनी।

मातृष्वस्रीया मातृष्वसुर्दुहिता।

मातुश्च भ्रातुर्मातुलस्य दुहिता। आप्तस्य सोदर्यस्येत्यर्थः ॥ १७० ॥

**एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ॥**
**ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥ १७१ ॥**

"ननु च सपिण्डा चेत्यनेनैवैतासामविवाह्यत्वे सिद्धे किमर्थमिदं नोपयच्छेतेति"।

केचिदाहुः। अन्यासां पक्षेऽभ्यनुज्ञानार्थं सपिण्डश्लोके प्रतिषिद्धानाम्।

तदयुक्तम्। पतति ह्युपयन्नध इति प्रायश्चित्ताविधानात्। एतस्मिश्च प्रयोजने संभवति सपिण्डश्लोकस्य पाक्षिको बाधोऽयुक्तोऽगत्या हि विकल्प आश्रीयते।

ज्ञातित्वेन बन्धुत्वेनेत्यर्थः।

अनुपेया अविवाह्या अगम्याश्च।

उपयन्विवाहयन्। अधः पतति नरकं प्राप्नोतीति यावत्। अथवा जातितो भ्रश्यति हीनजातीयः संपद्यते। यद्यपि जातेर्जीवत्पिण्डानपायः, तथापि तत्कर्मानधिकारादेवमुच्यते ॥ १७१ ॥

**अमानुषीषु पुरुष उदक्यायामयोनिषु ॥**
**रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत् ॥ १७२ ॥**

अमानुष्यो वडवाद्याः। गोरमानुषीत्वेऽपि 'सखिसयोनिसगोत्राशिष्याभार्यासु स्नुषायां गवि च तल्पसमः। अवकर' (गौत० २३।१२-१३) इति विशेषविहितमेव। अनयोर्गुरुतल्पावकीर्णप्रायश्चित्तयोरबुद्धिपूर्वबुद्धिपूर्वभेदेन व्यवस्था। तल्पशब्देन प्रसिद्धसम्बन्धादत्र शास्त्रे गुरुतल्पमेवोच्यते। 'अवकरो'ऽवकीर्णीनिमित्तम्। निमित्ते चातिदिष्टे तत्कार्यातिदेशः। 'सखी' चात्र या पुरुषवन्मैत्रीमागता न तु या सख्युः स्त्री। न ह्यत्र पुंयोगात्प्रवृत्तिः। न च भार्यासंबन्धेन संबन्धोऽस्ति, सयोनिपदेन व्यवधानात्। तथा च वसिष्ठो 'गुर्वी सखी न च पात्रांगत्वात्कृच्छ्राब्दपात्रं न च पात्रकुमारी अनयोस्तूपस्थादन्यत्र'।

उदक्यायां च मासिकेन रजसाभिप्लुतो'दक्या'।

पाठान्तरं 'पीत्वधरं पुरुष इति उदक्यायामयोनिषु'। एक एवार्थः।

अयोनिः स्त्रीलिङ्गादन्यत्र स्थाने । तथान्ये 'जले खे च' इति पठन्ति ।

"ननु चायोनिग्रहणादेव सिद्धं 'ख' इति न पठितव्यम् । आकाशः खशब्देनोच्यते । योनेरन्यश्च सः" ।

नैष दोषः । योनिशब्देन साहचर्यात् अन्यदङ्गमेवोच्यत इति मन्यन्ते ।

जले साक्षात् ।। १७२ ।।

मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः ।।

गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ।। १७३ ।।

मैथुनेषु । समनन्तरं सवाससः स्नानम् ।

गोयाने गन्त्र्यादावप्सु चापि ।। १७३ ।।

चंडालांत्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।।

पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ।। १७४ ।।

चण्डाला म्लेच्छा दिगन्तवासिनः । तत्स्त्रीगमने प्रायश्चित्तं तदन्नभोजने प्रतिग्रहे च ।

पततीति वचनात्कृच्छ्राब्दादधिकं प्रायश्चित्तं, न पुनः पातित्यमेघ भोजने । 'अभोज्यानां तु भुक्त्वाऽन्नम्' इतिप्राप्ते वचनमिदं कृच्छ्राब्दप्रायश्चित्तार्थम् । एवं प्रतिग्रहेऽपि 'मासं गोष्ठे पय' इति प्राप्ते तदर्थमेव ।

ज्ञानात् साम्यमिति । कामकारकृतेऽपि प्रायश्चित्तविधानार्थेऽर्थवादोऽयम् । यत्स्मृत्यन्तरेऽब्दशब्देन ज्ञाताज्ञातयोः प्रायश्चित्तमुक्तं तच्च दर्शितम् । अतः कुतोऽधिकप्रायश्चित्तार्थता ।

"भुक्त्वा चेति केन संबध्यते" ।

चाण्डालान्त्येत्यनेन ।

"ननु च गुणीभूतमेतत्" ।

गुणीभूतस्याऽप्यपेक्षायां संबन्धो दर्शितः । 'भुक्त्वा' 'कस्ये'त्याकांक्षायां अन्यस्याऽश्रुतत्वात्साम्यवचनाच्च चाण्डालान्त्यानामेव सम्बन्धः । अतोऽयमर्थो भवति चाण्डालस्त्रीम्लेच्छानामन्नमशित्वा तेभ्यः प्रतिगृह्य च स्त्रियं गत्वा सकृद्गमनात्प्रायश्चित्तम् । अभ्यासे तु साम्यमेव युक्तमनधिकारप्रायश्चित्तेन । यतः प्रतिनिमित्तं नैमित्तिकेन भवितव्यं न च तान्येकेन जन्मना शक्यन्तेऽनुष्ठातुम् ।। १७४ ।।

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि ।।
यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ।। १७५ ।।

विशेषेण प्रदुष्टां निरुन्ध्यात्पत्नीकार्येभ्यो निर्वर्तयेत् 'अर्थस्य संग्रहे चैनाम्" इत्यादिभ्यः ।

एकवेश्मनीति निगडबन्धे कर्तव्या । न स्वैरं भर्तृगृहे विहर्तुं लभेत ।

तत्र निरुद्धां प्रायश्चित्तं कारयेत् ।

किं पुनः ।

यत्पुंसः परदारेषु प्रायश्चित्तमुपपातकं ब्राह्मणस्य तत्समानहीनजातीयासु पारदार्यमिति । वर्णान्तराणां तदेव । उत्तमागमने तु द्विगुणं वैश्यस्य त्रिगुणं ब्राह्मण्यां क्षत्रियस्य । तथाऽयं विशेषो द्वे परदारे त्रीणि श्रोत्रियस्येति । शूद्रस्य ब्राह्मणीगमने महापातकप्रायश्चित्तम् । वैश्यस्य क्षत्रियागमन उपपातकं द्विगुणं त्रिगुणम् । केचित्तूत्तमागमने शूद्रस्य ब्राह्मणीवदिच्छन्ति । 'प्रातिलोम्ये वधः पुंसाम्' याज्ञ० २।२८६) इति लिङ्गदर्शनादेतदुक्तम् । दण्डेष्वपि विशेषो दर्शितः । यथैवोत्तमागमने पुंसां व्यवस्था तथैव स्त्रीणां हीनजातीयपुरुषसंपर्के चेति । दोषेऽपि स्त्रीणामर्धं प्रायश्चित्तम् ।

'प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च । बालश्चाषोडशाद्वर्षादशीतिपरतः पुमान् ।।'

तथा दृष्टव्यभिचारायां गमने लघीयः । स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नानादुदकंभं दद्याद्ब्राह्मणाय । वैश्यायां चतुर्थकालाहारो ब्राह्मणं भोजयेत् । क्षत्रियायां त्रिरात्रोपोषणं यवाढकं दद्यात् । वैश्यवदित्यपि स्मर्यते । तद्वच्छूद्रभार्यायां द्रष्टव्यम् । ऋतौ वा गच्छतो गर्भमादधतो वा ।

'ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण संगताः । अप्रजाता विशुध्येयुः प्रायश्चित्तेन नेतरा ।।'

अथवा या एता न केनचिदूह्यन्ते, वैश्येन चरन्ति, तद्गमनेऽस्ति प्रायश्चित्तं नेति संदेहः ।

"कुतः संशयः" ।

दारशब्दस्य संस्कारशब्दत्वात्। असति विवाहे न ता अस्य दारा इति व्यपदेशमर्हन्ति। पारदार्यं च प्रायश्चित्तम्। अतो नास्तीत्यवगच्छामः। यतस्तु 'स्वदारनिरत' इति नियमो विहितोऽतो भवतीति मन्यामहे।

"किं पुनरत्र युक्तम्"।

अस्तीति।

कुतः ?

नियमस्य विहितत्वात्। 'अकुर्वन्विहितमि'त्यादि, तदतिक्रमे प्रायश्चित्तस्मरणात्। माभून्नामोपपातकम्। न तावता प्रायश्चित्ताभावः प्रायश्चित्तार्थमुपपातकजातिभ्रंशकरादि परिगणितम्। सामान्यं तु निमित्तं सर्वत्राकुर्वन्विहितमित्यादि।

उक्तं च प्राक् 'स्वैरिणीत्यादि'।

"ननु च मृतभर्तृपक्षेण पितृपक्षेण वा संवद्धैव परदारव्यपदेश्या। अधिकामविहारित्वात् स्वैरिण्यः"।

सत्यम्। वेश्यास्वपि स्वातन्त्र्यावलंबनः स्वैरिशब्दो न विरुध्यते।

अतश्च तासां सचैलस्नानोदकुंभादिदानम्।

तत्र केचिदाहुः। व्रतमेतत्। 'तस्य व्रतं' इत्युपक्रम्य 'व्रतानीमानि धारयेदिति' च यानि विहितानि तानि स्नातकव्रतानि, न सर्वपुरुषधर्मः॥ १७५॥

**सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपमंत्रिता॥**
**कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम्॥ १७६॥**

प्रार्थिता समानजातीयेन पुनः संसर्गे चांद्रायणमुपपातकत्वात्सिद्धम्। गोत्रनिवृत्त्यर्थं पुनश्चांद्रायणविधानं साकल्यविधार्थम्।

यावच्चैवमुक्तम्—

'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥

दुहिता चार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता साध्वी धात्री वर्णोत्तमा च या॥'

अत्र सत्यप्यतिदेशे न तुल्यप्रायश्चित्तता, दण्डविशेपदर्शनात्। तत्र मातर्युक्तमेव। मातृष्वसृप्रभृतीनां दुहित्रन्तानां कृच्छ्राब्दः। अवशिष्टानां चान्द्रायणाभ्यासः।

तत्र या उक्तास्ताः सगोत्रा उच्यन्ते यज्जातीयास्तेन व्यपदिश्यन्ते, उत यस्मै दत्तास्तद्गोत्रा इति।

उभयेनेत्याह, उभयथालिङ्गदर्शनात्।

'गोत्रं' वंशः पित्रादिरभिजनः, तत्सम्बन्धाच्च पितृष्वसृग्रहणमनर्थकं, सगोत्रा हि सा। अथ येनैकतां गतास्तद्भावमनुभवन्ति, तदा भर्तृगोत्रव्यपदेशार्हाः, तस्मिन् पक्षे पितृव्यस्त्रीग्रहणमनर्थकं भवति हि सा सगोत्रा।

नन्वियं कस्येति लिङ्गाभावादुभयोरपि युक्ता। सर्वेषां तु दर्शनं भर्तृगोत्राः 'सगोत्राः'।

यत्तु कैश्चिदुच्यते 'श्राद्धविधौ कुर्वन्तु पैत्रिकं गोत्रमिति' तत्तत्रैवास्ति। अथवाऽप्यस्तिवचनात्तथा क्रियेत॥ १७६॥

**यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः॥**
**तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥ १७७॥**

वृषल्यत्र चण्डाल्यभिप्रेता, महत्त्वात्। द्विरभ्यासे चेद्बुद्धिपूर्वं द्रष्टव्यम्। अन्यथा कृच्छ्राब्द एव वा।

एकरात्रग्रहणात्। सर्वां रात्रिं शयानस्य तया सह गच्छतश्चैतद्विज्ञेयम्।

सेवनं संभोगः।

वृषलीशब्दो निन्दया प्रयुक्तो न जातिशब्दे।

यत्करोति यत्पापं जनयति तत्त्रिभिर्वर्षैर्व्यपोहति विनाशयति। भैक्षाहारो जपन्निति अविशेषचोदनायां भावी आसु परं च नास्तीत्याहुः। अन्ये तु यथाश्रद्धमन्यानि मन्त्रब्राह्मणवाक्यानि, न तु लौकिकं वाक्यम्।

अविशेषेण मन्त्रजपस्य शुद्ध्यर्थं विहितत्वाद्'ऋक्संहितामित्यादि'।

यत्तु 'त्रिभिर्मासैः सेवित्वा वृषलीं' शूद्रामेवाचक्षते, तदप्ययुक्तम्। शूद्राविवाहस्याविहितत्वात्, स्वैरिण्याश्च लघुप्रायश्चित्तस्योपदेशादन्यस्याश्चोपपातकत्वाद्गुरुतरमिदमयुक्तम्॥ १७७॥

**एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः॥**
**पतितैः सम्प्रयुक्तानामिमाः शृणुत निष्कृतीः॥ १७८॥**

ऋज्वर्थः श्लोकः॥ १७८॥

संवत्सरेण पतति पतितेन सहाचरन् ॥
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥ १७६ ॥

द्विजातिकर्मभ्यो हानिः पतत्यर्थः । पतति भ्रश्यति, हीयतेऽधिकारात् । पतिताश्चत्वारो ब्राह्मणादयः । तैः सहाचरन् संवत्सरेण पतितो भवति तत्तुल्यो भवतीत्यर्थः ।

किमाचरन् ।

यानासनाशनात् । संलापगात्रस्पर्शादिना सह गमनम् । 'यान'मासनं तादृशमेव । एकस्यां शय्यायामेकस्मिन्नासने, एकस्मिन् आसने एकपात्रे भोजनम् ।

याजनाध्यापनाद्योनान्न त्विति विच्छेदः । किं याजनादिभिर्नैव पातित्यमथार्वाक्संवत्सरादूर्ध्वं वेत्येतद्वक्तव्यम् । स्मृत्यन्तरदर्शनादिभिः सद्यः ।

याजनाध्यापनमिति द्वितीयान्तः पाठो युक्तः । आचरन्निति शत्रा हेत्वर्थस्य गमितत्वात् ॥ १७६ ॥

यो येन पतितेनैषां संसर्गं याति मानवः ॥
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥ १८० ॥

यस्य पतितस्य यद्विहितं तत्प्रायश्चित्तं कुर्यात्तत्संसर्गस्य शुद्धये ।

एषामिति निर्धारणे षष्ठी । एषां पतितानां येन पतितेन यः संसर्गं याति पूर्वोक्तसंसर्गं गच्छति स तस्यैव पतितस्य यद्विहितं प्रायश्चित्तं तत्कुर्यात् । तत्संसर्गाद्यो दोष उत्पन्नस्तद्विशुद्धये तद्विनाशाय । अनुवादोऽयं श्लोकपूरणः ।

अथ यदिदमुच्यते पतितात्याग्यपतितात्यगीत्यादिनिन्दितकर्माभ्यासेन पतनं तत्र यदेतत्पतितत्ववचनं तत्किमुपदिश्यत आहोस्विदतिदिश्यते । यदि तावदुपदिश्यते पंच पातकानीति प्रसिद्धेर्मूलं वाच्यम् । अथ पंचानामौपदेशिकमन्येषामातिदेशिकैर्व्यवहारे भेदे न कश्चिदर्थः । तान्येव प्रायश्चित्तानि त एव धर्मा यस्मादुपदिश्यन्ते, अतिदेशेन व्यवहारेण कोऽर्थः ।

अथोच्यते । "न व्यवहाराः प्रयोजन एव भिद्यन्ते अपि त्वन्यतोऽपि निमित्तात्, इह चास्ति प्रमाणतो भेदः । यत्र पतितत्वमभिधाय द्विजातिकर्मभ्यो हानिः 'पतितस्योदकं कार्यमि'त्याद्यभिधीयते सकृत्स्वधर्माभिधाना'दुपदेशः', यत्र तु

तत्संबन्धवचनान्नाम्ना लिङ्गसंयोगाद्वा तद्धर्मप्राप्तिः सो'ऽतिदेशः'। सूर्याग्निपदयोर्न हि सौर्यं कश्चिद्धर्मः श्रुतो येनातिदेशे सत्ययं विशेषो लभ्य इति निश्चीयते"।

तदसत्। यतः सूर्यादिशब्दस्यैव प्रभुता, अकृतत्वाद्वेदस्य। अयं पौरुषेयो ग्रन्थः। पुरुषश्चाऽसति भेदे किमिति व्यवहारं नवं प्रवर्तयति। या तु प्रत्यक्षानुमानाभ्यां बाधकाभावात्सिद्धिः साऽत्र कदाचिदुपलभ्यते। योऽप्यभ्यासः सोऽपि द्विरावृत्तिस्तत्र ततः प्रवृत्तिः आवृत्तिशतेष्वभ्यासरूपतयैक एवेति। लोके तावदावृत्तिमात्रमभ्यासः। तत्र योऽपि द्विरपवादः योऽपि शतकृत्वः तौ द्वावपि प्रायश्चित्ते समौ स्याताम्। निन्दितं च कर्म प्रतिषिद्धम्। तत्र योऽपि द्विर्दिवा सुप्याद्योऽपि गा असकृद्धन्यात्तत्र निन्दितकर्माभ्यासेऽविशेषेण पतनप्राप्तिः। तस्माद्विचिन्त्यमेतत्।

किमत्र चिन्त्यते। पंचानां तावत्पातकित्वं सर्वस्मृतिकारैरुच्यते, अन्येषां केषांचित्तत्समत्वम्। तदुभयमपि बाधितं तत्र विशेषो नास्तीति संकल्पयिष्यते 'शक्तिं चावेक्ष्य पापं च' इति। न हि तस्य तत्सदृशस्येति वा एकत्वं युक्तं, गार्गवयस्येव। अथ केषांचिद्धर्माणां भेदः केषांचिदेकत्वे सादृश्यं भवति।

तस्मात्तत्समानां पतितत्वं भवति। अतः किंचिदूनं तत्समानां पतितप्रायश्चित्तम्।

अधिकारापगमे केचिद्विशेषमाहुः। श्रौतेष्वधिकारो निवर्तते साक्षात्, न स्मार्तेषु।

यदप्युक्तं "द्विरावृत्तौ शतकृत्वश्च भेदो न स्यादिति' तत्राप्यभ्यासानां भेदः। कथं तुल्यप्रत्यवायता। यदपि दिवा स्वप्नगोवधयोर्निन्दितत्वाविशेषात्तदभ्यासे तुल्यं पतितत्वमिति, कथमविशेषो निंदायाः, यत्राऽर्थवादेषु प्रत्यवायविशेषः श्रूयते, प्रायश्चित्तबहुत्वं बाहुल्येऽपि प्रतिषेधे।

तत्राऽयं विधिः। 'निन्दितकर्माभ्यासे पतनमिति' न प्रतिषिद्धमात्रे, तथा च 'पूर्णेवानसीति'। सत्यपि निन्दितकर्माभ्यासे नैव पातित्यमस्ति ॥ १८० ॥

पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः ॥
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १८१ ॥

जीवत एव पतितस्य प्रायश्चित्तमनिच्छतो घटोदकदानं मृतस्येव कर्तव्यमुच्यते।

सपिण्डाः सप्तमपुरुषावधयः एकवंश्याः। ततोऽन्ये बान्धवाः सगोत्राश्च।

निन्दितेऽहनि चतुर्दश्यादौ।

सायाह्नेऽस्तमिते रवौ।

ज्ञात्यृत्विक्। ज्ञात्यादयः कर्तॄणां, तथा पतितस्य ॥ १८१ ॥

दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा ॥
अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १८२ ॥

प्रेतवदिति। कर्तव्यतोपदेशोऽयम्।

दासी प्रेष्योदकुम्भम्। पदा पादेन। पर्यस्येत् क्षिपेदिदममुष्मा इति।

क्षिप्ते तस्मिन्नहोरात्रमाशौचं युक्तम्।

बान्धवैः सह तथासीरन्नेकत्र स्थाने निवसेयुस्तदहः।

दासीग्रहणात् स्वयंकरणं निषेधति।

"यद्येवं ज्ञात्यृत्विग्गुरुसन्निधावित्यस्वयंकरणपक्षे ज्ञातीनां सपिण्डानां च को विशेषो येनोच्यत एतेषां संनिधान एतेन कर्तव्यमिति। यावता सर्व एव सन्निधानमात्रेणोपकुर्वन्ति। तस्यासन्निपात्योपकारत्वात्"।

नैतदेवम्। सपिण्डादयः प्रयोजकत्वेन कर्तारः। ज्ञात्यादयस्तु सन्निधाप्यन्ते केवलमदृष्टायेति ॥ १८२ ॥

निवर्तेरंश्च तस्मात्तु संभाषणसहासने ॥
दायाद्यस्य प्रदानं च यात्रा चैव हि लौकिकी ॥ १८३ ॥

कृतोदके यथा वर्तितव्यं तथेदानीमुच्यते।

संभाषणमितरेतरमुक्तिप्रत्युक्तिरूपो व्यवहारः।

दायाद्यं धनं तदपि तस्मै न दातव्यम्।

लौकिकी यात्रा संगतयोः कुशलप्रश्नादिका। विवाहादौ नैमित्ते गृहानयनं भोजनं चेत्येवमादि।

"ननु च संभाषणप्रतिषेधादेवैषु निवृत्तिः सिद्धैव"।

अभ्युत्थानासनत्यागस्यापि निवृत्तिरूपस्य संभवात्। संभाषणं तु शब्दात्मकमेव ॥ १८३ ॥

ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यं च यद्वसु ॥
ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः ॥ १८४ ॥

ज्येष्ठावाप्यं च यद्वसु। अत्रापि चोद्यते।

"दायाद्यदाननिषेधाज्ज्येष्ठप्राप्यवसुनो धनस्य सिद्ध एव निषेधः"।

केचिदाहुर्गुणतोऽधिकस्य यवीयसस्तदंशप्राप्त्यर्थमनूद्यते।

अन्ये तु मन्यन्ते। दायाद्यशब्देन धनमात्रमुच्यते नान्वयागतमेव। तथा चाभिधानकोशे 'दायाद्यं धनमिष्यत' इति स्मर्यते। अतो यत्तस्मात्केनचिद्दणत्वेन गृहीतं तेनापि तन्न दातव्यम् किं तर्हि कर्तव्यम्? पुत्रभ्रात्रादिरिक्थहारिणामर्पणीयम्।

अन्ये तु मन्यन्ते। अविभक्तधनानां दायाद्यधननिषेधः, कृते तु विभाग-उद्धारस्यैव ज्येष्ठांशस्यैवोच्छेदः। सत्स्वपि पुत्रेपूद्धारं वर्जयित्वाऽन्यस्य पुत्रा एवेशते॥ १८४ ॥

प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ॥
तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ॥ १८५ ॥

कृतप्रायश्चित्तस्येदानीमुदकक्रियोच्यते।

तेनैव सार्धं स्नात्वा जलाशये पुण्यस्रवन्त्यां महाह्रदे वा प्रभासमानसादौ वा तीर्थविशेषे कृतस्नानोऽपां कुम्भं नवं स्वयं प्रास्येयुः।

नवकुंभग्रहणाद्दासीग्रहणाच्चात्र पूर्वत्रोपयुक्तस्य क्रियासु कुम्भस्य ग्रहणम्। उदकेन पूरयित्वा हरणमुक्तम्॥ १८५ ॥

पुनरसौ घटः प्रक्षेप्तव्य इत्याह।

स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम् ॥
सर्वाणि ज्ञातिकार्याणि यथापूर्वं समाचरेत् ॥ १८६ ॥

यास्वप्सु स्नातास्तास्वेव घटः प्रक्षेप्तव्यः।

ततस्तं पुरस्कृत्य तदीयं भवनं प्रविशेयुः। ततो यथापूर्वं संभोजनादीनि ज्ञातिकार्याणि प्रवर्तयेयुः। अन्ये तु सकृत प्रायश्चित्त इति सम्बध्नन्ति। घटप्रासनं तेनैव कर्तव्यम्।

एषा चास्य पतितोदकक्रिया नान्यस्य त्याज्यस्य, 'त्यजेच्चेत्पितरं राजघातकं शूद्रयाजकम्' इत्यादेः ॥ १८६ ॥

**एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि ॥**
**वस्त्रान्नपानं देयं तु वसेयुश्च गृहान्तिके ॥ १८७ ॥**

योषित्सु स्त्रीष्वपि पतितास्वेष एव विधिः। 'पतितास्व'कृतप्रायश्चित्तासु च। ताभ्यस्तु कृतोदकाभ्योऽपि वस्त्रान्नं दातव्यम। दानग्रहणात् वस्त्रान्ने शरीरस्थितिमात्रसंपादिनी दातव्ये, न भोगादयः।

पानमौचित्यादुदकम्। तच्च प्राचुर्याददत्तमपि लभ्यते। वचनं तु परानुरोधात् प्रीत्या तदपि स्वातन्त्र्येण तासां न देयम्।

यादृशं च पानं तादृशे एव वस्त्रान्नेऽतो निकृष्टं वस्त्रं चान्नं दातव्यम्। तथोक्तं ( याज्ञ० स्मृ० १।७० ) 'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्।'

पातित्यहेतवश्च स्त्रीणां ये एव मनुष्यस्य। यत्तु भ्रूणहनि हीनवर्णसेवायां 'न च स्त्रीणामधिकं भ्रूणहनीति' तत्तुल्यतार्थं न तु परिसंख्यार्थम। तथा च याज्ञवल्क्यः ( प्रायश्चित्ते ३।२९८ )।

'नीचाभिगमनं गर्भपातनं भर्तृहिंसनम्। विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्' ॥

वसेयुः स्वगृहान्तिके प्रधानगृहान्निष्कास्य कुटीगृहे वासयितव्ये'त्यन्तिक-' ग्रहणम्।

केचिदाहुः—प्रायश्चित्तं तु कुर्वतीनामेतद्देयं न त्वन्यथा।

तदयुक्तम्। वस्त्रान्नदानव्यवहारस्य तत्र योगत्वात्। प्रायश्चित्ते भिक्षाहारता पयोव्रतं चान्द्रायणविधिश्चेत्यादि। न च भैक्षाहारता चानेन विवर्तयितुं शक्या। वृत्तिविधानेन चरितार्थत्वात्। तस्माद्यस्याः प्रायश्चित्तेष्वनधिकारः अशक्ततयाऽतिपुष्टतया वा तस्या अपि वस्त्रादिदानं कर्तव्यमिति श्लोकार्थः ॥ १८७ ॥

**एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्सहाचरेत् ॥**
**कृतनिर्णेजनांश्चैतान्न जुगुप्सेत कर्हिचित् ॥ १८८ ॥**

एनस्विनः प्रकृतत्वात्पातकिनः । तैरनिर्णिक्तैरशुद्धैरकृतप्रायश्चित्तैर्नार्थं किंचिदृणदानक्रयविक्रययाजनाद्युक्तम् ।

निर्णेजनं शोधनं पापापनोदनम् । तस्मिन् कृते । नैनां जुगुप्सेत कृतप्रायश्चित्तान्न कुत्सयेत् ।। १८८ ।।

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।।
शरणागतहंतृंश्च स्त्रीहंतृंश्च न संवसेत् ।। १८९ ।।

शरणागतः । यः शत्रुभिरभिहन्यमानो बलवताऽन्येन वोपद्रूयमानः परित्राणार्थं कंचिदन्यमभिधावेत् 'त्रायस्व मामिति' । एवं कृतदोषो विद्वान् समुपधावेत् 'उद्धर मां देहि प्रायश्चित्तमिति' शरणागतः ।

कृतघ्नः कृतमुपकारं विस्मृत्य योऽपकाराय यतते यो वा कृतोपकारं पुनर्विनाशयति तस्यैवोपकृतस्यापकार्यं उद्यच्छति । यद्यप्येषा शब्दव्युत्पत्तिस्तथापि लोकप्रसिद्धेर्यत्रोपकर्तृरपकारे वर्तते स 'कृतघ्नः' ।

अत्र जातिर्नापेक्ष्यते बालादिस्वरूपमेव कारणम् ।

स्त्रियो व्यभिचारिण्योऽपि । यद्यपि तासां स्वल्पं प्रायश्चित्तं तथापि वाचनिकः संवासप्रतिषेधः ।

संवासः संगतिस्तद्गृहनिवासश्च ।। १८९ ।।

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।।
तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ।। १९० ।।

'आ षोडशाद्ब्राह्मणस्य' इत्यादिनोपनयनकालनियमः कृतः । तदतिक्रमे प्रायश्चित्तमिदम् ।

गर्भाष्टमात्प्रभृति यावत्षोडशवर्षं ब्राह्मणस्य सावित्री नानूच्येत । सावित्र्यनुवचनेनोपनयनाख्यसंस्कारो लक्ष्यते । अस्मिन् काले यद्युपनयनं न क्रियेत । एवं आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशतेर्विशः' ।

अत ऊर्ध्वं त्रीन् कृच्छ्रांश्चारयितव्यः । निरुपपद'कृच्छ्र' श्रवणे प्राजापत्यप्रत्यय इति स्मृतितन्त्रसिद्धिः ।

अन्ये तु कृच्छ्रातिकृच्छ्रानाहुः ।

कृच्छ्रेषु कृतेषूपनेतव्याः ।

यथाविधीत्यनुवादः ॥ १६० ॥

प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ॥
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥ १६१ ॥

विकर्मस्था यथा ब्राह्मणाः शूद्रसेवाद्यभिरताः । यस्य यत्कर्म जीविकाहेतुस्तया तत्तस्य विहितं कर्म । यस्य यन्न विहितं तस्य तद्विकर्म । द्विजातीयस्य विहितं विजातीयस्य विकर्म ।

ब्रह्मणा परित्यक्ता उपनीता अप्यस्वीकृतवेदा अधीत्य वा वेदमुपविस्मरेयुस्तेषामप्येतत्कृच्छ्रत्रयम् ।

प्रायश्चित्तं चिकीर्षन्तीत्यनुवाद एवायम् । इच्छन्नेव यतः प्रवर्तते ॥ १६१ ॥

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ॥
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥ १६२ ॥

गर्हितेनेत्यविशेषेऽप्यसत्प्रतिग्रहणेति द्रष्टव्यम् । उत्तरत्र विशेषविधेस्तं प्रत्येवोपदिश्यमानत्वात् 'मुच्यतेऽसत्प्रतिग्रहादिति' ।

उत्सर्गः—त्यागो ममतानिवृत्तिर्दानेन वा । अनपेक्ष्य दृष्टमदृष्टं राजरथ्यादिषु त्यागेन देयं 'मम यो गृह्णाति स गृह्णात्वि'त्याद्यभिधाय क्षिपेत्, श्वभ्रे गर्ते नद्यादिषु वा ।

जपतपसी वक्ष्यत्युपदिष्टश्लोके ।

अन्ये तु ब्राह्मणशब्दस्थाने मानवशब्दं पठित्वैवं व्याचक्षते । यस्य वर्णस्य द्विजातेः शूद्रस्य वा धनार्जनोपायतया यत्प्रतिषिद्धं तत्तस्य 'गर्हितम्' । यथा 'ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत्' इत्यादि । तेन येऽर्जयन्ति धनं कर्मणा तस्योत्सर्गजपतपांसि त्रीणि समुच्चितानि प्रायश्चित्तानि । ब्राह्मणस्यासत्प्रतिग्रहे उत्तरो विशेषविधिः ॥ १६२ ॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ॥
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ १६३ ॥

त्रीणि सावित्रीसहस्राणि प्रत्यहमिति केचिदाहुः ।

अन्ये तु मासं त्रीण्यभिसंबध्नन्ति । अतश्च प्रत्यहमेकैकं शतम् ।

गोष्ठ इति वासस्थानम् ॥ १६३ ॥

उपवासकृशं तं तु गोव्रजात्पुनरागतम् ॥
प्रणतं प्रतिपृच्छेयुः साम्यं सौम्येच्छसीति किम् ॥ १६४ ॥

कार्श्यवचनात्स्वल्पं पयः पानमाह।

प्रणतं जानुभ्यां स्थितं भुवि।

ते विद्वांसो ब्राह्मणाः पृच्छेयुस्तं 'हे सौम्येच्छसि साम्यमिति'। 'अथ पुनरपि शास्त्रमवगणय्य न प्रवर्तितव्यमसत्प्रतिग्रहलोभेनेति' ॥ १६४ ॥

सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसं गवाम् ॥
गोभिः प्रवर्तिते तीर्थे कुर्युस्तस्य परिग्रहम् ॥ १६५ ॥

पृष्टेन वा तेन वक्तव्यं 'सत्यमि'ति।

येन मार्गेण गावो विचरन्ति नदीप्रस्रवणादिजलं पातुं तस्मिंस्तीर्थे तरणप्रदेशे। ते ब्राह्मणाः परिग्रहमस्य कुर्युस्ते हि हस्तारोपणेना 'त्मैकदेश' मानयेयुः ॥१६५॥

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ॥
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥ १६६ ॥

व्रात्याः सावित्रीपतितास्तेषां व्रात्यानां व्रात्यस्तोमः क्रतुर्विहितस्तेन ये याजयन्ति आर्त्विज्येनोपदेष्टृत्वेन च। परेषां मातापितृगुरुवर्जमन्त्यकर्म श्मशानादि। अभिचारं श्येनचिदादि। अहीनं च द्विरात्रादिकम्। कृच्छ्रैर्विशुध्यति।

अन्ये त्वाहुः। नायमभिचाराहीनयोर्यजमानस्य विधिः। कस्य तर्हि? ऋत्विजाम्। तथा च व्रात्यानां याजनमितीदृश एवाधिकारः। यजमानस्य तु विधिलक्षणाप्रवृत्तिस्तस्याः प्रतिषेधाभावे कुतः प्रायश्चित्तम्।

"भवत्वहीने शास्त्रतः प्रवृत्तिः श्येनादौ तु कथम्। न हि शत्रून् मारयेदिति नोदनाऽस्ति। किं तर्हि? 'यः शत्रोर्मारणं कामयते तेन तत्सिद्ध्यर्थं श्येनादि कर्त्तव्यम्'। शत्रुमारणे च हिंसालक्षणा प्रवृत्तिः। सा च निषिद्धा 'न हिंस्यात्सर्वाभूतानीति'। अहीनेष्वपि लिप्सात एव प्रवृत्तिः। फलकामस्य हि तत्राधिकारो भवति। न तु फलकामना तत्र निषिद्धा, नापि काम्यमानार्थनिष्पादको व्यापारः। इह तूभयं निषिद्धं 'न हिंस्यादिति' मरणफलव्यापारेण न प्रवर्त्ति-

तव्यम्। तत्फलं च श्येनादेरेव। इह तु नास्ति निषेधः 'स्वर्गादिफलकर्म न कर्त्तव्य'मिति" ।

केचिदाहुः। 'वाक्शस्त्रं वै ब्राह्मणस्य' इत्यभिचरणीयाभिचारोऽप्यनुज्ञयाऽऽम्नात एव। तुल्यावहीनाभिचारौ। तत्र ऋत्विजामेव प्रायश्चित्तं युक्तम्।

"ननु च काम्यान्यपि निषिद्धानि 'कामात्मता न प्रशस्ता' इति" ।

यस्तस्य विषयः स तत्रैव व्याख्यातः। श्रुतिश्चा'हीनतया याजनं कार्यमिति'। अभिचरणायाभिचारे च यजमानस्यायुक्तम्।

"कथम्"। आम्नातं य'ज्ज्योतिषाभिचायन्ते'। तद्वत्प्रायश्चित्तान्युक्तान्येव। अस्य अभिचरर्त्विग्विषयेऽभिचरणीयाभिचारे सविषयत्वात्। वैदिकेन जपहोमादिना शत्रोर्मारणम'भिचारः' ॥ १९६ ॥

**शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ॥**
**संवत्सरं यवाहारस्तत्पापमपसेधति ॥ १९७ ॥**

द्विविधः शरणागतः प्रागुक्तस्तस्य 'परित्यागः' प्रत्याख्यानम्। सत्यां शक्तौ। प्राक् चैतद्विचारितम्।

वेदं विप्लाव्यानध्यायाध्ययनं कृत्वा। अधिकारेणाधीयानस्यानुयोगदानं 'किं पठसि नाशितं त्वयेति'। अथवा धनहेतोः परीक्षास्थानेष्वनियुक्तेन पठ्यते। स्मृतिश्च 'दत्वा नियोगं धनहेतोः पतितान्मुनिरब्रवीत्' ॥ १९७ ॥

**श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ॥**
**नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ १९८ ॥**

दष्टो दंष्ट्राभिः। ग्राम्यैः क्रव्याद्भिर्मार्जारनकुलादिभिः ॥ १९८ ॥

**षष्ठान्नकालता मासं संहिताजप एव वा ॥**
**होमाश्च शाकला नित्यमपाङ्क्त्यानां विशोधनम् ॥ १९९ ॥**

अपांक्त्यास्तृतीयाध्याय उक्ताः। येषां प्रतिपदं प्रायश्चित्तमन्यत्राम्नातम्। तेषां मासं संहिताजपः। शाकलहोमः षष्ठान्नकालता चेति समुच्चयः। काष्ठशलाकादि'देवकृतस्य' ( वाजसनेयिसंहिता ८ । १३ ) इत्यादिभिर्मन्त्रैर्हूयते स 'शाकलहोमः'।

नित्यग्रहणं समाप्तेऽपि संहिताजपे पुनः पुनरावृत्त्यर्थं, यावन्मासः पूर्णः ॥१९९॥

उष्ट्रयानं समारुह्य खरयानं तु कामतः ॥

स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति ॥ २०० ॥

उष्ट्रैर्युक्तं यानं गन्त्र्यादि। साक्षादुष्ट्रादावारोहणमव्यवधानेन चाधिकतरम्। प्राणायामानामावृत्तिः।

दिग्वासा नग्नः। नग्नदोषनिर्हरणार्थं पुनः सवासाः स्नानं कृत्वा प्राणायामः कर्त्तव्यः ॥ २०० ॥

विनाऽद्भिरप्सु वाऽप्यार्त्तः शारीरं सन्निषेव्य च ॥

सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ॥ २०१ ॥

विनाऽद्भिरसंनिहितास्वप्सु अदृष्टगोचरस्थासु।

अप्सु आर्त्तो विष्ठया स्तब्धः। शारीरं मूत्रपुरीषोत्सर्गम्। सन्निषेव्य।

सचैलो यत्प्रावृतं वस्त्रं तेन सहितः। बहिर्ग्रामान्नद्यादावाप्लुत्य निमज्य ततो गामालभ्य स्पृष्ट्वा, विशुध्यति ॥ २०१ ॥

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ॥

स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २०२ ॥

वेदोदितानां दर्शपौर्णमासादीनां श्रौतानां, स्मार्तानां च संध्योपासनादीनाम्। तान्यपि वेदोदितानि तन्मूलत्वात्स्मृतीनाम्। स्नातकव्रतानि 'न जीर्णमलवद्वासा' इत्यादीनि। तेषां लोप एकाहमुपवासः।

श्रौतकर्मातिक्रमे या इष्टय उक्तास्ता अनेन समुच्चीयन्ते ॥ २०२ ॥

हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः ॥

स्नात्वाऽनश्नन्नहः शेषमभिवाद्य प्रसादयेत् ॥ २०३ ॥

सक्रोधाक्षेपे हुंकारेण हुंकुरुते 'तुष्णीमास्व हुं मा एवं वादीः' इत्येवमादिष्वर्थक्रियासु तन्निषेधार्थं हुंकारकरणम्।

ब्राह्मणस्य ज्येष्ठस्य समस्य कनीयवसो वा शिष्यस्य पुत्रस्य वा।

तथा गरीवसस्त्वंकारमुक्त्वा—'त्वमेवमात्थ', 'त्वयेदं कृतम्'। एकवचनान्त-

युष्मच्छब्दोच्चारणे प्रायश्चित्तमेतत्। प्रथमादिविभक्तिर्न विवक्षिता। तथा च समाचारो गुरौ युष्मास्वित्यादिवहुवचनं प्रयोक्तव्यमिति।

स्नात्वाऽनश्नन् प्रातर्भक्तत्यागः। अभिवाद्य उपसंग्रहणं कृत्वा। प्रसादयेत् क्रोधं त्याजयित्वा सायमश्नीयात् ॥ २०३ ॥

ताडयित्वा तृणेनापि कण्ठे वाऽऽबध्य वाससा ॥
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०४ ॥

तृणेन पीडाकरेणापि ताडयित्वा प्रहृत्य। वाससाऽपि कण्ठे मृदुस्पर्शेन वद्ध्वा। विवादे लौकिके कलहे विनिर्जित्य। प्रणिपत्य नम्रेण भूत्वा प्रसादयितव्यः।

वादजल्पयोस्तु नायं विधिः ॥ २०४ ॥

अवगूर्य त्वब्दशतं सहस्रमभिहत्य च ॥
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ २०५ ॥

अवगूरणप्रतिषेधोऽयम्। परिशिष्टोऽर्थवादः।
जिघांसया हन्तुमिच्छया दण्डादिकमुद्यम्य।
संवत्सरशतं नरकेष्वास्ते।
अभिहत्य प्रहारं दत्वा। सहस्रं संवत्सराणाम्।
जिघांसया, न परिहासतः ॥ २०५ ॥

शोणितं यावतः पांसून्संगृह्णाति महीतले ॥
तावन्त्यब्दसहस्राणि तत्कर्ता नरके व्रजेत् ॥ २०६ ॥

ब्राह्मणस्य रुधिरं दण्डादिप्रहारेण भूमौ पतितं यावत्पांसून् रजोवयवान् संगृह्णाति तावन्ति संवत्सरसहस्राणि तस्य जनयिता नरके व्रजेद्वसेत्।

अयमप्यर्थवादः ॥ २०६ ॥

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ॥
कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ २०७ ॥

पूर्वस्य प्रायश्चित्तमेतत्।

'ब्राह्मणरुजः कृत्वेति' शोणितोत्पादनादन्यत्रैतत्। यदि वा तेनेदं विकल्प्यते ॥ २०७ ॥

अनुक्तनिष्कृतीनां तु पापानामपनुत्तये ॥
शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत् ॥ २०८ ॥

अनुक्ता निष्कृतयः प्रायश्चित्तानि येषां विकर्मणाम्। यथा चाण्डालादिप्रतिलोमवधे। तत्र कल्पयेत्।

"ननु चात्राप्युक्तं 'किंचिदेव तु विप्राय दद्यादस्थिमतां वधे' इति"।

अनस्थिसाहचर्यात्क्षुद्रजन्तुप्रायास्तत्रास्थिमन्तो गृह्यन्ते। महाकायानां तु नैष विधिः।

"ननु चत्वारो वर्णा 'नास्ति पंचम' इति शूद्रप्रभेदा एव प्रतिलोमाः"। यदि नाम पंचमो वर्णो न जातो नैतावता शूद्रैस्तैर्भवितव्यम्। तेषामपि लक्षणस्य नियतत्वात् 'समानजात्यामूढायां जातः शूद्र' इति वर्णसंकरजाश्चैते। तस्मान्न शूद्रहत्याप्रायश्चित्तम्। नापि 'किंचिदेव तु विप्राय' इत्यन्यस्तत्र कल्पनाया अनवसरः।

शक्तिः प्रायश्चित्तिनस्तपसि। तथा किमयं तपसि समर्थ उत दाने।

पापं च। हिंसाया विहितप्रायश्चित्तमेव। अभक्ष्यभक्षणे तदेव। अथ पापस्य गुरुलघुभावोऽपेक्षणीयः।

"ननु च गुरुलघुभावः पापस्य कथं ज्ञायते? प्रायश्चित्तमहत्त्वादिति चेत् अनुक्तप्रायश्चित्तविषयेयं कल्पना"।

सत्यम्। अर्थवादे दोषातिशयश्रवणाद्गुरुत्वात्। तथा बुद्धिपूर्वानुकृते च।

किंच नेदमनुक्तनिष्कृतिविषयमेव प्रकल्पयेत्, उक्तेऽपि कल्पना कार्या।

कुत एतत्?

दण्डप्रायश्चित्तयोस्तुल्यत्वात्। दण्डेन चोक्तानुक्तविषयमनुज्ञायते। किंचैतस्मिन् व्यतिक्रमे गुरुलघूनामुपदेशात्तत्रावश्यंभावनीया कल्पना। अत उद्दिष्टानुद्दिष्टसर्वशेषोऽयम् ॥ २०८ ॥

यैरभ्युपायैरेनांसि मानवो व्यपकर्षति ॥
तान्वोऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान् ॥ २०९ ॥

"ननु चोक्ता एवाभ्युपायाः इह चान्द्रायणं इह प्राजापत्यं इहद्वादशवार्षिकमिति" ।
सत्यम् । संज्ञामात्रेण निर्दिष्टाः । इह तु स्वरूपं सेतिकर्तव्यताकमुच्यते ।
उपाय एवाभ्युपायः ।
व्यपकर्षति अपमार्ष्टि ।
देवर्षीत्यादिः स्तुतिः ।
मानवग्रहणं सर्ववर्णार्थम् ।। २०६ ।।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः ॥ २१० ॥

यद्यप्यहर्मुखं 'प्रात'स्तथापि पूर्वाह्णकालो लक्ष्यते । द्वितीयाह्नकालप्रतिषेधादस्य । प्रातःकालविधौ हि यदृच्छया भोजनं प्राप्तं निवर्तते । केवलमत्यर्थं हि 'यत्पूर्वाह्णे वा मध्यंदिने वा मनुष्याणामिति' अयाचितत्वाप्राप्तमर्थित्वाद्भोजनम् । तदेव चेत्प्रातःकाले विधीयते तदा माध्यंदिनं निवर्तेत, न सायंतनम् । अद्य पुनर्यदेव पौरस्त्यं पूर्वाह्णमध्यंदिनकालयोर्विकल्पितयोः प्राप्तं भोजनं तदेव पुनरुच्यमानं कालान्तरनिवृत्त्यर्थं संपद्यते । व्रतत्वाच्चैतदेव युक्तम् । एकाहारता हि व्रतपरिगणनायां संख्यायते । तपश्चेदं तापयति दुःखयतीति । यदि च द्वितीयं भोजनं निवर्तते तत्र सायंतनं निवर्तेत ।

अन्ये तु 'हविष्यान् प्रातराशानिति' स्वल्पपरिमाणता भोजनस्य लक्ष्यतइत्याहुः । प्रातराशे हि स्वल्पं भुंजते । तच्छीलाः प्राकृतपुरुषाः । तथा सिद्धे पाके भोजनात् प्राकृतभोक्तेति व्यपदिशन्ति ।

सायमिति वाऽपरस्मिन् त्र्यहे ।

ततोऽनन्तरं त्र्यहो हविष्यं वैदिकं यावद्भुज्यते तावदनुज्ञायते । उक्तं च स्मृतिकारैः 'ईषत् भुक्त्वाऽर्थं संविशेत्' ।

अयाचितेऽपि हविष्यभोजनमेककालिकं च ।

स्वगृहेऽपि 'दीयतां मे भोजनमिति' यत् भृत्यादय आज्ञायन्ते तदपि याचितमेव' । प्रार्थनामात्रं याच्ञा, प्रेषणाध्येषणयोः साधारणम् । अतः स्वगृहेऽपि यद्भार्यादयोऽननुज्ञाता उपहरन्ति तथा भोक्तव्यं, न त्वन्यथेति ।। २१० ।।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ २११ ॥

गोमूत्रादीनां कुशोदकानां समाहारमाहुरेकस्मिन्नहनि। एकरात्रोपवासश्च। ततो द्व्यहं सांतपनम्।

अन्ये तु प्रत्यहमेकैकं भक्षयितव्यं, संहतस्याश्रुतत्वात्। अतः सप्ताहानि 'सांतपनम्'।

द्वावप्येतौ पक्षौ स्मृत्यन्तरे परिगृहीतौ ॥ २११ ॥

एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ॥
त्र्यहं चोपवसेदंत्यमतिकृच्छ्रं चरन्द्विजः ॥ २१२ ॥

पूर्ववदिति प्राजापत्यविधिमतिदिशति।

एष्वेव कालेष्वेकैकं ग्रासमश्नीयात् ॥ २१२ ॥

तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ॥
प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥ २१३ ॥

तेष्वेव कालेषु जलादीनि यावता नातितृप्तिर्भवति। क्वचित्परिमाणं पठ्यते। 'अपां पिबेत्तु त्रिपलं पलमेकं तु सर्पिषः। पयः पिबेत्तु द्विपलं त्रिपलं चोष्णमारुतम्'।

सकृत्स्नायीति त्रिरह्नः त्रिर्निशायामित्यस्यापवादः ॥ २१३ ॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ॥
पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः ॥ २१४ ॥

यतात्मा संयतेन्द्रियो गीतादिशब्दश्रवणेष्वनभिलाषी।

अप्रमत्तस्तत्परः। अर्थवादोऽयम्। सर्वकृच्छ्रेष्वस्य धर्मस्य विहितत्वात् ॥२१४॥

एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् ॥
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥ २१५ ॥

चतुर्दश्यामुपोष्य श्वोभूतायां पौर्णमास्यां पञ्चदश ग्रासानश्नीयात्। ग्रासप्रमाणं चास्याधिकारेण ग्रासानुमंत्रेण च 'आप्यायस्व सन्ते पयांसीति' ( गौ० ५ ) स्मृत्यन्तरोक्तो विधिरपेक्षितव्यः। एकशास्त्रत्वात्सर्वस्मृतीनामसति विरोधे समग्रं योज्यम्। विरोधे तु विकल्पः।

प्रतिपदमारभ्यैकैकं ग्रासं दिवसे दिवसे ह्रासयेत्। प्रतिपदिचतुर्दश द्वितीयायां त्रयोदशेत्यादि यावच्चतुर्दश्यामेको ग्रासो भवति। ततोऽमावस्यायामुपोष्य प्रतिपद्येकं ग्रासमश्नीयात्। द्वितीयायां द्वावेवमेकैकं वर्धयेद्यावत्पौर्णमास्यां पञ्चदश भवन्ति।

उपस्पृशन् स्नानं कुर्वन्।

त्रिषवणं प्रातर्मध्यंदिनापराह्णेषु। 'त्रिर्निशायामिति' निवर्तते विशेषविहितत्वात्॥ २१५॥

एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे॥
शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम्॥ २१६॥

यवमध्यमेऽमावास्यामुपोष्य प्रतिपद्येको ग्रासः। द्वितीयस्यां द्वौ यावत् पौर्णमास्यां पंचदश। पुनः प्रतिपदमारभ्य कृष्णपक्ष एकैकग्रासापचयो यावदमावास्यामुपवासः॥ २१६॥

अष्टावष्टौ समश्नीयात्पिण्डान्मध्यंदिने स्थिते॥
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्॥ २१७॥

प्रत्यहं मासमष्टौ ग्रासान् कृष्णपक्षाद्वाऽऽरभ्य शुक्लपक्षाद्वा यतिचान्द्रायणं भवति।

मध्यंदिने स्थिते प्रवृत्ते। पूर्वाह्णापराह्णौ वर्जयित्वेत्यर्थः।

शिष्टं प्रसिद्धम्॥ २१७॥

चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः॥
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्॥ २१८॥

अत्र प्रातःशब्दोऽस्तमयसाहचर्यात्सूर्योदयप्रत्यासन्नं कालं लक्षयति।

अस्तमिते सूर्ये प्रदोष इत्यर्थः॥ २१८॥

यथाकथंचित्पिण्डानां तिस्रोऽशीतीः समाहितः॥
मासेनाश्नन्हविष्यस्य चन्द्रस्यैति सलोकताम्॥ २१९॥

कस्मिंश्चिद्दिवसे चतुरो ग्रासान् कस्मिंश्चिद्द्वादश कस्मिंश्चिन्नाश्नाति यथाकथंचित् त्रिंशद्रात्रौ प्रवृत्तिः। यदि कस्मिंश्चित् षोडश। अयं तु नियमः तिस्रोऽशीती-

र्मासेनेति द्वे शते चत्वारिंशदधिके ।

चन्द्रलोकं प्राप्नोति ॥ २१६ ॥

एतद्रुद्रास्तथादित्या वसवश्चाचरन्व्रतम् ॥
सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः ॥ २२० ॥

एतच्चान्द्रायणं व्रतं सर्वे देवाः समाचेरुः, सर्वेषामकुशलानां विमोक्षाय ।

न केवलं यत्रैवोक्तमनुक्तेष्वपि द्रष्टव्यम् । तदुक्तं 'कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम्' ( गौ० १९।२० ) ।

अत्रेदं संदिह्यते । यदेतत्सर्वप्रायश्चित्तवचनं किं तन्त्रेण सर्वेषां शोधनमुत योगसिद्धिन्यायेन प्रतिनिमित्तमावर्तत इति ।

उच्यते । यद्यप्येतन्न्याय्यं निमित्तावृत्तौ नैमित्तिकावृत्तिरिति तथापीदमनाम्नातप्रतिपदप्रायश्चित्तनिमित्तेष्वसंविदितेषु कृतसम्भावनायामाम्नायते । तत्र येषां तावत्सम्भावनामात्रेण शुद्धिः क्रियते, यथा 'संवत्सरस्यैकमपीति', तत्र निमित्तस्यानिश्चितत्वादुपपत्तेः कुत आवृत्तिसंभवः । यथा सुप्तस्य परिवर्तनैः शय्यागतसूक्ष्मप्राणिवधस्तथा नगरस्य रथ्यासु भ्राम्यतः परस्त्रीमुखसंदर्शनमा गृहप्राप्तेरसकृत् संभवति । तादृग्विषये तन्त्रभाव एव युक्तः । दर्शितं चैतत् 'अस्थन्वताम्' इत्यादौ समुदायवध एकं प्रायश्चित्तमिति । यानि च गरीयांसि पापानि तत्र सर्वत्र प्रायश्चित्तान्याम्नातानि । इदं च यथाप्रदर्शित एव विषये भवितुमर्हति । महत्त्वाच्च नानावृत्तौ न्याय्यम् । तस्मात् संशितेष्वपि कथंचित्प्रायश्चित्तेषु न निमित्तान्तरोत्पत्तौ युक्त एव तन्त्रभावः । तथा च तन्त्रधर्म एव न्याय्य इति दर्शयति 'यद्दिवा च नक्तं चैनश्च कृम तस्याऽवयजनमसि स्वाहा । यत्स्वपंतश्च जाग्रतश्चैनश्च कृम तस्याऽवयजनमसि स्वाहा । यद्विद्वांस इत्यादि' । यदिति च वीप्सायां युगपदशेषपापवर्जन'मत्र वदन्ति' ॥ २२० ॥

महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ॥
अहिंसा सत्यमक्रोधमार्जवं च समाचरेत् ॥ २२१ ॥

सर्वेष्वेतेष्वितिकर्तव्यतेयमुच्यते ।

सर्वहोमेष्वाज्यंद्रव्यमनुपात्ते द्रव्यविशेषे दर्शितम् ।

स्वयंग्रहणात्परकर्तृकता निवर्तेत ।

किंपुनरयं होमो लौकिकेऽग्नावनावसथ्यस्य भवति नेति विचार्यते ।

इदमेव तावद्विचार्यं कुताऽग्नौ होमः । प्रक्षेपावधिकस्त्यागो जुहोतेरर्थः । तत्र यस्मिन् कस्मिंश्चिदाधारे प्रक्षेपणे सिध्यत्येव 'होमः' । ततश्च स्थले जले वाऽग्नौ वा क्रियतां होमो गृह्याग्निमतस्तु न लौकिकेऽग्नौ होमः, ग्राम्याग्नौ तस्य तद्धोमप्रतिषेधात् । समाचारादग्निसिद्धिरिति चेत्समाचार एव तर्ह्यन्विष्यताम् ।

गृह्यकारैस्तत्प्रणीताग्न्यधिकारैः कृच्छ्रविधिषु होम आम्नातः । तद्दर्शनेनानावसथ्यस्य प्रायश्चित्ते नाहोमकाः कृच्छ्राः । अभ्युदयार्थिनस्तु नैवानग्निकस्य सन्ति, सर्वाङ्गोपसंहारेण फलसिद्धेः ।

अहिंसा । शिष्यभृत्याद्यपि ताड्यं न ताडनीयम् ।

सत्यं नर्मणाऽपि नानृतम् ।

यदि वा पुरुषार्थतया प्राप्तयोरङ्गत्वाय विधानम् ।

आर्जवमक्रूरता ॥ २२१ ॥

त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत् ॥
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥ २२२ ॥

त्रिरह्न इति 'सवनेष्वनुसवनमुदकोपस्पर्शनमिति' (२६।१०) गौतमः । निशायामपि त्रिषु यामेषु महानिशां वर्जयित्वा तदवधि न हि अस्ति स्नानकालः ।

यदेव वासोयुगमाच्छादनार्थमौचित्यप्राप्तं तेनैव सह जलं प्रविशेत् । आविशेदिति नोद्धृतोदकेनेत्यर्थः ।

स्त्रियो ब्राह्मणीरपि नाभिभाषेत, अन्यत्र मातृज्येष्ठभगिन्यादिभ्यः । भार्यया सह कर्मोपयोगी संलापो न निषिध्यते । अन्यस्तु न कर्तव्य एव ॥ २२२ ॥

स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा ॥
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ॥ २२३ ॥

उत्थित आसीन उपविष्टोऽथवा । न क्वचिन्निषीदेत् । अशक्तावधः शयीत, न पर्यङ्के । ब्रह्मचारी मैथुननिवृत्तः ।

व्रती शिष्टप्रतिषिद्धेषु नियमं गृह्णीयादिदं मया न कर्तव्यमिति ।

गुर्वादीनामर्चा प्रणतेन स्रगनुलेपनाद्युपहर्तव्यम् ॥ २२३ ॥

सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्वेष्वेव व्रतेष्वेव प्रायश्चित्तार्थमादृतः ॥ २२४ ॥

सावित्री "तत्सवितुरिति" गायत्री। सवितृदेवत्वाज्जपचोदनासु सावित्रीशब्देन तस्याः सर्वत्राधिकारः।

पवित्राण्यघमर्षणपावमानीपुरुषसूक्तादीनि शुक्रियाध्यायाजनरौहिणेयादीनि सामानि।

सर्वेषु सर्वकृच्छ्रेषु।

आदृतो यत्नवान्।

सर्वेष्वित्यादिश्लोकपूरणस्तथाविधस्यैवाऽधिकारात् ॥ २२४ ॥

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ॥
अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ॥ २२५ ॥

आविष्कृतं प्रकाशं लोकविदितमेनः पापं येषाम्। एतैः कृच्छ्रैः शोध्याः। ये तु रहस्यपापास्तेषां न कृच्छ्रतपांसि। किंतर्हि? मन्त्रैर्होमैश्च शोधयेत्। रहस्येषु नास्ति परिषद्गमनमाविष्कृतं न स्यात्। विदुषां हि तत्राधिकारः। उच्यते। न प्रायश्चित्तमनागतं शोधयेदित्युच्यते, अपि तु शास्त्रव्याख्यानकाले शिष्याणामुपदेशादिदं रहस्येषु शोधनं बोद्धव्यमिति ॥ २२५ ॥

ख्यापनेनानुतापेन तपसाऽध्ययनेन च ॥
पापकृन्मुच्यते पापात्तथा दानेन चापदि ॥ २२६ ॥

विप्राणां विदितेऽन्येषामप्ये'वंकर्माऽस्मीति' प्रकाशयेत् एतत्ख्यापनम्।

अनुतापः। तस्मात्तापौ वैमनस्यम्—'धिङ्मां महदकार्यमकरवमनर्थो मे दुष्कृतकारिणो जन्मे'त्येवमादिः चित्तपरिखेदः।

अध्ययनं सावित्र्या जपो वेदपाठो वाहिंसायाम्। अन्यत्र।

असमर्थस्य तपसि दानम्। एतदाह दानेन चापदीति। प्रक्रान्ततपसः आपदि पीडायामनिग्रहणे दानम् ॥ २२६ ॥

यथा यथा नरोऽधर्मं स्वयं कृत्वाऽनुभाषते ॥
तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते। २२७ ॥

ख्यापनविधेरर्थवादः ।

नरोऽधर्ममिति नञः प्रश्लेषः । धर्मस्य स्वयं ख्यापनं निषिद्धम्, 'न गुणाः स्वयं वाच्या' इति । प्रकृतश्चाऽधर्म एव तेनाधर्मेणेति श्रूयत एव ॥ २२७ ॥

यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति ॥
तथा तथा शरीरं तत्तेनाधर्मेण मुच्यते ॥ २२८ ॥

शरीरमन्तरात्मैव, न भूतात्मा पुण्यपापयोस्तदाश्रयात् । उपचाराद्धि आत्मनः शरीरशब्दोऽयं द्रष्टव्यः । अनुतापार्थवादोऽयम् ।

गर्हा ख्याता ॥ २२८ ॥

कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते ॥
नैवं कुर्यां पुनरिति निवृत्त्या पूयते तु सः ॥ २२९ ॥

निवृत्तिपर्यन्तमित्याहुस्तदयुक्तम् । संतापो मनःपरिखेदः, 'प्रमाद्यैतन्मया कृतमि'त्येवंरूपः । निवृत्तिस्तु सङ्कल्पो 'न कर्तव्यः पुनरिति' । क्रियाभेदं च दर्शयति । क्त्वाप्रत्ययेन 'सन्तप्य निवृत्त्ये'ति ।

अतः प्रायश्चित्तवत्ख्यापनानुतापनिवृत्तयः प्रायश्चित्तिना कर्तव्याः ।

पूयते सिद्धिमाप्नोति ॥ २२९ ॥

एवं संचिन्त्य मनसा प्रेत्य कर्मफलोदयम् ॥
मनोवाङ्मूर्त्तिभिर्नित्यं शुभं कर्म समाचरेत् ॥ २३० ॥

एवमिति कृत्स्नस्य विधिनिषेधसमूहस्य प्रत्यवमर्शः ।

प्रेत्य कर्मफलोदयं 'शुभस्य कर्मणः स्वर्गादिफलावाप्तिरशुभस्य नरकोपपत्तिरकृते प्रायश्चित्ते प्रायश्चित्तं चातिदुःखरूपम्' । एतन्मनसि संचिन्त्य शुभं कर्म समाचरेत् ।

विहितं 'शुभम्' । तथा 'संकल्पमूलः कामो वै'क्यार्थो नियता इति च । तस्माद्यद्यपि 'न हिंस्यादि'त्यु द्यमननिपातने न दण्डादेः परदुःखोत्पादने उच्येते, तथाऽप्येवमादिशास्त्रपर्यालोचनयाऽध्यवसायादिनिषेधः ।

एवमभक्ष्यभक्षणादावपि द्रष्टव्यम् । यद्यपि 'भक्षण'मन्नादिनिगरणपर्यन्तं तथापि मानसोऽध्यवसायो निषिद्ध एव ।

एवमगम्यागमनेऽपि। यद्यपि हीन्द्रियसमापत्तिर्गमनं तथापि तदर्थाध्यवसायो व्यापार एवमादिशास्त्रान्तरैर्निषिध्यते।

"यद्येवं हननभक्षणागम्यागमनेषु यत्प्रायश्चित्तं तदध्यवसायेऽपि प्राप्नोति"।

नैष दोषः। ब्राह्मणवधे तावदिष्टमेव 'अहत्वाऽपी'ति वचनात्। अन्यत्र तु मुख्यस्यैव शब्दार्थस्य परिग्रहो न्याय्यः। प्रतिषेधे तूक्तशास्त्रपर्यालोचनया स मनोव्यापारात्प्रभृतिकायव्यापारपर्यन्तविषयोऽवतिष्ठते।

"यद्येवं 'निन्दितं समाचरन्निति' प्रायश्चित्तनिमित्तोपदेशात्प्रतिषेधानुसारि-प्रायश्चित्तं प्राप्नोति"।

क एवमाह नास्ति प्रायश्चित्तमिति। किंच तच्छब्दचोदितान्न भवत्यन्यस्य लघु कल्प्यम्। तथा च सर्वप्रायश्चित्तानामेवमादिरपि विषयो न्याय्यः।

कुतः पुनरयं विशेषो लभ्यते।

प्रतिषेधाध्यवसायादिति। प्रायश्चित्तानि तु शब्दार्थेष्वेव। व्रतनियमधर्माश्च सर्वे संकल्पजा इति। अनेन विधिप्रतिषेधावेवोच्येते। 'व्रतानि' विधिरूपाणि, 'नियमाः' प्रतिषेधलक्षणास्तत्रैव च कृतार्थत्वान्नैमित्तिकेषु यावत्प्रवर्तितुमर्हन्ति। अस्ति च प्रतिषेधसामान्यनिमित्तमतो भवति प्रायश्चित्तम्। न च तदेव। 'परद्रव्येष्वभिध्यानमिति' चात्रैवान्ते दर्शयिष्यामः॥ २३०॥

अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म विगर्हितम्॥
तस्माद्विमुक्तिमन्विच्छन्द्वितीयं न समाचरेत्॥ २३१॥

कृतप्रायश्चित्तस्यापि पुनरकार्यप्रवृत्तावधिकतरं प्रायश्चित्तमिति एवमर्थं द्वितीयं न समाचरेदिति।

अथवा, निवृत्तेरनन्तरोपदिष्टाया अर्थवादो द्वितीयं न समाचरितव्यमिति। व्रतं न हातव्यम्।

तस्मादाद्यकृताद्व्यतिक्रमाद्विमुक्तिमिच्छन् मोक्षमिच्छन् पुनर्न कुर्यात्। अतश्चैतदुक्तं भवति। कृतेऽपि प्रायश्चित्ते न विमुच्यते, यदि पुनः समाचरति। न च निष्कृतौ कृतायामकृतायामपि मोक्षो युक्तोऽतो मुक्तस्य मुक्तिमन्विच्छन्निति नोपपद्यते। तस्मादाधिक्याय पुनर्वचनम्॥ २३१॥

यस्मिन्कर्मण्यस्य कृते मनसः स्याद्लाघवम् ॥
तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् ॥ २३२ ॥

असत्यां चित्तशुद्धौ विहितातिरेककरणार्थमिदम् ।

दुष्कृते कर्मण्यलाघवं काऽपि विचिकित्सा यदि भवति । ततः कृतेऽपि प्रायश्चित्ते आ मनः प्रसादोत्पत्तेरावर्तयितव्यम् ।

तपोग्रहणं दानादीनामपि यथाविहितदर्शनार्थम् ॥ २३२ ॥

तपोमूलमिदं सर्वं दैवमानुषकं सुखम् ॥
तपोमध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः ॥ २३३ ॥

मनुष्यलोके यत्सुखमाभिमानिकं जनपदैश्वर्यादि यच्चैहिकमरोगित्वादि यच्च सांसर्गिकं धनपुत्रादि संपत् यथाभिमतकांतादिविषयोपभोगलक्षणमैन्द्रियकं यच्च वेदेषु ( ब्रह्मवल्ल्यां ८।२ ) 'मनुष्याणां शतमानन्दाः स एक आजानदेवेषु' इत्यादि तस्य सर्वस्य तपो मूलं उत्पत्तिकारणम् । तपोमध्यमुत्पन्नस्य स्थिति'र्मध्यावस्था' । अंतोऽवसानम् । तदपेक्ष्येति वेदविदां दर्शनम् । यथैव कर्माणि स्वर्गग्रामाद्यभिप्रेतफलसाधनान्येवं तपो विज्ञेयम् ॥ २३३ ॥

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ॥
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥ २३४ ॥

नैवं मन्तव्यं "तपसि सामर्थ्यात्तपसा सर्वफलसिद्धीरवाप्स्यामि, विध्यतिशययोगाच्च विहिताकरणेऽपि, न द्रव्येण कथं मेऽनुष्ठेयो धर्म इति" यतो ब्राह्मणस्य तपो ज्ञानम् । ज्ञानं वेदार्थावबोधः । तस्मिन्नसति न तत्फलसाधनम् । अतो ज्ञानमेव 'तप' उच्यते ।

महतीष्वापत्तिषु । तेन स्वधर्मो न हातव्य इत्येवमर्थोऽयं श्लोकः ।

ज्ञानग्रहणं स्वाध्यायग्रहणाध्ययनात्प्रभृति सर्वस्वधर्माणां प्रदर्शनार्थम् ।

एवं तपः क्षत्रियस्येति ।

शूद्रस्य सेवनं द्विजातीनामिति शेषः । तत्सेवाया विहितत्वात्, अस्य चानुवादत्वात् ॥ २३४ ॥

ऋषयः संयतात्मानः फलमूलानिलाशनाः ॥
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥ २३५ ॥

अतीन्द्रियज्ञानातिशयासादनमपि मुनीनां तपोबलेनैवेत्यर्थः।

वाङ्मनःकायनियमात् संयतात्मानः।

फलमूलेत्याहारनियमः।

ईदृशेन तपसा त्रैलोक्यं प्रत्यक्षवत्पश्यन्ति ॥ २३५ ॥

औषधान्यगदा विद्या दैवी च विविधा स्थितिः ॥
तपसैव प्रसिद्ध्यन्ति तपस्तेषां हि साधनम् ॥ २३६ ॥

औषधानि रसायनानि। अगदा व्याध्युपशमभेषजानि। विद्या भूतविशेषादिविषया। दैवी स्थितिरणिमादिशक्तियोगोऽनेकप्रकारः ॥ २३६ ॥

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ॥
सर्वन्तत् तपसा साध्यं तपो हि दुरतिक्रमम् ॥ २३७ ॥

दुःखेन यत्तीर्यते तद्दुस्तरम्। व्याधिनिमित्ता महत्यापत्। अतिबलेन शत्रुणा यदुपरोधः। एतदपि तपस्विनां सुसाध्यम्।

कृच्छ्रेण यत्प्राप्यते तद्दुरापमाकाशगमनादि।

दुर्गं मेघपृष्ठारोहणादि।

दुष्करमभिशापवरदानादि, अन्यथा त्वकरणम्। यथा संवर्तस्यान्यदेवतासृष्टिः।

सर्वमेव तपसा सिध्यति।

श्लोकत्रयेण संयोगपृथक्त्वादभ्युदयार्थता कृच्छ्राणामुच्यते।

"ननु च प्रायश्चित्तानां प्रकृतत्वात्कृच्छ्रस्तुतिस्तच्छेषतयैव न्याय्या, नाभ्युदयार्थिनो विधेयतया। न च दुस्तरादयोऽर्थवादतया न संभवन्ति। एवंविधाः महांतः कृच्छ्रा यद्दुस्तरमपि समुद्रादि तीर्यते। किं पुनः पापं नापनोत्स्यते"।

उच्यते। गृह्यस्मृतिषु सामविधौ चाननुक्रम्यैव प्रायश्चित्तानि कृच्छ्रविधिः समाम्नातः। तत्र चानारभ्याधीतत्वाद्युक्तैव अभ्युदयार्थता। आह च (गौतमसू० अ० २६।२४) 'अथैतान् कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवतीति'। वेदेषु स्नात इत्यनेन नियमपूर्वकं वेदाध्ययनानुष्ठानाद्यत्फलं तत्सिद्ध-

माह । यस्तु निष्फलो ग्रहणार्थोऽध्ययनविधिः स एकवेदाध्ययनेनात्रापि संपद्यते । एवमनेकवेदाध्ययनं तु धर्मायैवेत्युक्तम् । देवैर्ज्ञात इत्यनेनाशेषयागफलावाप्तिमाह । यजमानो हि वेदै'र्ज्ञायते' । यो ह्यर्थवादतया संभवति, न प्रायश्चित्तैर्दानभावं गच्छद्भिः । इहापि स्वधर्मनिवृत्तिमाशङ्कमानेन 'ब्राह्मणस्य तपो ज्ञानम्' इति यदुक्तं धदभ्युदयार्थत्वे संभवति । न प्रायश्चित्तानि पापप्रमोचनार्थानि काम्यानि फलसाधनानि, तत्र भिन्नविषयत्वात्कुतः प्रायश्चित्तैर्निवृत्तिराशङ्क्यते । अभ्युदयार्थत्वे तु कृच्छ्राणामन्येषां च कर्मणां तुल्यत्वाद्युक्ता निवृत्त्याशङ्का । तथा 'महापातकिनश्चेति' पापप्रमोचनार्थतापि चोद्यते 'यद्दुस्तरमि' त्यादिना अभ्युदयार्थतेतिभिन्ने एव ते वाक्ये । तेन च प्रकरणस्य बाधो युक्त एव । तया च द्वैपायनमुनिप्रभृतय'स्तपःप्रभावाद्बुद्धीर्विचित्रास्ता वक्ष्यन्ते' । तस्मात्सर्वफलानि तपांसि । न च यथा सर्वार्थान्यपि वैदिकानि कर्माणि नियतफलानि 'सर्वेभ्योदर्शपूर्णमासौ सर्वेभ्यो ज्योतिष्टोम' इत्यधिकारात्तत्र सर्वत्र यान्येव वेदे स्वर्गादीनि फलानि श्रुतानि तदपेक्षयैव सर्वार्थता न तु ऋद्ध्यतिशयातिभोगेनैवमिति, किं तर्हि, 'यद्दुस्तरमि' त्यादि यथा निदर्शितम् ॥ २३७ ॥

महापातकिनश्चैव शेषाश्चाकार्यकारिणः ॥
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ २३८ ॥

उक्तार्थमेतत् ॥ २३८ ॥

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च ॥
स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥ २३९ ॥

तपःस्तुतिरियम् । येन तपसा सर्वत्र गमनात्सर्वे स्वर्गमासत इति । यथाऽनधिकृता अपि कीटादयस्तपोबलाद्दिवं गच्छन्ति, किं पुनर्विद्वांसो ब्राह्मणाः । आलंबनं कीटादीनां जातिसहजं दुःखं तदेव तपः । तेन च क्षीणकल्मषाधिकारिजन्मान्तरकृतेन सुकृतेन दिवं यान्ति ॥ २३९ ॥

यत्किंचिदेनः कुर्वन्ति मनोवाक्कर्मभिर्जनाः ॥
तत्सर्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥ २४० ॥

वाङ्मनःकायकृतस्य जपहोमाभ्यां शुद्धिः स्मर्यते । तत्र तपसा निवृत्तिः स्यात् । अत इदमारभ्यते तदपि तपसानूद्यते ॥ २४० ॥

तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ॥
इज्याश्च प्रतिगृह्णन्ति कामान्संवर्धयन्ति च ॥ २४१ ॥

काम्यकर्मारंभे पूर्वं तपः कर्तव्यम् । तदपि तावदनूद्यते । तथा चोक्तं 'प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति' । यत्र तावद्दीक्षोपनयनाद्यङ्गं तत्र तदेव 'तपः' । एकस्तपो व्रतमुपैत्यसंगतानां विहितं चेति 'तप' एव । यत्रापि शान्तिक-पौष्टिकादौ गृह्यादिविषये तत्रापि पूर्वं तपः कर्तव्यमिति श्लोकार्थः ।

ब्राह्मणग्रहणं यागाधिकृतकामिमात्रप्रदर्शनार्थम् । उक्तं च
'नातप्ततपसः पुंसो हविर्गृह्णन्ति देवताः । नागृहीतहविष्यस्य कामः संपद्यते क्वचित्' ॥

यद्यपि न देवता तत्फलं ददाति तथापि यागस्य देवतया विनाऽनिष्पत्तेर्'देवताः संवर्धयन्ती'त्युच्यते । हविर्ग्रहीतृत्वं च न पुनर्देवतानां स्वीकारः, किं तर्हि ? संप्रदानतयोद्देशेऽनिराकरणम् ॥ २४१ ॥

प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः ॥
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४२ ॥

मनोर्येयं प्रतिष्ठा ग्रन्थस्य सा तपस्सामर्थ्यजैव । अन्योऽपि यो ग्रन्थप्रतिष्ठा-कामस्तेनापि तपःपूर्वं कृत्वा ग्रन्थः प्रणेतव्यः । ऋषीणामपि यत्तादृक्त्वं वेदाः प्रादुर्भवन्ति तत्तपसैव ॥ २४२ ॥

यदेतत्तपसो देवा महाभाग्यं प्रचक्षते ॥
सर्वस्यास्य प्रपश्यन्तस्तपसः पुण्यमुद्भवम् ॥ २४३ ॥

तपस्तुत्युपसंहारः ।

यदेतत्तपसो महाभाग्यं महाफलत्वमुक्तं तद्देवाः प्रचक्षते, न केवलं मनुष्या एव ।

सर्वस्यास्येति जगन्निदर्शयति कृत्स्नस्य जगतः पुण्यमुद्भवं शुभजन्म तपसः सकाशात्पश्यन्तः ॥ २४३ ॥

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा ॥
नाशयन्त्याशु पापानि महापातकजान्यपि ॥ २४४ ॥

वेदाभ्यासादीनां नित्यानां कर्मणां पापप्रणोदनार्थताऽधिकारान्तरत्वेनोच्यते । अनिर्दिष्टप्रायश्चित्तानामप्रत्ययकृतानां प्रतिभूतानां चैतद्विज्ञायते ।

अन्ये त्वाहुर्यदेवोक्तं 'ब्राह्मणस्य तपो ज्ञानम्' इति तपोविधानेन कर्मान्तरनिवृत्तिमाशङ्कमानस्य वचनं, इदमपि तथैव विज्ञेयम् ।

अनुसंधानार्थं क्षमाग्रहणं सर्वात्मगुणप्रदर्शनार्थम् ।

महापातकजान्यपीति । अपिशब्दात्स्तुतिः प्रतीयते न महापातकनिवृत्त्यर्थता न चाकस्मात्सं प्रवर्तित इति तथा प्रदर्शितैर्विषयैर्विज्ञायते ॥ २४४ ॥

यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् ॥
तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् ॥ २४५ ॥

ज्ञानप्रशंसेयम् । विदुषः स्वल्पेन प्रायश्चित्तेन शुद्धिरित्यस्मिन् प्रकरण आज्ञायते ।

ज्ञानं च सरहस्यं वेदार्थविषयं ज्ञेयम् । न प्रायश्चित्तविधिज्ञानं केवलं शुद्धये । प्रयोगार्थं तत् । न ह्यन्यथाप्रयोगोपपत्तिः । यस्तु देवादिसत्ताविज्ञानं रहस्याधिकारज्ञानं च तस्याकामार्थत्वाद्युक्तं 'तद्धि ताः पापनिष्क्रियाः' । आह च 'यथा पुष्करपलाश आपो न श्लिष्यन्ति एवमेवं विदि पापं कर्म न श्लिष्यतीति' ( छान्दोग्य० ४ । १४ । ३ ) ।

एधो दार्विन्धनम् । यथा शुष्कदारु चाग्नौ क्षिप्तं क्षिप्रं दह्यते एवं ज्ञानमग्निरिव पापस्य दाहकविनाशसामान्यादेवमुच्यते ।

वेदविदिति ज्ञानं विशिष्यते । तेन तर्ककलाकाव्यादिज्ञानमपास्तं भवति ॥२४५॥

इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि ॥
अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥ २४६ ॥

पूर्वोत्तरप्रकरणाभिसम्बन्धार्थः ॥ २४६ ॥

सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ॥
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ २४७ ॥

मुखनासिकासंचारी वायुः प्राणस्तस्यायामो निरोधः । स चोभयथा प्राणप्रवृत्तेर्बहिः क्रमतोऽपानप्रवृत्तेर्वा यद्रेचकाख्यं प्रसिद्धम् ।

व्याहृतयः सप्त । प्रणव ओंकारः । व्याहृतिभिः प्रणवेन च सह प्राणायामाः कर्तव्या इति ।

षोडशेत्यावृत्तिसंख्यानम् ।

कीदृशः सहभावः ।

केचिदाहुः । प्राणायामं कृत्वा व्याहृतिः प्रणवजपः प्रत्यावृत्ति कर्तव्यः ।

अन्ये त्वाहुः । श्वासनिरोधकाले ध्यातव्याः ।

किंपरिमाणः प्राणायामानां कालः ।

यावता नातिमहती श्वासनिरोधनपीडा जायते ।

कुम्भकरेचकपूरकाश्च प्राणायामाः स्मर्यन्ते, न श्वासनिरोधमात्रम् । यथाऽप्रमाणं नासिद्धेरिति, असाध्यतयैव परिमाणानाम् ।

अपि भ्रूणहनमपि शव्दात्तत्समेषु ।। २४७ ।।

कौत्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचम् ।।
माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुध्यति ।। २४८ ।।

कुत्सेन ऋषिणा दृष्टं प्रोक्तं कौत्सम् । 'अपनः शोशुचदघम्' (ऋग्वेद १।९७।१) इत्यष्टर्चं वहवृचे पठ्यते ।

वासिष्ठं च प्रतीत्यृचं तिस्र ऋचः समाहृतास्त्यृचम् । प्रतीतिसूक्तादिप्रतीकार्थं श्चेति । 'प्रतिस्तोमेभिरुषसं वसिष्ठा' (ऋग्वेद ७।८०।१) इत्येतत् ।

'माहित्रं महित्रीणाम्' इति (ऋग्वेद १०।१८५।१) त्र्यृचमेव । महितृशव्दोऽस्मिन् सूक्तेऽस्तीति विमुक्तादिप्रक्षेपात् । ये तु 'माहेन्द्रमि'ति पठन्ति तेषां 'महां इन्द्रो य ओजसे' ( ऋग्वेद ८।६।१ ) इत्यष्टचत्वारिंशतं पयःसूक्तमाहुः ।

शुद्धवत्यश्च 'एतोन्विन्द्रं स्तवां शुद्धं शुद्धेन' ( ऋग्वेद ८।९५।७ ) इति ।

अत्रापि शव्दस्तत्समानार्थः ।। २४८ ।।

सकृज्जप्त्वाऽस्य वामीयं शिवसंकल्पमेव च ।।
अपहृत्य सुवर्णं तु क्षणाद्भवति निर्मलः ।। २४९ ।।

अत्र सकृद्ग्रहणात् पूर्वत्र पाठावृत्तिः प्रतीयते । सा च समाचारादन्यत्र दर्शनाच्च । 'त्रिर्जपित्वाऽघमर्षणमि'त्यत्रापेक्षायामधिकृतेन संबन्धः ।

'अस्य वाम'शव्दोऽस्मिन् सूक्तेऽस्तीति 'मतौच्छः सूक्तनाम्नोरिति' (पाणि० सू० ५।२।५९) शव्दव्युत्पत्तिः । 'अस्यवामस्य पलितस्य होतुरिति' ( ऋग्वेद १।१६४।१ ) द्वापंचाशदृचं सूक्तम् ।

शिवसंकल्पमपि 'यज्जाग्रतोदूरमुदैति' इति वाजसनेयषड्चम् ।। २४९ ।।

हविष्यान्तीयमभ्यस्य न तमं ह इतीति च ॥
जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥ २५० ॥

प्रतीकार्थो द्वितीय इतिकरणः पदार्थविपर्यासकृत्। ततो मन्त्रस्वरूपग्रहणमिति वेत्यत्र लभ्यते। पौरुषं 'सहस्रशीर्षा पुरुष' ( ऋग्वेदे १०।९०।१ ) इति षोडशर्चं सूक्तम् ॥ २५० ॥

एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् ॥
अवेत्यृचं जपेदब्दं यत्किंचेदमितीति वा ॥ २५१ ॥

अर्वाङ्महापातकेभ्य एनांसि स्थूलसूक्ष्माण्युच्यन्ते उपपातकादीनि। तेषामपनोदनं चिकीर्षन् अवेत्यृचं जपेदब्दम्। अवेत्यवशब्देन प्रतीकेन 'अव ते हेलो वरुण नमोभिः' ( ऋग्वेद १।२४।१४ ) इति लक्ष्यते, पापप्रमोचनलिङ्गत्वात्। न त्वतत्संदुहेणायत इति 'यत्किंचेदं वरुण दैव्ये जन' ( ऋग्वेद ७।८९।५ ) इति एषाम् ॥ २५१ ॥

प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् ॥
जपंस्तरत्समंदीयं पूयते मानवस्त्र्यहात् ॥ २५२ ॥

अप्रतिग्राह्यं मद्यादि यदप्यप्रतिग्राह्यं पापकर्मणः सुवर्णादि तदग्राह्यमेव। विगर्हितमन्नं चतुर्विधं स्वभावकालपरिग्रहसंसर्गदुष्टम्। 'तरत्समं दीधावति' ( ऋग्वेद ९।५८।१ ) पावमानीषु चतुष्टयम् ॥ २५२ ॥

सोमारौद्रं तु बह्वेनाः समामभ्यस्य शुद्ध्यति ॥
स्रवन्त्यामाचरन्स्नानमर्यम्णामिति च तृचम् ॥ २५३ ॥

'सोमा रुद्रा धारयेथामस्रम्' इति (ऋग्वेद ६।७४।१) चतस्रो यज्ञं च भरणानीन्द्रियं चेति ऋक्।

समां संवत्सरम्। चाह्वानः।

इदं लिङ्गं यदुक्तं कचित्तन्त्रेणापि प्रायश्चित्तमस्तीति।

स्रवन्त्यामिति तडागसरसी निवर्तते ॥ २५३ ॥

अब्दार्थमिन्द्रमित्येतदेनस्वी सप्तकं जपेत् ॥
अप्रशस्तं तु कृत्वाऽप्सु मासमासीत भैक्षभुक् ॥ २५४ ॥

'इंद्रं मित्रं वरुणमग्निम्' ( ऋग्वेद १।१०६।१-७ ) इत्येतत्सप्तकम्। अब्दार्धं षण्मासान्। जपेदेनस्वीत्यविशेषात्सर्वैनसाम्।

अप्रशस्तं मैथुनं तत्र पुरीषोत्सर्गो वा। तदप्सु कृत्वा मासं भैक्षाहारो भवेत् ॥ २५४ ॥

**मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ॥**
**सुगुर्वप्यपहंत्येनो जप्त्वा वा नम इत्यृचम् ॥ २५५ ॥**

'देवकृतस्यैनसोऽवयजनमसि' ( वाजस० ८।१३ ) इत्येवमादयोऽष्टौ मन्त्राः शाकलहोमीयाः। तैर्घृतमब्दं हुत्वा गुर्वप्यपहन्त्येनः। सर्वमहापातकान्यपीत्यर्थः।

जपित्वा 'नमो रुद्राय तवसे कपर्दिन' (वाजस० ७ अ०) इत्येवं मन्त्रं संवत्सरमेवमेतां सिद्धिमाप्नुयात्, अन्तरेणापि शाकलहोमम्। तदिदं वैकल्पिकं जपकर्मपूर्वेण शाकलमन्त्रहोमेन प्रायश्चित्तम्।

अन्येन वा जपित्वा वामन इत्यृचम्। सा तु शिष्टेभ्यः सुगमयितव्या ॥२५५॥

**महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः ॥**
**अभ्यस्याऽब्दं पावमानीर्भैक्षाहारो विशुध्यति ॥ २५६ ॥**

महापातकसंयुक्त इति पूर्वपदार्थसंख्याविशेषप्रतिपत्तिरनेनापीति गम्यते। एकैकस्य लघुनः प्रायश्चित्तविधानमनेकेनापि युक्तम्।

पावमान्यः कृत्स्नमेव मण्डलं दासतयं 'स्वादिष्ठया मदिष्ठया' ( ऋग्वेद ९।१।१ ) इत्यारभ्य 'यत्ते राजञ्छृतं हविः' ( ऋग्वेद ९।११४।४ ) इत्यन्तम्।

गवामनुगमनं नानुव्रज्यामात्रम्। किं तर्हि ? परिचर्या। सा च गोघ्नप्रायश्चित्तादनुसंधेया ॥ २५६ ॥

**अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ॥**
**मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः ॥ २५७ ॥**

महापातकसंयुक्तस्यैव प्रायश्चित्तान्तरमेतत्।

वेदसंहितां मन्त्रब्राह्मणम्। 'षट्त्रिंशद्रात्रमुपोष्य' इति संहितामरण्ये जपन् प्रमुच्यते ॥ २५७ ॥

**त्र्यहं तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ॥**
**मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥ २५८ ॥**

"अपोऽभ्युपयन्", 'जपित्वाऽघमर्षणमि'ति सम्बन्धः ।
अतश्चान्तर्जलं जपसिद्धिः । एवं स्मृत्यन्तरानुग्रहः ।
अघमर्षणमंत्रविशेषस्तृच उक्तः ॥ २५८ ॥

यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥
तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम् ॥ २५६ ॥

स्तुत्यर्थः श्लोकः ॥ २५६ ॥

हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ॥
ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ॥ २६० ॥

इयमपि स्तुतिः ; ऋग्वेदधारिणो रहस्यप्रायश्चित्तार्था ।
अन्ये तु 'महापातकसंयुक्त' इत्यारभ्य रहस्यार्थमपीच्छन्ति ॥ २६० ॥

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥
साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ २६१ ॥

ऋगादिविशेषणात् ब्राह्मणनिवृत्तिः ।
रहस्यानि सामान्यारण्यकाधीतानि ॥ २६१ ॥

यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ॥
तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ २६२ ॥

त्र्यवयवस्त्रिवृत् । एककार्यत्वादवयवव्यवहारात् वेदो वेदान्तरस्यावयवः ॥२६२॥

ऋचो यजूंषि चान्यानि सामानि विविधानि च ॥
एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ २६३ ॥

तत्त्र्यवयवं दर्शयति ।
आद्यानि मुख्यानीत्यर्थः ।
'अन्यानि' ब्राह्मणाध्येयानि च पठितानि । अथवा पदक्रमितानि ।
विविधानि सामानि ग्राम्यारण्यविभागेन ॥ २६३ ॥

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता ॥
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ २६४ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां
एकादशोऽध्यायः ॥ ११ ॥

त्र्यक्षरमक्षरत्रयसमाहार ओंकारः । आद्यं ब्रह्म गुह्यम् । रहस्याधिकारे यथावदुपदिष्टत्वाच्छब्दब्रह्मरूपतयोपासनकर्मत्वेन विहितः । परमात्मवाचकतया वा 'गुह्यो', न त्वज्ञाताक्षरत्वेन । स हि लोकप्रसिद्ध ओमित्यभ्युपगमः ।

त्रयी यस्मिन्नेषा संकुचिता । सर्वाणि वर्णानीत्येवमादि ।

तस्योपासना पुरस्तादुक्तेति एव'मोमित्येतदक्षरमुपासीते'ति (छान्दोग्य १।१।१)।

पूर्वश्लोके मन्त्रार्थवेदनेन वेदत्वमुक्तमनेन वेदान्तज्ञानम् । कर्मवेदनं त्वध्ययनविध्याक्षिप्तमेवेति प्रसिद्धम् ॥ २६४ ॥

इति श्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्य एकादशोऽध्यायः ॥

---

# अथ द्वादशोऽध्यायः १२ ।



चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वयाऽनघ! ॥
कर्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥ १ ॥

आद्योऽर्धः श्लोकः शास्त्रार्थपरिसमाप्तिदर्शनेनाधिकाकांक्षानिवृत्त्यर्थः ।

कृत्स्नग्रहणं सम्मानार्थम् । एतावन्तः स्मार्ता धर्मा यस्मिन् शास्त्रे, रहस्यपर्यन्त-उपदिष्टाश्च ।

शिष्यमुखेनाचार्यस्यैव कृत्स्नकारिता शास्त्रस्य प्रतिपाद्यते न विवक्षिता । नात्र शिष्याचार्यं वस्तुतः प्रतिपत्तव्यम् । ग्रन्थकार एवेमं ग्रन्थमेवं विभजति । धर्म-शब्दश्च कर्तव्यतावचनो विधिप्रतिषेधसमूहमनुवदति । तेन कर्मफलसंबन्धोऽनुक्त इति इत ऊर्ध्वं प्रतिपाद्यते ।

कृत्स्नो धर्म उक्तस्त्वया । विधिप्रतिषेधापेक्षया वचनमुपपन्नं भवति ।

"कस्य पुनः कर्मणः फलसंबन्धो जिज्ञास्यते येनोच्यते कर्मणां फलनिर्वृत्तिं शंसेति । यावता यावन्ति तावन्नित्यानि शास्त्रनोदितत्वादेव क्रियन्ते न तेषां फलमभिसंधेयम् । न हि तानि फलार्थानि । यान्यनित्यानि तत्रापि प्रतिकर्म प्रायशः फलान्युक्तान्येव 'वारिदस्तृप्तिमाप्नोति' स्वर्गायुश्च' इत्यादीनि च । यत्रापि नोक्तमिव मन्येत तत्रापि स्वर्गादि साधितमेव । यानि जातकर्मादीनि संस्कार-कर्माणि तानि संस्कार्यविशेषोक्तस्य क्रियाफलेनैव फलवन्ति नादृष्टमाकांक्षन्ति । यान्यपि नैमित्तिकानि द्रव्यशुद्ध्यादीनि चाण्डालस्पर्शनस्नानादीनि तान्यपि दृष्ट-प्रयोजनान्येव । शुद्धये हि तानि क्रियन्ते, अशुद्धेर्व्यवहारप्रतिषेधात् । प्रायश्चि-त्तानि चानन्तरमुक्तप्रयोजनान्येव । अतो न विद्मः कस्य वास्य कर्मणः फलम-भिजिज्ञास्यते" ।

प्रतिषेधानाम् । 'शरीरजैः कर्मदोषैः' इत्यादिना तेषामेव वक्ष्यमाणत्वात् । तथाप्रतिषेधानुष्ठानमपि शास्त्रचोदितमेव ।

"ननु तत्र फलार्थित्वे हि न सर्वविषयोऽधिकारः स्यात् । अर्थिता वाऽधिक्रियेत।"

उच्यते। नैवात्र तादृशं फलमभिधीयते यत्काम्यते। अनिष्टफलदर्शनमत्र क्रियते। नैव तत्काम्यते। नैव च कश्चिदनिष्टप्राप्तिमिच्छति। अतः सर्वविषयतासिद्धिः।

यदप्युच्यते 'शास्त्रं चोदितं प्रतिषेधानुष्ठानं क्रियते' अत्यल्पमिदमुच्यते। एवं तत्रानुष्ठानमिति। सर्वमेव शास्त्रनोदितं क्रियते।

"किन्तु तच्छास्त्रं फलार्थिनः कस्यचित्कर्तव्यतां स्थापयति। कस्यचिदन्तरेण फलं नैमित्तिकत्वेन। इह तु यावज्जीवमिव निमित्तश्रुतेरभावात्किमर्थं प्रतिषिद्धं न क्रियत" इति।

उपेक्षायां प्रत्यवायश्च दृश्यते। 'जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते इति'।

"ननु च यत्प्रतिषिद्धं ब्राह्मणवधादि न तच्छास्त्रचोदितम्। शास्त्रनोदितस्य हि शास्त्रीयेण फलेन संबन्धो युक्तः। यथा 'स्वर्गकामो यजेत' इति। शास्त्रतो हि यागस्य कर्तव्यताप्रतिपत्तिर्नान्यतः। इह तु द्वेषादिना लौकिकी प्रवृत्तिरशास्त्रीया न चाशास्त्रीयस्य शास्त्रीयेण फलेन संबन्धो न्याय्यः। यदप्युक्तमु'पेक्षायां प्रत्यवायः प्रदर्शित' इति किमित्यत्राकांक्षा। यावता 'द्विषन्तं प्रति वर्तमानस्य न कर्तव्यमिति शास्त्रतोऽवगतिर्जायते, तावता वाक्यार्थसमाप्तिः। किमत्र पदमस्ति यदाकाङ्क्षीत"।

एतद्विविच्यमानं महान्तं ग्रन्थविस्तारमाक्षिपति। संक्षेपस्त्वयम्। 'न हिंस्येद्भूतानि' इति प्रतिषेधविधेः प्रतिषेधो भावार्थः। तत्र विधेस्तावन्नियोज्यविषयाकांक्षा। तत्र नियोज्यस्येयमवगतिर्भवति 'न मयैतत्कर्तव्यम्'। नार्थस्तत्र नियुक्तः, पुरुषनियोगरूपत्वाद्विधेः। स चात्र नियोज्यो लौकिक्या द्वेषलक्षणया प्रवृत्त्यार्थेन प्रवर्तमानहिंसास्वभावोपदेशेन समर्पितः। यः स्वेच्छया हनने प्रवर्तते स हन्यादिति। न चैतेन नियुज्यते स ह्यत्र विधेर्विषयः। न चेति शून्येषु भावार्थस्यान्यतः प्राप्तत्वात्पुरुषोपलक्षणत्वात्स्वेन विषयत्वेन विधेः संबन्धः। यश्चासौ नियोज्यः स न तीर्थत्वेन नियोज्यभावमात्मनः प्रतिपद्यते। यावत्तद्विषयस्य प्रतिषिध्यमानस्य नानिष्टफलतामध्यवस्यति। तथा हि लोके व्युत्पत्तिः। 'सभ्यायांगुलिर्देयेति' वेदेन प्रतिषिद्धे तदतिक्रमेण तदनुष्ठीयमानमनर्थहेतुतया प्रतिपन्नम्। न च लौकिकीं व्युत्पत्तिमवमृज्य हेत्वन्तरमुपन्यासमर्हति। तत्राश्रुताप्यनिष्टफलता प्रतिषेधसामर्थ्यात्कल्पयितुं युक्ता, किं पुनर्यत्र श्रूयत एव। न हि श्रुतस्योत्सर्गो न्याय्यः। न चात्र वादमात्रोपलक्षकत्वं नरकादिफलं श्रुतियुक्तमुक्तेन न्यायेन फलापेक्षान्वयः सकाशात्।

किं चार्थवादा विधिविशेषा भवन्ति । न चेह कश्चिद्विधिः श्रुतः प्रकृतो वा, कर्मफलसम्बन्धस्यैव प्राधान्येन प्रतिपादयिष्यमाणत्वात् । न ह्यत्र कर्माणि विधीयन्ते । अतश्च तेषां फलसम्बन्ध उच्यते । न चैतावता भवन्ति वाक्यशतान्यनर्थकानि । भवन्त्वर्हन्तु स्मृतिकारणं तावदेतद्दर्शनम् । न ह्यन्यथैतानि वाक्यानि व्याख्यातुं शक्यन्ते । अविधिशेष इह नास्ति ।

गुणवादेनैतद्व्याख्यानं शास्त्रकाराणामपि भ्रान्तिरिति चेत् ।

न । एवंवादिन आत्मनः प्रकर्षतो महर्षीनवजानते ।

अघं पापमनघेति संबोधनम् । निष्कल्मषतया स्तुत्यर्थम् । शंसेति वाग्यतो वर्तते ॥

स तानुवाच धर्मात्मा महर्षीन्मानवो भृगुः ॥
अस्य सर्वस्य शृणुत कर्मयोगस्य निर्णयम् ॥ २ ॥

पृष्टप्रतिवचनमेतत् । यदहं पृष्टः शृणु तत् ।

कर्मणो योगमिति संबन्धः । न च प्रकृतत्वात्फलेनैव विज्ञेयः ॥ २ ॥

शुभाशुभफलं कर्म मनोवाग्देहसंभवम् ॥
कर्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ ३ ॥

शुभस्य निर्देशो दृष्टान्ततया, मनोवाग्व्यापारविध्यर्थो वा मनसो वाचो देहाच्च संभवति कर्म । कर्मशब्दो न चेज्यायामेव कायपरिस्पन्दे वर्तते । किं तर्हि ? क्रियामात्रे योगध्यानवचनात्मकेऽपि । फलशब्दः प्रत्येकमभिसंबध्यते । शुभफलमशुभफलं च । नैवं विज्ञेयं 'कायव्यापारसाधनादेव' कर्मानुष्ठानाच्छुभाशुभफलप्राप्तिः; अपि तु मनोवाक्कायसंभवादप्येवमेव । तस्मादपि त्रिविधात्कर्मणस्तु विधीयते फलप्राप्तिः ॥ ३ ॥

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ॥
दशलक्षणयुक्तस्य मनो विद्यात्प्रवर्तकम् ॥ ४ ॥

"ननु च 'दण्ड्यान् यजेत' 'न हिंस्यादिति' शुभमशुभं च । ते सर्वे कायव्यापारसाध्ये । दानेनात्मनः स्वत्वनिवृत्तिः परस्य च स्वत्वसंपादनं तच्च पूर्वं 'दक्षिणेन हस्तेने' त्यादि विहितम् । यागोऽपि प्रयोगरूपोऽवभृथान्तः कायव्यापार-

निर्वर्त्यो भवति। एवं संघातदण्ड्याद्यविद्या तु कायिकतया प्रसिद्धैव। तत्र किं तत्कर्म यन्मनसः संभवति"।

अत आह अर्थस्यास्य मनो विद्यात्प्रवर्तकम्। मनसो हि व्यापाराः सर्वे दर्शनादयः। न च त्रिष्वसत्सु भौतिको व्यापारः। तथा हि प्रथमं तावन्मनसाऽयमर्थं संपश्य'त्ययमीदृश एव' तस्य वस्तुनः सुखं दुःखं वाऽस्य कारणं तत आयत्ते 'कथमेतन्मनः संपद्यते'। ततोऽध्यवस्यति 'संपादयाम्यतो नेदमिति'। तत्र उदरे क्रियाप्रधाने कायपरिस्पन्दरूपवाग्व्यवहारश्च। अतः सर्वस्य मनः प्रवर्तकं प्रेक्षापूर्वकारिणः।

अबुद्धिपूर्वं तु नावश्यं सद्दर्शनादयः पूर्वभाविरूपस्य ताद्रूप्येण ग्रहणं, यथा मद्ये वर्णसादृश्यात्पानकबुद्ध्या प्रवृत्तिः, सन्तमासंभवात् तया परस्त्रीषु। अन्यत्तु दैवोपनिपतितम्। यथा सुप्तस्य हस्तसंचारपार्श्वपरिवर्तनादिना मशकादिप्राणिवधस्तत्रापि कर्तृत्वमुपपादितं प्रायश्चित्तेषु प्रवृत्तिहेतुः।

त्रिविधस्य वाङ्मनःकायसाधनभेदेन।

त्र्यधिष्ठानस्योत्तमाधममध्यमगतिभेदेन।

दशलक्षणयुक्तस्य मनःकायकर्मणोः प्रत्येकं त्रैविध्यं वाङ्मयं चतुर्विधम् एतानि दशलक्षणानि। तान्युपरिष्टाद्वक्ष्यति ॥ ४ ॥

परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ॥
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ ५ ॥

अभिध्यानं नाम परद्रव्यविषयेर्ष्याबुद्ध्या परद्रव्याभिभवानुचिन्तनम् 'कियदश्वगोधनं कियद्वाऽजाविकमिति च विभवोऽश्वाः धिग्दैवं कस्मादस्येयती समृद्धिः, अथ च कथं नामैतस्यापहरेयं, अथ साधुर्भवति यद्येतस्यैतन्न भवति'।

अन्ये त्वाहुरेतद्धनं समभिभवति।

अनिष्टचिन्तनं परस्येत्यभिसंबध्नन्ति। परवधोपायचिन्तनम्। 'यदि म्रियते' 'तन्ममास्त्विति' वा।

"ननु च परद्रव्याभिध्यानमीदृशमेवोक्तम्। अनेनैव सिद्धे तदनर्थकम्"।

सामान्यशब्दो ह्ययम्। यदनिष्टमनभिप्रेतं परस्य तन्न चिन्तनीयम्। धननाशोऽपि परस्य नैवेष्टः। एतद्भयाच्च किंचन परस्येत्येतन्न व्याहरन्ति। अनिष्टं च यत्प्रतिषिद्धं तद्व्याचक्षते।

अस्मिन्नपि पक्षे परद्रव्याभिध्यानं प्राधान्यार्थमेव ।

एवं वितथाभिनिवेशोऽपि । पूर्वपक्षार्थस्य सिद्धान्तत्वेन ग्रहणं विज्ञानवादो वेदाः प्रामाण्यं, अनात्मताग्रह इत्येवमादि ।

अन्ये तु नित्यनिरामिपद्वेषमाहुः ।

इयं च त्रिविधाऽकुशला मानसी प्रवृत्तिः । अतोऽन्या कुशला । अस्पृहा परद्रव्येपु, दया सर्वसत्त्वेषु, श्रद्धा धर्माद्यस्तित्वादिपु । तथा च भगवान् व्यासः 'अनभिध्या परस्वेषु सर्वसत्वेपु सौहृदम् । धर्मिणां फलमस्तीति त्रिविधं मनसा स्मरेत्' ॥ ५ ॥

पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ॥
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ ६ ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः ॥
परदारोपसेवा च शरीरं त्रिविधं स्मृतम् ॥ ७ ॥

शास्त्रीयाप्राधान्यतयाऽस्यादत्तानामसद्भ्य उपादानं दुष्टं चैव । तथा कुमार्यादिपरदारादावपि ।

विपरीतधर्मादादानं परित्राणमिन्द्रियसंयमश्च ।

इदं मनोवाग्देहभेदेन दशविधम् । प्रवृत्तिकुशलाकुशलविभागेन विंशतिप्रकाराः ॥ ७ ॥

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ॥
वाचा वाचा कृतं कर्म कायेनैव च कायिकम् ॥ ८ ॥

परस्य मनस्तापो येन जन्यते कर्मणा ततो मानसं दुःखमाप्नोतीति केचित् ।

वयं तु ब्रूमो यत्त्रिविधं मानसमुक्तं ततो मनोदुःखाप्तिः । एवमुत्तरयोरपि ॥८॥

शरीरजैः कर्मदोपैर्याति स्थावरतां नरः ॥
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ९ ॥

भूयस्त्वाभिप्रायमेतत् । प्रायेणैतासां जातीनामेतानि यथाविभागं निमित्तानि । न त्वयं नियमः । तथा महापातकिनां तिर्यक्पर्यटन्तीति वक्ष्यतीति ।

पक्षिमृगग्रहणं तिर्यग्जातिमात्रप्रदर्शनार्थम् ।

मनोवाक्कायकर्मणामुत्तरोत्तरस्य गुरुत्वप्रदर्शनार्थपरम् ॥ ९ ॥

वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ॥
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥ १० ॥

दमनं दण्डः । वाचो दण्डः पारुष्याप्रवृत्तिः । एवमुत्तरयोरपि ।

यस्यैते दण्डा बुद्धौ निहिता 'नैतन्मया कर्तव्यमिति' यो न स्खलति स त्रिदण्डीत्युच्यते । न त्वनार्यो गुरुकाष्ठदण्डं धारयति ॥ १० ॥

त्रिदण्डमेतन्निक्षिप्य सर्वभूतेषु मानवः ॥
कामक्रोधौ सुसंयम्य ततः सिद्धिं निगच्छति ॥ ११ ॥

त्रयाणां दण्डानां समाहारस्त्रिदण्डम् । पात्रादिदर्शनादस्त्रियां भाषणात् ।

बुद्धौ निक्षिप्य बुद्धौ कृत्वा ।

सर्वभूतेष्वघातकत्वं चावस्थितं त्रिदण्डं वा निहितम् ।

कामक्रोधयोः संयमः सु साधुः ।

ततः सिद्धिं मोक्षाख्यां गच्छति प्राप्नोति ।

आध्यात्मिकत्वोपन्यास उपक्रमोऽयम् । कस्य पुनरेषा सिद्धिः कस्य वामुत्र विकारकर्मफलानां भोक्तृत्वम् । भस्मान्तं शरीरम् । न च ततोऽन्यमुपलभामहे तेन सर्वेषु धर्माधर्मेष्वधिकारिपुरुषं प्रदर्शयितुकामः प्रारभते ॥ ११ ॥

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ॥
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥ १२ ॥

अस्य शरीरस्य क्रियापरिस्पन्दात्मिकां क्रियां स्वयं प्रवर्तयिता । प्रयत्नवशेनास्य कर्तृत्वम् । स क्षेत्रज्ञः । अस्यात्मन इति समानाधिकरणे षष्ठी । आत्मशब्दस्य शरीरे वृत्तिः, तस्यापि आत्मार्थत्वात् ।

यः करोति पानादिलक्षणं तज्जन्यो यः शरीराख्यः कर्ता स भूतात्मोच्यते पृथिव्यादिभूतसंघातो, जघन्यत्वात् । भूतविकार आत्मा 'भूतात्मा' । तथा चोक्तं 'द्वावात्मानावन्तरात्मना शरीरात्मना' ॥ १२ ॥

जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् ॥
येन वेदयते सर्वं सुखं दुःखं च जन्मसु ॥ १३ ॥

किं पुनरयं जीवो नाम यावता क्षेत्रज्ञमेव जीवं मन्यन्ते। द्वौ चात्रोपलभ्येते—शरीरमहंप्रत्ययविज्ञेयश्चान्तरात्मा। ततोऽन्यः कश्चिज्जीवो नाम।

केचित्तावदाहुः महदादिभूतसूक्ष्मपरिवेष्टितं लिङ्गं यत्पठ्यते 'संसरति निरुपभोगं भावैरधिवासितं लिङ्गमि'ति। येनेतिकरणत्वं च वेदनं प्रति तस्योपपद्यते। तद्धि स्थूलभूतानामाश्रयः। तस्यैव शरीराख्यबाह्यभूताश्रयत्वात्। शरीरे च सत्यात्मनः सुखदुःखभोक्तृत्वम्। अतो येनेति करणविभक्त्योच्यते।

अन्ये तु मन्यन्ते—अन्तःकरणं मनोबुद्ध्यहंकाररूपं 'जीवः'। तस्य चान्तःकरणसंज्ञत्वाद्युक्त एव करणविभक्त्या निर्देशः।

अन्तरात्मशब्दश्च तादर्थ्याद्युक्त एव।

सहजशब्दश्चामोक्षप्राप्तेराप्रलयाच्च तदवियोगेन॥ १३॥

तावुभौ भूतसंपृक्तौ महान्क्षेत्रज्ञ एव च ॥
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥ १४ ॥

उच्चावचेषु बहुविधेषु नानारूपेषु भूतेषु सर्वेषु यः स्थितो व्याप्य तानि भूतानि।

तिष्ठतः संश्रयतः। अतश्च सर्वकर्मकर्तृत्वं तिष्ठतेरनेकार्थत्वात्।

कोऽसावुच्चावचेषु भूतेषु व्याप्य स्थितः।

परमात्मा चेतनाचेतनजगत्परित्यक्तः परमानन्दरूपः परस्ताच्च प्रतिपादयिष्यते।

भूतसंपृक्तौ भूतानि पञ्च।

महानिति। येन वेदयत इत्युक्तः।

क्षेत्रज्ञः 'अस्यात्मन' इति।

यथाव्याप्त्यापक्षेऽपि द्वितीय 'स्थितं तमिति'। संश्रयणं च तत्कारणत्वात्सर्वस्यास्य जगतः। कार्यं च कारणमाश्रयत्यतोऽपेक्षैव संश्रयणम्।

तथा च भगवान्व्यासः ( भ० गी० १५। १६ )

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते'॥

क्षरशब्देन सर्वं चैतदुच्यते। चराचरप्रपंचरूपम्। अक्षरं प्रकृतिकारणं कूटस्थशब्देन, कारणरूपतया प्रलयेऽप्यविनाशात्। अथवा क्षरं शरीरमक्षरः क्षेत्रज्ञः। कूटस्थत्वं तु तस्यामोक्षप्राप्तेः कर्तृत्वभोक्तृत्वानिवृत्त्या।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः' ( भ० गी० १५ । १७ ) ॥ १४ ॥

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः ॥
उच्चावचानि भूताति सततं चेष्टयन्ति याः ॥ १५ ॥

मूर्तिशब्देन यावत्किंचिद्भौतिकं कार्यकारणमिति शक्तिश्च तदुच्यते। तदेतत्सर्वं तस्य परमात्मनः शरीरात्प्रादुर्भवति।

स्वभाव एव तस्य शरीरम्। शिलापुत्रकस्य शरीरमितिवद्भेदेन व्यपदेशः।

असंख्या अनन्ताः। समुद्रादिवोर्मयः। निष्पतन्ति प्रादुर्भवन्तीत्युक्तम्। ताभिः प्रादुर्भूताभिरिदं जगच्चेष्टते सक्रियं भवतीत्यर्थः। शरीरेन्द्रियविज्ञानैर्विना चेष्टाया अभावाच्चेष्टयन्तीत्युच्यते।

अन्ये तु शरीरतः प्रधानं च परमात्मनः 'शरीरं' तदधीनप्रवृत्तित्वात् 'नात्र भूतानि' ॥ १५ ॥

पञ्चभ्य एव भूतेभ्यः प्रेत्य दुष्कृतिनां नृणाम् ॥
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥ १६ ॥

पंचभ्यो भूतेभ्योऽन्यच्छरीरं प्रेत्योत्पद्यते। एतदुक्तं भवति। शुक्रशोणितमन्तरेणैव पाञ्चभौतिकं शरीरमुत्पद्यते। दुष्कृतिनां च पाञ्चभौतिकं शरीरं पुण्यकृतां तु तैजसाऽऽकाशमात्राणि भवन्ति। यथोक्तं 'वायुभूतः स्वमूर्तिमान्' इति।

यातना पीडातिशयः। तदर्थीयं, यदतिदृढमलौकिकदुःखसहिष्णु ॥ १६ ॥

तेनानुभूय ता यामीः शरीरेणेह यातनाः ॥
तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः ॥ १७ ॥

यमो नाम देवताविशेषः, दुष्कृतिनां निग्रहादिकृत्। तद्दृष्टा यातना अस्य। ता अनुभूय। तेन पांचभौतिकेन शरीरेण। तानि शरीराणि पुनः प्रलीयन्ते तासु सूक्ष्मासु भूतमात्रासु ॥ १७ ॥

सोऽनुभूयासुखोदर्कान्दोषान्विषयसङ्गजान् ॥
व्यपेतकल्मषोऽभ्येति तावेवोभौ महौजसौ ॥ १८ ॥

विषयसङ्गात्प्रतिषिद्धविषयोपसेवनात्प्रतिषिद्धान् ततः सङ्गाच्च ये जाता दोषाः पापनिर्मिताः । नरकादुदुःखान्यनुभूय तेन च दुःखोपभोगेन व्यपेतकल्मषोऽपहृतपाप्मा चेति ।

तावेवोभौ महौजसौ ।

'कावुभौ । महान् क्षेत्रज्ञश्च तौ प्रकृतौ । अनन्तरश्लोकेन च क्षेत्रज्ञ एवानुभविता सुखदुःखयोः । स इति च तस्यैव परामर्शोऽतः क्षेत्रज्ञमभ्येतीति प्राप्तम् । तच्च विरुद्धम् । स एव प्राप्यः प्रापकश्च" ।

सत्यम्, औपचारिको भेदोऽभिप्रेतः । 'अभ्येती'त्ययमर्थः एतावन्मात्रशेषो भवति । यदुत क्षेत्रज्ञतया प्राणादिसंघातात्मकेन महानिति व्यपदिष्टेन फलेषु तावन्मात्रः परिशिष्यते । लिङ्गजीवश्च क्षेत्रज्ञः ।

अन्ये तु महत्परमात्मानाविति व्याचक्षते ।

असुखोदर्कान् क्षीणे पाप उत्तरकालं सुखमनुभूयते । प्रतिपन्थिनि पापे स्वल्पेऽपि न सुखोत्पत्तिः यथा स्वल्पेऽप्यजीर्णे न भोजनं सुखाय ॥ १८ ॥

तौ धर्मं पश्यतस्तस्य पापं चातन्द्रितौ सह ॥
याभ्यां प्राप्नोति संपृक्तः प्रेत्येह च सुखासुखम् ॥ १९ ॥

"ननु च यदि 'तौ' महान् क्षेत्रज्ञश्च संबध्येते ततस्तस्य पश्यत इति 'तस्ये'ति कः संबध्यते ।"

जीव इति केचित् । उक्तं च 'स एव क्षेत्रज्ञः स एव जीव' इति । अथ लिङ्गं, ननु च महच्छब्देन तदेवोक्तम् । अथान्तःकरणं महद्बुद्ध्यादि, तत्रापि कः संबन्धो लिङ्गस्य धर्माधर्माभ्याम् । तद्धि सूक्ष्मं भूतरूपमेव । यथोक्तं 'तेषामिदं तु सप्तानाम्' इत्यत्रान्तरे ।

अतो मन्यामहे यदेवान्यैर्व्याख्यातमस्ति पूर्वश्लोके 'तावेवोभौ इति महत्परमात्मानौ बुध्येते' इति तदेव युक्तं पश्यामः । तयोर्हि दृष्टान्त उपपद्यते । महतः करणस्य सतः कर्तृत्वोपचारात् । काष्ठानि पचन्तीति यथा । तस्येति च क्षेत्रज्ञस्य परामर्शभेदोपपत्तिः ।

परमात्मनश्च क्षेत्रज्ञाश्रययोर्धर्माधर्मयोर्दृष्टान्तवचनं सर्वस्य सुखदुःखोपभोगस्य तदधीनताख्यापनार्थम्। यथोक्तं 'ईश्वरप्रेरितो गच्छेत्स्वर्गं वाश्वभ्रमेव वा'। प्रेरणा च धर्माधर्मनियमितेच्छैव।

"ननु च धर्माधर्मयोरिच्छां प्रति नियन्तृत्व ऐश्वर्यं हीयते"।

तथा शारीरके दर्शितं, यथेह राजा सेवानुरूपं ददाति न च तस्येश्वरत्वमपैति।

अतो महत्परमात्मानौ पश्यत इति व्यपदिश्यते।

तस्येति क्षेत्रज्ञज्ञानम्।

"तदप्ययुक्तमुत्तरग्रन्थविरोधात्। ताभ्यां प्राप्नोति संपृक्त इति। न हि परमात्मना कस्यचित्संपर्कः संबन्ध उच्यते। न च परमात्मना कश्चित्संबन्धोऽपि"।

एवं तर्ह्यत्र याभ्यामिति नैवं महत्परमात्मानौ संबध्येते। किं तर्हि ? धर्मः पापं च। तयोरपि प्रकृतत्वात्। तौ धर्मं पश्यतस्तस्य पापं चेति।

यदि महच्छब्देनान्तःकरणमुच्यते, सुतरामनुपपत्तिः। न हि परमात्मनो द्रष्टृत्वे करणापेक्षा। अधिकरणमेव हि बोधिपरमात्मस्वरूपमभ्येति 'तावेव चोभाविति'। कीदृशमेतदभिगमनम्। यदि तद्भावापत्तिः सा नैव कल्मषव्यपायमात्रसाध्या। अथ तत्प्राप्तिप्रवणता, साऽपि नैव प्रलीनेषु भूतेष्वशरीरस्य भवति।

तस्मात्तौ धर्मं पश्यतस्तस्य 'तस्यै'वात्मन इति पूर्ववन्नेयम्॥ १९॥

**यथाचरति धर्मं स प्रायशोऽधर्ममल्पशः॥**
**तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते॥ २०॥**

प्रायशो बाहुल्येन।

तैरेव भूतैर्महदादिभिर्महाभूतपर्यन्तैः स्वर्गे सुखमाप्नोति॥ २०॥

**यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः॥**
**तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः॥ २१॥**

"ननु च 'पंचभ्य एव मात्राभ्यः शरीरं दुष्कृतिना' मित्युक्तं किमिदानीमुच्यते तैर्भूतैः परित्यक्त इति"।

उच्यते। न भौतिकं शरीरं नाप्यशरीरस्य यातनाः। किं तर्हि ? अत्यन्तविलक्षणे ते मानुषशरीरेऽतोऽन्यान्येतानि मृदुस्निग्धसुकुमारशरीरारंभकाण्यत्यन्तविलक्षणानि।

दुःखाभिघातनिष्कृत्या परित्यक्ता उच्यते । यानि शरीराणि स्वर्गभोग्यानि तैः परित्यक्तः ॥ २१ ॥

यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः ॥
तान्येव पञ्चभूतानि पुनरप्येति भागशः ॥ २२ ॥

प्राग्व्याख्यातोऽयम् ।

एतच्चास्य श्लोकचतुष्टयस्य तात्पर्यम् । यदि भूयानधर्मस्तदा याम्यो यातनाः । न तु स्वल्पेऽधर्मेऽस्मिन्नेव लोके सुखानुभवेन स्वर्गावाप्तिः ॥ २२ ॥

एता दृष्ट्वाऽस्य जीवस्य गतीः स्वेनैव चेतसा ॥
धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः ॥ २३ ॥

स्वल्पार्थोऽयम् ।

धर्मतोऽधर्मत इति नञः प्रश्लेषः । धर्माधर्मनिमित्तान् । जीवस्य क्षेत्रज्ञस्यात्मनः । स्वेनैव चेतसा शास्त्रप्रामाण्यात्तदनुभवेन् ।

कृत्स्नशास्त्रार्थफलोपसंहारः ॥ २३ ॥

सत्त्वं रजस्तमश्चैव त्रीन्विद्यादात्मनो गुणान् ॥
यैर्व्याप्येमान्स्थितो भावान्महान्सर्वानशेषतः ॥ २४ ॥

धर्माधर्मयोः कर्मकाण्डोपयोगि यत्तदुक्तम् । इदानीं विद्याकाण्डमारिप्सते । तत्र द्वैताश्रयमिव तावदंगार्थं प्रक्रियते ।

सत्त्वादयस्त्रयो गुणा आत्मनः ।

नात्रात्मा जीवः । किं तर्हि ? महानेव । आत्मशब्दः स्वभाववचनो न प्रत्यक्त्ववचनः । निर्गुणो हि पुरुषः ।

अथवा भोग्यतया भोक्तुरेवात्मनः संबन्धित्वेन व्यपदिश्यते ।

महानिति च प्रधानमेवोच्यते, प्रत्यासत्तेः । आद्या हि विक्रियोद्भूतिः प्रधानस्य महदाख्या । यथा जीवन्त्यो जीवतो प्रमावस्थावाप्यभवान् विकारानवस्थितः, प्रकृतित्वात्सर्वविकाराणामिदमुच्यते ॥ २४ ॥

यो यदैषां गुणो देहे साकल्येनातिरिच्यते ॥
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥ २५ ॥

यद्यपि सर्वं त्रिगुणं तथापि यो यदा गुणः साकल्येन कार्त्स्न्येनातिरिच्यते 'आधिक्यं प्राप्नोति' पूर्वकर्मातिशयवशात्स तदा पुरुषस्य गुणान्तरमभिभवति। अतः शरीरी तद्गुणप्रायो भवति। तदीयमेव धर्ममादर्शयति, गुणान्तरं जहातीव ॥२५॥

सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ॥
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः ॥ २६ ॥

सामान्यमेतदेषां लक्षणं व्यापि सर्वप्राणिषु।

ज्ञानं वेदकम्। अज्ञानं मोहः। न यथा मदमूर्च्छाद्यवस्थास्वचैतन्यमेव।

उभयरूपता रजः। रागद्वेषशब्देनोभयधर्मयोग उच्यते। नापि सम्यक्ज्ञान वशानामतिशयेन क्रोधो न चातिप्रसादः। तत्तद्रजः।

वपुःस्वभावः। अनुच्छेदाद्बीजवासनाया आब्रह्मप्राप्तिस्थितत्वात् ॥ २६ ॥

तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् ॥
प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥ २७ ॥

प्रीतिसंयुक्तं संवेदनं शुद्धाभं शुद्धमिवाभाति रजस्तमोभ्यामकलुषितं मदमान-रागद्वेषलोभमोहभयशोकमात्सर्यदोषरहितम्। एवं सर्वम्। एषा चावस्था स्वसंवेद्यैकस्यां वेलायां भवेत् ॥ २७ ॥

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः ॥
तद्रजोप्रतिपं विद्यात्सततं हर्तृ देहिनाम् ॥ २८ ॥

दुःखेन समायुक्तं संभिन्नं शुद्धं प्रीतिरूपं न भवत्यत उच्यतेऽप्रीतिकरं दुःखानु-विद्धतया प्रीत्या न युक्तम्।

अप्रतिपमप्रत्यक्षं पारमार्थिकम्।

एतद्रजसो रूपं हर्तृ विषयेषु प्रवर्तकं स्पृहाजनकमित्यर्थः ॥ २८ ॥

यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम्
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २९ ॥

मोहो वैचित्यं युक्तायुक्तविवेकाभावः।

विषय आत्मा स्वभावो यस्य।

"ननु चायमविषयोऽन्तरात्मत्वादेव। तत्कथं विषयस्वभावः"।

मोहविषयानुरागात् बुद्धिरिव एवमुच्यते। विषयाद्वाऽतीव बुद्धिस्तदात्मिका संपद्यत इति संख्यात्रैगुण्यं न त्वन्तर्बहिः सत्त्वानामविशब्दम्।

अप्रतर्क्यं तदनुमानगोचरम्। अविज्ञेयं अंतर्बहिःकरणानामगोचर इत्यर्थः ॥ २९ ॥

त्रयाणामपि चैतेषां गुणानां यः फलोदयः ॥
अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥ ३० ॥

त्रयाणामेषामासेव्यमानानां यत्फलमुत्पद्यते उत्तमाधममध्यमं तद्वक्तव्यतया प्रतिज्ञायते। यस्मिन् गुणे उद्रिक्ते यः पुरुषस्य स्वभावो भवति स उच्यत इति प्रतिज्ञा ॥ ३० ॥

वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ॥
धर्मक्रियाऽत्मचिन्ता च सात्त्विकं गुणलक्षणम् ॥ ३१ ॥

तत्संबन्धगुणलक्षणमित्येवं वक्तव्यतया प्रतिज्ञायते।

सात्त्विकमिति कथंचिद्याजयितव्यम्। गुणो लक्ष्यते येन तद्गुणलक्षणम्।

तत्कस्येति। सात्त्विकमिति संबन्धः। प्रयोजनं समुदायसम्बन्ध्यवयवा अपि दृश्यन्ते। तेनैतदुक्तं भवति—'सत्त्वस्य' गुणस्यैतल्लक्षणम्। यथा देवदत्तस्य गुरुकुलम्। गुरुरुपसर्जनीभूतोऽपि देवदत्तपदेन सम्बध्यते, तद्वदेतत् प्रष्टव्यम्।

पदार्था व्याख्याताः ॥ ३१ ॥

आरम्भरुचिताऽधैर्यमसत्कार्यपरिग्रहः ॥
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥ ३२ ॥

कर्मणां काम्यानां दृष्टार्थानामदृष्टार्थानां चारंभे रतिर्वृथारंभश्च।

एतत् राजसं लक्षणम्।

अधैर्यमल्पेऽप्युपघातहेतौ चेतसोऽसमाश्वासः। दैन्यग्रहणमुत्साहत्यागः।

असत्कार्यं लोकशास्त्रविरुद्धं तस्य परिग्रह आचरणम्।

विषये संगोऽजस्रं पुनः पुनः प्रवृत्तिः ॥ ३२ ॥

लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता ॥
याचिष्णुता प्रमादश्च तामसं गुणलक्षणाम् ॥ ३३ ॥

धनादिषु रागो लोभः । क्रौर्यं स्वल्पेऽपराधे वैरानुबन्धः । नास्तिक्यं प्रमादता । भिन्नवृत्तिता शीलभ्रंशः । 'चग्रहणेन' शिष्टविगर्हणा । याचिष्णुता याचकत्वं, तच्छीलता । प्रमादोऽनवधानं धर्मादिष्वपायपरिहारेष्वनादरः ।

स्वप्नोऽधृतिरिति नञ्प्रश्लेपः ॥ ३३ ॥

**त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम् ॥**
**इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम् ॥ ३४ ॥**

त्रिषु कालेषु साम्योपचयापचयेषु वोत्तमाधममध्यमेषु च फलोदयेषु ।

इदमिति वक्ष्यमाणस्य निर्देशः ॥ ३४ ॥

**यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ॥**
**तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥ ३५ ॥**

यदुक्तं 'त्रिष्विति' कालनिर्देशस्तद्दर्शयति । कृत्वा कुर्वन् करिष्यन्निति च । कदाचित्त्रिष्वपि कालेषु कदाचिदन्यतरस्मिन् । 'किमर्थमहमेवमकरवं कथं शिष्टानामग्रतो भवामीति' लज्जा चेतसि परिखेदः ॥ ३५ ॥

**येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ॥**
**न च शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसम् ॥ ३६ ॥**

'लोके साधुवादो ममैवं स्यादिति' बुद्ध्या यद्यागतपोधर्माणामाचरणम् तच्च ख्यापनार्थम् । यथा तीर्थकाकेभ्यो दानं राजनि स्पर्धया जल्पः शूद्रेभ्यः शास्त्रव्याख्यानम् ।

पुष्कलामित्यनेनानुषंगित्वात्ख्यातेः सहायतामाह । धर्मार्थं प्रवर्तमानस्य यदि जनाः प्रकाशयन्ति तादृशो धर्मो न दोषाय । तदुक्तं 'यथेक्षुहेतोरिति' । यथा महाभारताख्याने कृष्णद्वैपायनेनोक्तम् ।

'यथेक्षुसक्तो युधि कर्षकोऽस्ति तृणानि वल्लीरपि संचिनोति ॥
तथा नरो धर्मपथेन सचरन् यशश्च कामांश्च वसूनि चाश्नुते ॥'

असंपत्तौ च कर्मफलानाम् । न शोचति न दुःखमस्ति ।

अथवा कर्मणामसंपत्तौ ॥ ३६ ॥

यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् ॥
येन तुष्यति चात्माऽस्य तत्सत्त्वगुणलक्षणम् ॥ ३७ ॥

विस्पष्टोऽयम् ॥ ३७ ॥

तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ॥
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥ ३८ ॥

"ननु च कामेऽपि सुखमस्ति। 'तत्र यत्प्रीतिसंयुक्तं' तत्सत्त्वलक्षणमिति प्राप्तम्। कथं तमसो लक्षणम्। उच्यते। मोहरूपं तमोऽत्र संवेदनमस्ति। तदपि सत्त्वस्यैव लक्षणं 'सत्त्वं ज्ञानम्' इत्युक्तत्वात्"।

उच्यते। नात्र भोक्तृभोग्यभावावस्थाभिप्रेता। किं तर्हि ? विषयगतस्पृहातिशयः। न च तस्यामवस्थायां सुखोत्पत्तिः। अव्यक्तविषयत्वं च विद्यते। कामप्रधानस्य युक्तायुक्तविवेकशून्यत्वादस्त्येव मोहरूपता। ईदृशश्चात्र कामोऽभिप्रेतः। न यद्दतौ शास्त्रार्थतया स्वदारेषु गमनौत्सुक्यम् ॥ ३८ ॥

येन यांस्तु गुणेनैषां संसारान्प्रतिपद्यते ॥
तान्समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥ ३९ ॥

एषां गुणानां मध्ये येन गुणेन यान् संसारान् पुरुषः प्रतिपद्यते। 'संसार'शब्दो गतिवचनः। यानि जन्मानि प्राप्नोतीत्यर्थः। तदुत्तरत्र वक्ष्यत इति प्रतिज्ञाश्लोकः ॥ ३९ ॥

देवत्वं सात्त्विका यान्ति मनुष्यत्वं च राजसाः ॥
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ ४० ॥

सामान्येन गतिनिर्देशो गुणनिमित्तोऽम् ॥ ४० ॥

त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः ॥
अधमा मध्यमाग्र्या च कर्मविद्याविशेषतः ॥ ४१ ॥

एषा त्रिविधा गौणिकी सत्त्वादिगुणप्रयुक्ता प्रत्येकं पुनः त्रिविधोत्तमाधममध्यमभेदेन। अतो नवधा संपद्यते।

कर्मविद्याविशेषाच्चानन्ताः। कुशलाकुशलकर्मवशात्। बुद्धिपूर्वाबुद्धिपूर्वप्रयोगाच्च कर्मणां बहुभेदत्वात्। तदिदमाह कर्मविद्याविशेषत इति ॥ ४१ ॥

स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः ॥
पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥ ४२ ॥

हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः ॥
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥ ४३ ॥

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ॥
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ ४४ ॥

चारणाः कथकगायकस्त्रीसंयोजकादयः।

सुपर्णाः पक्षिविशेषाः।

शूद्रा गर्हिता इति संबन्धः। ये ब्राह्मणानवजानते ये च तद्भृत्युपजीविनो ये च मदमानादियुक्ताः। हिंस्राश्चौरा इत्येवमादयोऽपि गर्हिताः ॥ ४४ ॥

झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ॥
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥ ४५ ॥

झल्ला मल्ला इति रङ्गावतारकाः। तत्र मल्ला बाहुयोधिनः झल्ला यष्टिप्रहारिणः परिहासजीविनो वा ॥ ४५ ॥

राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ॥
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ ४६ ॥

राजानो जनपदेश्वराः। क्षत्रियास्तदनुजीविनः सामन्ताः।

वादप्रधानाः शास्त्रार्थगहनेष्वितरेतरं जल्पन्ति। युद्धप्रधाना योधकाः ॥४६॥

गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये ॥
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥ ४७ ॥

गन्धर्वादयो देवास्तेषामर्थवादेतिहासेभ्यो भेदो विज्ञेयः।

विबुधा देवास्तेषामनुचराः सिद्धविद्याधरादयः ॥ ४७ ॥

तापसा यतयो विप्रा ये च वैमानिका गणाः ॥
नक्षत्राणि च दैत्याश्च प्रथमा सात्विकी गतिः ॥ ४८ ॥

तापसास्तपः प्रधाना वानप्रस्थादयः ।

यतयः परिव्राजकादयः ।

अनेन च ज्ञापयति न केवलं जन्मोपपत्तिर्गतिजातस्य कर्माचरणादपि । यतो न तापसादयः कतिचिज्जातिविशेषाः, किं तर्हि ? कर्मनिमित्ता एते व्यपदेशाः ।

अन्ये तु मन्यते । सन्ति मेरुनिवासिनः केचिज्जनपदा 'यतयो' नाम । श्रूयन्ते 'इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छदिति' ।

विमानानि यानविशेषाः पुष्पकादयस्तैश्चरन्ति वैमानिकाः अन्तरिक्षचराः केचिद्देवयोनयः ।

प्रथमा निकृष्टाः ॥ ४८ ॥

यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ॥
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥ ४९ ॥

आनुपूर्वीविशिष्टः शब्दो वेदः ।

"ननु च गत्यधिकारे कः प्रसंगोऽचेतनानाम् । अचेतनाश्च शब्दादयः" ।

अत्यल्पमिदमुच्यते शब्दादयोऽचेतना इति । सर्व एवैते देवादयः स्थावरान्ताः शरीरात्मानः । तत्र सर्वशरीराणामचेतनत्वम्, तच्छक्तिः केवलं पुरुषादिचैतन्यरूपिणी प्राप्यते । निर्गुणश्च पुरुषस्तदधिष्ठितानि शरीराण्यचेतनान्यपि चेतनान्युच्यन्ते ।

अत एतदुक्तं भवति । सत्त्वप्रधानो वेदस्तदभ्यासात्सात्त्विकी गतिः प्राप्यते । न पुनः सत्त्वप्रधानस्य वेदत्वप्राप्तिः सात्त्विकी गतिरुच्यते ।

अन्येषां तु प्रदर्शनं सर्वक्षेत्रज्ञाः सन्त्यधिष्ठातारो वेदपुरुषा वारुणे लोके श्रूयन्ते ॥ ४९ ॥

ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ॥
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥ ५० ॥

विश्वसृजो मरीच्यादयः प्रजापतयः ।

धर्मो वेदार्थः। पूर्वं वेदस्वरूपमुक्तमिदानीं तदर्थः। स्वरूपादर्थः प्रधानतर इत्युक्तं भवति। अथवा धर्माः सत्यादयश्च। विग्रहवत्वं पूर्ववद्द्रष्टव्यम्। महानिति संज्ञान्तरम्। अव्यक्तं प्रधानं प्रकृतिरित्येकोऽर्थः।

"ननु च सत्त्वाधिक्ये प्रधानस्य तद्विकारत्वाज्जगतः सर्वेषां विकाराणां सत्त्वाधिक्यं प्राप्तम्। ततश्च रजस्तमसोः कुतोऽतिरेकः। अतो यदुक्तं 'यो यदेषां गुणो देहे साकल्येनातिरिच्यत' इति तदनुपपन्नम्"।

उच्यते। नैतदेवं परं प्रधानरूपता प्राप्या। किं तर्हि? त्रयः प्रकाराः सम्भवन्ति। यदि वा प्राप्योऽव्यक्तभावो, यदि वादृष्टिविधिः, यदि वा नैवायं सांख्ये यः प्रधानेऽव्यक्तशब्दो वर्तते। क्रियानिमित्तो ह्ययम्। नास्य व्यक्तिर्विद्यत इति अस्फुटप्रकाशत्वा 'दव्यक्तम्'। तथा च परमात्मनि वृत्तिर्भवति। महत्त्वं च तस्य विभुत्वादुपपद्यत एव।

"ननु च नैवास्य सात्विकी गतिः"।

अगुणत्यागाद्वाप्येवम् यदा हि 'नाहं न मम किंचिदिति' मुक्ताहंकारममकारो भवति तदा ब्रह्मता भवतीति विज्ञायते। निदिध्यासनयैव ब्रह्मप्राप्तिः। किन्तु सत्त्वप्रधाना एव ज्ञानादितत्परा भवन्ति। न तामसा राजसा वेति। एवं कृत्वोच्यत 'उत्तमा सात्त्विकी गतिः'।

अन्यौ पक्षावनुपपन्नौ। न हि प्रधानभावं प्राप्य काचित्पुरुषार्थसिद्धिः। अचेतनं हि तद्व्यपदिशन्ति। अचैतन्यं स्थावरेभ्योऽपि निकृष्टतरं यदधीना हि मदमूर्च्छावस्थाः केचिदर्थयन्ते। दृष्टविधिस्तु नैव संभवत्यश्रुतत्वात् 'आत्मा वारे द्रष्टव्य' इति (बृहदारण्यक अ० २ ब्रा० ५) श्रुतिः न प्रधानं द्रष्टव्यमिति। तस्मात्परमात्मविषयावेव महानव्यक्त इत्येतौ शब्दौ ॥ ५० ॥

एष सर्वः समुद्दिष्टस्त्रिःप्रकारस्य कर्मणः ॥
त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः ॥ ५१ ॥

त्रिः प्रकारस्य वाङ्मनः कायसाधनस्य। त्रिविधः सत्त्वादिगुणभेदेन। पुनस्त्रिविधः उत्तमादिविशेषतः।

या अप्यत्र गतयो विशेषतोऽनुक्तास्ता अप्युक्तसादृश्यादन्तर्भावनीयाः। गुणप्रकरणोपसंहारः। उत्तरोऽपि श्लोको वक्ष्यमाणसूचकः ॥ ५१ ॥

इन्द्रियाणां प्रसङ्गेन धर्मस्यासेवनेन च ॥
पापान्संयान्ति संसारानविद्वांसो नराधमाः ॥ ५२ ॥

इन्द्रियप्रसंगः प्रतिषिद्धसेवनप्रदर्शनार्थः ।

असेवनं धर्मस्य शिष्टाकरणम् ।

एतच्चावदुषां भवत्यत आहाविद्वांसः । अत एव नराधमाः ।

अतश्च पापान् संसारान् कुत्सितानि जन्मस्थानानि । संयान्ति प्राप्नुवन्ति ।

अत्र प्रसिद्ध एव तावत्कर्मविपाकः प्रचक्ष्यते ॥ ५२ ॥

यां यां योनिं तु जीवोऽयं येन येनेह कर्मणा ॥
क्रमशो यातिलोकेऽस्मिंस्तत्तत्सर्वं निबोधत ॥ ५३ ॥

बहून्वर्षगणान्घोरान्नरकान्प्राप्य तत्क्षयात् ॥
संसारान्प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥ ५४ ॥

घोरान्नरकान् । दुःखप्रसहनव्यथया 'घोरान्' । यातनास्थानानि 'नरकान्' । तत्क्षयादुद्भूतरूपस्य कर्मणः फलोपभोगेन क्षयः । तत ईषदवशिष्टे कर्मणि संसारप्रतिपत्तिः । "कथं पुनः सर्वकर्म तत्रैव न भुज्यते" ।

उक्तम् । इंद्रियस्य कर्मणो नरकं फलं, नोपशान्तस्य । कार्यविरोधित्वाच्च कर्मणां फलेनोपशमः । तत्र यथैव च ज्वलितस्याग्नेरुदर्चिषो दाहो विनियोगस्तपश्चादंभ एव स्थितस्यैवं नरकेष्वपि द्रष्टव्यम् ।

"अग्नेस्तु द्वे अवस्थे भवतः प्रशान्तता ज्वाला च । नरकस्तु एकरूप एव सर्वदा" ।

उदर्चिष इवाग्नयः कर्माणि चोपचयापचयवन्ति । अत उपचितस्य कर्मणो नरकोऽपचीयमानस्य ततोऽन्यत्रोपभुक्तिः । तत्र युक्तं ततः शेषेणेति ॥ ५३-५४ ॥

श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ॥
चण्डालपुक्कसानां च ब्रह्महा योनिमृच्छति ॥ ५५ ॥

कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम् ॥
हिंस्राणां चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत् ॥ ५६ ॥

विड्भुजो वायसादयः ।

हिंस्राणां व्याघ्रादीनाम् ।। ५५-५६ ।।

लूताहिसरटानां च तिरश्चां चाम्बुचारिणाम् ॥
हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः ॥ ५७ ॥
तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि ॥
क्रूरकर्मकृतां चैव शतशो गुरुतल्पगः ॥ ५८ ॥

क्रूरकर्मकृतः परवधशीलाः ।। ५७-५८ ।।

हिंस्रा भवन्ति क्रव्यादाः कृमयोऽमेध्यभक्षिणः ॥
परस्परादिनः स्तेनाः प्रेताऽन्त्यस्त्रीनिषेविणः ॥ ५९ ॥

क्रव्यादा गृध्रादयः । अमेध्यभक्षिणः कृमयः । परस्परमदन्ति, यथा महामार्जारो मार्जारं, महामत्स्यः सूक्ष्मं मत्स्यं, अनेकभेदमिव ।

अन्त्यस्त्रीनिषेविणो'ऽन्त्याः वर्बरादयः ।। ५९ ।।

संयोगं पतितैर्गत्वा परस्यैव च योषितम् ॥
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥ ६० ॥
मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः ॥
विविधानि च रत्नानि जायते हेमकर्तृषु ॥ ६१ ॥

हेमकर्तारः पक्षिणः ।। ६०-६१ ।।

धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः ॥
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ ६२ ॥

आखुः मूषकः ।। ६२ ।।

मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः ॥
चीरीवाकस्तु लवणं बलाकाशकुनिर्दधि ॥ ६३ ॥
कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः ॥
कार्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४ ॥

दर्दुरः मण्डूकस्तोकः ॥ ६३-६४ ॥

छुच्छुन्दरीः शुभान्गन्धान्पत्रशाकं तु बर्हिणः ॥
श्वावित्कृतान्नं विविधमकृतान्नं तु शल्यकः ॥ ६५ ॥

बर्हिणो मयूराः ॥ ६५ ॥

बको भवति हृत्वाऽग्निं गृहकारी ह्युपस्करम् ॥
रक्तानि हृत्वा वासांसि जायते जीवजीवकः ॥ ६६ ॥
वृको मृगेभं व्याघ्रोऽश्वं फलमूलं तु मर्कटः ॥
स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः ॥ ६७ ॥

जलं प्लव इत्यत्र पानार्थमुदकं ज्ञेयम्। स्तोकको वारीत्यत्र धान्यसेकाद्यर्थम्। रसश्चाद्यं रसमाहुर्यदि वाऽतिरिक्तौषधादि द्रष्टव्यम् ॥ ६६-६७ ॥

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ॥
अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ ६८ ॥

नात्र तिरोहितमिव किंचिदस्ति ॥ ६८ ॥

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ॥
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ ६९ ॥
स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि ॥
पापान्संसृत्य संसारान्प्रेष्यतां यान्ति दस्युषु ॥ ७० ॥

ब्राह्मणोऽध्यापनादिजीविकाकर्मत्यागेन यदि क्षत्रियादिवृत्तिमुपजीवेत् एवं क्षत्रियादयः स्वकर्मच्युताः पापान् संसारान् तिर्यग्योनीरनुभूय मनुष्यत्वे जाता दस्युषु चौरादिहिंस्रादिषु भृत्यभावं प्राप्नुवन्ति।

अनापदीत्यनुवादः। आपदि विहितत्वाद्दोषाभावः ॥ ६९-७० ॥

वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्च्युतः ॥
अमेध्यकुणपाशी च क्षत्रियः कूटपूतनः ॥ ७१ ॥

स्वकर्मच्युतानां पापगतयः प्रदर्श्यन्ते।

वान्तमश्नाति।

उल्कया चास्यमुखं दह्यते।

कुणपः शवशरीरम्।

कूटपूतनः कुत्सितगंधा नासिकाऽस्य भवति।

कटपूतन इति वा पाठः। कटपूतनो नाम पिशाचादिः स तु कश्चिददृश्यो भूतविशेषः श्मशानिकभूमिसेवी ॥ ७१ ॥

मैत्राक्षिज्योतिकः प्रेतो वैश्यो भवति पूयभुक् ॥

चैलाशकश्च भवति शूद्रो धर्मात्स्वकाच्च्युतः ॥ ७२ ॥

मैत्राक्षिज्योतिक इति शब्दान्तरं पिशाचवचनं पूर्ववत्। अथवा मैत्राक्षे ज्योतिर्दृष्टावपीति। 'मैत्र'मंगं पायुः तदक्षिविवरं छिद्रम्।

अन्ये तूलूकमाहुः। 'मैत्र'मादित्यालोकः। 'अक्षज्योतिः' ऐन्द्रियकं दर्शनम्। स ह्यादित्यालोके न पश्यति ॥ ७२ ॥

यथा यथा निषेवन्ते विषयान् विषयात्मकाः ॥

तथा तथा कुशलता तेषां तेषूपजायते ॥ ७३ ॥

भेदग्रहगृहीतानां पुत्रदाराभिष्वंगधनादिलोभे विषयसुगंधमात्मैककत्वपरिपन्थिविद्याप्रतिपक्षभूतं निवर्तयितुं संसारस्वरूपं मानुष्यकं जन्म यथास्थितमनूद्यते सर्वस्य प्रसिद्धम्।

यथा यथा विषयेष्वभ्यासेन प्रवर्तन्ते। विषयात्मका विषयलालसाः। 'आत्म'-शब्देन 'प्रवृत्तस्य तत्स्वभावतैव भवती'त्याहुः। यस्तु कथंचित्सहितं भुंक्ते तस्य भोगादिना न तत्स्मृत्युपपत्तावभिलाषो जायते। यस्त्वत्यन्तमेवाधरः स तद्भावनया तदात्मत्वेन संपद्यते। तदिदमाह तथा तथा कुशलतेति। 'कुशलता'पदं चैकरसीभावः। अतश्च स न शक्नोति विषयान्परिहर्तुम्।

ईदृश्येव प्रवृत्तिः। शिष्टाप्रतिषिद्धेष्वपि स्वदारगमनादिष्वागमार्जितद्रव्योपपादकेन भोज्याविशेषेष्वपि प्रतिषिद्धा ॥ ७३ ॥

तेऽभ्यासात्कर्मणां तेषां पापानामल्पबुद्धयः ॥

संप्राप्नुवन्ति दुःखानि तासु तास्विह योनिषु ॥ ७४ ॥

ततश्च तेषां पापानां प्रतिषिद्धानां कर्मणामभ्यासात्। 'निन्दितकर्माभ्यासे पतनमिति' तद्भवतु। दुःखानि पश्यन्ति, तासु तासु कृमिकीटादियोनिषु ॥ ७४ ॥

तामिस्रादिषु चोग्रेषु नरकेषु विवर्तनम् ॥
असिपत्रवनादीनि बन्धनच्छेदनानि च ॥ ७५ ॥

'तामिस्रमन्धतामिस्रम्' इत्याद्याः प्रागुक्ता नरकाः तत्र विवर्तनमेकेन पार्श्वेनासित्वा पार्श्वान्तरेणावर्तनं अबद्धस्योत्तानस्य वा खड्गधारानिशितपत्रैर्वृक्षैर्बन्धनम्। भूमिष्ठैर्वा पत्रैरेव कदलीदलखण्डवत् तथाविधैर्मैत्री दुष्कृतिनामङ्गच्छेदप्राप्तिः ॥ ७५ ॥

विविधाश्चैव संपीडाः काकोलूकैश्च भक्षणम् ॥
करम्भवालुकातापान्कुम्भीपाकांश्च दारुणान् ॥ ७६ ॥

करम्भः कर्दमः। कुम्भीषु प्रक्षिप्तास्ते हि तापेनाऽऽग्नेयेनान्नादिवत्पच्यन्ते ॥७६॥

संभवांश्च वियोनीषु दुःखप्रायासु नित्यशः ॥
शीतातपाभिघातांश्च विविधानि भयानि च ॥ ७७ ॥

वियोनयः तिर्यक्प्रेतपिशाचादयः। तत्र संभवो जन्म दुःखबहुलासु ॥ ७७ ॥

असकृद्गर्भवासेषु वासं जन्म च दारुणम् ॥
बन्धनानि च कष्टानि परप्रेष्यत्वमेव च ॥ ७८ ॥

स्पष्टार्थः ॥ ७८ ॥

बन्धुप्रियवियोगांश्च संवासं चैव दुर्जनैः ॥
द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् ॥ ७९ ॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम् ॥
क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥ ८० ॥

एतावप्युक्तार्थौ ॥ ७९-८० ॥

यादृशेन तु भावेन यद्यत्कर्म निषेवते ॥
तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ८१ ॥

सात्त्विकेन राजसेन तामसेन वा भावेन यद्यत्कर्म निषेवते सात्त्विकं राजसं तामसं वा। शरीरेण तादृशेन सत्त्ववहुलेन रजोवहुलेन तमोवहुलेन वा। तत्तत्फलमुपाश्नुते, सात्त्विकं राजसं तामसं वा।

यतश्चैतदेवं रजस्तमोवहुलात् कर्मणोऽकुशलसंकल्पहेतोरनिष्टफलप्राप्तिः, अतस्तत्परिवर्जनेन कुशलसंकल्पकर्मणा भवितव्यम् ॥ ८१ ॥

एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः ॥
नैःश्रेयसकरं कर्म विप्रस्येदं निवोधत ॥ ८२ ॥

प्रतिषिद्धानां च कर्मणां यावत्फलोत्पत्तिस्तानि समुपदिष्टानि। ततो निवर्तितव्यम्। यतो दुःखानुवन्धी विषयसुखोपभोगोऽतस्ततो निवर्तन्ते।

श्रेयसे कर्मविधौ मोक्षोपाये वक्ष्यमाणविद्याकाण्डे उपदिष्टे स्थातव्यम्। तदिदानीं वक्ष्यामः ॥ ८२ ॥

वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः ॥
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ ८३ ॥

निःश्रेयसशब्देन न पुनः पुरुषार्थसिद्धिरुच्यते, अपि तु निश्चितसुखदुःखानुबन्धः प्रीतिविशेषोऽपि।

वेदाभ्यासादीनां तत्र तत्रोक्तानां पुनर्वचनमात्मज्ञानस्तुत्यर्थम्। ज्ञानं वेदार्थविषयम्। उक्तार्थान्यन्यानि पदानि ॥ ८३ ॥

सर्वेषामपि चैतेषां शुभानामिह कर्मणाम् ॥
किंचिच्छ्रेयस्करतरं कर्मोक्तं पुरुषं प्रति ८४ ॥

सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ॥
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ ८५ ॥

द्विविधमात्मज्ञानम्। देहेन्द्रियबुद्ध्यादिव्यतिरिक्तस्य कर्तृभोक्तृत्वोपपत्तिरूपस्य अहंप्रत्ययप्रमेयतयाऽऽत्मनि विषयप्रतीत्यन्तर्गतस्य जीवक्षेत्रज्ञविज्ञानात्मादिपर्यायस्य शरीरनाशेऽप्यनष्टानां कर्मफलानामौर्ध्वदेहिकानां भोक्तृत्वज्ञानम्। अपरं सर्वस्य जगतो जन्मादीनां परमात्मैककारणत्वे नित्यस्य सत एकस्याविद्यावासनोपहितनानारूपस्य तिर्यक्मनुष्यादिष्वेकत्वदर्शनम् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो

मन्तव्यो निदिध्यासितव्य' ( बृहदारण्यक अ० २ ब्रा० ५ ) इत्येवमादिश्रुतिभिरुपदर्शितस्वरूपस्य ज्ञानम् ।

तत्र क्षेत्रज्ञपरिज्ञानं कर्मविधिपूपयुज्यते । असति हि देहादिव्यतिरिक्तेऽस्मिन्नौर्ध्वदेहिकानां भोक्तरि फलानां स्वर्गकामादिचोदना अनर्थिकाः स्युः, अतस्तत्र न कश्चित्प्रवर्तेत । अतस्तत्कर्मानुष्ठानोपयोगि । यत्तु परमात्मैकत्वज्ञानं तिरोधानोपसेवनाभ्याससामर्थ्येनोपपद्यमानं शुद्धबुद्धमुक्तानन्दनित्याविनश्वरभावस्यात्मनः प्रकाशनं तत्रेदमुपपद्यते ।

तदग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं तत इति । 'अमृतं' ततः गतेर्व्यापत्तिम् । तत इति विद्यानिर्देश आत्मविद्यायाः । क्षेत्रज्ञज्ञानं तु कर्मोपकारकत्वादमृतत्वाय न कल्पते । अतो वेदान्तोपदिष्टस्य समस्तस्य द्वैताद्वैतविषयस्य सदात्मनो दर्शनं तदात्मज्ञानमभिप्रेतम् ॥ ८४-८५ ॥

षण्णामेषां तु पूर्वेषां कर्मणां प्रेत्य चेह च ॥
श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् ॥ ८६ ॥

वेदाभ्यासादीनि षट्कर्माणि श्रेयस्कराणि । तेभ्यो निःश्रेयसकरतरत्वं वैदिकस्य ज्योतिष्टोमादेः कर्मणः ।

"ननु च यदि तावत्पूर्वेषामिति निर्धारणे षष्ठी तदनुपपन्नम् । निर्धारणं हि समुदायभूतविशेषस्य केनचिद्धर्मेण तदेकविषयेण चोपपद्यमानस्यावान्तरेणासंभविना । 'क्षत्रियो मनुष्याणां शूरतम' इति मनुष्यजातौ क्षत्रियोऽप्यन्तर्भूतः स शूरतमत्वेन निर्धार्यते । अनुपदिष्टस्यानन्तरितस्य कुतो निर्धारणम् । न चेह प्राग्वैदिकं कर्मादिष्टम् ।

अथोच्यते । 'अन्तर्वेदाभ्यासादीनि वैदिकान्येव, कथमनुद्दिष्टं वैदिकं कर्म' । यद्येवं सामान्यस्य सामान्यात्सुतरामनिर्धारणम् । न हि भवति 'गवां गौरुत्पन्नक्षीरतमेति' । यदि ह्यवैदिकानि चोद्दिष्टार्थान्यभविष्यंस्तत एवैतदपेक्षेत वैदिकं श्रेयस्करतरमिति ।

किंच कानि तावदत्र वैदिकानि कर्माण्यभिप्रेतानि । यदि तावत् ज्योतिष्टोमादीनि । विशेषग्रहणे प्रमाणं वक्तव्यम् । वेदाभ्यासादीनामपि वैदिकत्वात् । अथ 'स्मार्तत्वान्न तानि वैदिकानि । यान्येव प्रत्यक्षश्रुतिविहितानि तान्येव

वैदिकानीति'। न हि सर्वं वैदिकेषु कर्मसु वेदाभ्यासादीनामङ्गत्वेनान्तर्भावः। एतच्च यद्वक्ष्यति ( अग्रे ८७ ) 'अन्तर्भवति क्रमशः तस्मिन् तस्मिन् क्रियाविधाविति'। तद्धि तस्य नेति तर्ह्यग्निहोत्रादौ तपो गुरु संपाद्यं स्यात्। अनेन तेनोक्तेन न कश्चिदर्थः। वेदाभ्यासादीन्यप्यनुष्ठेयान्यग्निहोत्रादीन्यपि। तत्र न विद्मः कीदृशममीषां श्रेयस्करतरत्वम्। नापि समानि फलानि येन फलस्योत्कर्षवत्तयैवमुच्यते। यथा गोदानात्स्वर्गस्य ज्योतिष्टोमाच्च दीर्घकालाद्यनुवृत्तता। यथोक्तं 'लोकवत्परिमाणतः फलविशेषः स्यादिति'"।

अत्रोच्यते। यदुक्तं चैतेनोक्तेन कश्चिदर्थ इति तत्र केचिदाहुः। विरोधे स्मार्ते श्रौते बाधकत्वज्ञापनार्थं वैदिकानां श्रेयस्करतरत्ववचनम्। यथोक्तं तुल्यबलविरोधे विकल्पः। अतुल्यबलायाः स्मृतेः श्रुत्याबाध इति। 'श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ'। श्रुतिस्मृतिद्वैधे अनुवादः स्मृतिरित्यर्थादुक्तं भवति।

"अमुनैवावगतत्वादवाच्यमेतत्"।

विस्पष्टीकरणार्थमेव पुनरुच्यत इत्यदोषः।

अथवाऽन्योऽपि तथार्थः संभाव्यते। शुद्धे च विकल्पवचनम्। स्मृतिद्वैधे न तद्विकल्पार्थम्। तेनायमर्थः। स्मार्तेभ्यो वैदिकानि बलीयांसि। वेदाभ्यासादिग्रहणं सर्वस्मार्तप्रदर्शनार्थम्। वृत्तानुरोधादेवं पठितम्।

वयं तु ब्रूमो न्यायसिद्धोऽयमर्थो न्यायसिद्धस्यापि सौहार्देनाभिधानमनारभ्य युक्तम्।

इहात्मनो ज्ञानं प्रतिपदं पठ्यते। तत्र कः प्रसंगो बाधात्तस्य। स्मृतिकारा न च स्ववाक्यानि स्ववाक्यैरेव प्रमाणयितुमर्हन्ति। अथोच्यते—"याज्ञवल्कीयायाः स्मृतेर्विधिरुच्यते। नात्मीयायाः समानता। यत्तावदात्मीयायामप्युक्तं भवति। अतः प्रकरणानुरोधाद्वेदाभ्यासादि पदं पृथक्। नेहात्मज्ञानं प्रतिज्ञायेदं पठ्यते। कथं च आत्मज्ञानं श्रुतिपरत्वेन तद्व्याख्यातमिति"। × × × वेदाभ्यासादिभ्यो वैदिकं यागादि कर्म श्रेष्ठमिति ततोऽप्यात्मज्ञानम्। इतरथाऽन्यत्र प्रज्ञाया अन्यदुच्यमानमन्यत्रास्तमन्यत्र पतितं स्यात्।

अथवा 'वैदिकं' अत्र आत्मज्ञानमेव। वेदस्य तत्प्रतिपादनपरत्वात्। अग्निहोत्राद्युपदेश औषधपाने वृद्धव्युपदेशवद्बालादिप्रवृत्त्यर्थः। यदि वा कर्मकाण्डेन शिष्टाः स्वाभाविकीमेनामनाद्यविद्यां वासनाविषयासंगहेतुभूतामवधूय शास्त्रा-

भ्यासवासनासामर्थ्यवशात् क्रमेणोपजातवैराग्यशिथिलीभूतदृढतृष्णारागग्रहणे उत्तमाधिकारानुशासने नियोज्यतां प्रतिपत्तुं समस्तमपि श्रुत्यादिदृष्टत्वमधिकारोपकारकत्वं कर्मकाण्डस्य विज्ञायत इति ब्रह्मवादिनः। अतो वक्ष्यमाणनिवृत्त्याख्यकर्माभिप्रायमेतत् श्रेयस्करतरं ज्ञेयं सर्वथा कर्म वैदिकमिति।

अथवा भेदो यदि सर्वेपामपि स्वप्नवदसत्यदर्शनद्वयेऽप्यात्मैकत्वज्ञाने श्रेयं इत्यर्थः। वेदाभ्यासादीनां भेदोपदेशादिनोद्यं तत्कर्तव्यम्। पष्ठीनोद्यं तु तैरेव समाहितं बुद्ध्यारोपितान्तरेण पृथक्त्वोपपत्तेः। यथा माथुराः पाटलीपुत्रकेभ्य आढ्यतरा इति। तथा सतीयं पंचमी स्यादिति चेत् अत्रापि प्रतिविहितं धर्माविशेपात् ॥ ८६ ॥

वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः ॥
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन्क्रियाविधौ ॥ ८७ ॥

एतावद्वैदिकं कर्म ज्योतिष्टोमाद्याचक्षते। तेपामेव श्लोकयोजना।

क्रियाविधिः कर्मविधिर्वैदिकः।

कर्मयोगे कर्मप्रयोगे बहिः संपाद्यावस्थाः।

एतान्युपनिपद्वेदाभ्यासादीन्यन्तर्भवन्ति तस्मिन्निति व्याप्यतया क्वचित् कस्यचित्समभेपामन्तर्भावमाह।

कर्मयोग इत्युक्ते क्रियाविधिग्रहणं श्लोकपूरणार्थम्। क्रतुं यज्ञेभ्य इति तद्वा सोमयागभेदेन भेदो व्याख्येयः।

तत्र वेदाभ्यासस्तावत् सत्रेऽन्तर्भवति। यजमानमन्त्रेपु सर्वत्रोपयोगतः। तपोदीक्षोपसदसोमयागेपु 'पयोऽमृतं ब्राह्मणस्य' इत्यादि। ज्ञानं सर्वत्र विदुपामनधिकारात्। एवमिन्द्रियसंयमः प्रतियागगामि 'न स्त्रियमुपेयान्न मांसमश्नीयादिति'। अहिंसानिरतां रात्रिं प्राणभृतः प्राणेनाच्छिन्द्यादपि कृकलासस्येति। गुरुसेवादेरित्थमप्रवृत्तिः।

ये तु निवृत्तमेव कर्माहुस्तेषां वेदाभ्यासादीनामनुवृत्त्यर्थः श्लोकः।

अन्तर्भवन्त्युपासनापरस्यापि तेषामनुष्ठानादन्तर्भावः। तथा चोपनिषद्भ्य उपासकस्य प्रायश्चित्तनिर्देशः पापक्षपणार्थो, न पुनः प्रतिविधानविकार एवोक्तो भवति। अतो विहिताकरणे प्रतिषिद्धसेवने सति प्रत्यवायः।

"एवं तर्हि कुतो मोक्षः" ।

फलोपभोगेन जन्मान्तरोपात्तदुरितक्षयादकरणात्स्वबुद्धिपूर्वमन्यस्य प्रमादकृतस्य प्राणायामविद्याविशेषाभ्यासातिशयेन कृतनिष्कृतित्वात् निरुपाध्यात्मस्वरूपसाक्षात्करणाच्च प्रथमं तं वेदयेत्तद्भावापत्तिर्मोक्षः । अतश्च ब्रह्मनिष्ठापरेणापि वेदाभ्यासादीन्यनुष्ठेयानि । यस्य यस्य कर्मन्यासः श्रूयते स षष्ठे व्याख्यातः ।

क्रियाविधिरुपासनविधिरेव 'द्रष्टव्यः श्रोतव्य' इत्यादिनोदितः । बहुत्वाच्चोपासनाप्रकाराणां तस्मिंस्तस्मिन्निति वीप्सा युज्यत एव । अतो 'ब्राह्मणान्युपासीत', 'य एष आदित्ये हिरण्मयः पुरुषः' इति, 'स च एष आत्मापहतपाप्मा' इत्यादि । क्वचिदुपात्तबुद्ध्याऽध्यारोपितश्चोद्यते । क्वचिद्धिरण्मय इत्यादौ लक्षणया तस्यैवोपासना । क्वचित्सर्वोपासनाधिपत्येन निष्कलंकमिवात्मनस्तस्यैवाधस्तात्स उपरिष्टादिति चोदनाबहुत्वाद्वीप्सोपपत्तिः ॥ ८७ ॥

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ ८८ ॥

"ननु च प्रवृत्तमेव वैदिकं कर्म व्याख्यातं किमिदमुच्यते द्विविधमिति" ।

नैष दोषः । प्राधान्येन तत्र प्रवृत्तं वैदिकं व्याख्यातम् । वैदिकं तु सर्वत्राविशिष्टम् ।

सुखमुपैत्युपपद्यते । यदपि सुखाभ्युदयिकं 'सुखाभ्युदयः' प्रयोजनमस्येति वाऽन्वर्थो वा कर्तव्यः । निःश्रेयसं प्रयोजनमस्येति च केचन ।

प्रवृत्तनिवृत्तपदे यथासंख्यं पूर्ववत्संबन्धनीये ॥ ८८ ॥

इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ॥
निष्कामं ज्ञातपूर्वं तु निवृत्तमुपदिश्यते ॥ ८९ ॥

इह कारीरावैश्वानर्याद्यमुत्र ज्योतिष्टोमादि काम्यसंपादकं कर्म । काम्यत इति काम्यम् । फलस्य काम्यत्वात्तत्साधनमपि कर्म 'काम्यं' एव ।

निष्कामं नित्यम् ।

ज्ञातपूर्वमुभयत्र शेषम् । अविदुषोऽनधिकारात् । अथापि रहस्याधिकारिज्ञानमुपदिश्यते । तदा नोभयशेषः । पूर्वशब्दश्चाद्यर्थं लक्षयति, ज्ञानमाद्यं मुख्यं

यस्येति विग्रहः। योऽभिमुख्यः स लोकः पूर्वं क्रियां प्रतिलभते। अतश्चैतदुक्तं भवति। ज्ञानं प्रधानं प्रधानतोऽनुष्ठेयम्। वेदाभ्यासादि तु शास्त्रमात्रया ॥८९॥

प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् ॥
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९० ॥

"ननु च काम्यं कर्म प्रवृत्तमित्युक्तम्। काम्यानि च कानिचित्स्वर्गफलानि कानिचिद्दृष्टफलानि। न च देवसाम्यता फलं किंचिदिष्टं कर्म। अतः किमिदमुच्यते देवानामेति साम्यतामिति। यान्यश्रुतफलानि विश्वजिदादीनि तान्यपि निष्काम-स्वर्गफलानि। अतो न विद्मः कर्मणा देवसाम्यताप्राप्तिः फलम्। न च शक्यं वक्तुं 'यानि फलवन्ति श्रुतानि तानि निष्कामेनानुष्ठेयानि, तथा चानुष्ठितानि वै देवत्वफलानि संपद्यन्ते'। श्रुतहानिरश्रुतपरिकल्पना च तथा स्यात्। काम्यमानं च वेदे फलं 'ग्रामकामः', 'स्वर्गकाम' इति। न वस्तुस्वाभाव्येन विपभक्षणात्। अथो देवत्वादिप्राप्तिर्भवति न च काम्य इति विरुद्धमिति। प्रतिषेधाधिकारेष्वका-मिनं कथमिति चेत् तथाभूतस्यैव तत्र फलत्वेनान्वयः। न ह्यनिष्टं काम्यं भवति। अथ नित्यानां फलमितः कथ्यते, नित्यताहानिः। यावज्जीवादिफलैश्च तत्र नित्यफलमवगमितम्। अथावश्यं कल्प्यते प्रत्यवायपरिहारः कल्प्यताम् तद्धि कल्प्यमानं नित्यत्वे न विरुध्यते। योऽप्युत्तरः श्लोकः भूतान्यत्येति पञ्च वै इति तत्रा'प्यत्येति' विमुच्यत इति न विद्मः। अन्यत्राप्ययो लय उच्यते। न चेह भूतेषु जीवस्य लय इष्यते, अपि तु ब्रह्मरूपापत्तिः।

अन्येऽपि व्याचक्षते। 'स चातिक्रामति पंचभूतानि। न पाञ्चभौतिकं तस्य शरीरं भवति अपि तु तेजोमूर्त्तिरेवान्वेति'। तदपि न किंचित्। शरीराग्रहणं हि 'मोक्षः'। तच्च शरीरमेकं वा भवतु पाञ्चभौतिकं वा, को विशेषः संसारित्वे। अतो व्याख्येयोऽयं श्लोकः"।

उच्यते। यत्तावदुक्तं "कस्य कर्मणो देवसाम्यता फलमिति, नित्यानामफलत्वात्, काम्यानां च फलान्तरयोगादिति" तत्र ब्रूमः। नानेन सर्वेषां वैदिकानां कर्मणा-मेतत्फलमुच्यते। किं तर्हि ? निवृत्तस्य कर्मणो यत्फलं यत्र प्रवृत्तिः। किंच कर्म विद्यते येन तत्फलमाप्यत इति प्रशंसा। सन्ति च कानिचित् देवत्वप्राप्तिफलानि कर्माणि तेनैतदुक्तं भवति। कर्मकाण्डे यत्कर्तव्यं तथा वेदितं साऽस्य परा

गतिर्देवत्वप्राप्तिर्न तु मोक्षः। यत्तु रहस्याधिकारोक्तकर्म तदनावृत्तिहेतुस्तत्र कामयमानस्य फलसंकल्पोपहतत्वात्कर्म बन्धहेतुः। कर्मणां ह्येष स्वभावो यत्स्वफलदानार्थमधिकारिणः कार्यकरणमारभन्ते। तथैव नित्यान्यप्यक्रियमाणानि प्रत्यवायहेतवो भवन्ति। तान्यपि शरीरमारभन्त एव।

यद्येवं नित्यानि करिष्यति काम्यानि प्रतिषिद्धानि न करिष्यति, तस्य शरीरारम्भककर्माभावाद्धेत्वभावेन मोक्षमवाप्स्यति। आत्मज्ञानस्य क्वोपयोगः। यथोक्तं 'नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया। मोक्षहीनः प्रवर्तेत तत्र काम्यनिषिद्धयो'रित्युक्तं भगवद्भिन्नं विद्यामनभ्यस्यमानस्याविद्यया क्षयोऽस्ति। न ज्ञानानुच्छिन्नायामविद्यायां ब्रह्मरूपापत्तिः ; एतदेवाभिप्रेत्योक्तं 'निष्कामं ज्ञानपूर्वमिति'। तथा 'कामात्मता न प्रशस्ता' (२।२)।

समानक्रियस्य सामार्ष्टिस्तस्य भावः साम्यता। देवैः समानगतिर्भवतीत्यर्थः।

यच्च 'भूतान्यत्येती'त्यप्यमुं प्रति व्यामोहः सोऽपि न युक्तः। विप्रलापनमपि 'अय' उच्यते। तुषारनिखिलप्रपञ्चो भवतीत्यर्थः।

'अभ्येती'त्यपि पाठेऽशरीरत्वमुक्तं भवति ॥ ९० ॥

कथं पुनः प्रपञ्चः कर्तव्य इत्यत आह

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥**
**समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥**

भूतशब्देन यत्किंचित्स्थावरजंगमं प्राण्यप्राणि तत्सर्वमुच्यते। तत्र चात्मानं पश्येत् 'अहमिवैतज्जगदिति'। तथा च श्रुतिः। 'अहं वृक्षस्य रेरिवेति' (शिक्षोपनिषदि ११/१; तै० आ० ७।१०।१; तै० उ० १।१०।१)। स्वपरव्यवहारं जह्यात्। 'अयमहमेतन्मम नेदं ममेति' संपद्यते बन्धः। त्यक्तात्मात्मीयाभिनिवेशस्योज्झितस्वपरभेदस्य केवलात्मैकत्वं भाति। एष एव स्वाराज्यपदार्थः।

सर्वभूतानि चात्मनीति। यदेव विकारप्रपंचरूपं जगत्तदेव तन्मयि स्थितं अहमेकः स्रष्टा कर्ता ध्याता ध्येयश्चेति संपद्यते।

आत्मयाजी। आत्मानमेव सर्वदेवतामयत्वेन यो यजते मन्यते। 'नाग्निरादित्यो वा देवता अहमेव देवते'त्येवं पश्यन्ना'त्मयाजी' संपद्यते, न पुनरात्मोद्देशेन यागः कर्तव्यतया चोद्यते।

केचिदाहुः। नाग्नेयादिष्वग्न्यादयो देवता आत्मत्वेनापि न वक्तव्याः।

स्वाराज्यम्। स्वे राज्ये भवः स्वाराज्यः। परमात्मवत्स्वतन्त्रः संपद्यते स्वप्रकाशश्च भवति। न चन्द्रादित्याद्यालोकमपेक्षते नेन्द्रियाणि चक्षुरादीनि नान्तःकरणं मन आदि। अतः पश्यन्निति च। भावयेदित्युच्यते। न दर्शनमात्रं सकलवाह्याभ्यन्तरव्यापारतिरस्करणे तद्भावनापराः स्मृताः ॥ ९१ ॥

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ॥

आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ ९२ ॥

यथोक्तान्यपि कर्माणीति। नानेनाग्निहोत्रादीनां कर्मणां परिहानिर्विधीयते, अपि त्वात्मज्ञाने यत्नवान् स्यादित्यात्मज्ञानाभ्यासो विधीयते। कर्माणि परिहायेत्यस्यालंवनं प्रशस्तदेवतायतनप्रदक्षिणमन्त्रगुरुगमनादीनि मुक्त्वाऽप्यात्मज्ञानमभ्यस्येत्। न हि नित्यानां कर्मणां स्वेच्छया परित्यागोऽस्ति पुरुषधर्मादिषु विहिते नास्ति त्यागेन विना ॥ ९२ ॥

एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः ॥

प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥ ९३ ॥

द्विजो भवतीति क्षत्रियवैश्ययोरप्यात्मज्ञानेऽधिकारं दर्शयति। यथा चारण्यकश्रुतिः।

ब्राह्मणस्य विशेषत इति। वेदाभ्यास इति संवन्धनीयम्। आत्मज्ञेन समत्वेनाभ्यासितेनैव संभवतः। यदात्मज्ञानं प्राप्य कृत्यकृत्यो द्विजो भवति पुरुषार्थ एतावता समाप्यते। न हि मोक्षादपरः पुरुषार्थोऽस्तीति ॥ ९३ ॥

"ननु च यदुक्तं सर्वात्मैकत्वेनायं पश्येत्तत्प्रत्यक्षविरुद्धमिव प्रत्यक्षेण हि भिन्नोभावः प्रतिभाति। तेन कथमेकत्वेन ग्राह्यः। अनारभ्य स्वार्थ उपदिष्टः स्यात्। कथं भिन्नमभिन्नं द्रष्टुं शक्यम्। न हि खरो गौरिव वुद्ध्या ग्रहीतुं शक्यः। इन्द्रियदोषेणान्यत्रावभासरूपया प्रतीयते शुक्तिकादौ रजताकारतया, न तूपदेशतः। यो ह्युपदिशेत्तं हस्तिनं प्रतिपद्यते। नासौ वचनफलमञ्जसाश्नुवीत" अत आह—

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ॥

अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ ९४ ॥

अयमर्थः वेदोऽत्र वक्तुः प्रमाणम्। चक्षुरिव चक्षुर्दर्शनहेतुत्वसामान्यात्। तथा चक्षुः परिच्छिन्नेष्वनेष्टितः रूपप्रत्ययो भवत्येवं वेदादिति चक्षुरित्युक्तम्।

सनातनं शाश्वतं नित्यम्। अनेनापुरुषकृतत्वमाह। पुरुषकृतत्वे हि तत्प्रामाण्यात् प्रमादोऽपीत्यत्र न प्रामाण्यमस्ति। अतः पुरुषगतगुणदोषसद्भावनिश्चयात्तदभावादपौरुपेयत्वेन वेदः प्रमाणम्। अतो वेदप्रामाण्यात् दृश्यार्थस्य न कश्चन विरोधः।

"ननु च यद्येवमुपदिशेदग्निना सिञ्चेदुदकेन च दीपयेत् किं न भवेद्विरोधः"।

विषम उपन्यासः। तत्र हि दृष्टया पदार्थशक्त्या दृष्ट एवार्थः कर्तव्यतयोपदिश्यते। तत्र प्रमाणान्तरगोचरत्वं तस्यार्थस्य तद्विपर्ययायुक्तं तदेतदुक्तम्। इह तु विधिपरत्वात् वाच्यानां प्रमाणान्तराणां च विधिविपयत्वाभावात् सिद्धस्वरूपवस्तुगोचरत्वेनासत्येकविषयत्वे कुतो विरोधः।

इह ह्यनात्मभूतानामाभासतो भावानामात्मत्वेन दर्शनं विधीयते स्वाराज्यफलाय। तत्र यत्राधिकं भेददर्शनं तस्याभ्यासतः शक्यमन्यथाकर्त्तुम्। तथा हि रागादयश्चित्तधर्मा भावनातिशययोगाङ्गाभ्यासेन शक्यन्ते नियन्तुम्। द्वेष्यमपि मैत्रादिना द्वेष्यताबुद्धिर्निवर्तत इति सर्वस्यैतत्स्वसंवेद्यं दृष्टं च। भावनाया अविद्यमानवस्तुस्वाभाव्यमवभासते सामर्थ्यात्। यथा विप्रलम्भे कामिनः सर्वत्र कामिनीवत्पश्यन्ति किमंग यत्र तात्विकमेकत्वमस्ति। तत्कथं भेदेन विरुद्धत्वादवभास्ते। तद्रूपा हि सर्वभावना सा भिन्ना विद्यते। ईदृशं चात्र दर्शनं समत्वेन विधीयते, यत्र ममेतन्नेदं ममेति बुद्धेरनुपपत्तिः। यथोक्तं 'ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम्' इति।

तस्मान्नास्ति विरोधः।

पितृदेवमनुष्याणामित्यादीनि श्रुतिपदानि। देवादयोऽपि रिष्यन्ति संयुक्ता न चेदृक् तेऽतीन्द्रियमर्थं पश्यन्ति श्रुतिमन्तरेण ज्ञातुमशक्यत्वात्।

अप्रमेयं चापरिमाणम्। अनन्तत्वाद्वेदशाखानाम्। अथ च प्रमातु अशक्यमर्थतो वेदाङ्गं वेदाः॥ ६४॥

या वेदबाह्याः श्रुतयो याश्च काश्च कुदृष्टयः॥
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ ९५॥

पूर्वं त्वपौरुषेयत्वेन वेदस्य प्रामाण्यमुक्तवेदानीं पौरुषेयाणां वेदानामप्रामाण्यम् ।

अथ वेदबाह्या वेदविरुद्धा अवेदमूलाः श्रुतयो ग्रन्थसंदृब्धेषु 'नोदनाश्चैत्यवन्दनेन स्वर्गो भवति' इत्याद्याः निर्ग्रन्थशोभादिसिद्धान्ताः प्रसिद्धाः ।

कुदृष्टयः असत्तर्कदर्शनानि । वेदकर्तुः साधनमपूर्वदेवतादिनिराकरणमेवमाद्याः कुदृष्टयः ।

सर्वास्ता निष्फलाः प्रेत्य । प्रकर्षं प्राप्य । संनिरूपितहेतुदृष्टान्ताः । अन्ततो निष्फला उक्ताः । तत्र युक्तीनामाभासरूपत्वात् ।

ताश्च युक्तयोन्यवति वर्त्मनि रात्रीयंति महाग्रन्थविस्तारा भवन्ति संक्षेपरूपाः ।

तथा पौरुषेयाणामुपदेशेन प्रामाण्यं, पुरुषाणामर्तींदर्शनशक्त्यभावात् । सत्यामपि शक्तौ उपदेशिकस्य प्रमाणाभावात् । 'अयं सर्वज्ञस्तेनायमागमः प्रणीत इति' न किञ्चिदत्र प्रमाणं क्रमते । विद्यमानेऽपि कर्तृपूर्वत्वे दृष्टार्थादृष्टकल्पनाप्रसंगस्तत्प्रमाणत्वे देवतात्वसिद्धिः । अतस्ता युक्तयो व्यामोहमूला इत्यर्थः ।

अन्ये तु व्याचक्षते । प्रेत्य मृतस्य ता निष्फलाः । तमोनिष्ठास्तामसयोनिहेतुत्वात् ।

अस्मिन् पक्षेऽसमानकर्तृकत्वात्प्रेत्येति दुर्लभत्वम् । निष्ठान्ताद्वा सप्तमी पठितव्या प्रेते इति ॥ ६५ ॥

उत्पद्यन्ते विनश्यन्ति यान्यतोऽन्यानि कानिचित् ॥
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ६६ ॥

अतो वेदाद्यान्यन्यानि शासनानि तान्युत्पद्यन्ते विनश्यन्ति च । उत्पादविनाशित्वादनित्यानि । वेदस्तु तद्विपर्ययान्नित्यः ।

अर्वाक्कालिकतयेदानींतनेन पुरुषेण केनचित्कृतत्वादतो निष्फलान्यदृष्टस्य फलस्याभावात् ।

यानि कानिचित् विप्रलम्भमूलकादिलक्षणानि ( ? ) ॥ ६६ ॥

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ॥
भूतं भवत् भविष्यं च सर्वं वेदात्प्रसिध्यति ॥ ६७ ॥

इयमपि स्तुतिरेव।

चातुर्वर्ण्यं वेदात्प्रसिध्यति अधिकारित्वेनावतिष्ठते। 'वसन्ते ब्राह्मणो ग्रीष्मे राजन्य' इत्यादि। स्वरूपं तु व्यवहारावगम्यं सर्ववर्णेषु तुल्यत्वादन्यत्र दर्शितम्।

त्रयो लोका 'इतः प्रदानं देवा उपजीवन्ति' अनेन त्रैलोक्यस्थितिहेतुत्वं वेदस्य सिद्धमेव। वेदमूलत्वात्स्मृतीनां च।

आश्रमोऽपि वेदादेव।

भूतमतीतं जन्म सुखदुःखादि। यच्च भवद्वर्तमानं यच्च भविष्यं तत्सर्वस्य वेद एव शरणीयम्॥ ९७॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः॥
वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्मतः॥ ९८॥

शब्दादीनां भोग्यत्वेन सुखसाधनानां वेदादेव प्रसिद्धिः। वैदिककर्मानुष्ठानाद्गीतादिशब्दोपपत्तिः। तत्परित्यागाच्छ्रुतिकटुशब्दश्रवणम्। अतः शरीरारंभकाः शब्दादयस्ताभ्यां स्वविषयत्वेनोपतिष्ठमाना वेदात् प्रसिध्यन्तीत्येतदभिप्रायम्। एतन्न पुनर्वेद उपादानकरणम्। अतः शरीरारंभकाः शब्दादयस्ताभ्याम्। एतदेवाह प्रसूतिर्गुणकर्मतः। 'प्रसूतिः' शब्दादीनामुत्पत्तिः। तदर्थं 'गुणकर्म'फलार्थत्वात्प्रधानकर्म च चित्रादि गुणकर्म इत्युक्तम्।

पाठान्तरं 'प्रसूतिर्गुणधर्मतः' इति। 'गुणाः' सत्त्वादयस्तेषां 'धर्मो' विपरिणामस्तस्य या 'प्रसूतिः' साम्यावस्थायाः प्रच्युतिस्तदुद्रेको विष्वग्भावश्च। तत्र वेद एव हेतुरदृष्टनिमित्तत्वात्।

वैचित्र्यपाठान्तराणि निष्प्रयोजनत्वान्न लिख्यन्ते॥ ९८॥

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्॥
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्॥ ९९॥

सर्वभूतभरणं च वेदशास्त्रस्य दर्शितं ब्राह्मणे तथा च 'हविरग्नौ हूयते सोऽग्निरादित्यमुद्धयति तत्सूर्यो रश्मिभिर्वक्ष्यति तेनार्त्तिर्भवति ततो ह वैनामुत्पत्तिस्थितिर्वेति हविर्ज्ञायत' इति। इहाप्युक्तम् 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत' इत्येवमादि।

तस्मादेतत्परं मन्ये पुरुषार्थकारणम् । यद्येवं कारणेन जन्तोरस्य धर्मानुशासनमेतस्मात्कारणात्तेषु यथा दर्शितोपपत्तिः ।

"ननु च यद्यौपादानिकमर्थं किं तद्वेदमुक्तं लौकिकमर्थमिति" ।

उच्यते । अनुष्ठानमस्य वैदिकं, कार्यं तु दृष्टत्वाल्लौकिकमेव ॥ ९९ ॥

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ॥
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ १०० ॥

अतिस्तुतिरियम् । दण्डनेतारः दण्डनायका ग्रामनगरयोः कृताकृतप्रेक्षणनियुक्ताः ।

सेना हस्त्यश्वरथपादातं तस्याः पतिः ।

राज्यं मण्डलेश्वरत्वम् ।

सर्वलोकाधिपत्यं सार्वभौमत्वम् ॥ १०० ॥

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ॥
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ १०१ ॥

इयमपि पूर्ववत्स्पष्टा पदयोजना प्रसिद्धाश्च पदार्थाः ॥ १०१ ॥

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ॥
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥ १०२ ॥

ब्रह्मभूयाय ब्रह्मभावाय ब्रह्मत्वप्राप्तये इति यावत् ।

यत्र तत्रेति व्युत्थाय व्युत्क्रमेणापि । यथोक्तं 'विद्वेषणाच्चाप्युत्थाय ब्राह्मणा भिक्षाचर्यमनुवेद्य व्रजन्तीति' ॥ १०२ ॥

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ॥
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ १०३ ॥

अज्ञा मूर्खा अनधीयानाः ।

ग्रन्थिनः विद्वांसो ग्रन्थमात्राभिधायिनः ।

तेभ्यो धारिण इत्येतद्यत्नेन पठन्तः । पूर्वं तु नातिप्रयत्नतः । ग्रन्थस्येति तत्रापि संबध्यते 'ग्रन्थस्य धारिण' इति ।

श्रेष्ठत्वमेतेषां जपप्रतिग्रहादिष्वधिकारात्।

ज्ञानिनस्तु सर्वत्राधिकृता इति श्रेष्ठतराः। ज्ञानपूर्वं जपादयोऽनुष्ठीयमानाः। फलातिशयदायिनो भवन्ति। तदुक्तं 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति'।

व्यवसायिनः अनुष्ठातारो निर्विचिकित्साः। येषामेतदन्यथेति न शङ्क्यते।

एतदपि स्तुत्यर्थम्। अध्ययनमात्रेण वेदः पुरुषार्थाय प्रभवन्ति किंपुनस्तदर्थज्ञानम् ॥ १०३ ॥

तपो विद्या च विप्रस्य निश्रेयसकरं परम् ॥
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

अनेनैतद्दर्शयति—सत्यामपि विद्यायां नाक्षीणपापस्य मोक्षः, सत्यपि कर्मक्षये नासत्यामात्मविद्यायाम्।

अतो यदुक्तं 'ते स्वभावेन मुच्यन्त' इति तदसत्।

अमृतमपुनरावृत्तिर्येयं केवलानन्दरूपता ॥ १०४ ॥

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ॥
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ १०५ ॥

सुहृद्भूत्वोपदिशति लौकिकमर्थम्।

धर्मो वेदार्थस्तस्य शुद्धिर्विवरणं पूर्वपक्षनिराकरणेन निश्चतसिद्धान्तव्यवस्थापनम्। एतत्प्रत्यक्षादिप्रमाणनिश्चये सति भवति। सुविदिते हि प्रत्यक्षे ज्वालादि वैषम्येण प्रत्यभिज्ञायते। शव्दनित्यत्वादिसिद्धिः। यस्य तु सम्यक् नास्ति विवेकः तस्योभयोरविशेषेण प्रत्यक्षमध्यवसायः स्यात्। ज्वालादिषु च प्रत्यक्षेण क्षयं दृष्ट्वा शव्देऽपि तथा संभावयेत् तथाऽनित्यशव्दसमुदायात्मको वेदः स्यात्। यस्य तु विहितानि कुशलप्रमाणेषु प्रशव्दोऽतद्ग्रहणनिबंधनो नास्त्यभिज्ञानो मन्यमानो ज्वालाविदुषो भेदग्रहणनिवन्धनमिव सितविशितं विशेषो न ज्वालाबाधेन शव्दे बाधं संभावयति।

एवमनुमानमपि सुविवेचितं न भारतादिग्रन्थप्रमाणोपलक्षणत्वाच्च। तेन शौर्यादिशास्त्रान्ते कर्मण्यतासिद्धिः। येन न विवेचितं ह्यनुमानं स पक्षविपक्षयो-

दर्शनादर्शनमात्रेणानुमानप्रवृत्तिं मन्वानो वेदेऽपि कर्तारं कल्पयेत्। यदा तु निपुणमतिर्भवति तत्तत्प्रयोजकस्य स्नातव्यलक्षणया तस्य कर्तृत्वस्वकरणस्याभावादपौरुषेयत्वमभ्यवस्यति।

शास्त्रं च विविधागमम्। शास्त्रे विविधविधिप्रतिषेधात्तस्य विविधोऽनेकप्रकार-आगमो यत्रागम्यते स आगमः। बहुशाखत्वाद्वेदस्य श्रुतिस्मृतिभेदेन च विविधत्वमुक्तम्। स चायमर्थः स्वाध्यायविध्याक्षिप्तः सुहृद्भावेनोपदिष्टः। न च द्वयमपि प्रशंसेव ॥ १०५ ॥

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ १०६ ॥

ऋषि'र्वेदस्तत्र भवः आर्षः। धर्मोपदेशो यो वैदिकः।

यस्तर्केणानुमानान्तरेण युक्त्या निरूपयति स धर्मं वेदेति पदयोजना।

तर्क ऊहापोहान्तर्यसिद्धिः। इदमत्र युक्तमूहितुमिदमपोहितुम्। यदा सौर्ये कर्मणि निर्वापमन्त्रे 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि' ( वाजस० सं० २।११ )इतिप्रकृतितः प्राप्ते मन्त्रेऽग्निपदस्यार्थासमवायादपोहः सूर्यपदस्य च क्षेपः। अयं तर्को न विरुध्यते वेदेन।

योऽप्येवं मन्यते "सौर्ये कर्मण्यग्नेर्देवतायाः अभावादर्थेन च मन्त्राणां प्रयोज्यत्वादेकदेशोपशमे च मंत्रत्वाभावात् कृत्स्नस्य वै मंत्रस्य लोपः", एष वेदार्थविरोधी तर्कः।

यदुच्चारणं मंत्राणां प्रयोज्यत्वम्मन्यते अतश्चा "विकृत एव मन्त्रः प्रयोक्तव्य" इति सोऽपि शास्त्रविरोधी तर्कः।

न चायं विधिः। अयमर्थवादः। अस्यात्र तात्पर्यं ईदृश्युपेक्षा यदत्रैतच्च मीमांसातो ज्ञायतेऽतो धर्मशुद्ध्यर्थं मीमांसावेदनमेतेन चोदितम्।

अन्ये तु व्याचक्षते। तर्केणेति तर्कप्रधाना ग्रन्था लौकिकप्रमाणानिरूपणपरा न्यायवैशेषिकलोकायतिका उच्यन्ते। तत्र वेदविरुद्धानि बौद्धलोकायतिकनैर्ग्रंथादीनि पर्युदस्यन्ते। तानि वेदविरुद्धानि। न तत्र प्रमाणं वेदः। कपिलकणादक्रियामविरथतानिग्रहान्तादिषु हि शब्दः प्रमाणम्। तथा चाक्षपादसूत्रं 'प्रत्यक्षानुमानोपमान-

शब्दाः प्रमाणानि' ( १।१।३ ) वैशेषिका अपि 'तद्वचनादाम्नायस्य प्रामाण्य' (१।१।३ ) मित्याहुः। अतस्तानि शास्त्राणि श्रोतव्यानीति च।

तथा च महाभारते भगवता कृष्णद्वैपायनेन दर्शितम् 'श्रोत्रियस्यैव ते राजन् मन्दकस्याल्पबुद्धयः। अनुवाकहता बुद्धिर्नैषा सूक्ष्मार्थदर्शिनी'। 'अनुवाकहते'ति तर्ककृतामप्युपपत्तिमाह केवलत्वादसत्तया। तथेदमपरमुत 'कश्चिन्न लोकायतिकान् ब्राह्मणान्स्मार्तः सेवते। अनर्थकुशला ह्येते मूर्खाः पण्डितमानिन' इति।

अनेनासत्तर्कश्रवणं प्रतिषिद्धं पूर्वेण सत्तर्कानुज्ञानं तदेव तदिति।

केचित् प्रामाण्यं वेदस्याहुरीश्वरप्रणेतृकतया। न च तस्यास्ति संभवः। न च तस्मिन् पक्षे वेदः प्रमाणं तस्य ह्यसावीश्वरः समयोपस्थापकः।

एतेषु श्रूयमाणेषु अप्रामाणिको विपरीतोऽभिनिवेशो जायते। अतोऽसत्तर्का एव ते। न च वैदिकस्य वाक्यावबोधे कस्यचिदप्युपयुज्यन्ते। तथा च सांख्यः 'स ह्यविशुद्धिः क्षयातिशययुक्त' ( सां० का० २ ) इत्याहुः। अक्षपादैरपि तदप्रमाण्यं मन्यते। तथा च याज्ञिकपूर्वपक्षे ( न्या० सूत्र २।१।५७ ) निर्धारितं यदपि केनचित्पठितम्।

कर्ममीमांसावेदान्तभाष्यमेवमभिधानं यथाश्रुति विज्ञायते—'देवा अस्माल्लोकादमुं लोकमायंस्तानृषयोऽन्वीयुस्तान्मनुष्या अब्रुवन् कथमथो भविष्यामः एभ्यः सर्वकर्मऋषयः प्रायच्छत्। तस्माद्यत् ब्राह्मणोक्तमास्तर्कयंत्यार्षमेव तद्भवति' इति श्रुतेः। एषा यथोक्ततर्कपदार्थानुवादिनी ॥१०६॥

नैःश्रेयसमिदं कर्म यथोदितमशेषतः ॥
मानवस्यास्य शास्त्रस्य रहस्यमुपदेक्ष्यते ॥ १०७ ॥

वक्ष्यमाणार्थादरातिशयोत्पत्त्यर्थः श्लोकोऽयं श्रोत्रियसंबोधनार्थः।

रहस्यं गुह्यम्। अतश्च न सर्वस्य प्रकाशयितव्यम्। यो न शुश्रूषापरो न च परमां भक्तिमुपेतो यश्च न स्थिरप्रकृतिर्न तस्मै प्रकाश्यम् ॥ १०७ ॥

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ॥
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ १०८ ॥

"ननु चानाम्नातेषु कः संदेहः। नो जाने नेह कथं स्यादिति चेत् यतो नैव तेषां तत्"।

उच्यते। नेहेदृशमनाम्नातमभिप्रेतम्। किं तर्हि ? यत्सामान्यत आम्नातं विशेषतस्तु न ज्ञायते।

"ननु च तत्रापि कः संदेहः। सामान्यस्य विशेषमात्रापेक्षाद्येन केनचित्सिद्धं शास्त्रार्थं, यथा 'अद्भिराचमेदिति' कूप्यस्थावरनादेयादिभेदेन भिन्नास्वप्सु ताः काश्चिदुपादीयमानाः संपादयन्ति शास्त्रार्थम्।"

सत्यम्। यत्र प्रतिषेधश्रुतिर्न च वैशेषिकं प्रायश्चित्तमुपदिष्टं यत्रेदमुपदिश्यते। यदा शूद्रोच्छिष्टं किंचित्पात्रं तदशुद्धं तत्संपर्कादशुचि तस्मिन्नकृते शुद्धे यदि केनचिद्भुक्तं स्यात्तदा किं प्रायश्चित्तमिति संदेहः। स हि जिज्ञासा च निश्चयावसानेन च प्रत्यक्षादिषु सम्यङ्निधिः स्त्रीशूद्रोच्छिष्टमेवेत्यदत्तं भवितुमर्हति। न हि तच्छूद्रस्योच्छिष्टमिति शक्यं वक्तुम्। किं तेन तदुच्छिष्टमिति। एवमादौ संदेहे तु शिष्टवचनं प्रमाणीकर्तव्यम्। यथा ये शूद्रादयो विप्रांशास्तेषामयं धर्मसंदेहः। शिष्टोपदिष्टमेव युक्तं कर्तुम्। ततश्च न्यूनाधिकभावेन या कृता कल्पना स एव तत्र धर्मः। तेषामपि तथोपदिशतां न दोषः। यत आह स धर्मः स्यादशङ्कित इति। अधर्मं ब्रुवतो दोषः, धर्मं तु का विचिकित्सा। तथा गोत्रप्रवरसंदेहे कथं च स्मृतिविच्छेदे ब्राह्मणवचनात् गोत्रप्रवरसिद्धिः। तत्र च प्रवरसंदेहे सर्वेषां मानवे संशय इत्युक्तम्। गोत्रसंशये तर्हि भविष्यति। तत्र च गोत्रसंशयाभावे कुतः प्रवरसंशयः। प्रतिगोत्रं प्रवराणां भेदेन पठितत्वात्। उपपद्यत एवमेतद्गोत्रनामधेयम्। प्रवराश्च भिन्ना नाना गोत्राणि। तत्र सत्यपि प्रवरनिश्चये गोत्रसन्देह उपपद्यते ॥ १०८ ॥

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ॥
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥

शिष्टलक्षणमनेन कथ्यते।

"ननु चार्थकामेष्वसक्तानामित्यत्रोक्तमेव शिष्टलक्षणम्"।

अन्योऽपि तस्य तत्रार्थ आशंकितोऽतो न तस्य लक्षणपरतैव। यच्च वशिष्ठेनोक्तं 'शिष्टः पुनरकामात्मा' इति तत्र विद्वत्ताया श्रुतत्वात्।

यत्र परिपूर्णत्वादधिगतोऽर्थतश्च विदितः स स परिबृंहणः। तथा च भगवान्व्यासः 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्' इति। स्मृतयोऽप्येवं गृहीतार्था भवन्ति।

ब्राह्मणग्रहणमनुवादस्तेषामेव धर्मप्रवचनाधिकारात् ।

श्रुतिप्रत्यक्षहेतवः । 'प्रत्यक्षं हेतवश्च' प्रत्यक्षहेतवः । हेतुशब्देन प्रत्यक्षादन्यप्रमाणान्युच्यन्ते । श्रुतिः प्रत्यक्षो हेतुश्च येषां ते श्रुतिप्रत्यक्षहेतवः । एतदुक्तं भवति । यथा प्रत्यक्षं निर्विवादं प्रमाणमेव तादृशीं श्रुतिं मन्यन्ते, यान्यपि हेतूत्थानि प्रमाणानि तेषु विश्वसन्ति; श्रुतिमेव तर्कं मन्यन्ते; हेतुशास्त्राश्रयणेन चेदं न प्रमाणीकुर्वन्ति ।

अथवा 'श्रुतिः' प्रत्यक्षश्रुतिः, 'प्रत्यक्ष'शब्दः श्रौते प्रत्यये प्रत्यक्षतुल्यत्वात्प्रयुक्तः, सा च हेतुर्धर्माधर्मपरिज्ञाने कारणं येषां त एवमुच्यन्ते ॥ १०९ ॥

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ॥
त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ॥ ११० ॥

दशावरे यस्याः दशावराः । यदि बहवो न संनिधीयन्ते दशावश्यं संनिधातव्याः तदभावे त्र्यवराः ।

वृत्तस्था इति । यदुक्तं 'अर्थकामेष्वसक्तानाम्' इति तस्यैवायमनुवादः । न चैषा पुरुषसंख्याऽपितु गुणसंख्या । तथा चवक्ष्यति 'एकोऽपि वेदवित्' इति । एकस्य यतो गुणसमूहस्य बाहुल्येनासंभवात् पुरुषप्रधानतया संख्याया निर्देशः कृतः । तानिदानीं परिषत्त्वहेतु गुणान् दर्शयति ॥ ११० ॥

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ॥
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ १११ ॥

पुरुषप्रधानेऽपि निर्देशे गुणपरतैव विज्ञेया ।

यस्त्रैविद्यो वेदत्रयस्याध्येता तदर्थस्य च वेदिता । अनुमानादिकुशलः तर्की अयमूहापोहबुद्धियुक्तः ।

"ननु च नैवंविदो वेदार्थवित्त्वमेव संभवतीत्युक्तम्" ।

सत्यम् । परोपदेशादपि कस्यचिद्याचनावती वेदार्थमात्रा संभवत्यपि । अतश्च प्रत्ययेन विना वेदार्थग्रहणार्थं हेतुकेन भातीत्युक्तम् ।

एतेन नैरुक्तो व्याख्यातः ।

धर्मपाठको मन्वादिस्मृतिशास्त्राणामध्येता ।

त्रयश्चाश्रमिणो ह्येते ह्यनुष्ठानपराः कुशलतरा धर्मेषु भवन्ति । पूर्वे । ब्रह्मचारी

गृहस्थो भिक्षुरित्येके । तस्य हि ग्रामप्रवेशो नानिषिद्धो गौतमेन चेयमानुपूर्वी पठिता 'ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस' इति । अन्ये त्वाहु—हिंसानुज्ञा नास्तीति । कथमसौ धर्माश्रयेत्, तस्मात्तापससकाशमन्यैः सह गन्तव्यम् ॥१११ ॥

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ॥
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥ ११२ ॥

निरुक्तव्याकरणमीमांसाभिर्वेदार्थो ज्ञायते । ते च सर्वे साधारणाः । न हि तत्रैकस्य वेदस्यार्थो ज्ञायते नान्यस्य नियमयं प्रकारोऽस्ति ।

अथ ऋग्वेदादीत्यादि कथं भेदोपपत्तिः । तथा तत्र गृह्यसूत्रभेदेन चेदमुक्तम् ॥ ११२ ॥

एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ॥
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥ ११३ ॥

व्यवस्येन्निश्चित्य कथयेदित्यर्थः ।

नाज्ञानां मूर्खाणां अयुतैरप्युदितः । उदितः प्रागेव व्याख्यातः ॥ ११३ ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ॥
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ११४ ॥

अव्रतानामिति प्रागुक्त एवार्थो व्यतिरेकद्वारेण कथ्यते । व्रतिनो वेदाध्यायिनः यं निश्चयं ब्रूवते तत्र न विचिकित्सितव्यं विद्वद्भिरविद्वद्भिर्वा । अत एव न लघुपरिकल्पो गुणतुल्यवद्विकल्प्यते ॥ ११४ ॥

यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ॥
तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥

वक्तॄणामविदुषां दोषकथनम् ॥ ११५ ॥

एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ॥
अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ॥ ११६ ॥

प्रतिज्ञातधर्मोपसंहारः श्लोकोऽयम् । 'धर्मान्नो वक्तुमर्हसि' इति यत्पृष्टं 'महर्षीन् श्रूयतामिति' यद्वक्तव्यतया प्रतिज्ञातं तत्सर्वं कथितमिति शास्त्रपरिसमाप्तिमाह ।

"ननु च परस्तादप्यस्ति शास्त्रं हन्तव्यादिशास्त्रं सा च विधितः श्रूयते। तत्र विधिविषये कश्चिदिति कथमुच्यते शास्त्रमुपसंह्रियत इति। वक्तुर्न करोति प्राय-उपसंहारः।"

परस्ताच्च कर्मशेषात्स्वप्रधानाशुद्धैव विद्योपदिश्यत इति न विरोधः। सर्वत्र श्रेयसी शास्त्रार्थधर्मलक्षणा विद्येत्युपसंहृत्याभिधाने प्रयोजनम्॥ ११६॥

एवं स भगवान्देवो लोकानां हितकाम्यया॥
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान्॥ ११७॥

स भगवान् मनुरिदं शास्त्रं सर्वं लोकहिताय प्रोक्तवानिति भृगुः शिष्यानाह। अनेनाधिकाराकांक्षा निवर्तते।

गुह्यं यदध्यात्मं तदपि मनुर्मामुपदिश्य प्रकाशयांचक्रे। मयापि यथागमं भवतां प्रकटीकृतमिति न कार्याऽधिकाऽकांक्षा॥ ११७॥

सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः॥
सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मतिम्॥ ११८॥

सर्वं जगत्सदसद्रूपमुत्पत्तिविनाशधर्मकम्। अथवा असत् शशविषाणादिवत् सच्च नित्यमाकाशादिवत् सर्वमात्मनि संपश्येदात्मनि व्यवस्थितमुपासीत।

संदर्शनार्थस्य स्पष्टार्थस्य साक्षात्करणपर्यन्तयोपासनया विज्ञायते। न हि सकृद्दर्शनेन सात्क्षकारः संभवति। तथोपदिश्यते रहस्यशास्त्रम्। तत्रात्मध्याना-यैतदुक्तं भवति 'श्रोतव्यो मंतव्यो निदिध्यासितव्य' ( बृहदारण्यक, अ० २ ब्रा० ५ ) इति ध्यानपर्यन्तता सद्दर्शनस्य। आत्मध्यानं यथोपदिष्टज्ञानाभ्यासो विजातीयप्रत्ययानन्तरितमुच्यते। अथवा सामर्थ्यादभ्यासाक्षेपः। यतः संस्कार-कर्माणि च संस्कार्ये विशेषाधानेन संपन्नस्वार्थानि भवन्ति। यथा 'व्रीहीनवहन्तीति' अश्रुतोपन्यासः तुषकणविप्रमोकफलेभ्यस्तत्संदर्शनेन ह्यदृष्टार्थता स्यात्। तथा च कर्मविधित्वात् षष्टिसंस्कारकर्मताहानिश्च। अतः संपश्येदिति ज्ञेयान्तरविषयज्ञान-निराकरणेन तदेकज्ञेयनिष्ठामनुब्रूयात्।

अत्रात्मनीति विवदन्ते। कोऽयमात्मा नाम। यदि तावदयं देहाधिकरणः क्षेत्रज्ञः तत उत्तरं विरुध्येत 'प्रशासितारं रुक्माभम्' इति। न हि कर्मत्वशरीरस्य मृत्वोत्पत्तिः श्रूयते—'एतस्य वाऽक्षरस्य प्रशासने गार्गी द्यावापृथिव्यौ विधृते तिष्ठत'

इति (बृहदारण्यक ३।८।६)। तस्मान्नाहंप्रत्ययप्रमेये आत्मन्यपि संसारविधिः। अतोऽन्या काचित्तस्य स्वरूपसिद्धिर्वक्तव्या किंचैवं सति 'पश्येदि'ति आदिना वाह्यात्मनामप्याधिभूतादिदैवभावेन व्यवस्थितानामाध्यात्ममुपसंहारः। शिष्यते च श्रौतमतोस्तरागः साधनतया कारणात्मनार्जितस्य संवन्धितां प्रतिपद्यते। ननु यः सर्वं जगत्कारणपुरुषावच्छेदमुक्तं सदा प्रत्यात्मनि संपश्येदिति, तत्र कीदृशा-मात्मनो दर्शनमात्मनीति वक्तव्यम्।

अन्ये तु मन्यन्ते शरीरात्मन एवैतत्संनिवेशनं युक्तम्। तस्य हि श्रोतृसंनिवेशेन तद्वत्ता युक्ता।

तत्रोच्यते। आत्मशब्दस्तावत्परमात्मविषयतया दर्शितवाक्यान्तरसम-न्वयप्रमाणः।

यत्तु स्वरूपसिद्धिर्वक्तव्येति तत्र किमन्यच्छक्यं वक्तुमन्यदतः श्रौततत्वज्ञानविधेः। तानि च वाक्यानि प्रतिशाखं सर्वोपनिपद्भ्योऽवगन्तव्यानि। प्रमाणान्तराणामप्येक-त्वप्रतिपादनपरत्वादेव ग्राहिणः प्रत्यक्षस्य मिश्रैः कृत एव क्लेशः। उक्तं च वाक्य-पदीये 'न तदस्ति च तन्नाम्नि' इत्यादि। विध्यवगम्यता च शरीरावरका-दवसातव्या।

यदप्युक्तमसत्कथं दृश्यत इति सच्चासच्चेत्ययमर्थः स्यात्। 'सदिति' विकार-ग्रामस्य निर्देशः। 'असदिति' अप्रत्यक्षतैव सूक्ष्मतयाऽशक्यावधारणत्वात्।

यदप्युक्तं नास्ति परमात्मनः श्रोत्रसंवन्ध इति। किमत्र संबन्धि सर्वस्य जगत्स्थि-त्युत्पत्तिविनाशानां तत्कारणतयोपपादितत्वात्।

यश्चायं संनिवेशविधिस्तस्यायमर्थः—यावद्यत्किंचिद्भेदवदवभासते तत्सर्वम-द्वैतिकत्वे प्रविलापयेत्। सर्वमात्मस्थमित्येतत्परमात्मनो विरतिसामान्ये हेतुर्विद्यत इति।

समाहितः। समाधिर्नाम चित्तवृत्तिनिरोधोपायो योगशास्त्रादागमयितव्य इत्यर्थः।

नाधर्मे कुरुते मतिं वुद्धिचेतसोर्निश्चलताभावः। तावदभ्यसेद्यावद्वादिभिश्चेतो नापह्रियेत। अतश्च यावत्कश्चिद्भेदकत्वे प्रतिविलापयेत्॥ ११८॥

आत्मैव देवताः सर्वाः सर्वमात्यन्यवस्थितम् ॥
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥ ११९ ॥

सर्वत्र यागादिक्रियाः स्वर्गादयो देवता आत्मत्वेन द्रष्टव्याः । योऽयमग्निर्देवता अग्नेरियमन्यात्मैवासौ नान्योऽग्निर्देवताऽस्तीति । तदप्युक्तम् 'एक आत्मा वहुधा श्रूयत' इति । यत्र युक्त 'एक एवाहमात्मा देवतेति' । तथा ( ऋ० वे० १।१६४।४६ ) 'इन्द्रं मित्रं वरुणमग्निमाहुः एकं सद्विप्रा वहुधा वदन्ति वहुरूपपरमात्मनोऽन्यां देवतां पश्यन्ति । सतां परादा'दित्यनेन कर्माङ्गदेवतानामात्मदृष्टिर्विधीयते ।

"किं तर्हि, न तस्य देवतादिकृत्यमस्ति"

आत्मतयैव सर्वसिद्धिः । कथम् ? नार्थात्मनि जनयत्येषामिति । कर्मयोगे कर्मफलसम्बन्धः । स आत्मा तेषां निष्पादयति । नान्या देवता न तद्गुणकमिति ॥ ११९ ॥

खं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम् ॥
पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गां च मूर्तिषु ॥ १२० ॥

यान्येतानि नवच्छिद्राणि तेषु वाह्यमाकाशं नियच्छेत् । 'वाह्यमाकाशं तदेव तन्न वाह्यं किंचिदस्तीति' ।

अनिलो वायुः । तं सन्निवेशयेत् ।

चेष्टते स्पन्दते तत्र काचिच्छरीरावस्था हस्तपादाद्युक्तविहरणलक्षणायाश्चायम् । स्पर्शो बाह्यादिलक्षणः । तत्र वायुं संनिवेशयेत् । पक्तिर्जाठराग्निकृता । दृष्टिश्च । तयोः निवेशयेत् । तेजः परं कृत्स्नमादित्यात्मनावस्थितम् ।

स्नेहे मेदो मज्जादिरूपे संनिवेशयेदिति वर्तते ।

गां पृथिवीं मूर्तिषु शरीरभागेषु ॥ १२० ॥

एवं महाभूतानामुपसंहारः । इदानीं देवतानामाधानमुपसंहरिष्यते ।

मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ॥
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥ १२१ ॥

योऽयमिन्दुश्चन्द्रमास्तं मनसि संनिवेशयेत् । नैष चन्द्रो गगनसंचारी । किं तर्हि ? मम 'मनसि' व्यवस्थितः ।

याश्च दिशः श्रोत्रेन्द्रियशक्तौ ।

क्रान्ते विष्णुं यो यत्राल्पमपि क्रामति विष्णुरेव क्रान्तिकर्मणा संनिविष्टः ।

एवं बले हरम् । हनुरेतो ( ? ) द्रागप्युत्थानं स चेन्द्रियावकाशः कालाकृतिरिन्द्रियकर्मैव तत् ।

यं एवं वागग्नेरेवायमुत्सर्गो वाग्वाद्यैर्मन्त्रैः पश्येत् ।

एवमध्यात्ममुपसंहृत्य सर्वं परमात्मनि पश्येत् । एवमात्मको हेतुः परमात्मनि व्यवस्थितो 'नाहं कश्चित्ततो भिन्न इति' । एवमेषा सर्वोपासना कर्तव्या ।। १२१ ।।

प्रशासितारं सर्वेषामणीयांसमणोरपि ॥
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥ १२२ ॥

एवमेवाह ।

प्रशासितारं नियंतारम् । सर्वेषां ब्राह्मणादिशूद्रपर्यंतानाम् । योऽयमग्न्यादीनामौष्ण्यादिस्वभावनियमो यच्चादित्यादीनामनिशमन्तःपरमोजः जगद्भ्रमणप्रकाशनादिषु व्यापारो यश्च कर्मणां फलं प्रति नियमः स सर्वस्तस्मिन्नियंतरि सति । यदुक्तमे'तस्यैवाक्षरस्य प्रशासने गार्गी'त्यादिना । तथा 'तत्सूर्यस्तपति च यावद्वर्षति चंद्रमाः । भयादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः' ( कठोपनिषद् ) इति ।

अणीयांसमणोरपि इति । यः कश्चिद्दारानिरतिशयवालाग्रशतभागादिस्तत्ते तृतीयांशपरिमाणकत्वमसत्प्रतिपाद्यते । 'अस्थूलमनण्वित्या'दि ( बृहदा० ३।८।८ ) सर्वधर्मप्रतिषेधात्, किं तर्हि ? कुशाग्रीयाया बुद्धेर्गम्यत्वात् । एतदुक्तं भवति । यो नात्यन्तं कुशलो न च तदभ्यासे परिष्वक्तः ।। १२२ ।।

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ॥
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ १२३ ॥
एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ॥
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥ १२४ ॥
एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ॥
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ १२५ ॥

ब्रह्माभ्येति ब्रह्मभावमापद्यते। मैत्राद्यवभासेन रागद्वेषक्षयमनुवदति। अनेन चाविजातीयप्रत्ययान्तरितात्मैकत्वज्ञानमनुष्ठेयमाह। न हि विजातीयप्रत्ययोत्पत्तौ सर्वसमता भवति। अतश्चैतदुक्तं भवति। अहं ममेति त्यक्ताहंकारममकारस्य तदेकज्ञाननियततया निरतिशयपरमानन्दरूपं ब्रह्म प्राप्नोति। अनिष्टनिवृत्तिः शास्त्रप्रदर्शिताभिप्रेतनियमस्य प्राप्तिश्च फलसिद्धिर्भवति इत्यर्थः ॥ १२५ ॥

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्द्विजः ॥
भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम् ॥ १२६ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ॥ १२ ॥

॥ समाप्तैषा मनुसंहिता ॥

इतिः शास्त्रसमाप्तिमाह। पठन् भवत्याचारवान् अन्यो अध्याहार्य आचारः। यथा पठितशास्त्रात् शास्त्रानुष्ठानम्। एवंविधश्चेद्भवति यथेष्टां देवतादिलक्षणां गतिम् ॥ १२६ ॥

मान्या कापि मनुस्मृतिस्तदुचिता व्याख्या हि मेधातिथेः
सा लुप्तैव विधेर्वशात् क्वचिदपि प्राप्यं न यत् पुस्तकम्।
क्षोणीन्द्रो मदनः सहारणसुतो देशान्तरादाहृतै-
र्जीर्णोद्धारमचीकरत्तत इतस्तत्पुस्तकैर्लेखितैः ॥

इति श्रीभट्टवीरस्वामिसूनुमेधातिथिविरचिते मनुभाष्ये द्वादशोऽध्यायः ॥

समाप्तं शुभं भवतु

---

॥ श्रीः ॥

# मनुस्मृतिश्लोकानां पादतः अकारादिवर्णानुसारेण सूची

## [ षष्ठाध्यायात्समाप्तिपर्यन्ता ]



